॥ श्रीः ॥

श्रीराजानकमहिमभट्टप्रणीतः

# व्यक्तिविवेकः

व्याख्यान-मधुसूदनीविवृतिभ्यां सहित

THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

( Alankāra Section, No. 4. )

NO. 121.

THE

# VYAKTIVIVEKA

OF

## S'RĪ RĀJĀNAKA MAHIMABHAṬṬA

*Edited with*

A COMMENTARY OF RĀJĀNAKA RUYYAKA

AND

THE MADHUSŪDANI COMMENTARY

*BY*

SĀHITYĀCHĀRYA

*Pandit S'rī Madhusūdana Mis'ra*

PUBLISHED & SOLD BY

JAYA KRISHNADAS—HARIDAS GUPTA,

*The Chowkhamba Sanskrit Series Office.*

*BENARES.*




1936.

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशीसंस्कृतसीरिज़पुस्तकमालायाः

१२१

अलङ्कारविभागे ( ४ ) चतुर्थं पुष्पम् ।

* श्रीः *

# व्यक्तिविवेकः

श्रीराजानक-महिमभट्टप्रणीतः

श्रीराजानकरुय्यकेन विरचितया व्याख्यया
साहित्याचार्यश्रीमधुसूदनशास्त्रिविरचितया
मधुसूदनीविवृत्या च समेतः ।

तेनैव सम्पादितः ।



प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

वै० सं० १९९३

❀ श्रीः ❀

# समर्पणम्



गीर्वाणवाणीप्रणयिषु स्वीयसहजाकृत्रिमप्रेमवताम् अमरगवीरक्षणे बद्ध-
परिकराणां प्राच्यप्रतीच्योभयविद्योदन्वदवगाहननिर्मलमानसानां
विश्वविदितवैदुषीकाणाम् वात्सल्यरसामृतेन संवर्द्धन-
पूर्वकं पदार्थसार्थमविकलमाकलयतां प्रत्यक्षमिव
अन्तेवासिसमूहेभ्यः,
स्वाभाविकस्वभावमधुरिम्णा असंस्तुतमपि मानवं संस्तुतमिव
उपकुर्वताम् महामहोपाध्यायेति एम० ए,
इति विरुदावलीविराजमानानां मानोन्नतानां गवर्नमेण्टीय
संस्कृतकालेजाध्यक्षाणां तत्र श्रीमतां श्रीमतां
**गोपीनाथकविराजमहोदयानां करारविन्दयोः सादरं सविनयम्**

अयमुपायनीक्रियते
स्वग्रथितो विवृतिविशेषः ।

**मधुसूदनमिश्रेण**

॥ श्रीः ॥

# सम्पादकीयम् ।



विदितचरमेव विश्वेषामपि विदुषां यदयं राजानकमहिमभट्टप्रणीतो व्यक्तिविवेक-नामा ग्रन्थो विद्वन्मूर्धन्यशेखरभूत इति ।

उच्चतमाचार्यपरीक्षायां सन्निवेशो नाम न केवलमस्य महत्त्वमाख्यापयति अपि तु एतादृशप्रौढग्रन्थानुशीलनमेव परिचाययति परीक्षाध्यक्षमहोदयानां तेषां तेषाम् । एतस्य विश्वातिशायिसमुत्कर्षवतो ग्रन्थस्य कठिनत्वेऽपि स्पृहणीयत्वे दिव्यफलवत् दुःप्राप्यत्वं समीक्ष्य समेषामपि मानसमासीदेवाकुलम् तत्राऽपि राजानकरुय्यकप्रयत्नस्य व्याख्यान प्रणयनस्य अर्धावसितत्वमवलोक्य गण्डस्योपरि पिटकोद्भेदमिव चेतो नितान्तं दूयते ।

गुरुवरेषु महामहोपाध्यायकविचक्रवर्तिदेवीप्रसादशुक्लेषु नवीनव्याख्यानप्रणयनेन तथा दूनजनमानसोल्लासाय प्रयतमानेष्वपि हन्त ! दुर्दैववशात् प्रथमविमर्शमप्यपूरयत्स्वेवा-समये देवभूयं गतेषु विदुषामुल्लसदानन्दाङ्कुरः अकस्मात् दुष्कालकवलतामुपागमत् ।

इत्थं सर्वथा सर्वतो निराशागह्वरे पतयालुं सकलं लोकमालोक्य श्रेष्ठिप्रवर जयकृष्णदासप्रार्थितः विद्याबुद्धिप्रभृतिषु कनीयानपि महीयसोऽस्य अशुद्धिग्रस्तस्य ग्रन्थस्य शोधनपूर्वकं विवृतिकरणे प्रावर्तिषम् ।

अन्तरायसंतमसाकुलेनापि मया भगवत्यभ्युपपत्या कथमप्यपूरि । कीदृशी विवृति-रिति मात्सर्यलेशशून्याः विद्वांसः पाठका एव प्रमिण्वन्तु । अहन्तु स्वान्तःसुखाय ग्रन्थ परिचयस्थैर्याय च कार्येऽस्मिन् पदमदधाम् । एवमभ्यस्यतो मम अकारणवत्सलायाः जगन्मातुरसीमानुग्रहेणैवेयं स्वसमयेन समापत् ।

अनेकस्थलविशेषे गुरुचरणैः श्रीदामोदरशास्त्रिभिः श्रीबालकृष्णमिश्रैश्च स्वसहज-वात्सल्येनाहं बालइवाशिक्षि इति तेषामधमर्ण एवायं जनः ।

अस्य प्रणेतुः समयादिविषये तत्र भवतां भवतां श्रीकविराजमहोदयानामनुग्रह-मनुसरन्तः साहित्याचार्याः पण्डितवरश्रीकृष्णपन्ताः भूमिकालेखने प्रयतमानाः संति-ष्ठन्ते । अतस्तेषामपि महान्तमुपकारं विमर्मि । प्रार्थये च पाठकान् यत्तेषां महा-नुभावानां लेखनीप्रसूतायाः भूमिकाया रसमास्वादयन्तु सविलक्षस्मितमिति ।

निवेदयति
विदुषामाश्रवो
**मधुसूदनशास्त्री**
चिरावाभिजनः

# व्यक्तिविवेकस्य विषयानुक्रमः ।

## प्रथमे विमर्शे ध्वनिलक्षणाक्षेपः ।

## द्वितीये विमर्शे शब्दानौचित्यविचारः ।



## तृतीये विमर्शे ध्वन्युदाहरणानामनुमानान्तर्भावोपदर्शनम् ।

॥ श्रीः ॥

श्रीराजानकमहिमभट्टकृतो

# व्यक्तिविवेकः ।

## श्रीराजानकरुय्यककृतव्याख्यया

साहित्याचार्यश्रीमधुसूदनशास्त्रिरचितमधुसूदनीविवृत्या च समुद्भासितः ।

प्रथमो विमर्शः ।

अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥ १ ॥

॥ श्रीः ॥

राजानकरुय्यककृतं

## व्यक्तिविवेकव्याख्यानम् ।

प्रथमो विमर्शः ।

ग्रन्थारम्भे ग्रन्थकारः शिष्टाचारमनुस्मरन्नुचितदेवताप्रणामपुरस्सरं स्वप्रवृत्तिप्रयोजनमाचष्टे—अनुमानेऽन्तर्भावमित्यादिना । तत्र वाचो विचार्यत्वेन प्रस्तुतत्वात् प्रणामसमुचितत्वम् । व्यक्तिर्व्यञ्जनं तद्विवेकस्य करणं स्वप्रवृत्तिः । तस्याः प्रयोजनं ध्वनेरनुमानान्तर्भावप्रकाशनम् । सर्वग्रहणेन निरवशेषतामाह अन्यथा काव्यानुमानस्याव्याप्तिः स्यात् । महिमेति नामपदं कीर्त्यर्थम् ॥ १ ॥

॥ श्रीः ॥

## ॥ मधुसूदनी-विवृतिः ॥

परिशीलितगुरुवचना विषमस्थलपाततोऽनुरक्षन्ती ।
बोधितपरमरहस्या नवार्थमाता विवेकदृग् जयति ॥
श्रीमद्द्विद्वत्तल्लजरामजिलालान् पितॄनहं नौमि ।
येषां लालनपालनशिक्षाद्यैरेधितो वर्त्ते ॥
स्निग्धपरिष्कृतवचसा झटिति दुरूहार्थबोधने दक्षान् ।
रक्षामणीन्निजान्ते-वसतां तांस्तौमि बालकृष्णगुरून् ॥

मधुसूदनीविवृतिः ।

सत्यं पदार्थजातं यत्तद्विज्ञेयं गुरोः श्रुतम् ।
असत्यं यद्भवेदत्र तद्विज्ञेयं तु मामकम् ॥
सत्करिष्यन्ति विद्वांसो यद्यप्यस्या विदुष्टता ।
आद्रियेत विना शम्भुं को लोके गरलं खलम् ॥

समस्तशिष्टाचारपरम्परामनुरुन्धानः वस्तुनिर्देशं कुर्वन् समुचितदेवतानमस्कारात्मकं मङ्गलमाचरति ग्रन्थकारः—**अनुमान इति** । महिमा महिमभट्टः परां सूक्ष्मां वाचं तदधिष्ठातृदेवीं प्रणम्य व्यक्तिविवेकं कुरुते इति योजना । **महिमेति** स्वनामनिर्देशः सम्भावनाप्रत्ययोत्पादनाय । यद्यप्यात्मनाम गुरोर्नामेति स्मृतेः स्वकर्तृकस्वनामग्रहणं प्रतिपिद्धम्, तथापि यागीयहिंसाविधिना "मा हिंस्यात्सर्वा भूतानि" इति सामान्यनिषेधस्य वैधहिंसातिरिक्तविषयकत्वकल्पनावत् स्वनामाग्रहणरूपसामान्यनिषेधस्य वैधनामग्रहणातिरिक्तविषयकत्वकल्पान्न दोषः । विधिश्चास्य नामग्राहमभिवादयेदिति धर्मशास्त्रे प्रसिद्धः । यद्वा—श्राद्धे विवाहे संन्यासेऽप्यापत्कालादिषु क्वचित् । स्वनामग्रहणं कुर्वन् श्रेयस्कामोऽप्यदोषभागिति तदपवादकस्मृतावादिपदेन ग्रन्थारंभ-सन्ध्यावन्दन-प्रोषिताभिवादनप्रभृतौ नामग्रहणस्य ग्रहणान्न दोषः । वस्तुतो नामोच्चारण एव दोषो न तु लेखन इति तत्त्वम् ।

**परेति** । परापराभेदेन वाग् द्विधा । तत्र पराशब्देन शब्दब्रह्मणोऽपृथग्भूता सूक्ष्मा गुदमेढ्रान्तरालवर्त्तिमूलाधारचक्रस्था शक्तिरभिधीयते । अपराशब्देन पश्यन्ती-मध्यमा-वैखरीतिशक्तयोऽभिधीयन्ते । तदुक्तम्—

येयं विमर्शरूपैव परमार्थचमत्कृतिः ।
सैव सारं पदार्थानां परा वागभिधीयते ॥
नादाख्या सर्वभूतेषु जीवरूपेण संस्थिता ।
अनादिनिधना सैव सूक्ष्मा वागनपायिनी ॥
अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥
वैखरी शब्दनिष्पत्तिर्मध्यमा स्मृतिगोचरा ।
द्योतिकार्थस्य पश्यन्ती सूक्ष्मा ब्रह्मैव केवलम् ॥ इति ॥

अप्रासङ्गिकमपि बहूपकारकत्वात्पश्यन्तीनां स्वरूपं निर्दिश्यते । सर्वत्र सदोदिताया बहिरुन्मिषन्त्याः शब्दब्रह्मणः शक्तेः प्रथमो विवर्त्तः पश्यन्ती, यतः सा शक्तिस्तटस्था सती पराया मध्यमायाश्चावस्थां पश्यतीति पश्यन्तीत्युच्यते । तत उत्तरं हि एतत्कथयामीति अन्तः सङ्कल्परूपो मानसिकवर्णोच्चारणक्रमेण द्वितीयो विवर्त्तो मध्यमा, यतः सा पश्यन्तीवैखरीतिसंज्ञयोर्द्वयोर्वाग्विवर्त्तयोरन्तरचारिणीति मध्यमेति निग-

मधुसूदनीविवृतिः ।

द्यते । स्थानादिक्रमव्यज्यमानः पदवाक्यात्मकस्तृतीयो विवर्त्तो वैखरीति कथ्यते । विशिष्टं मुखरूपं खमाकाशं राति गृह्णाति इति विखरो वर्णोच्चारस्तेन तदभिव्यञ्जिका वैखरी ।

**प्रणम्येति** । भक्तिश्रद्धातिशयरूपः, प्रकर्षोऽत्र प्रशब्देन प्रकाश्यते । तादृगेवहि नमस्कारात्मकं मङ्गलमन्तरायसन्तानशान्तिं सन्तनोति । अन्यथा कृतोऽपि प्रणामः कादम्बरीवत् प्रारिप्सितस्य परिसमाप्तिं न सम्पादयेत् । ननु नमतेरकर्मकत्वात्कथं परावाचः कर्मत्वमिति चेत्, शृणु । नमिधातुर्जयतिवदकर्मकः सकर्मकोऽपि । अयमत्र विवेकः । यथा जयतिः प्रकर्षेण वर्त्तनेऽकर्मकः पराजये सकर्मकः । तथायमपि नमिः प्रह्वीभावेऽकर्मकः । नमस्कृतौ सकर्मकः । अनंसीद्भूर्भरेणास्येति नमामि मत्सोश्चरणाम्बुजद्वयमिति च भट्टिकादम्बर्यादिषूभयथा प्रयोगदर्शनात् ।

**व्यक्तिविवेकमिति** । व्यज्यतेऽर्थोऽनयेति व्यक्तिर्व्यञ्जना तस्या विवेकः विशिष्टो विचारस्तम् । वैशिष्ट्यं च ध्वनेः विशकलनपूर्वकानुमानगतात्म्येन सम्बन्धेन ।

**कुरुत इति** । अत्र अहं करोमीति उत्तमपुरुषीयक्रियां परस्मैपदं चानिर्दिश्य प्रथमपुरुषीयक्रियाया आत्मनेपदस्य च निर्देशः स्वस्य अलङ्कारशास्त्राभिज्ञत्वं यशोरूपफलभोक्तृत्वं च ध्वनयति । दर्शितं चैतत् "नियतं यशसे प्रपत्स्यते" "सहसा यशोऽभिसर्तुमि"ति च वदता ग्रन्थकृता स्वयमेव । ननु यद्यपि यशोरूपफलस्य स्वभोक्तृतया कर्तृगामित्वम् तथापि ध्वनेरनुमानान्तर्भावप्रकाशनरूपफलस्य लोकोद्देश्यकत्वेन परगामित्वात्परत्वात्परस्मैपदेन बाधात्कथं पुनस्तङिति चेत् । गन्धनावक्षेपणेति सूत्रेण प्रकथने कृञ आत्मनेपदस्य विशिष्याभिधानादात्मनेपदम् ।

ननु कस्ते हेतुरेतावत्प्रयासे यतः प्राक्तनैर्ध्वनिकारादिभिरियं बहुधा विवेचितैवेत्यत आह—**अनुमान इति** । सर्वस्यैव भेदप्रभेदात्मकस्य सकलस्यैव न तु एकदेशस्य ध्वनेः, अनुमाने । अत्रायं भावः । ध्वननमिति भावव्युत्पत्या ध्वनिः व्यञ्जकयोः शब्दार्थयोः व्यङ्ग्यविषयो व्यापारः । ध्वन्यते इति कर्मव्युत्पत्या ध्वनिः व्यङ्ग्योऽर्थः । ध्वनतीति कर्तृव्युत्पत्या ध्वनिः शब्दः अर्थश्च अर्थात् शब्दार्थयुगलरूपं काव्यमिति ध्वनिवादिनामभ्युपगमस्तथैव व्यवहारश्च । अनुमितिरिति भावसाधनेन अनुमानं व्याप्यस्य दर्शनेन व्यापकस्य निश्चयः । यथा व्याप्यस्य धूमस्य दर्शनेन व्यापकस्य वह्नेर्निश्चयः । अनुमीयतेऽनेनेति करणसाधनेन अनुमानम् अनुमितेः करणं व्याप्तिज्ञानम् । इति नैयायिकानामभ्युपगतिर्व्यवहृतिश्च । श्रुतेरेव स्वतः प्रामाण्यं यत्र श्रुतिः साक्षान्न श्रूयते तत्र स्मृत्यादिना श्रुतिरुन्नीयते इति श्रुत्यनुमापकं स्मृत्यादिवाक्यमप्यनुमानपदेनाभिधीयते इति मीमांसकानां सरणिः । एवं चात्र "व्यक्तिविवेक" इति ग्रन्थस्य व्यञ्जनाव्यापारसमालोचनपरतया ध्वनेः व्यञ्जनाख्यव्यापारस्य । यथाचोक्तम्—ध्वनिर्नामापरो योऽसौ व्यापारो व्यञ्जनात्मकः । । इति । अनुमाने व्याप्यदर्शनेन व्यापकनिश्चये

युक्तोऽयमात्मसदृशान् प्रति मे प्रयत्नो
नास्त्येव तज्जगति सर्वमनोहरं यत् ।
केचिज्ज्वलन्ति विकसन्त्यपरे निमील-
न्त्यन्ये यदभ्युदयभाजि जगत्प्रदीपे ॥ २ ॥

व्यक्तिविवेकव्याख्यानम् ।

युक्तोऽयमित्यादिनाधिकारिनिरूपणम् । केचिदिति । श्लेषहेतूपन्यासः । ज्वलनं क्रोधः सूर्यकान्तसम्बन्ध्यग्न्युत्थानं च । विकासः प्रमोदानुभवः पद्मगतं प्रफुल्लत्वं च । निमीलनमसूयाकृतोऽनुत्साहः कुमुदगतः सङ्कोचश्च । अभ्युदयो महोत्सवः अभिमुखमुद्गमश्च । जगत्प्रदीपो विद्यादिना विश्वप्रकाशकः रविश्च । एतच्च गुणगर्वाध्मातमात्मानमुद्दिश्य भङ्ग्या कथितम् ॥ २ ॥

मधुसूदनीविवृतिः ।

अनुमितौ "परकामुकोपभोगवती इयम्" "राधिकामुखं चन्द्रः" इत्याकारिकायामिति । यद्यपि ध्वनिकारादिभिः व्यङ्ग्यस्यैव प्रभेदाः निर्दिष्टाः न व्यञ्जनायाः तथापि कार्याणामानन्त्यात् यथा कारणानामानन्त्यं सुतरां स्वत आपद्यते एवं व्यापारिणो व्यङ्ग्यस्य अनेकभेदभिन्नत्वेन व्यापारस्य व्यञ्जनाया अपि तथात्वं न्याय्यमिति सूक्तमेव सकलस्येति विशेषणमिति च । [ ध्वनति स्फोरयति वाच्यलक्ष्यतात्पर्यार्थातिरिक्तं चतुर्थकक्षानिविष्टं व्यङ्ग्यरूपमर्थं यः स ध्वनिः काव्यविशेषः उत्तमं काव्यमिति यावत् । तमर्थं व्यङ्ग्यः, काव्यविशेषः स ध्वनिरित्युक्तेः । तस्य अनुमाने अनुमीयते अनेनेति अनुमानम् अनुमापकवाक्यं तस्मिन् ] अन्तर्भावं तादात्म्यं प्रकाशयितुं ज्ञापयितुम् , न तु अन्तर्भावयितुम् , अन्तर्भावस्तु ध्वनेरस्त्येव मया तु स केवलं प्रकाश्यते लोकेभ्यः । नहीदानीं यावत्केनापि इयता प्रबन्धेन ध्वन्युमानयोरभेदो निर्दिष्टः मयैवैतावत्क्रियते इति न प्रयासे वैयर्थ्यशङ्काकलङ्क इति भावः ।

ननु निर्माणकर्मणो मानसूत्रवत् वचसो विषयनैयत्यं बोधयितुं सर्वत्रैवादिवाक्येऽभिधानप्रयोजनादिकमुच्यते । ततश्च कथम् "सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते" इत्युक्तस्य श्रोतृप्रवृत्तिकारणस्य विरहात्तत्र प्रवृत्तिरिति चेदत्रोच्यते । व्यक्तिविवेको ग्रन्थाभिधानम् । अन्तर्भावप्रकाशनं तस्य च यशः प्राप्तिः प्रयोजनम् । प्रतिपाद्यो व्यक्तिविचारः । ग्रन्थः प्रतिपादकः । तयोश्च प्रतिपाद्यप्रतिपादकभावलक्षणः सम्बन्धः॥ १॥

ननु अज्ञ–संदिहान–विपर्यस्तानामज्ञान–सन्देह–विपर्यासनिरासाय विज्ञानां मनोविनोदाय वा तत्रापि स्वसमानस्वापकृष्टस्वोत्कृष्टानामधिकारिणां कृते ग्रन्थप्रणयनं भवति । तत्त्वया कस्य कृतेऽदः सम्पाद्यत इत्यत आह—युक्त इति । मे ममायं ग्रन्थप्रणयने प्रयत्नः आत्मसदृशान् स्वतुल्यान् नैयायिकान् प्रति युक्तः सङ्गतः । युक्तिश्चात्र इयमेव, यत्तेऽनुमानव्यसनिनो ज्ञानसिद्धमीश्वरमपि कार्याद्यनुमेयमिच्छन्ति, ततो ध्वनेरपि अनुमानेनैव यदा गतार्थ्यं स्यात्तदा तेषां महान् प्रमोदविषयो भविष्यति इति । ननु

**इह सम्प्रतिपत्तितोऽन्यथा वा ध्वनिकारस्य वचोविवेचनं नः ।**
**नियतं यशसे प्रपत्स्यते यन्महतां संस्तव एव गौरवाय ॥ ३ ॥**

व्यक्तिविवेकव्याख्यानम् ।

अनुमानान्तर्भावनरूपस्य स्वप्रवृत्तिप्रयोजनस्य ध्वनिकृद्वचनविवेचनाख्यस्य यशःप्रवृत्तिलक्षणं प्रयोजनमाह—इ हेत्यादिना। **अन्यथा** वेति । यदि **सम्प्रतिपत्त्या** सौजन्यमूलया परीक्षया न बुध्यते तद्विप्रतिपत्तिमाश्रयाम इत्यर्थः । ( विप्रतिपत्तिः ) विप्रतिपत्त्या कथनम् । निश्चितयशःप्रपत्तिसमर्थनं **यन्महतामिति** । **संस्तवः** परिचयः । अत्र च 'ध्वनिकृद्वाक्यविवेचनं तदेतद्' इति पठनीयम् । यथास्थितपाठे तु ध्वनिकारस्येति वचश्शब्दान्वितमिष्यमाणं प्राधान्याद्विवेचनशब्दान्वितं प्रतीयते । एतच्चास्य साहित्यविचारदुर्निरूपकस्य प्रमुख एव स्खलितमिति महान् प्रमादः ॥ ३ ॥

मधुसूदनीविवृतिः ।

अन्येषां कृते कुतो नायं प्रयत्नः इत्याह—**नास्तीति** । तद्वस्तु एव जगति संसारे नास्ति यत्सर्वमनोहरं निखिल ( विप्रतिपन्नाऽविप्रतिपन्नसाधारण ) जनचित्ताकर्षकं भवेत् । कुत एतदित्याह—**केचिदिति** । यद्यस्मात् जगतः प्रदीपे सूर्येऽभ्युदयभाजि उदिते सति केचित् सूर्यकान्तमणयः ज्वलन्ति, अपरे पद्मादयो विकसन्ति, अन्ये कुमुदिनीप्रभृतयो निमीलन्ति सङ्कुचिता भवन्ति । एवं बोधजनकतया प्रकाशके मद्ग्रन्थेऽभिमुखमागते सति विप्रतिपन्नाः कोपमेष्यन्ति, सुहृदः प्रसन्ना भविष्यन्ति, दुर्हृदो दुःखं माप्स्यन्ति । अत्र ज्वलनकोपकरणादीनां बिम्बप्रतिबिम्बभावेन लब्धप्रसरः उपमेयवाक्यस्य स्वशब्दानिर्दिष्टतयाऽर्थाक्षिप्तो दृष्टान्तालङ्कारो व्यज्यते । यत्रोपमानोपमेयवाक्ययोर्भिन्नावेव धर्मौ बिम्बप्रतिबिम्बभावेन निर्दिष्टौ तत्र दृष्टान्त इति लक्षणात् ॥ २ ॥

ननु यदि ग्रन्थस्य सर्वमनोहरत्वं नास्त्येव किन्ते वैलक्षण्यमन्यथा त्वद्ग्रन्थसदृशा बहवो ग्रन्थाः सन्त्येवातो निष्फलं त्वया प्रयत्यते इति चेन्नेत्याह—**इहेति** । इह ग्रन्थे सम्प्रतिपत्तितो ध्वनिकारोक्तस्याङ्गीकरणाद्वा अन्यथा वा विप्रतिपत्तितोऽनङ्गीकरणाद्वा । यदा परीक्ष्यापि तद्वचसो याथार्थ्यं नावबुध्यते तदा विप्रतिपत्तिराश्रीयते खण्ड्यत इति भावः । नोऽस्माकं ध्वनिकारस्य वचोविवेचनं नियतमवश्यं यशसे कीर्त्तिं प्रसारयितुं प्रपत्स्यते भविष्यति । नियतयशः प्राप्तिमर्थान्तरन्यासेन द्रढयति—**यन्महतामिति** । यद्यतो महतां गुरुभूतानां संस्तवः परिचय एव गौरवाय यदा महद्भिः साकं परिचय एव गौरवं किमुत व्यवहारे इति अनैष्फल्यं प्रयत्नस्येति भावः । "संस्तवः स्यात्परिचयः" इत्यमरः । अत्र ध्वनिकारस्य वचोविवेचनमिति वाक्ये ध्वनिकारस्येति पदस्य वचःपदेनान्वयो विवक्षितः किन्तु वचोविवेचनयोः एकार्थीभावात् विवेचनमित्यनेन साकम्प्रतीयते इत्यतः अभवन्मतयोगो दोषः । एतच्चास्य पुरोभागिनः स्वात्मनिरूपणमिति । महतां सस्तव एव गौरवायेत्युक्त्या स्वस्य ग्रन्थकरणप्रवृत्तिप्रयोजनं निर्दिष्टम् । एतेन मय्यपि दोषाः किन्तु यशसे रचनाप्रवेश एष इति ध्वनितम् ॥ ३ ॥

सहसा यशोऽभिसर्तुं समुद्यतादृष्टदर्पणा मम धीः ।
स्वालङ्कारविकल्पप्रकल्पने वेत्ति कथमिवावद्यम् ॥ ४ ॥
ध्वनिवर्त्मन्यतिगहने स्खलितं वाण्याः पदे पदे सुलभम् ।
रभसेन यत् प्रवृत्ता प्रकाशकं चन्द्रिकाद्यदृष्ट्वैव ॥ ५ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

यदि परमत्र विवेचने स्खलितं सम्भाव्यते । तच्च यशोर्जनसम्भ्रमप्रवृत्तत्वादनुरूपग्रन्थान्तरापरिशीलनाच्च बुद्धिर्न चेतयत इत्युक्तं—**सहसेति** । **अभिसर्तुम्** आभिमुख्येन गन्तुम् अभिसारिकात्वेन च प्राप्तुम् । **दर्पणो** हृदयदर्पणाख्यो ध्वनिध्वंसग्रन्थोऽपि । **स्वालङ्कारो** व्यक्तिविवेचनाख्यस्तत्र । यद्वा ध्वनिकारं प्रति **विकल्पप्रकल्पनं** तत्र च, स्वस्य च यदलङ्करणं हारकटकादीनां प्रकल्पनं यथास्थानविरचनं तत्र । **अवद्यं** दोषम् । विशेषणसाम्याद्धियोऽभिसारिकाव्यवहारप्रतीतिः ॥ ४ ॥

नन्वसम्भवत एव स्खलितस्य कथं सम्भावनं क्रियत इति **ध्वनिवर्त्मनी**त्यादिना स्खलितस्य सम्भवमाह । **अतिगहनं** प्रमेयाकुलं सन्तमसावृत्तं च । **स्खलितं** पदभङ्गोऽपि । **रभसमा**वेगो(शो)वेगश्च । **चन्द्रिका** ज्योत्स्ना ध्वनिविचारणग्रन्थोऽपि ॥५॥

मधुसूदनीविवृतिः ।

अथ यच्चाप्यत्र विवेचने दूषणं संभाव्येत तच्च सर्वप्रथमं ध्वनिध्वंसनजन्ययशोलिप्सया रभसप्रवृत्तत्वात्, अनुरूपग्रन्थान्तरापरिशीलनात् भ्रान्तीनां च मनुष्यस्वभावसुलभत्वात् न मे बुद्धिपथिकं भवतीति माऽसूया कर्त्तव्येत्याह—**सहसेति** । मम धीः ममैव बुद्धिर्नान्यस्य । अनेनास्यासहायशूरत्वं ध्वन्यते । सहसा अकस्मादेव । यावन्नान्यस्य ध्वनिध्वंसजन्यं यशः प्रसरति तावतः कालात्प्रागेवेति भावः । यशः प्रति अभिसर्त्तुं ध्वनिध्वंसजन्ययशः प्रति गन्तुम् तत्प्राप्तुमिति भावः । समुद्यता सोद्योगा सोत्साहेति यावत् वर्त्तते । किन्तु अदृष्टदर्पणा । अदृष्टो दर्पणो ध्वनिध्वंसग्रन्थो यया सा तथाभूता सती । स्वालंकारे स्वनिर्मास्यमाणे व्यक्तिविवेकाख्ये काव्यालंकारे ये विकल्पाः भेदाः । ध्वनिखण्डनानीति हृदयम् । तेषां प्रकल्पने स्वयथास्थानविन्यासे विवेचने इति परमार्थः । अवद्यं दोषं कथमिव कथं वा वेत्ति ज्ञातुं शक्नोति । यथा समयविलम्बमनुभूय रभसेन नायकमभिसर्त्तुं प्रवृत्ता नायिका दर्पणमननुदर्शम् स्वालंकाराणां हारकटककेयूरादीनां यथास्थाने विन्यासः कृतो न वेति ज्ञातुं न प्रभवति स्वस्था दृष्टदर्पणा तु तथाकर्त्तुं शक्नोत्यपि तथा मद्बुद्धेरपि दशा ज्ञेयेति भावः । अत्र श्लिष्टविशेषण साम्याद्बुद्धौ अभिसारिकाव्यवहारप्रतीत्या समासोक्तिरलंकारः ॥ ४ ॥

अथ विचारपूर्वकं क्रियमाणेऽपि प्रकल्पने ध्वनिमार्गस्यातिगहनतया स्खलनं नाश्चर्यकरमिति विनयं प्रदर्शयति—**ध्वनिवर्त्मनीति** । अतिगहने प्रमेयैरतिगह्वरे ध्वनिवर्त्मनि ध्वनिमार्गे वाण्या भारत्याः स्खलितमसम्बद्धकथनं पदे पदे स्थाने स्थाने सुलभं सुप्रापम् । कुत एतदित्याह—**रभसेनेति** । यद्यतः इयं वाणी प्रकाशकं ध्वनिग्रन्थीयवि-

किन्तु तदवधीर्यार्यैर्गुणलेशे सततमवहितैर्भाव्यम् ।
परिपवनवदथवा ते जात्यैव न शिक्षितास्तुषग्रहणम् ॥ ६ ॥

तत्र ध्वनेरेव तावल्लक्षणं वक्तव्यम् । कोऽयं ध्वनिर्नामेति । तच्च ध्व-

व्यक्तिविवेकव्याख्यानम् ।

स्खलितमत्र सुलभम् । कथं तर्ह्यारभ्यत इत्याह—किन्त्विति । तत् स्खलितम् । परिपवनमिति तितउः तुषं दोषोऽपि । वैधर्म्यदृष्टान्तमूलो व्यतिरेकः ॥ ६ ॥

तत्रेति व्यक्तिविवेके प्रस्तुते सति तावद्ग्रहणं विवेकक्रमद्योतनार्थम् । लक्षणं वक्तव्यं कुत इत्याह—कोऽयं ध्वनिर्नामेति । यत्त इत्थंविधस्य प्रश्नस्यावतार इत्यर्थः । तथाहीति लक्षणपददूषणक्रमेण ध्वन्यन्तर्भावं सपीठिकाबन्धं दर्शयति । तद्व्य- भिचारस्योपसर्जनीकृतात्मत्वव्यभिचारस्याभावात् । तथा हि । सम्भवव्यभिचा- राभ्यां विशेषणविशेष्यभावो भवति, न केवलेन सम्भवेन ऊष्णोऽग्निरितिवत्, न केवलेन व्यभिचारेण शीतोऽग्निरितिवत् । नीलोत्पलादौ तु स्वरूपे सम्भवा- द्रक्तोत्पलादि(ष्व)भावाच्च सम्भवव्यभिचारौ विद्येते इति भवत्येव विशेषणविशेष्य- भावः । अर्थस्य पुनरर्थान्तरप्रकाशनं प्रत्युपसर्जनीकृतात्मत्वव्यभिचारो नास्ति

मधुसूदनीविवृतिः ।

वरणं चन्द्रिकादि । आदिपदात्लोचनं गृह्यते । अदृष्ट्वैवानालोच्यैव रभसेनावेगेन प्रवृत्ता अनुप्रविष्टा । अन्या अभिसारिकापि कामातुरा ज्ञानशून्याऽतिसन्तमसावृते चन्द्रिकारहिते मार्गे वेगाद्गच्छन्ती पदे पदे पदभङ्गमनुभवति । अत्रापि श्लिष्टविशेषणसाम्याद्वाण्यामभि सारिकाव्यवहारप्रतीतिः ॥ ५ ॥

केतकी कण्टकेद्धाऽपि सौरभेणातिशय्यते इत्युक्तिदिशा नात्रातीवदोषावकाशः गुणलेशोऽपि वर्त्तते । तत्रैवादरो विधेय इत्याशंसन्नाह—किन्त्विति । किन्तु तथापि आर्यैस्तत्स्खलनमवधीर्य तिरस्कृत्य अपहायेत्यर्थः । गुणलेशे गुणलवे सततं निरन्तरमव- हितैः सावधानैर्भाव्यम् । अथवा ते आर्याः परिपवनवत् शूर्पवत् जात्यैव जन्मनैव तुषग्रहणं बुसग्रहणम् । आर्यपक्षे दोषग्रहणम् । न शिक्षिताः न परिचिताः । अत्र गुणविषये आर्यैः सावहितैर्भाव्यमिति पूर्वं निरूप्य, पश्चाच्च अथवा मया किं वक्तव्यम् तेषां गुणे एव पक्षपातः प्रसिद्धो न दोषग्रहणे इत्यार्यपरिपवनौ गुणग्रहणकणग्रहणे अर्थतो दृष्टान्तीकृत्य- पुनः तुषस्य ( दोषस्य च ) ग्रहणं निषिद्धमिति वैधर्म्यदृष्टान्तमूल आक्षेपः । आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणादित्युक्तेरिति श्रीगुरुचरणाः । वैधर्म्यदृष्टान्तमूलो व्यतिरेकः इति प्राक्तनटकाकाराः ॥ ६ ॥

तत्रेति । ग्रन्थारम्भोपोद्घातमाटीकते । तत्र व्यक्तिविवेके प्रस्तुते सति ताव- दादौ । तावत्पदोपादानं स्वकृतविवेकस्य क्रमत्वनिदर्शनाय । ध्वनेरेव लक्षणं वक्तव्यम् । कोयं ध्वनिर्नामेति । यस्यान्तर्भावं कर्तुं मिच्छति स ध्वनिः कः तस्य पुनर्लक्षणं वक्तव्यमिति प्रश्नाशयः । उत्तरति—तच्चेति । तद्ध्वनिलक्षणं ध्वनिकारेणैव स्वत

निकारेणैवोक्तं। तद्यथा—

"यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥",

---

व्यक्तिविवेकव्याख्यानम्।

ततो न तस्य विशेषणत्वं घटते। नहीत्यादिनार्थान्तरप्रतीत्यर्थोपात्तस्यार्थस्य उपसर्ज-

मधुसूदनीविवृतिः।

उक्तम्। तद्यथेति तल्लक्षणं दर्शयति—यत्रार्थ इति। यत्र काव्यविशेषे। अर्थः अभिधेयः शब्दो वाचको वा उपसर्जनीकृतः गुणीकृतः स्वमात्मा, अर्थः स्वप्रतिपाद्यो याभ्यां तौ तथाभूतौ सन्तौ तं "सरस्वती स्वादु तदर्थवस्तु निष्यन्दमाना महतां कवीनाम्। आलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्" इति यदुक्तम्। चमत्कारनिदानम् अर्थम् (व्यङ्ग्यम्) व्यंक्तः। ध्वन्यमानार्थप्रतिपादनावसरे अर्थः स्वमात्मानम्, शब्दः स्वाभिधेयमर्थं गुणीकरोतीति भावः। वाशब्दस्य व्यङ्क्त इति द्विवचनस्य चायमाशयः। अर्थस्य शब्दवेद्यतयैव व्यञ्जकत्वात्तत्र शब्दस्य सहकारिताऽवश्यमङ्गीकार्या किन्तु तस्य गुणीभावः अर्थस्य प्राधान्यम्। एवं शब्दस्यापि अर्थव्यवहिततया तथात्वादर्थस्य सहकारित्वम् अन्यथा अज्ञातार्थोऽपि शब्दो व्यञ्जकतामियात्। परन्तु तस्योपसर्जनत्वं शब्दस्य प्राधान्यमित्येवं सर्वत्रापि शब्दार्थयोर्व्यञ्जकत्वमिति सिद्धान्तः। स काव्यविशेषः। काव्यं च तद्विशेषश्चासौ तथा। ध्वनिरिति संज्ञया सूरिभिः विद्वद्भिः न तु एकेन सूरिणा विदुषा कथितः एकस्य तथाकथनं प्रमादत्वेनापि संगृह्येत अर्थात् विद्वत्प्रक्रान्तमिदं कथनं न तु यथा तथा प्रवृत्तमित्यतो नात्र असांहष्टिकत्वशंका करणीयेति भावः ॥

अत्रादस्तत्त्वम्। पूर्वे हि विद्वांसो वैयाकरणाः ते च वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यं स्यात्। यद्युच्येत प्रत्येकमानर्थक्ये तत्समुदायस्य वाचकत्वमभ्युपेयम्। तदपि न विचारसहम्। समुदायोऽपि उत्पद्यमानाभिव्यज्यमानत्वेन द्विधा। तत्र आद्यस्य उत्पद्यमानवर्णसमुदायस्य वाचकत्वे यौगपद्येन तेषामुत्पत्त्यभावात्। अन्त्यस्य अभिव्यज्यमानवर्णसमुदायस्य वाचकत्वे क्रमेणैवाभिव्यक्त्या समुदायस्यैवाभावात्। ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां तेषां वाचकत्वमिति चेत् तर्हि सरो रसः नदी दीनः जरा राजा इत्यादावर्थप्रतिपत्त्यविशेषप्रसक्तिर्दुर्वारा। अतः अनित्यैस्तैः समुदायभूतैः घटपटादिशब्दरूपैः स्फोटसंज्ञको नित्यः शब्दः शब्दोपाध्यनुगतं ब्रह्मेति यावत् अभिव्यज्यते। अभिव्यक्तात्तस्मात्स्फोटादर्थस्य प्रतीतिः। तादृशानां स्फोटाभिव्यंजकानां घटपटादिशब्दानां ध्वनिरिति संज्ञा। तथा स्फोटः शब्दः। ध्वनिः शब्दगुणः इतिभाष्यात् स्फोटरूपस्य शब्दस्य ध्वनेः भेदेऽपि प्रतीतपदार्थको लोके ध्वनिः शब्दः इति। तस्माद् ध्वनिः शब्दः इति च भा-

इति । एतच्च विविच्यमानमनुमानस्यैव सङ्गच्छते; नान्यस्य । तथा हि-अर्थस्य तावदुपर्जनीकृतात्मत्वमनुपादेयमेव । तस्यार्थान्तरप्रतीत्यर्थमुपा

मधुसूदनीविवृतिः ।

ष्यादेवाऽभेदोपि ध्वनिशब्दयोरिति वैयाकरणानां सिद्धान्तसरणिः । एतन्मतानुसरणशीलैरालंकारिकैरपि गुणीभावितस्वार्थस्य शब्दार्थयुगलस्य उत्तमकाव्यस्येति यावत् "सरस्वती स्वादु तदर्थवस्तु" इत्युक्तचमत्कृतिभूमिभूतार्थव्यञ्जनक्षमत्वेन व्यञ्जकत्वसाधर्म्यात् ध्वनिरिति संज्ञा कृता । ध्वनतीति ध्वनिः काव्यमिति व्युत्पत्तेः । तथा रसध्वनिः अलंकारध्वनिः वस्तुध्वनिरितिकर्मधारयधिया प्रयुक्तप्रयोगदर्शनादभेदोऽपि आपातत स्वीकृत इति ।

ननु निर्मिमित्साविषयो ग्रन्थो व्यक्तिविवेकस्तस्य च व्यंजनासमालोचनमित्यक्षरार्थः । एवं हि व्यञ्जनाया एव लक्षणादिकं वक्तव्यं किमिति काव्यविशेषस्य ध्वनेर्लक्षणमुच्यत इति चेत्सत्यम् । व्यञ्जना नाम व्यङ्ग्यार्थप्रत्यायनाय स्वीकृतो व्यापारः । व्यापारो हि विषयादिमुखप्रेक्षितया विषयस्वाश्रयद्वारैव स्वरूपं प्रतिलभते, अत एव स्वस्वरूपमात्रेण क्षोदं न सहते । सहते च तद् विषयो व्यङ्ग्योऽर्थः, तदाश्रय उत्तमकाव्यं ध्वनिः । अतस्तादृशस्य ध्वनेरेव तावल्लक्षणमुक्तमिति निरवद्यम् ।

इतिः स्वरूपनिर्देशे । एतच्चेति । एतद् ध्वनिलक्षणं विविच्यमानम् आलोच्यमानं सत् अनुमानस्यैव संगच्छते सङ्गतं भवति न अन्यस्य अनुमानातिरिक्तस्य कस्यचिद् ध्वनिनामकस्य । एवं नानुमानात्पृथग्भूतो ध्वनिरित्याशयः ।

लक्षणे दोषदर्शकोपदर्शनक्रमेण ध्वनेरनुमानान्तर्भावमुपपादयितुं पीठिकामाबध्नाति—तथाहीति । अर्थस्य वाच्यार्थस्य उपसर्जनीकृतस्वत्वमितिविशेषणं सर्वथा नोपादेयम् । अनुपादाने हेतुं दर्शयति—तस्येति । अर्थान्तरप्रतीत्यर्थम् व्यङ्ग्यार्थज्ञानार्थमुपात्तस्य काव्यान्तरुपस्थापितस्य तस्य वाच्यार्थस्य तद्व्यभिचाराभावात् उपसर्जनीकृतात्मत्व व्यभिचारविरहात् ।

अयं भावः । संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदितिनयबलादुभयसत्तायामेव विशेष्यविशेषणभावः संजाघटीति, न केवलायां संभवसत्तायामुष्णोऽग्निरितिवत्, न वा केवलायां व्यभिचारसत्तायां शीतोऽग्निरितिवत्, उभयसत्तायां यथा नीलोत्पलादिषु विशेषणीभूतस्य नीलस्य उत्पलादिषु संभवात् रक्तोत्पलादिषु तस्य व्यभिचाराच्च संजाघटीत्येव विशेष्यविशेषणभावः । एवं यथा अर्थस्य द्वितीयार्थप्रकाशनदशायामुपसर्जनीकृतात्मत्वं संभवति तथैव यदि तस्य तद्दशायां तत्त्वं व्यभिचरेदपि तदा उपसर्जनीकृतात्मत्वस्य अर्थविशेषणत्वं संगतिमत्स्यात् । किन्तु नात्र अर्थे तस्य व्यभिचारः । इत्यनायत्या सिद्धं भवति यत् न तदर्थस्य विशेषणं भवितुमर्हतीति ।

त्तस्य तद्व्यभिचाराभावात् । न ह्यग्न्यादिसिद्धौ धूमादिरुपादीयमानो गुणतामतिवर्तते । तस्य तन्मात्रलक्षणत्वात् । यत् पुनरस्य क्वचित् समासोक्त्यादौ प्राधान्यमुच्यते तत् प्राकरणिकत्वापेक्षयैव । न प्रतीय-

व्यक्तिविवेकव्याख्यानम् ।

नीकृतात्मत्वव्यभिचाराभावं निदर्शयति । **गुणताम्** उपसर्जनत्वम् । **तस्येति** गुणस्य । **तन्मात्रलक्षणत्वादिति** । अन्यसिद्ध्यर्थमुपादीयमानत्वं गुणस्य लक्षणमित्यर्थः । **तत्प्राकरणिकत्वेति** । इह द्विविधं प्राधान्यं प्राकरणिकत्वस्वरूपं प्राधान्यं प्रतीयमानत्वस्वरूपं चेति । तत्र प्राकरणिकत्वस्वरूपं प्राधान्यं प्रतीयमानार्थप्रतीत्यर्थमुपात्तस्यार्थस्य समासोक्त्यादौ कामं विद्यते । नतु तदिह लक्षण उपयुज्यते । प्रत्याय्य-

मधुसूदनीविवृतिः ।

अर्थान्तरप्रतीत्यर्थमुपात्तस्य उपसर्जनीकृतात्मत्वाव्यभिचारं दृष्टान्तेन साधयति—**नहीति** । संदिग्धसाध्यके पक्षे पर्वतप्रभृतौ अग्न्यादेः सिद्धौ साधनविषये । साधनं सिद्धिस्तस्यां सिद्धौ । तदर्थमिति भावः । उपादीयमानः हेतुत्वेन गृह्यमाणो धूमादिः गुणतामुपसर्जनत्वं नातिवर्त्तते नातिक्रामति । अर्थात् अग्न्यादीन् प्रति धूमादयो गुणा एव । कुत एतदिति पर्यनुयोगे हेतुमुपन्यस्यति—**तस्येति** । तस्य धूमादेर्गुणस्य । तदेव तन्मात्रम् अन्यसिद्ध्यर्थमुपादीयमानत्वमेव लक्षणं स्वरूपं ज्ञापकं वा यस्य सः । तस्य भावस्तत्वं तस्मात् ।

ननु यदिह साधितम् वाच्यार्थस्य अर्थान्तरं प्रति उपसर्जनत्वसव्यभिचारि ततः विशेषणत्वसाधकव्यभिचाररहिततया उपसर्जनीकृतात्मत्वस्य अर्थविशेषणत्वं न संगच्छत इति । तन्मन्दम् । यतो हि समासोक्त्यप्रस्तुतप्रशंसादौ अलंकारे गुणीभूतव्यङ्ग्यभेदे व्यङ्ग्यमुपसर्जनमेव किन्तु वाच्यं चमत्कारभूमिमधिशेते इति प्रधानम् । एवं च अर्थस्य उपसर्जनत्वव्यभिचारदर्शनेन ध्वनिकारस्य उपसर्जनीकृतात्मत्वविशेषणप्रदानं ज्याय इत्याशङ्कायामाह—**यत् पुनरस्येति** । अत्र वाक्ये प्रक्रान्तार्थविषयकेण तदा यच्छब्दस्याक्षेपः आलोचनस्य प्राधान्याप्राधान्यविषयकत्वात्प्राधान्यस्य प्रक्रान्तत्वात् । अस्य वाच्यार्थस्य क्वचित्पुनः समासोक्त्यादौ । आदिपदाद् गुणीभूतव्यङ्ग्यानामन्येषां ग्रहणम् । यत्प्राधान्यमुच्यते तत् प्राधान्यं तस्य प्राकरणिकतया एव संगच्छते । अर्थात् गुणीभूतव्यङ्ग्येषु वाच्यार्थः प्राकरणिकः अतस्तस्य प्राकरणिकत्वहेतुकमेव तत्र प्राधान्यं न तु अर्थान्तरस्य प्रतीयमानस्य अपेक्षयापीति । तत्र प्राकरणिकत्वमस्तीति तस्य प्राधान्यम् ।

इदमत्राकूतम् । सामान्यविशेषभावेन अर्थे प्राधान्यं द्विविधं संभवति सामान्यतो वर्ण्यत्वेन विशेषतः स्वस्वरूपत्वेन अर्थात् वाच्यत्वेन लक्ष्यत्वेन व्यङ्ग्यत्वेन च । तत्र वर्ण्यत्वनिमित्तं प्राधान्यं वाच्यलक्ष्यव्यङ्ग्येतित्रिरूपेऽपि अर्थे समानम् , ते च भवन्तु वा द्वितीयार्थप्रत्यायनार्थमुपात्ता मा वा । स्वस्वरूपत्वेन प्राप्तं प्राधान्यं स्वस्मिन्नेवास्ति

मानापेक्षया । यथा—

"उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम् ॥

अत्र हि प्रतीयमानेनानुगतं वाच्यमेव प्राधान्येन प्रतीयते समारोपित-

व्यक्तिविवेकव्याख्यानम् ।

प्रत्यायकभावजीवितत्वं हि ध्वनिलक्षणम् । तत्र प्रत्याय्यस्योपेयत्वात् प्राधान्यं, प्रत्यायकस्य पुनरुपायत्वादप्राधान्यम् । एवञ्च प्राकरणिकत्वसमुत्थापितं भवदपि तस्य प्राधान्यं ध्वनिलक्षणे नोपयुज्यत इति नोपसर्जनीकृतात्मत्वस्य तद्व्यावर्त्यं भवतीति न तद् विशेषणमुपादेयम् । अत्र च वाच्यस्यैव प्राकरणिकत्वादन्यस्य च प्राकरणिकमपेक्ष्येत्यर्थो व्याख्येयः । एवं प्रतीयमानापेक्षयेति न प्रतियोग्यन्तरमपेक्षणीयम्, अपि तु पूर्ववत् स्वापेक्षया व्याख्येयम् । भावप्रत्ययपाठः पुनरत्रानार्षः । अत्र हीत्यादिना

मधुसूदनीविवृतिः ।

किन्तु यदि एषु परस्परप्राधान्याकलनप्रसङ्गः, तदा परं परं प्रधानं पूर्वं पूर्वं गुण उपायत्वात्परस्य । एवं च यद्यपि वाच्यार्थे वर्ण्यत्वनिमित्तं प्राधान्यं प्रकामं विद्यते, किन्तु तादृशं प्राधान्यमिह ध्वनिलक्षणे नोपयोगि । यतः व्यङ्ग्यव्यञ्जकभावप्राणो ध्वनिः । समुट्टङ्कितं चैतद् "व्यङ्क्तः" इति वदता ध्वनिकारेण । ततश्च सुतरां व्यङ्ग्यस्योपेयत्वात्प्रधानत्वम्, व्यञ्जकस्य पुनरुपायत्वादुपसर्जनत्वमिति । नच वाच्यम् अर्थस्य उपसर्जनीकृतात्मत्वविशेषणमाहात्म्यात् प्राकरणिकत्वसमुत्थापितं प्राधान्यं परिह्रियेतेति । तादृशं प्राधान्यं प्रकृतानुपयुक्ततया न तद्विशेषणेन परिहरणीयमित्यनुपादेयमेव तत् ।

यथेत्यनेन प्राकरणिकत्वनिमित्तमेव वाच्यार्थस्य प्राधान्यं भवतीति उदाहरणमुखेन साधयितुमुपक्रमते–उपोढेति । उपोढः धृतः । प्रेम्णो वहनीयत्वोक्त्या गुरुतमत्वं सूच्यते, रागः सांध्योऽरुणिमा प्रेमा च । शशिना मृगाङ्केण कलङ्किना उपनायकेनेति यावत् । अन्यथा चन्द्रेन्दुपदानां परश्शतानामपि योजयितुं शक्यत्वात् । विलोलाश्चञ्चलाः तारका नक्षत्राणि कनीनिकाश्च यत्र तत् । निशाया रात्रेः नायिकायाश्च मुखं प्रारम्भो वक्त्रं च । तथा झटित्येव प्रेमरभसेन गृहीतमाभासितं चुम्बितुमाक्रान्तं च । यथा पुरः पूर्वस्यां दिशि रागात् सांध्यारुणिम्नोऽनन्तरं तया रात्र्या करणेन समस्तं मिश्रितं तिमिरं सूर्यांशुकं च गलितं प्रशान्तमपि न लक्षितं चन्द्रस्य झटिति समुदितत्वात् कदा तिमिरांशुकं प्रशान्तमिति ज्ञातुं न पारितम् । चन्द्रोदयोत्तरं तिमिरांशुके गलिते अर्थात् स्फुटालोके जाते सति प्रदोषो लोकैर्न लक्षितो यतस्तिमिरसंवलितांशुसद्भावे प्रदोषो ज्ञातुं शक्यते न स्फुटालोकोत्तरमिति रात्रिपक्षेऽर्थः । नायिकापक्षे च पुरोऽग्रे गलितमपि पतितमपि तिमिरांशुकं नीलाम्बरं रागात्प्रेम्णः हेतोः तया नायिकया न लक्षितं न ज्ञातम् ।

अत्र हि पद्ये प्रतीयमानेन व्यंग्येन अनुगतम् अनुयातम् वाच्यमेव वाच्यार्थं

नायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वात्। तदपेक्षया च तस्य लिङ्गत्वादुपसर्जनीभावाव्यभिचार एव। व्यभिचारेऽपि वैफल्यादनुपादेयमेवैतद्, गुणीभूतव्यङ्ग्येऽपि काव्ये चारुत्वप्रकर्षदर्शनादिति वक्ष्यते।

### व्यक्तिविवेकव्याख्यानम्।

वाक्यार्थत्वादित्यन्तेन प्राकरणिकत्वनिमित्तं प्राधान्यं समर्थ्यते। तदपेक्षयेत्यादिना तु प्रतीयमाननिमित्तम्। समारोपितनायिकानायकव्यवहारयोरिति ध्वनिकारं प्रति सोत्प्रासं कथितम्। नायिकानायकव्यवहारयोरिति ध्वनिकारपाठ एकशेषाभावसमर्थनाकल्पना स्यात्। व्यभिचारेऽपीति। वाच्यस्य प्रतीयमानापेक्षया चारुत्वनिमित्तं प्राधान्यं व्यभिचारः। तत्र सत्यपि तस्य व्यावृत्यर्थं विशेषणमयुक्तं निष्फलत्वाद्, यतो यत्र गुणीभूतव्यङ्ग्ये व्यङ्ग्यापेक्षया वाच्यस्य चारुत्वं तदिह व्यावर्त्तनीयम्। नच तत्र वाच्यस्यैव चारुत्वमिति नियमः व्यङ्ग्यस्यापि प्रकृष्टचारुत्वदर्शनात्। एतदिति

### मधुसूदनीविवृतिः।

एव प्राधान्येन प्रतीयते। वाच्यार्थस्य प्राधान्ये हेतुमाह—समारोपितेति। समारोपितः नायिकानायकयोर्व्यवहारः समाचारो ययोस्तयोः। यद्यपि पुमान् स्त्रियेति सूत्रेण स्त्रिया सहोक्तौ पुमान् शिष्यते इत्यर्थकेन नायिका च नायकश्चेति एकशेषीभावे नायकौ तयोर्नायकयोरित्येव भवितुं न्याय्यम्। तथापि नायिकाया यो व्यवहारः स निशायां समारोपितः। नायकस्य च यो व्यवहारः स शशिनि समारोपितः इति व्याख्यानेन न कोपि दोषः तथा महामहतामुक्तिः कथंचिन्नेयापि स्यात्। निशा च शशी चेति निशाशशिनौ तयोरेव वाक्यार्थत्वात्प्रधानतया परामृष्टत्वात्। एवमपि वाच्यस्य प्राकरणिकापक्षेयैव प्राधान्यं समायातीति भावः। तदपेक्षया अर्थस्य प्रतीयमानापेक्षया व्यङ्ग्यार्थनिरूपितमितियावत्, एतस्य लिङ्गत्वेऽन्वयः, तस्य वाच्यस्य लिङ्गत्वम् अनुमापकत्वम्। अतः उपसर्जनीभावस्य गुणत्वस्य अव्यभिचारः तदेवमर्थस्य विशेषणत्वसाधकाभाव इति पर्यवसितम्।

ननु समासोक्त्यप्रस्तुतप्रशंसादौ प्रतीयमानापेक्षया वाच्यस्य चारुत्वमस्ति, न वा। तत्र नान्त्यः अनुभवस्यापलपितुमशक्यत्वात्। आद्यश्चेत् समायातं वाच्ये प्राधान्यम्। ततश्च उपसर्जनीकृतात्मत्वस्य व्यभिचार एवेत्यभ्युपगम्य ब्रूते—व्यभिचारेऽपीति। व्यभिचारेऽपि वाच्ये चारुत्वनिमित्तकप्राधान्येन उपसर्जनीकृतात्मत्वस्य अभावेऽपि एतद्विशेषणमुपसर्जनीकृतात्मत्वमनुपादेयमेव अप्रयोक्तव्यमेव, यतो न केवलं तत्र गुणीभूतव्यङ्ग्येऽपि काव्ये वाच्यस्यैव चारुत्वप्रकर्षः क्वचिद्व्यङ्ग्यस्यापीति विफलमेव उपादानं स्यादिति वक्ष्यते काव्यवैशिष्ट्यनिराकरणप्रस्तावे। वयमपि तत्रैव विवेक्ष्यामः।

उक्तं गुणीकृतात्मत्वं यदर्थस्य विशेषणम् ।
गमकत्वान्न तत् तस्य युक्तमव्यभिचारतः ॥ ७ ॥

इति सङ्ग्रहश्लोकः ।

शब्दः पुनरनुपादेय एव । तस्य स्वार्थाभिधानमन्तरेण व्यापारान्त-

व्यक्तिविवेकव्याख्यानम् ।

उपसर्जनीकृतात्मत्वम् । वदयत इति । काव्यवैशिष्ट्यनिराकरणप्रस्तावे । गमकत्वेनोपायत्वादुपसर्जनीकृतात्मत्वव्यभिचाराभावः । तदेवमव्यभिचाराभावः । तदेवमव्यभिचारादर्थस्य विशेषणमनुपपन्नम् ॥

+ अत्र व्यक्तिवादिनोऽयमभिप्रायः–यदेतदर्थस्य गुणीकृतात्मत्वं तदर्थान्तरप्रत्यायकत्वेनोपायत्वादप्राधान्यं, प्रतीयमानापेक्षया अचारुत्वं, विश्रान्तत्वेनार्थान्तरानुपकार्यत्वं चेति त्रयः पक्षाः सम्भवन्ति । तत्राद्यं पक्षद्वयमनूद्य कामं दूषितम् । तथा हि । वाच्यस्यार्थस्य प्रतीयमानापेक्षया अप्राधान्यमुपायत्वादव्यभिचारि 'यो हि यदर्थमुपादीयत' इत्याद्युक्तेः । अचारुत्वेऽस्य पुनर्व्यवच्छेद्यं नास्ति, गुणीभूतव्यङ्ग्येऽपि वाच्यस्याचारुत्वदर्शनात् । तृतीयस्तु पक्षो गुणीभूतव्यङ्ग्यनिरासाय सिद्धान्तितः । तथा हि । समासोक्त्यादौ प्रतीयमानोऽर्थो वाच्यार्थोपायकोऽपि न स्वात्मनि विश्रान्तिं भजते, प्रत्यावृत्त्य वाच्यार्थोपस्काराय प्रवृत्तत्वात् । एतच्चोक्तं 'समारोपितनायिकानायकव्यवहारयोर्निशाशशिनोरेव वाक्यार्थत्वादि'ति । ततश्च गुणीभूतव्यङ्ग्ये वाच्यस्य स्वविश्रान्तत्वेनार्थान्तरोपकार्यत्वं व्यावर्त्यमिति विशेषणमुपपन्नम् ।

गुणीकृतात्मतार्थस्य न प्रतीतावुपायता ।
नाचारुत्वमपि त्वर्थैर्बौद्धैरनुपकार्यता ॥ १ ॥

इति सङ्ग्रहश्लोकः ।

मधुसूदनीविवृतिः ।

उक्तार्थं संक्षेपेण बोधयितुं संग्रहश्लोकं संग्रथ्नाति—उक्तमिति । यदर्थस्य गुणीकृतात्मत्वं विशेषणमुक्तम्, तद्विशेषणं तस्यार्थस्य न युक्तम् । तत्र हेतुः—वाच्यार्थस्तत्र गमक एव प्रतीयमानं प्रति उपाय एव, ततश्च उपसर्जनीकृतात्मत्वमपि तत्र न व्यभिचरति । इति संग्रहश्लोकार्थः ।

एवमर्थस्य उपसर्जनीकृतात्मत्वाभावं प्रसाध्य शब्दस्यानुपसर्जनीकृतार्थत्वं साधयितुमाह–शब्द इति । उपसर्जनीभावाकलनदशायां शब्दः पुनः शब्दस्तु । पुनरिति तोरर्थे। अनुपादेय एव अनुल्लेख्य एव । ध्वनिलक्षणे शब्दोऽनुपादेय इति न किंचिदेतत् । कुतः अनुपादेय इत्यत आह—तस्येति । तस्य शब्दस्य स्वार्थाभिधानमन्तरेण स्वार्थकथनं विहाय व्यापारान्तरस्य क्रियान्तरस्य अनुपपत्तेः अयुक्तत्वस्य उपपादयिष्यमाणत्वात् । युक्तिभिः साधयिष्यमाणत्वात् । अयं भावः । अज्ञातज्ञापकरूपाच्छब्दादज्ञातज्ञापक

+ अर्थविशेषणस्यानुपपन्नत्वं ग्रन्थकृता साधितं, तद् ध्वनिकारदृशा खण्डयन् समाधत्ते–अत्रेति।

रानुपपत्तेरुपपादयिष्यमाणत्वात् । न च तस्यानुकरणव्यतिरेकेणोपसर्ज-नीकृतार्थत्वं सम्भवति यथा—

"तं कर्णमूलमागत्य पलितच्छद्मना जरा ।
कैकेयीशङ्कयेवाह रामे श्रीर्न्यस्यतामिति ॥"

कुतस्तर्हि तदर्थावगतिः । अनुकार्यादिति ब्रूमः तस्य सार्थकनिरर्थक-

व्यक्तिविवेकव्याख्यासम् ।

शब्दस्वरूपस्यानुपादेयत्वमुक्तम् । तद्विशेषणस्यापि तदाह—न चेति । अनुकरणे शब्दप्राधान्याद्विद्यमानोऽप्यर्थ उपसर्जनीभूत एव । तदर्थावगतिरिति रामे श्रीन्यस-नलक्षणव्यवहार्यार्थावगतिरित्यर्थः । अनुकार्यादिति जरासम्बद्धाद्वचनादित्यर्थः । द्वि-

मधुसूदनीविवृतिः ।

त्वमपह्नियेत तर्हि नापरः कश्चिद् व्यापारोऽवशिष्येत दीपात् प्रकाशकत्वरूपव्या-पारापहरण इव । अतः अज्ञातज्ञापनार्थं तदुपादानमावश्यकं स्यात् । एवंहि दीपे यथा प्रकाशकत्वमेव व्यापारः नान्यः । तथा शब्दे अज्ञातज्ञापनमेव व्यापारः; नान्यः अर्थोपसर्जनीकरणरूपः । अतः अर्थोपसर्जनीकरणव्यापारप्रकरणे शब्द अनुपादेय इत्युक्तं भवतीति । यश्च शब्दे स्वार्थाभिधानातिरिक्तः अर्थोपसर्जनीकरणात्मकव्यापारो दृश्यते स स्थलविशेष एवेति साधयितुमुपक्रमते—नचेति । अनुकरणव्यतिरेकेण अनुकरणं विहाय तस्य शब्दस्य उपसर्जनीकृतार्थत्वं न संभवति अर्थात् अनुकरणस्थल एव शब्दे अर्थोपसर्जनीकरणव्यापारः संभाव्यते नापरत्रेति ।

इदं च प्रासंगिकं ज्ञेयम् । भेदाभेदाभ्यां द्विप्रकारमनुकरणं भवति । तत्र यत्र भेदा-नुकरणं तत्र शक्तिलक्षणाऽन्यतरसम्बन्धेन पदबोध्यत्वरूपार्थवत्त्वात् अर्थवत्सूत्रेण प्राति-पदिकसंज्ञया स्वाद्युत्पत्तिः । अनुकार्यभूतश्शब्दस्तदर्थः । यथा—युस्मदस्मद्भ्यामिति युष्मदस्मदोःषष्ठीचतुर्थीतिप्रभृतिषु । यत्र च अभेदानुकरणं तत्र सादृश्यसम्बन्धेन यत्र पदार्थोपस्थितिर्न तत्र प्रातिपदिकसंज्ञेति गवित्ययमाहेत्यादिमहाभाष्यप्रयोगानुदर्शनसि-द्धकल्पनायाः जागरूकतया प्रातिपदिकत्वाभावान्न स्वाद्युत्पत्तिः—यथा गवित्ययमाहे त्यादिः । एवं भेदानुकरणे अनुकार्यशब्दरूपोऽर्थः व्यवहार्यार्थापेक्षया गुणीभूतः "तदेतद्व-क्ष्यते अन्यस्य तूपसर्जनीभावाव्यभिचार एवे"ति ।

अनुकरणस्थलं प्रदर्शयति—तं कर्णमूलमिति । जरा वार्धक्यं पलितच्छद्मना व-लीपलितव्याजेन; नेदं पलितम् अपि तु जरैवेति अपह्नुतिरलंकृतिः । कैकेयीशंकया इव कर्णमूलं श्रुतिप्रदेशमागत्य "रामे श्रीः राज्यलक्ष्मीर्न्यस्यता" मिति तं दशरथं राजा नमाह । अन्योऽपि परश्रुतिभिया गुप्तमर्थं कर्णसमीपमागत्य निवेदयति । अत्र कविना रामे श्रीन्यसनरूपं जरावाक्यमनुकृत्य स्वकाव्ये उल्लिखितमिति स्वाव्यव-हितपूर्ववर्त्तिस्वरूपपरामर्शकेन इतिशब्देनावेदितम् ।

नन्वत्रानुकरणस्थले अर्थोपसर्जनीकरणरूपव्यापारेऽभ्युपगते स्वार्थाभिधानात्मक

त्वभेदेन द्वैविध्यतः । न त्वनुकरणात्, तस्येतिना व्यवच्छिन्नस्य स्वरूपमात्रेऽवस्थानात् । अन्यस्य तूपसर्जनीभावाव्यभिचार एव, तस्य तदर्थमुपादानतः; यो हि यदर्थमुपादीयते, नासौ तमेवोपसर्जनीकरोतीति युक्तं

---

व्यक्तिविवेकव्याख्यानम् ।

विधो ह्यर्थोऽनुकार्यशब्दरूपः तत्प्रतिपादितव्यवहार्यार्थरूपश्च । तत्राद्योऽनुकरणशब्दस्यार्थः । तत्रानुकरणशब्दाद्यद्यपि न व्यवहार्यार्थप्रतीतिस्तथाप्यनुकार्यशब्दस्तदर्थं प्रत्याययेदित्यर्थः । सार्थकत्वं चानुकार्यस्य यथा-'हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मित,मित्यादौ, निरर्थकत्वं यथा-'दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः' इत्यादौ । अन्यस्यत्विति । अनुकरणशब्दव्यतिरिक्तस्य स्वतन्त्रतया वाचकस्य अनुकार्यशब्दस्य च । उपसर्जनीभावाव्यभिचार एवेति । वाच्यं प्रतीति शेषः ।

मधुसूदनीविवृतिः ।

व्यापाराभावेन कुतस्तदऽर्थावगतिरित्याशंक्ते—कुत इति । कुतः कस्माच्छब्दात् तस्य अनुकरणस्य अनुकरणसम्बन्धिन अर्थस्य रामे श्रीन्यसनरूपव्यवहार्यार्थस्य अवगतिः ज्ञानं जायत इति शेषः । उत्तरति—अनुकार्यादितीति । अनुकार्यादेव सार्थकत्वनिरर्थकत्वयोः भेदेन द्विविधादपि अनुकरणीयशब्दादेव तस्य अनुकरणसम्बन्धिनोऽर्थस्य प्रतीतिरिति ब्रूमः प्रतिपादयामः । तुरित्यवधारणे । नैव अनुकरणात्तदर्थावगतिः । कुत एतदित्याह—तस्येति । इतिशब्देन व्यवच्छिन्नस्य विशेषितस्य तस्य अनुकरण शब्दस्य स्वरूपमात्रे आकारे एव अवस्थानात् स्थितेः । स्वरूपमात्रपरतया च ततो नार्थावगतिर्भवितुं शक्तेति भावः ।

अत्रेदं हृदयम् । शब्दोपस्थाप्योऽर्थो द्विविधः अर्थक्रियाकारिरूपः अनुकार्यशब्द रूपश्च । तत्राद्यः घटादिव्यक्तिरूपः तत्तत्पदशक्तिबोध्यः । द्वितीयोऽनुकरणशब्दस्यार्थः द्विविधः सार्थकत्वनिरर्थकत्वभेदेन । यद्यपि अनुकरणशब्दान्न व्यवहार्यार्थावगतिस्तथापि अनुकार्यशब्दस्तदर्थं प्रत्याययतीति तत्वम् । अनुकार्यस्य सार्थकता यथा-रामे श्रीर्न्यस्यतामिति । हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितमित्यादि । अत्रोभयत्र कविना क्रमशो जरोक्तिः शिवोक्तिश्चानुकृता । अनुकृतोक्त्योश्च वर्णात्मकपदतया सार्थकत्वम् । निरर्थकता यथा वनस्वरूपवर्णनाऽवसरे "दात्यूहव्यूहकेलीकलितकुहकुहारावकान्तावनान्ताः इत्यत्र "दात्यूहव्यूहेन केल्यां कलितो यः कुह कुह इत्यात्मकः आरावस्तेन कान्ता" इत्येवंरूपेण कुहकुहेति ध्वन्यात्मकशब्दतया निरर्थकत्वम् ।

अन्यस्यति-ति । अन्यस्य अनुकरणाद्भिन्नस्य स्वतन्त्रतया वाचकस्य अनुकार्यस्य तु वाच्यं प्रति उपसर्जनीभावस्य गुणीभावस्य अव्यभिचार एव सत्ता एव । अभावाभावस्य सद्रूपत्वात् । यतः तदर्थं वाच्यबोधायैव तस्य अनुकार्यस्य शब्दस्य उपादानं भवति ।

दृष्टान्तेन प्रकृतमुपपादयति—यो हीति । यत् किमपि वस्तुजातम् ( घटादि )

वक्तुं यथोदकाद्युपादानार्थमुपात्तो घटादिस्तदेवोदकादि। अन्यथा प्रधाने- तरव्यवस्था निर्निबन्धनैव स्यात्। अत एव घटादिरेव प्रतिनिधीयते नो-

व्यक्तिविवेकव्याख्यासम्।

ननु शब्दाभिप्रायेणोपसर्जनीकृतार्थत्वं प्रकृतम्। शब्दस्य स्वरूपेणोपसर्जनीभावः किन्नि- रूपितः। सत्यम्। अर्थस्य तावच्छब्दं प्रत्युपसर्जनीभावसम्भवः प्रकृतः। स एव श- ब्दस्यार्थं प्रत्युपसर्जनीभावाव्यभिचारेण प्रकाश्यते। य एव ह्यर्थस्य शब्दं प्रत्युपसर्जनी- भावाभावः स एव शब्दस्योपसर्जनीभावाव्यभिचारस्तयोः परस्परापेक्षया गुणप्रधानभा- वस्य व्यवस्थितत्वात्। ततश्च शब्दापेक्षयार्थस्य प्राधान्याच्छब्दस्य गुणीभूतार्थत्वमसम्भ- वि। अयमत्र पिण्डार्थः—शब्दस्य गुणीभूतार्थत्वं स्वार्थापेक्षया प्रतीयमानापेक्षया चेति द्वैतम्। तत्र स्वार्थापेक्षयासम्भव उक्तः। प्रतीयमानापेक्षया पुनरर्थन्यायेनाव्यभिचारो योजनीयः, यथानन्तरमेव वक्ष्यते 'नोदकादीति'। यथाहुः—'गुणाः प्रतिनिधीयन्ते घटादीनां न जातयः' इति। ननु मुख्यसदृशः प्रतिनिधिरित्युच्यते। मुख्यं च प्रधानम्। एवञ्च कथमुच्यते प्रधानस्य न प्रतिनिधिरिति। सत्यम्। प्रतिनिधीयमानोऽमुख्यः

मधुसूदनीविवृतिः।

यदर्थं यत्कृते (जलार्थम्) उपादीयते गृह्यते असौ गृहीतवस्तुविशेषः (घटादिः) तमेव उपादातुमिष्टमेव (जलादिकमेव) उपसर्जनीकरोति तस्यैव गुणभावं सम्पादयति इति न वक्तुं युक्तम्–यथा उदकादेरुपादानार्थमुपात्तो घटादिस्तदेव उदकादिकं नोपसर्जनीकरोति; अन्यथा पूर्वोक्ताऽस्वीकारे यो यदर्थमुपात्तः स तमुपसर्जनीक- रोति इत्यस्य च स्वीकारे प्रधानेतरव्यवस्था गुणप्रधानभावव्यवस्था निर्निबन्धना निष्कारणा स्यात्।

अयं भावः। अर्थं बोधयितुमुपादीयमानः शब्दः नार्थं गुणीकरोति किन्तु स्वय- मेव गुणीभवति। यथा जलानयनार्थं घट उपादीयते स उपादीयमानो घटो जलं न गुणीकरोति अपि तु स्वयमेव स तथा भवति। यदि च जलार्थमुपात्तो घटः जलमेव गुणीकुर्यात् तर्हि गतं प्रधानेतरव्यवस्थया। यतो हि प्रधानेतरव्यवस्था तत्रैव भवति यत्र पदार्थानां मुख्यामुख्यभावः स्यात्। मुख्यश्च स एव यत्र सर्वासां क्रियाणां सर्वेषां प्रयोजनानां च संभूय निपतनम् अंगत्वमिति यावत् भवति। निपत्यमानाश्च सर्वे अमुख्यकोटीमाटीकन्ते। एवं च घटादीनां प्रयोजनं जलाधारातिरिक्तं न किमप्यव- शिष्यते इति घटादेरङ्गत्वमेव जलादेश्च मुख्यत्वमेवेति।

**अत एवेति**। अत एव प्रधानेतरव्यवस्थायाः सनिबन्धनत्वादेव, घटादिरेव प्रति- निधीयते तुल्यरूपतया स्थाप्यते नोदकादिः प्रतिनिधीयते। मुख्यतुल्यरूपस्यैव प्रति- निधिशब्दार्थत्वात्। एवमेव अर्थं बोधयितुं प्रवृत्तः शब्द एव विशेषणम् उपसर्जन- मिति यावत् न बोध्यमानोऽर्थस्तादृशः इति शब्दस्य गुणीकृतार्थत्वकथनेऽसम्भवो लक्षणदोषः।

दकादीत्यसम्भवो लक्षणदोषः । व्यभिचारसम्भवयोरपि वा यत् स्वार्थयोरुपसर्जनीकृतत्ववचनं तत् पुनरुक्तं, तयोरर्थान्तराभिव्यक्त्यर्थमुपात्तयोस्सामर्थ्यादेव तदवगतेरित्युक्तम् । न च स्वरूपमात्रानुवादफलमेतदिति शक्यं वक्तुं तस्य पुनरुक्तिप्रकारत्वोपपादनतः । एवञ्च यत् 'सुवर्ण-

## व्यक्तिविवेकव्याख्यानम् ।

एव भवति केवलं मुख्यामुख्यानां प्रतिनिध्यर्हाणाममुख्य एव प्रतिनिधीयते न मुख्यः प्रधानत्वादित्युक्तं नोदकादीति । व्यभिचारसम्भवयोरपीति । प्रौढत्वाद्यमभ्युपगमवादः । अर्थाभिप्रायेण व्यभिचारः, गुणीभूतव्यङ्ग्ये प्रतीयमानापेक्षया वाच्यस्य चारुत्वाभ्युपगमात् । शब्दाभिप्रायेण सम्भवः अर्थान्तरापेक्षया शब्दस्य गुणीकृतार्थत्वात् । स्वार्थयोरिति स्वस्यार्थस्य च । तदवगतेरिति उपसर्जनीकृतत्वावगतेः । तस्येति स्वरूपमात्रानुवादस्य । एवञ्चेति व्यङ्ग्यव्यञ्जकभावो हि परमार्थतो गम्यगमकभावः । एवञ्च शब्दस्य व्यञ्जने 'सुवर्णपुष्पामि'त्यादौ शब्दस्य व्यापारान्तराभावात् साध्यसाधनाख्ययोधर्मयोरनुगमस्य सम्बन्धस्यासिद्धत्वाद्व्यङ्ग्यव्यञ्जकभावो न सिद्ध इत्यर्थः । व्यक्तिवादिनः पुनर्मते शब्दस्य शक्त्यन्तरसमर्थनात् स्वरूपेणोपादानस्य सार्थकत्वं विवक्ष्यते । तस्य चोपसर्जनीकृतार्थत्वं विशेषणं सप्रयोजनमेव तथा

## मधुसूदनीविवृतिः ।

ननु पूर्वमुक्तं गुणीभूतव्यङ्ग्ये चारुतया वाच्यस्य प्राधान्यम्, ध्वन्यपेक्षया च तस्याप्राधान्यमिति संभवव्यभिचारावपि दृश्येते ततो न पौरोभाग्यमाचरणीयं ध्वनिकारस्य लक्षणे इत्यभ्युपगम्य ब्रूते—"व्यभिचारसंभवयोरपि" इति । व्यभिचारश्च संभवश्चेति व्यभिचारसंभवौ । तौ यत्र स्तः इति व्यभिचारसंभवौ तयोः । स्वं च अर्थश्चेति तयोः स्वार्थयोः । यथासंख्येन अन्वयः । अर्थे गुणत्वव्यभिचारः गुणीभूतव्यङ्ग्ये तस्य चारुत्वदर्शनात् । शब्दे च स्वार्थकृतगुणतासंभवः अर्थान्तराऽपेक्षया तथादृष्टत्वात् । तथा च-व्यभिचारसंभवयुक्तयोः स्वार्थयोः अर्थशब्दयोः यत् उपसर्जनीकृतत्ववचनं गुणीभावकथनं तत् पुनरुक्तं नामदोषः । अर्थान्तरस्य व्यङ्ग्यार्थस्य अभिव्यक्त्यर्थं व्यंजनाय उपात्तयोः तयोः स्वार्थयोः सामर्थ्यादेव तन्निष्ठशक्तिस्वाभाव्यादेव तदवगतेः तस्य उपसर्जनीकृतत्वस्य अवगतेः ज्ञानाद्धेतोः शब्दः पुनरनुपादेय इत्युक्तम् ।

ननु पार्थ एव धनुर्धर इत्यत्र यथा "नान्यः" इति पुनर्वचनं स्वरूपमात्रानुवादफलं भवति तथा अत्रापि सत्यपि तयोरुपसर्जनीकृतत्वे यत्तादृशं कथनं तत्तदनुवादफलकमित्यत आह—नचेति । एतत् उपसर्जनीकृतात्मत्वकथनम् स्वरूपमात्रस्य अनुवादफलकमिति वक्तुं न शक्यम् । तस्य तादृशकथनस्य पुनरुक्तिप्रकारत्वेन पुनरुक्तिभेदत्वेन उपपादनतः कथनात् ।

उक्तमनुगमयन्नुपसंहरति—एवं चेति । अयं भावः । उक्तरीत्या शब्दस्य व्या-

 

पुष्पां पृथिवी'मित्याद्युदाहरणमुपदर्शितं, तदसिद्धसाध्यसाधनधर्मानुगतमित्यवगन्तव्यम् ।

किञ्च यथाभिधेयोऽर्थस्तद्विशेषणं चोपात्तं तद्वदभिधाप्युपादानमर्हत्येव । अन्यथा यत्र दीपकालङ्कारादलङ्कारान्तरस्योपमादेः प्रतीतिस्तत्र

## व्यक्तिविवेकव्याख्यानम् ।

हि 'दृष्ट्या केशव ? गोपरागहृतया' इत्यादौ प्रतीयमानस्यार्थस्य शब्दस्पृष्टत्वाद् वाच्यं प्रत्युपस्कारकत्वाद् वाच्यार्थापेक्षया शब्दस्य गुणीकृतार्थत्वं नास्ति । तद्व्यवच्छेदार्थं विशेषणमुपादेयमेव । तदेतत् कटाक्षितं 'यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः' इत्यत्र ।

तद्वदभिधाप्युपादानमर्हत्येवेति । अत्र व्यक्तिवादिनोऽयमाशयः—इह चिरन्तनैरलङ्कारतन्त्रप्रजापतिभिर्भट्टोद्भटप्रभृतिभिः शब्दार्थधर्मा एवालङ्काराः प्रतिपादिताः नाभिधाधर्माः, यतोऽर्थप्रतिपत्त्युन्नेयः शब्दव्यापारः शब्दोच्चारणव्यापारो वाभिधा । न च तत्प्रकारत्वमलङ्काराणां युक्तिमत् । चारुत्वं हि वैचित्र्यापरपर्यायं प्रकाशमानमलङ्कारः । न च शब्दोच्चारणस्यार्थप्रकाशनस्य वा चारुत्वं प्रकाशते, उच्चार्यमाणस्य च प्रतिपाद्यमानस्य च चारुत्वप्रतीतेः । तेन चारुत्वस्य सद्भावाच्छब्दार्थधर्मा एवालङ्कारा न्याय्याः, नाभिधाधर्माः । शास्त्रेतिहासवैलक्षण्यं तु काव्यस्य शब्दार्थवैशिष्ट्यादेव नाभिधावैशिष्ट्यादिति भट्टोद्भटादीनां सिद्धान्तः । ततश्च तन्मताश्रयणेन शब्दार्थयोर्व्यञ्जकत्वमुच्यमानं तद्धर्माणामलङ्काराणामपि पर्यवसितमिति तत्स्वीकारार्थं पृथगभिधानग्रहणे न किञ्चित् । यद्यपि दीपकादावुपमादिं प्रत्यतत्परत्वं दूषितं, तदस्मदभिप्रायापर्यालोचनादेव, यतः प्रागुक्तन्यायान्न प्रतीत्युपायत्वमचारुत्वं वा तत्परत्वं, यत्प्रतिपक्षभूतमतत्परत्वमस्माभिरत्रोक्तम् । अपि तु प्रत्याय्येनानुपकार्यत्वम् । न चैतद् दीपकादावस्ति,

## मधुसूदनीविवृतिः ।

परान्तराभावे सुसिद्धेऽपि "अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा" इति स्वीकृत्य यत् लक्षणमूलाविवक्षितवाच्यध्वनेरुदाहरणम् "सुवर्णपुष्पामि"ति प्रदर्शितम्; तत्प्रदर्शनम्, असिद्धो स्वरूपमनापन्नो यः साध्यसाधनधर्मः कार्यकारणभावः तस्यानुगतमनुकूलम् । पूर्वं यदा शब्दे अभिधातिरिक्तव्यापारसद्भावो भवेत्तदा कः स व्यापार इति लक्षणादिरिष्येत यर्हि स एव न सिद्ध्येत् तर्हि कारणमन्तरा लक्ष्यादिकार्यस्य उदाहरणप्रदर्शनं नितरामसिद्धमिति भावः ।

लक्षणवाक्ये न्यूनत्वमुपदिदिक्षुराह—किञ्चेति । यथा अभिधेयो वाच्योऽर्थः तद्विशेषणं शब्दश्च उपात्तं लक्षणघटकत्वेन स्वीकृतम् , तथैव अभिधाऽपि भङ्गिभणितिरपि अलंकार इति यावत् उपादानं लक्षणघटकत्वेन अवश्यं स्वीकारमर्हति ।

अन्यथेति । अन्यथा लक्षणे अभिधानुपादाने यत्र काव्ये दीपकादेः सकाशात्

ध्वनित्वमिष्टं न स्यात् तल्लक्षणेनाव्याप्तेः । अलङ्काराणां चाभिधात्मत्वमुपगतं तेषां भङ्गिभणितिभेदरूपत्वात् ।

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते ।
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥"

इत्यादिना तत् प्रतिषिद्धमित्युच्यते । तत्प्रतिषेधहेतोः काव्यातत्परता-

---

व्यक्तिविवेकव्याख्यानम् ।

तत्रोपमादिना दीपकादेरुपकार्यत्वाद् । अत एव प्राधान्यादुपमादिव्यपदेशं मुक्त्वा तत्र दीपकादिव्यपदेश एव कृतः ततश्चात्रातत्परत्वमेव साधीय इति ।

मधुसूदनीविवृतिः ।

अलंकारान्तरस्य उपमादेः प्रतीतिरवगतिः तत्र काव्ये इष्टं स्वीकृतं ध्वनित्वं न स्यात् । ध्वनिलक्षणस्य व्याप्त्यभावात् ।

ननु तदैवेदं लक्षणाव्याप्तिरूपं दूषणं स्यात् चेदलंकारा अपि व्यङ्ग्यार्थप्रतिपादने वाच्यार्थस्य केनापि रूपेण साहाय्यमादध्युः किन्तु न एवम् । ततः किमिति अभिधेति अन्तर्गडुभूतमुपक्षेप्यमिति विप्रतिपन्नं प्रत्युच्यते-अलङ्काराणामिति । अलङ्काराणां दीपकादीनामभिधात्मत्वम् सादृश्यं प्रतिपादयितुमभिधास्वरूपत्वमुपगतं स्वीकृतम्, तेषामलङ्काराणां भङ्गिभणितिरूपत्वात ।

अयं भावः । यथा पदस्य अर्थप्रतिपादनवेलायां वृत्तिधीः सहकारिणी, तथैव "मदेन भाति कलभः प्रतापेन महीपति"रिति दीपकस्थानीयं भातिपदमौपम्यप्रतिपादनवेलायां वाच्यमुपनिषीदति। अयमिह परमार्थः। अभिधा हि वाच्यवाचकभावापरपर्यायः शब्दार्थयोः सम्बन्धः । स च तन्निष्ठधर्मविशेष एव। अत एव "अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते" इति मम्मटकारिकाव्याख्याने वाचकत्वमभिधेति प्रदीपकारा व्याचख्युः । स एव शब्दार्थनिष्ठो धर्मः कविप्रतिभोत्थापितः सन् चारुस्तदा अलंकार इति व्यपदेशभाक् । नहि लौकिककटककुण्डलादिवत् उपमादयः अङ्गेष्विव काव्येषु पृथक् स्थिताः सन्निवेश्यन्ते किन्तु शब्दार्थानामेव तथाभिधा यथाऽलंकारत्वेन प्रतिभायुरिति ।

ननु ध्वनिकारेण तत्र दीपकादौ औपम्यस्य ध्वनित्वमेव अलंकारान्तरस्यापीत्यादिना प्रतिषिद्धमिति चेत् । उच्यते समाधीयतेऽस्माभिरिति शेषः । अत्र मूले प्रतिषिद्धमित्युच्यत इतिपाठयोजने इतिपदस्याग्रे चेदर्थकं पदं निवेश्यम् ।

अलङ्कारेति । अत्र अलङ्कारान्तरादित्यध्याहार्यम् । यत्र काव्ये अलङ्कारान्तरात् दीपकादितः । अलङ्कारान्तरस्य उपमादेः प्रतीतौ ( ध्वनौ ) सत्यामपि वाच्यस्य अर्थस्य तत्परत्वं व्यङ्ग्यप्रतिपादनोन्मुखीभावो न भासते न प्रकाशते असौ तत्परत्वाभावः ध्वनेर्मार्गः ध्वनेरध्वा न मतो नाभीष्टः । चारुर्हि व्यपदेशभाक् । दीपकादिषूपमादेः प्रतीयमानत्वेऽपि नोपमामुखेन चारुत्वं व्यतितिष्ठत इति न ध्वनिव्यपदेशः ।

तत्प्रतिषेधहेतोरिति । अलङ्कारान्तरप्रतीतिः ( पक्षः ) न ध्वनिः ( साध्यम् )

लक्षणस्यासिद्धत्वाद् उपमानोपमेयभावाद्यभिधानपरतयैव दीपकाद्यलङ्कारभङ्गिभणितिसमाश्रयणतः प्रतीयमानस्यैव चालङ्कारादेश्चारुत्वातिशययोगात् तावन्मात्रनिबन्धनत्वाच्च तद्ध्वनिव्यवहारस्येति कथं तत्प्रतिषेधसिद्धिः ।

अथार्थप्रतीत्यन्यथानुपपत्त्यैव सद्भावावगमः, अर्थशब्दयोरुपसर्जनीकृतस्वार्थत्वाभिधानसामर्थ्याच्च तदुपसर्जनीभावावगतिः, तस्याः प्राधान्येन तयोरुपसर्जनीभावादिति व्यर्थस्तदुपादानप्रसङ्ग इति । एवं तर्ह्यर्थस्यैवोपसर्जनीभावोऽभिधेयो न शब्दस्य, तस्याभिधाया इव तदुपसर्जनीभावाभिधानसामर्थ्यादेव तदवगतिसिद्धेरिति लक्षणवाक्ये व्यर्थं शब्द-

---

मधुसूदनीविवृतिः।

वाच्यस्य व्यङ्ग्यपरत्वाभावात् ( हेतुः ) इत्यनुमाने यः व्यङ्ग्यातत्परत्वरूपः ध्वनिप्रतिषेधस्य हेतुः प्रदर्शितः स स्वरूपासिद्धः । तत्कथं तस्य ध्वनेः प्रतिपेधसिद्धिः अभावसिद्धिः । हेतोरसिद्धत्वे कारणं दर्शयति— उपमानेति । उपमानोपमेयभावादेरुपमादेः अभिधाने प्रतिपादने परः तस्य भावस्तत्ता तया एव दीपकाद्यलङ्काराणां भङ्ग्या कयाचित्परिपाट्या या भणितिरभिधानं तस्य समाश्रयणतः स्वीकारात् । यदा दीपकाद्यलङ्काराः प्रतीयमानोपमादेरभिधानं कुर्वन्ति तदैव भङ्गिभणितिरूपतास्वीकार इति हेतोः तथा अलङ्कारादेरपेक्षया च प्रतीयमानस्य ध्वनेरेव चारुत्वातिशययोगात् वैचित्र्यातिशयसम्बन्धात् । तद्ध्वनिव्यवहारस्य च तादृशध्वनित्वसाधकव्यापारस्य च तावन्मात्रनिबन्धनत्वात् चारुत्वातिशययोगकारणत्वात् इति । अत्र चद्वयमन्वाचये ।

अयमत्र संपिण्डितार्थः । भंग्या भणितिरलंकारस्तथाभणितिरेव अभिधा । एवमलङ्काराणाम्भङ्गिभणितिरूपाभिधास्वरूपत्वं प्राप्तं भवति । ततश्च वाच्ये दीपकादौ व्यङ्ग्य उपमादौ च भङ्गिभणितिरूपाभिधात्वं समानमेव, किन्तु यदि वाच्यवदभिधा गुणीक्रियते तर्हि गुणीभूता वाच्यकोटिनिविष्टा सा दीपकादिस्वरूपतां भजति । तदेतदुक्तम्– अभिधाप्युपादानमर्हतीति । तदतिरिक्ता च प्रधानीभूता व्यङ्ग्योपमादिकोटीमाटीकते इति । स्यादेतत् । परन्तु अलङ्कारान्तरप्रतीतिरतत्परतया ध्वनेरध्वतामेव नोपयाति इति चेन्मैवम् । उपमाद्यभिधानतयैव दीपकादिषु भङ्गिभणितिस्वरूपसिद्धिः तादृशदीपकादेरपेक्षया च प्रतीयमानस्य चारुत्वम्, चारुत्वनिबन्धना च ध्वनिव्यवहृतिः । एवं च प्रतीयमानोपमादेश्चारुत्वेन तत्परत्वमेव वाच्यस्य प्राप्तं तथा "अलङ्कारान्तरस्यापि प्रतीतावपि यत्र तत्परत्वं न वाच्यस्येति उक्तिः स्वरूपतोऽसिद्धा । इति ।

ननु अन्यथानुपपत्तिसिद्धस्यार्थस्य शब्देनोपादानं व्यर्थमिति परोक्तिमनूद्य प्रकृतं "लक्षणे शब्दानुपादानम्" उपपादयितुमारभते—अथार्थेति। अर्थप्रतीतेरन्यथानुपपत्त्या एव अभिधायाः सद्भावस्य सत्ताया अवगमः । अनन्तरं च अर्थशब्दयोः उपसर्जनीकृतस्वार्थत्वोक्तेः हेतोरभिधाया उपसर्जनीभावस्य गुणीभावस्य अवगतिरिति उप-

ग्रहणम् , अन्यथाभिधानग्रहणमपि कर्तव्यं प्रसज्येत विशेषाभावात् । न चास्य स्वार्थाभिधानमात्रपर्यवसितसामर्थ्यस्य व्यापारान्तरमुपपद्यते, येनायमर्थान्तरमवगमयेत् , तदपेक्षं चोपसर्जनीकृतार्थत्वमियात् । अर्थस्यैव तदुपपत्तिसमर्थनात् ।

सर्व एव हि शाब्दो व्यवहारः साध्यसाधनभावगर्भतया प्रायेणानुमानरूपोऽभ्युपगन्तव्यः, तस्य परप्रवृत्तिनिवृत्तिनिबन्धनत्वात् तयोश्च सम्प्र-

व्यक्तिविवेकव्याख्यानम् ।

सर्व एवेति । इह यः कश्चिच्छाब्दो व्यवहारः स सर्वः परप्रवृत्तिनिवृत्त्यर्थः, स्वप्रवृत्तिनिवृत्योः शाब्दव्यवहारमन्तरेण वचनमात्रादेव सिद्धत्वात । प्रवृत्तिनिवृत्ती च सम्प्रत्ययासम्प्रत्ययौ युक्तिरूपानुमाननिमित्तौ तेन विना निर्निबन्धने, अन्यथा सशङ्कत्वे प्रवृत्तिनिवृत्योरप्रवृत्तिनिवृत्तिकल्पत्वात् । सम्प्रत्ययासम्प्रययौ च युक्तिरूपानुमाननिमित्तौ, तेन विना निर्निबन्धनत्वाच्छाब्दव्यवहारे वचनमात्रात् तयोरनुपपत्तेः । अनुमानं च साध्यसाधनभावगर्भाकारेण व्यवस्थितम् । तच्च परप्रवृत्तिनिवृत्तिफलम् । शाब्दव्यवहारमाश्रयता तत्र साध्यसाधनभावोऽवश्यमङ्गीकार्यः । स चाखण्डत्वात् पद-

मधुसूदनीविवृतिः ।

सर्जनीभावार्थमभिधोपादानप्रसङ्गो व्यर्थ इति प्राप्ते । अत्रेति शब्दः प्राप्तार्थः तथा "न व्यर्थः" इति मूलपाठे "न" इति पाठो व्यर्थः। उत्तरति। एवं तर्हीति । तर्हि एवमपि अभिधाया उपसर्जनीभावस्य अन्यथानुपत्त्या प्राप्तावपि । अर्थस्यैव केवलस्य उपसर्जनीभावो विधेयः । अभिधाया इव तस्य शब्दस्यापि अर्थोपसर्जनीभावकथनबलादेव उपसर्जनीभावावगतिसिद्धेः । इत्यतः लक्षणवाक्ये ध्वनिलक्षणवाक्ये शब्दग्रहणं शब्दोपादानं व्यर्थम् । अन्यथा अनुपपत्तिप्राप्तार्थास्वीकारे अभिधोपादानमपि कर्त्तव्यमिति प्रसज्येत प्राप्येत, शब्दाभिधयोरुभयोर्विशेषाभावात् । अनुपपत्तिप्राप्तोपसर्जनत्वस्य सामान्यात् । अन्यच्च केवलं स्वार्थाभिधाने समाप्तशक्तेरस्य शब्दस्य व्यापारान्तरं ध्वननादिकं नोपपन्नं भवति येन ध्वननाख्यव्यापारान्तरेण अयं शब्दः अर्थान्तरं वाच्यातिरिक्तमवगमयेद्बोधयेत् । तथा तदपेक्षं अर्थान्तरबोधाधीनं च उपसर्जनीकृतार्थत्वमियात् प्राप्नुयात् । उपपत्तिद्वारा अर्थस्यैव केवलमुपसर्जनीभूतत्वं सिद्ध्यति । न शब्दस्य तत्सिद्ध्यति इत्यतो लक्षणे शब्दो नोपादेयः इति प्रघट्टार्थः ।

सर्व एवेति । यः कश्चिच्छब्दजन्यो व्यवहारः स सर्व एव साध्यमनुमाप्यम् साधनमनुमापकं हेतुः । तयोर्भावः । तत्स्वरूपः सम्बन्धो गर्भे यस्य तस्य भावस्तत्ता तया । अनुमाप्यानुमापकभावरूपसम्बन्धमध्यगत्वहेतुना स शाब्दो व्यवहारः प्रायेण बाहुल्येन अनुमानरूपः अभ्युपगन्तव्यः स्वीकार्यः । तस्य शाब्दव्यवहारस्य प्रवृत्तिनिवृत्योः कारणत्वान्निबन्धनत्वात् सम्प्रत्ययासम्प्रत्ययात्मनोः ज्ञानाऽज्ञानस्वरूपयोः तयोः

त्ययासम्प्रत्ययात्मनोरन्यथाकर्तुमशक्यत्वतः। न हि युक्तिमनवगच्छन् कश्चिद्विपश्चिद्वचनमात्रात् सम्प्रत्ययभाग् भवति। द्विविधो हि शब्दः पदवाक्यभेदात्। तत्र पदमनेकप्रकारं नामाख्यातोपसर्गनिपातकर्मप्रवचनीयभेदात्। तत्र सत्त्वप्रधानानि नामानि। तान्यपि बहुप्रकाराणि सम्भवन्ति। जातिगुणक्रियाद्रव्याणां तत्प्रवृत्तिनिमित्तानां बहुत्वात्। तद्यथा घटः पट इति जातिशब्दः। शुक्लो नील इति गुणशब्दः। पाचकः पाठक इपि क्रियाशब्दः। दण्डी विषाणीति द्रव्यशब्दः।

---

व्यक्तिविवेकव्याख्यानम्।

मात्रे न सम्भवतीति पदसमूहात्मकं वाक्यमवलम्बते। सम्प्रत्ययासम्प्रत्ययात्मानौ निमित्तत्वेन व्यापकत्वात्। सत्वप्रधानानीति सत्वं सिद्धं वस्तु। यदृच्छाशब्दा जातिशब्दाश्च। एवं द्विविधा जातिरर्थजातिरर्थस्वरूपजातिश्च। तदुक्तम्—

"स्वा जातिः प्रथमं शब्दैः सर्वैरेव प्रकाश्यते।
ततोऽर्थजातिरूपेण तदध्यारोपकल्पना॥"

इति। तत्र यदृच्छाशब्दानां जातिशब्दत्वम्। यदि वा डित्थादिषु बाल्याद्यवस्थाभेदाद् भिन्नेष्वभिन्नाभिधानप्रत्ययनिबन्धनं जातिः। तद्वशाद्यदृच्छाशब्दानां जातिशब्दत्वम्। ये तु द्रव्यसम्बन्धादर्थान्तरे वर्त्तन्ते ते द्रव्यशब्दा दण्ड्यादयः। वैयाकरणानां तु गुणशब्दा एवमादयः। दण्डादेर्बहिरङ्गत्वादिति। अस्य ग्रन्थस्य सङ्ग्रकारिकयान्यग्रन्थेन सह विरोधो दृश्यते। तथा हि। अत्र सामान्यभूताया भवनक्रि-

मधुसूदनीविवृतिः।

प्रवृत्तिनिवृत्त्योश्च अन्यथाकर्त्तुम् अनुमानं विना प्रवृत्तिनिवृत्ती सम्पादयितुमशक्यत्वात्। नहि युक्तिमनुमानम् अनवगच्छन् अजानन् कश्चिद् विपश्चिद् केवलं वचनात् सम्प्रत्ययभाग् ज्ञानवान् भवति। सम्प्रत्ययासम्प्रत्ययार्थं तु अनुमानमेवाश्रयणीयं भविष्यतीति भावः।

शाब्दे व्यवहारे कारणस्य शब्दस्य स्वरूपं दर्शयितुमुपक्रमते-द्विविध इति। शब्दः द्विस्वरूपः। एकं पदम्। अन्यच्च वाक्यम्। इदं तत्वम्। साध्यसाधनभावो हि सम्बन्धः अनुयोगिप्रतियोगिसापेक्षः, अखण्डे पदे न तत् संजाघटीति। अतस्तदुपयोगि सखण्डं वाक्यमेव। किन्तु वाक्यं पदसमूहात्मकमिति पदमपि परम्परया शाब्दव्यवहारोपयोगीति संगृहीतमिति। तत्र तयोः पदवाक्ययोर्मध्ये पदं सुबन्ततिङन्तरूपमनेकप्रकारं नानाजातीयं नामादिभेदैः। नाम च स्त्रीत्वपुंस्त्वनपुंसकत्वविशिष्टम्, आख्यातम् कर्तृकर्मभाववचनम्। उपसर्गः आङादिः। निपात इवादिः। कर्मप्रवचनीयः प्रतिपर्य्यनुप्रभृतिः। तत्र सत्वं लिङ्गसंख्ययोः सद्भावः प्रधानं येषु तानि नामानि नमन्त्याख्यातशब्दे गुणभावेन, नमयन्ति वा स्वमर्थमाख्यातशब्दे गुणभावेनेति। तान्यपि नामान्यपि

केचित् पुनरेषां क्रियैवैका प्रवृत्तिनिमित्तमिति क्रियाशब्दत्वमेव सर्वेषां नामपदानामुपगच्छन्ति । तथा हि—घटादिशब्दाः स्वार्थे प्रवर्तमाना घटनादिक्रियामेवान्वयव्यतिरेकाभ्यां प्रवृत्तिनिमित्तभावेनावलम्बमाना दृश्यन्ते । न घटत्वादिसामान्यम् । सा चैषा घटनादिक्रिया घटत्वसामान्ययोगादन्यथा वास्तु । नैतावता तस्याः प्रवृत्तिनिमित्तत्वव्याघातः । न च सत्यपि घटत्वसामान्ये स्वयमघटन् घटात्मतामनापद्यमान एवासौ घटव्यपदेशविषयो भवितुमर्हति । एवं हि पटोऽपि घटव्यपदेशविषयः स्यात् । घटनक्रियाकर्तृत्वाभावाविशेषात् । न हि शुक्लत्वमना-

व्यक्तिविवेकव्याख्यानम् ।

याया बहिरङ्गत्वं विशेषक्रियाणामन्तरङ्गत्वमुक्तम् । तत्र विशेषक्रियाणां बहिरङ्गत्वं सामान्यक्रियायास्त्वन्तरङ्गत्वं प्रतिपादयिष्यते । स एष एको विरोधः । किञ्चेह गम्यमानक्रियां मुक्त्वा प्रयुज्यमानक्रियापेक्षमेव पौर्वकाल्यमित्युच्यते । 'यन्मेऽल्पमपि तद्बहु' इत्यत्र प्रतीयमानक्रियापेक्षं पौर्वकाल्यं वक्ष्यत इति द्वितीयो ग्रन्थविरोधः । नैष विरोधः । इह तावत् सामान्यक्रियाया बहिरङ्गत्वमप्रयुज्यमानत्वापेक्षयोच्यते, विशेषक्रियाणान्त्वन्तरङ्गत्वं प्रयुज्यमानत्वापेक्षया, तत्र पुनर्विशेषक्रियाणां बहिरङ्गत्वं व्यभिचारित्वात्, सामान्यक्रियायास्त्वन्तरङ्गत्वमव्यभिचारित्वादित्यपेक्षातो भेदादाद्य-

मधुसूदनीविवृतिः ।

बहुप्रकाराणि बहुभेदवन्ति सम्भवन्ति । तेषां नाम्नां प्रवृत्तिनिमित्तानां संकेताश्रयाणां जातिगुणक्रियाद्रव्याणां बहुत्वात् । तद्यथा– घटः पट इति जातिशब्दः जातिवाचकः शब्दः । एवं गुणवाचकः क्रियावाचकः द्रव्यवाचकः शब्द इति योजनीयम् ।

केचिदिति । केचिदाचार्याः पुनरेषां जातिगुणक्रियाद्रव्यवाचकानां शब्दानां क्रिया एव एका प्रवृत्तौ व्यवहारे निमित्तं कारणमित्यतः सर्वेषां नामपदानां क्रियाशब्दत्वमेवोपगच्छन्ति स्वीकुर्वन्ति । तथाहि इत्यादिना तन्मतमुपन्यस्यति—

घटप्रभृतिशब्दाः स्वार्थे घटत्वादिरूपे प्रवर्त्तमानाः अन्वयव्यतिरेकाभ्यां कारणाभ्यां प्रवृत्तिनिमित्तत्वेन घटनादिरूपां क्रियामेव अवलम्बमाना आश्रयमाणा दृश्यन्ते । न घटत्वादिरूपं सामान्यं जातिमवलम्बमाना दृश्यन्ते । अन्वयव्यतिरेकौ च घटतीत्यस्य सद्भावे घटत्वमपि भवतीत्यन्वयः, अघटन् सन् अर्थात् घटतीत्यस्याभावे घटत्वमपि नास्तीति व्यतिरेकः । सा च एषा घटनादिक्रिया घटत्वरूपसामान्यस्य जातेः योगात्सम्बन्धात् अन्यथा रूपान्तरं गता वास्तु भवतु । किन्तु एतावता अन्यथाभावेन तस्या क्रियायाः प्रवृत्तिनिमित्तत्वस्य अर्थत्वस्येति यावत् व्याघातः तिरस्कारो न भवति । एवं च घटत्वरूपायां जातौ सत्यामपि यदि स्वयं स्वरूपेण अघटन् घटनरूपया क्रियया रहितस्तदा घटात्मतां घटस्वरूपत्वमनापद्यमानः अप्राप्नुवन्

पद्यमान एवार्थः शुक्ल इति व्यपदेष्टुं शक्यते, अपचन्नेव पाचक इति। तस्माद् घटनक्रियाकर्तृत्वलक्षणमेव घटत्वं घटशब्दस्य प्रवृत्तौ निमित्तमवसेयम्। न घटत्वमात्रम्। तदेव चेह घटनमित्युक्तम्।

ननु चेष्टाद्यर्थात् घटत्यादेर्धातोरजादौ घटत इत्याद्यर्थे घटनादिक्रियैव सर्वेषां घटादिशब्दानां प्रवृत्तिनिमित्तभावेनास्माभिरपीष्यत एवेति व्यर्थः पक्षान्तरोपन्यासः। सत्यमिष्यत एव भवद्भिः। किन्तु सा शब्दस्य व्युत्पत्तिनिमित्तं, न प्रवृत्तिनिमित्तम्। अन्यद्धि व्युत्पत्तिनिमित्तम्, अन्यच्च

## व्यक्तिविवेकव्याख्यानम्।

स्तावन्न विरोधः। सामान्यक्रियां ह्यव्यभिचारिणीं प्रतीयमानामपेक्ष्य पौर्वकाल्यं समर्थितं विशेषस्यापेक्ष्यत्वेन प्रतीतेः समन्वयाविरोधाच्च। तेन द्वितीयोऽप्यत्र न विरोध इति। अत एव 'प्रायेणे' त्युक्तम्।

घटत्यादेरिति। 'इक्श्तिपौ धातुनिर्देशे' इति रूपम्। पक्षान्तरं प्रकारान्त-

## मधुसूदनीविवृतिः।

एव भवति। ततश्चासौ घटः घट इति व्यपदेशभाक् भवितुं नार्हति न योग्यः। एवंहि घटनादिक्रियाया अभावे हि पटोपि घटव्यपदेशभाक् घट इति नाम्नो विषयः स्यात्। यदि घटनादिक्रियया अन्वयव्यतिरेकाभावेऽपि घटः घटपदव्यपदेशभाक् तदा घटनक्रियाकर्मत्वाऽभावस्य घट इव पटेऽपि अविशेषात् तौल्यात् पटोपि घटपदव्यपदेश्यो भवत्विति भावः। नहि शुक्लत्वमनापद्यमानः शुक्लत्वमनाप्नुवन्नेवार्थः शुक्ल इति व्यपदेष्टुं कीर्तयितुं शक्यते इति। तस्मात्कारणात् घटनक्रियाकर्तृत्वं लक्षणं स्वरूपं यस्य तत तथाभूतमेव- घटत्वं सामान्यं घटशब्दस्य प्रवृत्तौ अर्थाभिधाने निमित्तं कारणमिति अवसेयं ज्ञातव्यम् न केवलं घटत्वं प्रवृत्तौ निमित्तम्। तदेव घटत्वमिह शास्त्रे घटनमित्युक्तं भवतीति सिद्धम्।

पक्षान्तरोपन्यासस्य वैयर्थ्यमुपजिहीर्षुः प्रकृतसंगतिमत्पदार्थमाचिनोति–नन्विति। नन्विति शंकायाम्। चेष्टादिरर्थो वाच्यो यस्य तस्मात् घटत्यादेः धातोः सकाशाद् घटत इत्याद्यर्थे अजादौ प्रत्यये कृते निष्पन्नघटशब्दनिष्ठा घटनादिक्रिया एव सर्वेषां घटादिशब्दानां प्रवृत्तिनिमित्तभावेन अस्माभिरपि इष्यत एव इत्यतः पक्षान्तरस्योपन्यासः व्यर्थः। उत्तरति- सत्यमिति। सत्यमिति अर्धाङ्गीकारे। भवद्भिरिष्यते एव किन्तु सा घटनादिक्रिया शब्दस्य व्युत्पत्तौ निमित्तम् कारणम्। न प्रवृत्तौ निमित्तम्। तयोर्भेदः कथमित्यत आह—यथेति। यथा एकेषामाचार्याणां मते सिद्धान्ते गवादिशब्दानां गमनादिक्रिया व्युत्पत्तौ निमित्तम्। एकस्मिन् गोरूपेऽर्थे गमनक्रियागोजात्योः समवायात् नित्यसम्बन्धात्, जातिव्यक्त्योः क्रियाक्रियावतोश्च समवायसम्बन्धोक्तेः। गोत्वादिसामान्यं प्रवृत्तिनिमित्तीकरोति। अत एव गमनादिक्रियागोत्वादिरूपयोरर्थयोः

प्रवृत्तिनिमित्तम् । यथैकेषां मते गमनादिक्रिया गवादिशब्दानां व्युत्पत्तिनिमित्तम् एकार्थसमवायात् गोत्वादि प्रवृत्तिनिमित्तीकरोति । अत एव गच्छत्यगच्छति च गवि गोशब्दः सिद्धो भवति ।

एवमिहापि चेष्टादिक्रिया घटादिशब्दानां व्युत्पत्तिनिमित्तमिति सिद्धं भवति । तदपेक्षमेव च विपच्य घटो भवतीत्यादौ विपाकादिक्रियायाः पौर्वकाल्यं क्त्वाप्रत्ययस्य विषयो वेदितव्यः, यथाधिश्रित्य पाचको भवतीत्यादौ पाकाद्यपेक्षमधिश्रयणादेर्न भवनक्रियापेक्षम् । सा हि नावश्यं प्रयुज्यते । प्रतीयते तु पदार्थानां सत्ताव्यभिचारात्, न तु तावता तदपेक्षं तदिति मन्तव्यं, तस्या बहिरङ्गत्वाद् अर्थस्यासङ्गतिप्रसङ्गाच्च ।

---

व्यक्तिविवेकव्याख्यानम् ।

रेण क्रियाशब्दत्वात् । एकेषाम् उपाधिवादिनाम् । एकार्थसमवायादिति एकत्र द्रव्ये गमनक्रियागोजात्योः समवायात् । तदपेक्षमेव चेति घटनादिक्रियापेक्षम् । तावतेति प्रतीतिमात्रेण । तदपेक्षं सत्तापेक्षम् । तत् पौर्वकाल्यम् । तत्पूर्वकालत्वाभावादिति । अव्यभिचरितप्रतीयमानभवनक्रियापूर्वकालत्वाभावादित्यर्थः ।

मधुसूदनीविवृतिः ।

द्रव्येण सह समवायसम्बन्धस्वीकारादेव गच्छति संचलति अगच्छति असंचलति च गवि व्यक्तौ गोशब्दः सिद्धो भवति ।

एवं गोशब्दवत् । इहापि घटेऽपि चेष्टादिरूपा क्रिया घटादिशब्दानां व्युत्पत्तिनिमित्तमिति सिद्धं भवति । तदपेक्षमेव घटनादिक्रियापेक्षमेव च (चेष्टादिक्रियापेक्षमेव) विपच्य घटो भवतीत्यादौ प्रयोगे विपाकादिक्रियायाः पौर्वकाल्यं पूर्वकालत्वं क्त्वाप्रत्ययस्य विषयः स्थलं वेदितव्यम् । यथा अधिश्रित्य पाचको भवति इत्यादौ उदाहरणे पाकाद्यपेक्षमधिश्रयणादेः पूर्वकालत्वं क्त्वाप्रत्यस्य विषयोः नतु भवनक्रियापेक्षम् ।

अयं भावः । "समानकर्तृकयोः पूर्वकाले" इति सूत्रम् । समानस्तुल्यः कर्त्ता ययोस्तयोः धात्वर्थयोर्मध्ये यो धातुः पूर्वकाले विद्यमानस्तस्माद् धातोः क्त्वाप्रत्ययो भवतीति तस्यार्थः । दृष्टान्तः–"सम्बन्धिनां भुक्त्वा व्रजनं भवति" इत्यत्र भुजिव्रज्योरेकः कर्त्ता । स पूर्वं भुजिं कृत्वा पश्चाद् व्रजिं करोतीत्यतः व्रज्यपेक्षया भुजौ पूर्वकालत्वं वर्त्तते, एवमिहापि अधिश्रित्य पाचको भवतीति प्रयोगे पूर्वं चुल्यामधिश्रयति पश्चात्पचति इत्यतः अधिश्रयतेः पूर्वकालत्वं तदेव क्त्वाप्रत्ययस्य विषयो न तत्र भवत्यपेक्षम् तद्वद्विपच्य घटोभवतीतीहापि इति ।

ननु कुतोऽत्र न भवत्यपेक्षेत्यत आह–सेति । सा भवति क्रिया अवश्यं न प्रयुज्यते; वाक्येषु तां विनाऽपि ( अथवा आक्षेपेणापि ) व्यवहारसिद्धेः । किन्तु अनुक्ताऽपि सा पदार्थानां मध्ये प्रतीयते सत्ताया अव्यभिचारात् । नैवं तावता अव्यभिचरितप्रत्ययेन तदपेक्षं भवत्यपेक्षं तत् पूर्वकालत्वमिति मन्तव्यम् स्वीकार्यम् । तस्याः भवतिक्रियायाः प-

प्रयुज्यमानक्रियापेक्षमेव च प्रायेण पौर्वकाल्यं क्त्वो विषयो न प्रतीयमानापेक्षम्। इतरथा—

"श्रुत्वापि नाम बधिरो दृष्ट्वाप्यन्धो जडो विदित्वापि ।
यो देशकालकार्यव्यपेक्षया पण्डितः स पुमान् ॥"

इत्यादि प्रयोगजातमनुपपन्नमेव स्यात्, श्रवणादीनां तत्पूर्वकालत्वाभावात्। अत्र तु श्रुत्यादिशक्तिविरहलक्षणबाधिर्यादिक्रियापेक्षमेव श्रवणादीनां पौर्वकाल्यमिति न काचिदनुपपत्तिः।

बह्वीषु च तासूत्तरोत्तरक्रियापेक्षं पूर्वपूर्वक्रियापौर्वकाल्यम्, यथा स्नात्वा भुक्त्वा पीत्वा व्रजतीत्यादौ । अत्र च विपचनघटनभवनरूपा बह्वयः क्रिया इत्यत्रापि घटनापेक्षं विपचनस्य तद् भवितुमर्हत्येव, उभयत्रापि कर्तृप्रत्ययनिर्देशाविशेषात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

अत्र त्विति प्रयुज्यमानक्रियापेक्षे पौर्वकाल्ये । उभयत्रापीति । घट इति भवतीति

मधुसूदनीविवृतिः ।

च्यादिक्रियापेक्षया वहिरङ्गत्वात् अर्थस्य असंगतिप्रसंगात् पदार्थस्य अवकरताप्रसक्तेश्च ।

असंगतिमुज्जिघटिषुराह—प्रयुज्यमानेति । प्रायेण बाहुल्येन प्रयुज्यमानक्रियापेक्षमेव उच्चार्यमाणाक्रियासम्बद्धमेव पूर्वकालत्वं क्त्वाप्रत्ययस्य विषयोः न प्रतीयमानक्रियापेक्षं तदिति । इतरथा प्रयुज्यमानक्रियापेक्षमेवेति नियमाऽस्वीकारे—

श्रुत्वापि नामेति। यः देशकालकार्याणां व्यपेक्षया नियमेनेति परमार्थः, श्रुत्वाऽपि बधिरः अशृण्वन्, दृष्ट्वापि अन्धः अपश्यन्, विदित्वापि जडः अजानन्। अस्तीति भवतेरत्राक्षेपः कर्तव्यः। स पुमान् पुरुषः पण्डितः सदसद्विवेकशीलः । इत्यादिप्रयोगजातम् ( जातशब्दो गणवाची ) अनुपन्नमसङ्गतमेव स्यात श्रवणादिनां क्रियाणां मध्ये तस्या नियमेन प्रतीयमानाया भवतेरपेक्षया पूर्वकालत्वस्याऽभावात् पूर्वकालत्वभवनयोग्यताविरहात् नहि यः शृणोति सोऽस्ति इति वाक्यार्थेन एतद्गुणविशिष्टः पुमान् पण्डित इति पार्यन्तिके वाक्यार्थे कापिविच्छित्तिराधीयते इत्यर्थासङ्गतिरेव स्यात। ननु श्रवणादीनां मध्ये नियतप्रतीयमानभवतिक्रियापेक्षस्य पूर्वकालत्वस्य अनङ्गीकारात् क्रियान्तरस्य चात्र अभावात् किमेतदनुपपन्नं प्रयोगजातमित्यत आह—अत्रत्विति। अत्र तु प्रयुज्यमानक्रियापेक्षमेवेतिनियमस्वीकारे तु श्रुत्यादिरूपायाः। आदिपदात् दर्शनज्ञाने ग्राह्ये । शक्तेः विरहलक्षणा अभावरूपा या वाधिर्यादिक्रिया । आदिशब्दात् अन्धत्वजडत्वे ज्ञेये । तस्या अपेक्षा यस्मिंस्तदेव श्रवणादीनां मध्ये पूर्वकालत्वमिति रीत्या न काचिदनुपपत्तिः असंगतिः ।

ननु किमेवं भवतेः केवलं योजनं प्रयोजनमित्याह—बह्वीष्विति । बह्वीषु तासु

केवलं कृद्वाच्यतया कर्तुरुपाधिभावं गमितेति भिन्नकर्तृकत्वभ्रमः । यथा—

"शिशिरकालमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः ॥"

इत्यत्र कुचोष्मणः कर्तुर्हरणक्रिया । अत एव केचिदपास्येत्ययं ल्यबन्तप्रतिरूपको निपात इति व्याख्यातवन्तः । यथा वा—

---

व्यक्तिविवेकव्याख्यानम् ।

च द्वयोरपि यथाक्रमं गुणप्रधानक्रियावाचिनोः, कर्तरि अचस्तिपश्चोत्पत्तेः । कर्तुरुपाधिभावमिति अप्राधान्यात् कर्तारं प्रति विशेषणभावं प्रापिता तेन तस्या निमग्नत्वात् तदपेक्षपौर्वकाल्याभावभ्रमः ! कर्त्ता च द्विविधः—शुद्धः क्रियान्तरापेक्षयानुभूतकारकान्तरसम्बन्धश्च । आद्यो यथा विपच्येत्यादौ । द्वितीयो यथा 'यां दृष्ट्वे'

मधुसूदनीविवृतिः ।

उत्तरोत्तरस्यां क्रियायामपेक्षितं पूर्वपूर्वक्रियानिष्ठं पूर्वकालत्वं संगतिमत् । यथा स्नात्वेत्यादौ भुज्यपेक्षं स्नातेः, पिबत्यपेक्षं भुजे; व्रज्यपेक्षं पिबतेः । एवमत्रापि विपचनादिक्रियाणां बाहुल्ये घटनापेक्षं विपचनस्य भवत्यपेक्षं घटनस्य तत्पूर्वकालत्वं भवितुमर्हत्येव युक्तमेव । उभयत्रापि घट इति भवतीति द्वयोर्मध्ये कर्तृवाचकप्रत्यययोरच्तिपोः निर्देशस्य अविशेषात् तुल्यत्वात् । एवं यत्र यत्र एककर्तृकत्वं तत्र सर्वत्रापि उत्तरोत्तरक्रियापेक्षं पूर्वपूर्वक्रियापूर्वकालत्वं बोध्यमिति भावः ।

ननु यद्येवं तर्हि कुतो न सर्वत्र प्रतीयते इति चेत्प्रतीयते परं यत्र क्रिया कृदादिभिः पिहितस्वरूपा भवति तत्र भ्रमो भवतीति निरूपयति-केवलमिति । कृता लक्षणया कृत्संज्ञकप्रत्ययेन वाच्या कृद्वाच्या तस्या भावस्तत्ता तया प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तत्र प्रत्ययार्थः प्रधानमिति नयेन कृतः प्राधान्यत् तत्प्रकृतेः क्रियाया अप्राधान्यात् । सा कर्तुरूपाधिभावं विशेषणत्वं गमिता प्राप्ता । इति हेतोः तत्र भिन्नकर्तृकत्वभ्रमः । यथा—

शिशिरकालमिति । शिशिरकालमपास्य विहाय, शीतं हरतीति तस्य शिशिरताविनाशकस्य नोऽस्माकमस्य कुचोष्मणः स्तनतापस्य क इव गुणः फलं स्यात्; इति धिया बुद्ध्या अस्ता रुषो याभिस्ताः त्यक्तक्रोधाः प्रिया नायिका नमतः प्रणतान् अत एव अनुमतान् स्वान् प्रियाविति शेषः । घनं दृढं यथा स्यात्तथा परिरेभिरे आश्लिश्लिषुः । इति धियेतिरोषत्यागपूर्वकपरिरम्भः कुचोष्मसाफल्यायोत्प्रेक्ष्यते तच्चोत्प्रेक्षणं व्यञ्जकशब्दाप्रयोगाद्गम्यम् ।

अत्र पद्ये कुचोष्मणः कर्त्तुर्या शीतहरणक्रिया तदपेक्षमपासनक्रियायाः पूर्वकालत्वम् । किन्तु हरतेरनुद्यमनेऽजिति कृताचा वाच्यतया कर्त्तुः कुचोष्मणो विशेषणभावं प्रापितेति भिन्नकर्तृकत्वभ्रांतिं संभावयति । अत एव तादृशभ्रमादेव । केचिद्विद्वांस अपास्ये-

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्कृतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥"

इत्यत्र निरीक्षणक्रियाकर्त्तुर्मृत्योर्भयपक्षपतनक्रिये विषयविषयिभावभङ्ग्योपात्ते ।

यथा वा 'यां दृष्ट्वापि समुत्सुके मनसि मे नान्या करोत्यास्पदम्' इत्यत्र दर्शनक्रियाकर्त्तुर्मनसोऽन्यकर्त्तृकास्पदक्रियानधिकरणभावेनोपात्तस्यौत्सुक्यक्रिया विशेषणभावेनोपात्ता ।

---

व्यक्तिविवेकव्याख्यानम् ।

त्यादौ । विषयविषयिभावेति । भयपक्षपतनक्रियाद्वयापेक्षं निरीक्षणस्य पौर्वकाल्यम् । मृत्युरेव हि निरीक्षते बिभेति पक्षे च पतति । केवलं पक्षपतनापेक्षया भय-

मधुसूदनीविवृतिः ।

त्ययं ल्यबन्तप्रतिरूपको निपातः । अपरे मल्लिनाथादयोऽत्र विद्यमानस्येत्यादि गम्यमानक्रियापेक्षया क्त्वानिर्देश इति व्याख्यातवन्तः ।

मतान्तरे अपास्येत्यस्य निपाततया उदाहरणान्तरमुपन्यस्यति—निरीक्ष्येति । संरंभेण कोपेन निरस्तं त्याजितं धैर्यं निर्विकारचित्तत्वं येन तं तथाभूतम् । आराधितः सेवितः जामदग्न्यः परशुरामो येन तं तथाभूतम् । जामदग्न्यादधिगतशस्त्रशास्त्ररहस्यम् । राधेयं राधासुतं कर्णं निरीक्ष्य समीक्ष्य मृत्योरपि यमस्यापि असंस्कृतेषु असंस्तुतेषु अपरिचितेष्वित्यर्थः । भयेषु प्रसभं बलात्कारेण पक्षपातः परिचयो जायेत। यमोऽप्यस्माद्भयमुपगच्छेत्किमुतापर इति भावः । संभावनायां लिङ् । अत्र भयसम्बन्धशून्यस्य मृत्योः भयसम्बन्धकथनादसम्बन्धे सम्बन्धरूपातिशयोक्तिरलंकृतिः ।

अत्र ईक्षण-भय-पक्षपतन-क्रियाणां मृत्युरेकः कर्त्ता यतः स एव राधेयं निरीक्षते ततो बिभेति तत्पक्षे पतति च । ततश्च निरीक्षणक्रियायाः पूर्वकालत्वं तदुत्तरभूतक्त्वाप्रत्ययस्य विषय इति वेदितव्यम्, ते च बिभेतिपतती क्रिये परस्परं विषयविषयिभावस्य भङ्ग्या विधया उपात्ते स्वीकृते । तत्र पक्षपतनक्रियाया विषयित्वं विशेष्यत्वं तदपेक्षया भयक्रियाया विषयत्वं विशेषणत्वमिति बोध्यम् ।

स्फुटत्वाय शिष्यबुद्धिवैशद्याय च तामेव विशेष्यविशेषणभावविधां पुनर्दर्शयति—यां दृष्ट्वेति । यां नायिकां दृष्ट्वा समुत्सुकेऽपि उत्कलिकाप्रायेऽपि मे मनसि चेतसि अन्या काचित् आस्पदं स्थितिं न करोतीत्यन्वयः । अत्र दर्शनसमुत्सुकीभवनक्रिययोरेकं मनः कर्तृ । यतः तदेव पश्यति समुत्सुकीभवति च । ततश्च समुत्सुकीभवनक्रियापेक्षं दर्शनक्रियायाः पूर्वकालत्वम् । सा च औत्सुक्यक्रियाया समुत्सुकीभवनक्रिया अन्यनायिकाकर्तृकायाः आस्पदक्रियायायाः स्थितिक्रियाः अनधिकरणभावेन अनाश्रयतया । अत्र अधिकरणभावेनेत्यत्र अनधिकरणभावेनेति पाठः । उपात्तस्य दर्शनकर्तुर्मनसः विशेषणभावेन उपात्ता निर्दिष्टा । औत्सुक्यं चित्तवृत्तिः । वृत्तिश्च

क्वचिद् कर्त्तुः सम्बन्धितामुपगतासौ भ्रमहेतुः । यथा 'स्मर संस्मृत्य न शान्तिरस्ति मे' इति ।

केचित् पुनः कर्तृक्रिययोरनुपादानमपि हेतुमिच्छन्ति । तत्र कर्त्तुर्यथा—

"ननु सर्व एव समवेक्ष्य कमपि गुणमेति पूज्यताम् ।
सर्वगुणविरहितस्य हरेः परिपूजया कुरुनरेन्द्र! को गुणः॥"

अत्र हि समवेक्षापूजयोरेको लोकः कर्त्ता । स च सामर्थ्यसिद्ध इति नोपात्तः । पूजा चोपात्तापि कृद्वाच्यतया कर्मोपसर्जनीभूतेत्युभयं भ्रम-

व्यक्तिविवेकव्याख्यानम् ।

क्रियाया एव विषयत्वम् । स्मरेति अहं संस्मृत्य न शाम्यामीत्यर्थः ।

ननु सर्व एवेति । सर्वः गुणसमवेक्षितुर्लोकस्य कर्त्तुः स एव कर्मभूतः पूज्यतामेतीत्यर्थः । सर्वो गुणसमवेक्षिता लोकः पूज्यो भवतीत्यर्थः । विशेषणसम्बन्धश्चेति यत् स्वल्पं लाभक्रियाविषयस्तद्धेतुत्वेन विशेष्यते ।

मधुसूदनीविवृतिः ।

व्यापारो भावना क्रियेत्यनर्थान्तरम् । अत एव औत्सुक्यक्रियेति निर्दिष्टम् ।

क्वचिदुदाहरणे कर्त्तुः सम्बन्धिभावं प्राप्ता तत्त्वेन पिहितस्वरूपेति भावः, असौ क्रिया भ्रमहेतुः अक्रियात्वभ्रान्तिकारणम् ।

स्मर संस्मृत्येति । हे स्मर ? काम ? तां कामिनीं संस्मृत्याऽपि मे न शान्तिरस्ति । अत्र स्मृशम्योरेकः मे इति पदबोध्यः अस्मदर्थः कर्ता प्रतियोगी तस्यानुयोगिनी शमिक्रिया तदपेक्षम् स्मरणक्रियायाः पौर्वकाल्यं क्त्वाप्रत्ययस्य विषयः । अयं भावः । मे इति षष्ठ्यन्तं पदम् । षष्ठ्यर्थः सम्बन्धो द्विनिष्ठः तदर्थमस्मदर्थः प्रतियोगी "षष्ठ्युत्पत्तिस्तु भेदका"दित्युक्तेः । शमिक्रियाऽनुयोगिनोति सम्बन्धितया पिहितस्वरूपा अक्रियात्वभ्रान्तिं जनयति इति ।

केचिदिति । केचिदाचार्याः वाक्ये कर्तुः क्रियायाश्च अनुपादानमपि भ्रान्तेः हेतुम् कारणमिच्छन्ति ।

नन्विति । ननु इति प्रश्ने । हे कुरुनरेन्द्र । युधिष्ठिर ? सर्व एव लोकः कमपि गुणं स्वप्रयोजनं श्रुतशीलादिकं वावेक्ष्य पर्यालोच्य स्वाधीनीकृत्य वा पूज्यतां सत्कारमेति अयं पूज्यः सत्कारार्ह इति जानाति गत्यर्थानां ज्ञानार्थत्वास्वीकारात्, प्राप्नोति वा सर्वगुणैर्विरहितस्य शून्यस्य हरेः कृष्णस्य परिपूजया सत्कारेण को गुणः को लाभः इति भावः । अत्र समवेक्षति पूर्वं कंचिद्गुणम् ततस्तं पूजयति पूज्यो भवतीति बेत्यतः एकः कर्ता । स च लोकरूपः कर्ता सामर्थ्येन सिद्धः प्राप्तः इति हेतोः नोपात्तः पूजा च उपात्तापि कृत्संज्ञकयत्प्रत्ययनिष्पन्ने द्रव्यवद्भासमाने एतिक्रियानिरूपिते कर्मणि उपसर्जनीभूता गुणीभूता इत्यतः उभयम् अनुपात्तः कर्त्ता गुणभूता उपात्ता क्रिया

हेतुः। क्रियाया यथा—

"अकृत्वा परसन्तापमगत्वा खलनम्रताम्।
अनुत्सृज्य सतां मार्गं यत् स्वल्पमपि तद्बहु॥"

अत्र हि प्रकरणादिगम्याया लाभक्रियाया अनुपादानं करणादीनां भिन्नकर्तृकत्वभ्रमहेतुः। तदुक्तम्—

"कर्त्तुरुपाधितयोक्ता कृद्वाच्यतया गतान्यगुणतां वा।
क्त्वो भिन्नकर्तृकत्वभ्रमाय भवति क्रियाऽवचश्च तयोः॥"

---

व्यक्तिविवेकव्याख्यानम्।

कर्तुरुपाधितयेति। अत्र शान्त्यादिक्रियायाः कर्त्तृसम्बन्धित्वेनोपादानमपि सङ्ग्रहीतव्यम्।

मधुसूदनीविवृतिः।

चेतिद्वयं भ्रमस्य हेतुः। पूर्वमापतत एत्यपेक्षया ईक्षणक्रियायाः पूर्वकालत्वमवगतं भवति पश्चात्पर्यालोचनया नैत्यपेक्षमीक्षणक्रियायाः पूर्वकालत्वमिति उत्तरकालजायमानवाधाद् भ्रान्तिर्भवति, तस्याश्च हेतुर्निर्दिष्टमुभयमिति तत्वम्।

अनुपात्तायाः क्रियायाः भ्रमहेतुत्वं यथा—अकृत्वेति। परस्य स्वातिरिक्तस्य सन्तापं दुःखमकृत्वा अनुत्पाद्य। खलस्य पुरो नम्रतां विनीततामगत्वा असंपाद्य सतां महानुभावानाम् मार्गं तदाचरितपन्थानम् अनुत्सृज्य यत्स्वल्पमपि लभेतेति आन्तरालो बोधः तद्बहु तदेव ज्यायः।

अत्रोदाहरणे प्रकरणं वक्तृश्रोत्रोः बुद्धिस्थत्वम्। तदादिना गम्यायाः प्रतीयमानायाः लाभक्रियाया अनुपादानम्, करणादीनां करणगमनोत्सर्जनानाम् क्रियाणां कश्चित् भिन्नः कर्त्तेति भ्रमं नान्यः कर्त्तेति उत्तरकालीनवाधाद् जनयति। यः कर्त्ता लभतेः स एव करोत्यादीनाम्। लभत्यपेक्षं करोत्यदीनां पूर्वकालत्वम्। ननु पूर्वं प्रयुज्यमानक्रियापेक्षमेव क्त्वः पूर्वकालत्वम् न तु प्रतीयमानापेक्षमुक्तम् अत्र च लभतीति प्रतीयमानक्रियापेक्षमेव पूर्वकालत्वमुच्यते इतिपूर्वापरग्रन्थविरोध इति चेन्न। अयं श्लोकः प्रकरणान्तःपाती कयोश्चिद् भोः किमुपार्ज्यते, भगवन् किं पृच्छते? स्वल्पमेव लभ्यते, अस्तु, परसंतापाद्यकृत्वा स्वल्पमपि लाभं बहु मन्यताम् इति गुह्यं मन्त्रयतोः वक्तृश्रोत्रोः वाकोवाक्यमनुसन्धायैव रचितोऽतो न लभतिक्रियायाः प्रतीयमानत्वम्। अथवा प्रायेणेत्युक्त्या उक्तनियमस्य प्रायिकत्वम् कल्पनीयम्। इति सर्वं निरवद्यम्।

उक्तोदाहरणोदिशा क्त्व भिन्नकर्तृकत्वभ्रमो भवतीत्येतद् वृद्धोक्त्या संवादयत् संगृह्णति-तदुक्तमिति। कर्त्तुरिति। कृतद्वाच्यतया कर्त्तुः क्रियायां स्वातन्त्र्येण विवक्षितस्य उपाधितया विशेषणभावेन सम्बन्धितयावा उक्ता, अथवा अन्यस्य कर्त्तृभिन्नस्य कर्मादेः गुणतां उपसर्जनत्वं गता प्राप्ता वा क्रिया, अथ च तयोः कर्त्तृक्रिययोरवचः

"पौर्वापर्यं क्रियाणां यद् वास्तवं तदपेक्षिणि ।
क्त्वः पौर्वकाल्ये किं तासां प्राधान्येतरचिन्तया ॥"

इत्यलमनेन ।

---

व्यक्तिविवेकव्याख्यानम् ।

**पौर्वापर्यं क्रियाणामिति** । इह द्विविधं क्रियाणां पौर्वापर्यं शाब्दं वास्तवं च । तत्र शाब्दं प्रायेणाख्यातशब्दवाच्यया प्रधानक्रियया सह गुणक्रियाणां, तासां तया सह गुणप्रधानभावेन सम्बन्धस्योचितत्वात्, 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यादि'ति न्यायेन गुणक्रियाणां परस्परं सम्बन्धाभावाच्च । वास्तवं तु यद्वस्तुबलप्रवृत्तं, तद् गुणक्रियाणामपि सम्भवत्येव । आपेक्षिकस्य गुणप्राधान्यस्य तास्वपि भावात् सम्बन्धोपपत्तिः, यथा पश्य मृगो धावतीति प्रधानक्रिययोः । एवञ्च गुणक्रियागतवास्तवपौर्वापर्याश्रयेण क्त्वाप्रत्ययस्य प्रयुज्यमानत्वात् शाब्दप्राधान्येतरभावो न प्रयोजकः । अस्य न्यायस्यात्रापीत्थमेव स्थितिरिति बहुतरलक्ष्यसिद्धिः ।

मधुसूदनीविवृतिः ।

अकथनं च क्त्वः क्त्वाप्रत्ययप्रकृतिभूतधातोः भिन्नकर्तृकत्वभ्रमाय उपात्तातिरिक्तकर्तृकत्वभ्रान्तिहेतुर्भवति । भिन्नकर्तृकत्वभ्रमः क्रियाया विशेषणभावेन उक्त्या, गुणत्वेनोक्त्या, कर्तृक्रिययोरुभयोरनुक्त्येति प्रकारत्रयेण संभाव्य इति तत्वम् ।

ननु शिशिरकालमपास्येत्यादौ प्रधानक्रियामुपेक्ष्य किमिति गुणीभूतहरतिप्रभृतिक्रियापेक्षमपास्तिप्रभृतिक्रियाणां पूर्वकालिकत्वमङ्गीक्रियत इति चेत्तत्राह--**पौर्वापर्यमिति** । अपेक्षिणि साकांक्षे क्त्वाप्रत्ययप्रतिपाद्ये पौर्वकाल्ये यत् क्रियाणां पौर्वापर्यं तद् वास्तवम् वस्तुवललब्धम् अपेक्षाकृतमितिभावः । ततः तासां क्रियाणां प्राधान्येतरयोश्चिन्तया किम् , अनावश्यकमिति भावः । इदं तत्वम् । इह क्रियाणां पूर्वापरीभावः शाब्दः वास्तवश्चेति द्विविधः । तत्र शाब्दः स भावः प्रायशः आख्यातपदप्रतिपाद्यया प्रधानक्रियया सह गुणक्रियाणां संभाव्यः । गुणीभूतक्रियाणां प्रधानीभूतक्रियया सह अङ्गाङ्गिभावेनान्वयस्यौचित्यात् । गुणक्रियाणां च परस्परं समन्वयस्य "गुणनां च परार्थत्वादसम्बन्धः समत्वात्" इतिं न्यायेन वाधितत्वाच्च अतो नायं शाब्दो गुणप्रधानभावः क्त्वाप्रत्यये उपयुज्यते । यस्तु वास्तवः अर्थादापेक्षिकः स तु प्रधानक्रियाणां गुणक्रियाणामपि च संभवत्येव यत् आपेक्षिकस्य गुणप्रधानभावस्य सर्वत्रापि सद्भावात् समन्वयस्य स्वीकारात् । यथा "पश्य मृगो धावति" इति दृशिधाव्योः प्रधानक्रिययोरपि धावन्तं मृगं पश्येत्यनया, दिशा कर्मक्रियाभावेन समन्वयस्य जागरूकत्वात् । एवं हि गुणीभूतक्रियागतापेक्षिकपूर्वापरीभावबुद्ध्या क्त्वाप्रत्ययार्थस्य निरूप्यमाणत्वात् शब्दप्राप्तप्राधान्येतरभावचिन्तनेनालमिति ।

**इत्यलमनेनेति** । इतिरवान्तरप्रसंगसमाप्तौ । अलम् पर्याप्तमनेन प्रसक्तानुप्र-

घटतीति घटो ज्ञेयो नाघटन् घटतामियात् ।
अघटत्वाविशेषेण पटोऽपि स्याद् घटोऽन्यथा ॥ ८ ॥
घटनञ्च तदात्मत्वापत्तिरूपा क्रिया मता ।

---

व्यक्तिविवेकव्याख्यानम् ।

**घटतीत्यादि** । घटत्वमापद्यते । घटतीति प्रातिपदिकाद्वक्ष्यमाणक्रमेण क्विपि परस्मैपदम् । एवं नाघटन्निति शतृप्रत्ययः । इह हि घटादयः शब्दाः स्वविषये प्रवर्त्तमानाः प्रवृत्तिनिमित्तं किञ्चिदवलम्ब्य प्रवर्त्तन्ते । तच्च तेषां प्रवृत्तिनिमित्तमाश्रयणीयं यत् पदार्थस्य स्वरूपीभूतम् । न हि परभूतेन घटत्वसामान्यादिना परत्र व्यपदेशो न्याय्यः, परत्वाविशेषे सर्वत्र सर्वे व्यपदेशाः स्युः । न हि स्वयमप्रकाशमानस्वभावो घटः प्रकाशत इति व्यपदिश्यते । स्वयमश्वेतस्वभावो वा प्रासादः श्वेत इति । एवञ्च स्वरूपेण घटत्वेन घटो घट इति व्यपदिश्यते । स्वरूपभूतं च घटत्वं साध्यत्वेन प्रतीतेर्घटत्वापत्तिलक्षणा क्रियोच्यते । सैव च घटना घटात्मतारूपा । तस्यां च स( न्तु ? तो ? ) ( त्यां ) नाममात्रात् क्विबादयः कार्याः । आदिग्रहणेन क्यच्क्यङौ गृह्येते । क्विपि कृते कर्तर्युत्पन्नस्याच्प्रत्ययादेरार्धधातुकस्य लोपः कर्त्तव्यः । सर्वत्रोपमानप्रतीतिरन्यस्यान्यरूपापत्तेरौपम्यप्राणत्वात । पुत्रीयति च्छात्रः हंसायते काकः इत्यादौ हि च्छात्रकाकयोः क्रमेण पुत्रत्वहंसत्वापत्तिः सादृश्यपर्यवसायिन्येव प्रतीयते । ततश्च प्रतीत्यनुगुणत्वेन लक्ष्यसिद्ध्यर्थमन्यथा लक्षणं प्रणेतव्यम् ।

प्रसिद्धलक्ष्यसिद्ध्यर्थं लक्षणं तच्च भिद्यते ।
अभियोगस्य वैशिष्ट्यात् तत्कृतं तच्च गृह्यते ॥२॥ इत्यन्तरश्लोकः ।

मधुसूदनीविवृतिः।

सक्तलेखनेन । अत्र यद्यपि वाच्यः अनुमेयश्चेति द्विविधार्थभूमिकाभूतस्य शब्दस्य विधानिरूपणमेवालमासीत् किन्तु शब्दैकदेशपदस्य स्वरूपनिरूपणावश्यकतया तत्प्रसक्तानुप्रसक्तमिदमपि बहूपकारकत्वात निरूपितमिति सर्वं समञ्जसम् ।

**घटतीति** । घटति चेष्टते इति हेतोः घटः अर्थात् चेष्टादिक्रियाहेतुक एव घट इति व्यपदेशः। ननु यदि चेष्टनस्वरूपं घटत्वमाश्रित्यैव कम्बुग्रीवादिमति व्यक्तौ घटव्यपदेशस्तर्हि तादृशं घटनं पटादिष्वपि अस्त्येवेति तत्र कुतो न तादृशव्यपदेश इति नाशङ्कनीयम् । सति नैमत्तिके निमित्तं परिकल्प्यते, न निमित्तमस्तीति नैमित्तिकपरिकल्पनेति सिद्धान्तः । तस्मात न पटादौ घटादिव्यवहारः । अघटन् घटनादिक्रियारहितः घटतां घटभावं न इयात् न प्राप्नुयात् । अन्यथा अघटत्वाविशेषेण घटनक्रियाकर्तृत्वाभावाविशेषेण । अन्यथेत्यस्यैव, विवरणम् अघटत्वाविशेषेणेति । पटोपीति वस्तुमात्रोपलक्षणम् तेन वस्तुमात्रमपि घटः स्यात् घटव्यपदेशविषयो भवेत् ।

**घटनञ्चेति** । च अन्यच्च घटनं नाम तदात्मत्वापत्तिरूपा घटस्वरूपत्वप्राप्तिरूपा

मूलश्च तस्याश्चित्रार्थाभासाविष्कृतिरीशितुः ॥ ६ ॥

व्यक्तिविवेकव्याख्यानम् ।

यथा हि भवत्यादिशब्दं लटि तिपि शपि च केचिदाचक्षते । अन्येतु (श्ति?)तिशब्दमविकरणं च ब्रुवते । अपरेतु भवत्यादेरतिप्रत्ययं कुर्वन्ति । सर्वेषु पक्षेषु भवत्यादिरेव शब्दः साध्यः । एवं घटादयः शब्दा व्युत्पाद्याः ! ते च लक्ष्याविरोधेन यथाप्रतीति व्युत्पाद्यन्ते । अतश्च घटादिशब्दात् क्विप्यजादौ (च)प्रत्यये तल्लोपे च कृते प्रायोगिका घटादयः शब्दा व्युत्पाद्याः । तत्सिद्धये चैवम्भूतलक्षणमुक्तन्यायेन प्रणेतव्यमेव । ननु घटत्वमापद्यत इत्यत्र प्रवृत्तिनिमित्ते कथं घटशब्दस्तत्राप्येवमिति चेदनवस्था । घटेर्धातोरच्प्रत्ययेन कृतेन किमपराद्धं, येनैषा कुकल्पनाश्रीयते । नैतत् । प्रायोगिकघटशब्दसिद्ध्यर्थं घटिरच्प्रत्ययान्तः प्रवृत्तिनिमित्तैकदेशाभिधायी उपायमात्रत्वेन गृह्यते । न तु तस्य स्वतन्त्रत्वेन प्रयोगः । स्वरूपीभूतघटत्वापत्तिलक्षणं हि घटशब्दस्य प्रवृत्तिनिमित्तम् । तदेकदेशश्च घटत्वमुपायभूतस्य घटशब्दस्यार्थः । स च घटशब्दोऽत्र प्रकृतित्वेनैव प्रयुज्यते, यथा 'मृगाङ्कनिभमाननं' मित्यत्र समासविषयत्वेन निभशब्दः । शक्तिस्वाभाव्याद्धि निभशब्दो वाक्ये न प्रयुज्यते । एवमत्र घटशब्दः प्रायोगिकघटशब्दप्रकृतित्वमपहाय न क्वचित् प्रयुज्यते । घटत्वमापद्यत इत्यत्र विवक्षायां घटो भवतीति तु प्रक्रियावाक्यमेतत् । अतश्चानकारान्तेभ्य इकारान्तादिभ्यो व्यञ्जनान्तेभ्यश्च क्विप्यजादौ तल्लोपे च दधि भिषगित्यादयः शब्दाः सिद्धा भवन्ति ।

मूलं च तस्या इति । नन्वचेतनानां घटादीनां सत्ताप्रतिलम्भलक्षणायां क्रियायां परामर्शलक्षणस्वभावं कर्तृत्वं, तस्य चेतयदर्थेष्वेवोपपत्तेरित्याशङ्कयोक्तं—मूलश्चेति । इह खलु घटादीनां पदार्थानां बहिः सिद्धावपि प्रतिपत्तर्यसिद्धावसिद्धिरेव, बहिः सत्तामात्रेणासत्कल्पेन व्यवहर्तॄणां व्यवहारासिद्धेः । प्रतिपत्तरि सिद्धिः प्रकाश एव । स चाप्रकाशमानानां प्रकाशं प्रति ताटस्थ्येनावस्थितानां न भवति सम्बन्धानुपपत्तेः । प्रकाशमानत्वं च प्रकाशाविशिष्टत्वेन प्रकाशरूपतयैव । प्रकाशश्च निष्परामर्शत्वेन स्फुर-

मधुसूदनीविवृतिः ।

क्रिया मता अर्थात् घटनक्रियापेक्षैव घटत्वलब्धिः । तस्याः क्रियायाः मूलं हेतुश्च ईशितुः परमेश्वरस्य चित्राणाम् नानाविधानाम् अर्थानां वस्तूनाम् आभासाय अयं घटः अयं पट इति ज्ञानाय आविष्कृतिः निर्माणम् । विचित्राणाम् पदार्थानाम् लोकसमीक्षायै स्वरूपपरिष्कृतिरेव क्रियाव्याप्तौ कारणमिति भावः । अयं गूढाशयः "प्रदेशोऽपि ब्रह्मणः सारूप्यमनतिक्रान्तश्चाविकल्प्यश्चेति" दार्शनिकसिद्धान्तानुगत्या ब्रह्मणः प्रदेशो घटादिः ब्रह्मणः सारूप्यं सादृश्यं प्रकाशस्वरूपत्वं तथा कर्तृत्वादिकं च न अतिक्रमते अर्थात् प्रकाशस्वभावः कर्त्ता विकल्परहितश्च भवति । विकल्पः सन्देहः । एवं ब्रह्मसादृश्यात् जडेष्वपि घटादिषु क्रिया वर्त्तते । सा च आत्मधारणानुकूलसत्तारिक्तक्रिया भवितुं नार्हेत्यनुसन्धायोक्तम्—मूलं च तस्या इति ।

यः कश्चिदर्थः शब्दानां व्युत्पत्तौ स्यान्निबन्धनम् ।
प्रवृत्तौ तु क्रियैवैका सत्तासादनलक्षणा ॥ १० ॥
तस्यामेव क्विबाद्याश्च विधेयाः कर्तृमात्रतः ।
न तूपमानादाचारे तयोरर्थात् प्रतीतितः ॥ ११ ॥
यथा ह्यश्वति वालेय इत्यतोऽर्थः प्रतीयते ।
अश्वत्वमासादयति खर इत्यर्थतः पुनः ॥ १२ ॥
अश्वतुल्यसमाचारः खर इत्यवसीयते ।

---

व्यक्तिविवेकव्याख्यानम् ।

स्वारहितत्वाज्जडकल्प एव । परामर्शः स्वातन्त्र्याख्यं कर्तृत्वम् । तदिहैकैकोऽपि पदार्थः प्रकाशात्मतया लब्धस्वातन्त्र्यस्वभावः परमेश्वरः कर्तृत्वमनुभवत्येव । यदुक्तं तत्र भवता—"प्रदेशोऽपि ब्रह्मणः सारूप्यमनतिक्रान्तश्चाविकल्प्यश्चे" ति । ततश्च विश्वस्याविष्करणक्रियास्वतन्त्रस्वभावपरमेश्वरसम्बन्धिनीं चित्राभासाविष्कृतिं मूलत्वेनावष्टभ्य घटादयोऽपि प्रकाशैकात्मानः सत्ताव्यापृतौ स्वतन्त्रतामनुभवन्त्येव । अनेनैवाशयेनोक्तं 'मूलं च तस्या' इति एतदेव प्रकटीकरिष्यति 'सत्तायां व्यापृतिश्चेयमि'ति । यः कश्चिदिति । क्रिया वान्यो वेति व्युत्पत्तिनिमित्तत्वेनाव्याप्तिं दर्शयति । प्रवृत्तौ त्विति । प्रवृत्तिनिमित्तस्य नियमेन क्रियारूपतां दर्शयितुं त्विति । तयोरित्युपमानाचारयोः। अश्वत्वमासादयतीति आत्मदर्शनाभिप्रायेण । दर्शनान्तरे तु अश्व इवाचर-

मधुसूदनीविवृतिः ।

यः कश्चिदिति । यः कश्चित् यः कोऽपि अर्थः, ( यथा पाचक इत्यत्र पचनक्रियाकर्तृत्वरूपोऽर्थः ) शब्दानां व्युत्पत्तौ का प्रकृतिः कस्मिन्नर्थः कः प्रत्यय इत्यादि विशिष्टज्ञाने निबन्धनम् निमित्तकारणम् स्याद्भवतु नाम । तु किन्तु प्रवृत्तौ प्रकृष्टा वृत्तिः प्रवृत्तिः शक्तिः तत्र निबन्धनम् सत्तासादनलक्षणात्मलाभस्वरूपा एका क्रियैव । अयं भावः । नाम च धातुजमाहुरिति नये सर्वप्रातिपदिकानां धातुजन्यत्वात् धात्वर्थो व्यापारः क्रियेति यावत् प्रवृत्तिनिमित्तं भवतीति बोध्यम् । प्रक्रियांशे प्रकारीभूतो धर्मो व्युत्पत्तिनिमित्तम् । शाब्दबोधे प्रकारीभूतो धर्मः प्रवृत्तिनिमित्तमिति तत्त्वम् ।

तस्यामेवेति । तस्यां क्रियायामेव कर्तृमात्रतः केवलात्कर्तुः सकाशात् क्विबाद्याः । आद्यशब्दात् क्यङ्क्यजादयो ज्ञेयाः । विधेयाः कर्तव्याः । नतु नहि उपमान वाचकाच्छब्दात् आचारेऽर्थे विधेयाः । तयोरुपमानाचारार्थयोः अर्थात् अर्थापत्त्या प्रतीतितः लब्धेः ।

उक्तं दृष्टान्तेन साधयति—यथाहीति । अश्वतुल्येति च । यथा वालेयो रासभो अश्वति इत्यतो वाक्याद्योऽर्थः प्रतीयते । पुनस्तथा अश्वत्वमासादयति खर इत्यर्थतः इति तद्वाक्यार्थाच्च यत् प्रतीयते, तत् अश्वतुल्यसमाचारः खर इत्यवसीयते रासभः अश्वसदृशाचारवान् इति पार्ष्ठिको बोधो जायते । अतुल्या विभिन्ना क्रिया यस्य तस्य

न तत्त्वासादनं युक्तं तदतुल्यक्रियस्य हि ॥ १३ ॥
सत्तायां व्यापृतिश्चैषा चित्रत्वपरिनिष्ठितेः ।
सङ्गच्छते जडस्यापि घटादेर्घटनादिवत् ॥ १४ ॥
नाम्नः सत्त्वप्रधानस्य धातुकारोऽत एव हि ।
शब्दवक्त्रैकदेशादेर्धात्वर्थत्वमवोचत ॥ १५ ॥
एवञ्च विपच्य घटो भवतीति क्त्वोऽस्य पूर्वकालत्वम् ।
घटनापेक्षं ज्ञेयं भवनापेक्षन्तु नासमन्वयतः ॥ १६ ॥
वहिरङ्गत्वाच्च यथा भवत्यधिश्रित्य पाचकोऽयमिति ।

व्यक्तिविवेकव्याख्यानम् ।

तीत्यर्थः स्यात् । न तत्त्वासादनमिति। अश्वत्वासादनमनश्वसदृशक्रियस्य न युक्तमिति साहश्यं सामर्थ्यात् प्रतीयते, यथाऽब्रह्मदत्ते "ब्रह्मदत्त" इत्याहेत्यत्र ब्रह्मदत्तसादृश्यं गम्यते तद्वदेवात्र द्रष्टव्यम् । नाम्न इति । सत्त्वप्रधानस्य शब्द(स्य ?) वक्त्रैकदेशादिस्वरूपस्य नाम्नो यः शब्दवक्त्रैकदेशादिरर्थस्तस्य । अत एव सत्तासादनरूपक्रियास्वभावतयैव धात्वर्थत्वमुक्तम् । तथा हि अणादयः शब्दार्थाः गडि वदनैकदेश इति धातुकारः पपाठ। धातुशब्देन धातुपारायणं शास्त्रं लक्ष्यते । वहिरङ्गत्वाच्चेति। चशब्देन

मधुसूदनीविवृतिः ।

अश्वसदृशक्रियारहितस्य रासभस्य तत्वासादनम् न युक्तम् अश्वत्वलाभः न युक्तिमान् किन्तु सामर्थ्यात् सादृश्यं प्रतीयते ।

**सत्तायामिति** । सत्तायामेषा व्यापृतिरात्मलब्धिस्वरूपव्यापारो वर्तते स चित्रत्वस्य नानात्वस्य परिनिष्ठितेः हेतोः संगच्छते । यथा जड़स्यापि घटस्य घटनादिक्रिया संगच्छते ।

**नाम्न इति** । अत एव सर्वत्र क्रियायाः प्रवृत्तिनिमित्तत्वस्वीकारादेव धातुकारः आचार्यः पाणिन्यादिः सत्वप्रधानस्य शब्दवक्त्रैकदेशादेः । शब्दश्च वक्त्रैदेशश्चेति शब्दवक्त्रैकदेशौ तौ आदिर्यस्य तस्य। नाम्नः प्रादिपदिकस्य, धात्वर्थत्वमवोचत कथितवान् । यद्यपि नाम सत्वप्रधानमित्युक्त्या नाम्नः शब्दस्य तथा वक्त्रैकदेशस्य कपोलस्य च द्रव्यतया न धात्वर्थभवनयोग्यता, तथापि अण रण भण शब्दार्थाः, गडि वदनैकदेशे इत्यादिधातुकारोक्तदिशा नाम्नामपि शब्दवदनैकदेशभवनप्रभृति क्रियैव प्रवृत्तिनिमित्तमित्यवसीयते । इति भावः ।

**एवं चेति** । एवं नाम्नां क्रियायाः प्रवृत्तिनिमित्तत्वस्वीकारे "विपच्य घटो भवति" इत्यस्मिन् वाक्ये अस्य क्त्वः पूर्वकालत्वं घटनक्रियापेक्षं ज्ञेयं नतु भवनक्रियापेक्षम् । कुत एतत्—असमन्वयतः पचतिभवत्योः सम्बन्धास्वारस्यात् ।

ननु यः पाकाश्रयः स एव भवनाश्रयस्ततः कुतोऽसमन्वय इत्यत आह—**बहिरङ्गत्वाच्चेति** । घटत्यपेक्षया बहिरङ्गत्वात् । यथा यः पचमानः स एव घटमानः इति

अत्र हि पाकापेक्षाधिश्रयतेः पूर्वकालतावगतिः ॥ १७ ॥
तस्मान्नामपदेभ्यो यः कश्चिदर्थः प्रतीयते ।
न स सत्तामनासाद्य शब्दवाच्यत्वमर्हति ॥ १८ ॥
इत्थञ्चास्तिभवत्यादि क्रियासामामान्यमुच्यते ।
नान्तरङ्गतयावश्यं वक्तारस्तत् प्रयुञ्जते ॥ १९ ॥
क्रियाविशेषो यस्त्वन्यः पाकादिर्व्यभिचारभाक् ।
बहिरङ्गतया तस्य प्रयोगोऽवश्यमिष्यते ॥ १० ॥

इति सङ्ग्रहश्लोकाः ॥

भावप्रधानमाख्यातम् । असत्त्वभूतार्था उपसर्गादयः । तेषामसत्त्वभू-

---

व्यक्तिविवेकव्याख्यानम् ।

पूर्वकारिकागतोऽसमन्वयः समुचीयते । यथा भवत्यधिश्रित्य पाचकोऽयमिति उभयवादिसिद्धो दृष्टान्तः । इत्थं चास्तिभवत्यादीति । कारिकाद्वयं पूर्वमेव निर्णीतार्थम् ।

इत्थं चायं ग्रन्थकारः—

कर्तृभेदविषयां विरुद्धतां क्त्वो निवार्य घटितक्रियाभिधः ।
प्रौढवादरचनाविचक्षणो लक्ष्यसिद्धिमुदितान् कवीन् व्यधात् ॥ ३ ॥

भावप्रधानमिति । नामपदानां पूर्वोक्तया युक्त्या सत्यपि क्रियाशब्दत्वे क्रियाया अप्राधान्यम् । आख्यातपदानां पुनः शब्दशक्तिस्वाभाव्यात् क्रियाप्राधान्यम् । असत्त्वभूतार्था इति । असत्त्वभूतत्वमसिद्धस्वभावत्वम् । त्रयाणामवान्तरविशेषसद्भावेऽपि सामान्यलक्षणम् । तानवान्तरविशेषानाह–तेषामिति । व्यापारभेदः क्रियाविशे-

मधुसूदनीविवृतिः ।

रीत्या पचिघञ्योः अन्तरङ्गत्वम् न तथा तयोरन्तरङ्गत्वमिति तत्वम् । अयं पुरुषः अधिश्रित्य पाचको भवति इति वाक्यमस्ति । अत्र वाक्ये अधिश्रयतेः क्रियायाः पूर्वकालतायाः अवगतिर्ज्ञानम् पाकापेक्षया बोध्या, न भवत्यपेक्षया ।

तस्मादिति । तस्मात् सर्वत्र सत्ताव्यापारस्य सत्वात् नामपदेभ्यः प्रातिपदिकसंज्ञकशब्देभ्यो यः कश्चिदर्थः प्रतीयते सोऽर्थः सत्तां क्रियामनासाद्य अप्राप्य न शब्दवाच्यत्वम् न तत्तच्छब्दार्थतामर्हति ।

इत्थंचेति । अस्तिभवतिप्रभृतिक्रियाः साधारणक्रियाः कथ्यन्ते इति भावः । अतो वक्तारस्तत्क्रियासामान्यम् अन्तरङ्गतया नियतस्थितिकतया अवश्यं न प्रयुञ्जते वाक्ये इति शेषः ।

क्रियाविशेष इति । यस्तु अन्यः अस्तिभवत्यतिरिक्तः क्रियाविशेषः पाकादिः व्यभिचारभाक् कदाचिदपैति कदाचिदेति इत्येवमनियतस्थितिशाली वर्तते । तस्य क्रियाविशेषस्य बहिरंगतया बहिस्स्थतया न अवश्यं प्रयोग इष्यते आचार्यैः ।

भावप्रधानमिति । भावेति व्याख्यातम् । असत्वभूतार्थाः अद्रव्यार्थाः

तार्थत्वाविशेषेऽपि व्यापारनियमात् प्रयोगनियमाच्च त्रैराश्योपगमः । तथाहि-क्रियारूपातिशयप्रतिपत्तिनिबन्धनमुपसर्गाः प्रादयः । भावसत्त्वयोरात्मभेदप्रत्यायननिमित्तमवधृतरूपार्थविशेषाः स्वरादयो निपाताः । क्रियाविशेषोपजनितसम्बन्धावच्छेदहेतवः कर्मप्रवचनीयाः । तदुक्तम्—

"द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधापि वा ।

---

व्यक्तिविवेकव्याख्यानम् ।

पकत्वमुपसर्गाणाम् । प्रयोगनियमश्च तेषां धातोः पूर्वं प्रयोगः । निपातैस्तु चादिभिर्भावसत्त्वयोरात्मभेदः प्रत्याय्यत इति स तेषां व्यापारनियमः । तत्र भावगतमात्मभेदप्रत्यायनं यथा पचति पठति च, सत्त्वगतन्तु देवदत्तो यज्ञदत्तश्चेति । रूपं च शब्दस्वरूपादिः । अर्थः समुच्चयादिः । प्रयोगनियमश्चादीनां समुच्चेतव्यादिवाचिभ्यः परप्रयोगादिः । क्रियाविशेषेति । तथा हि शाकल्यसंहितामनु प्रावर्षदित्यादौ निशमनादिक्रियाविशेषोपजनितो यः संहितावर्षयोः कार्यकारणसम्बन्धस्तस्यावच्छेदः संहिता कारणं वर्षं कार्यमित्येवंरूपः, तत्प्रत्यायनं कर्मप्रवचनीयानां व्यापारः । प्रयोगनियमोऽत्र निपातवत् ।

द्विधेति । सुबन्ततिङन्ततया । चतुर्धेति । नामाख्यातोपसर्गनिपातत्वेन ।

मधुसूदनीविवृतिः ।

उपसर्गादयः । आदिशब्दात् निपातकर्मप्रवचनीययोर्ग्रहणम् । असत्वभूतार्थत्वस्याविशेषेऽपि समानेऽपि व्यापारस्य नियमाद् भेदाद् प्रयोगस्य च नियमाद्धेतोः त्रैराश्योपगमः त्रिविधत्वस्वीकारः । व्यापारप्रयोगयोर्भेदस्तु यथा उपसर्गेषु क्रियास्वरूपे आतिशय्यबोधकत्वं व्यापारः धातोः पूर्वं प्रयोगः । निपातेषु चादिषु स्वभेदप्रत्यायकत्वम् व्यापारः समुच्चेतव्यभेद्यादिवाचिभ्यः परः प्रयोगः । कर्मप्रवचनीयेषु सम्बन्धनिश्चायकत्वं व्यापारः प्रयोगस्तु पर एव निपातवत् ।

उपसर्गादीनाम् लक्षणपरिष्कलनदिशा व्यापारप्रयोगौ दर्शयितुमुपक्रमते—तथाहीति । यत्-क्रियायाः स्वरूपे अतिशयप्रतिपत्तौ निबन्धनं कारणम् ते उपसर्गाः प्रादयः । यत् भावस्य क्रियायाः सत्वस्य नाम्नः आत्मभेदस्य स्वरूपपृथग्भावस्य प्रत्यायने बोधने निमित्तं कारणम् ते अवधृतरूपार्थविशेषाः निश्चितशब्दार्थविशेषाः निपाताः स्वरादयः । यथा मित्रदत्तो भुङ्क्ते निरीक्षते चेत्यत्र भुजीक्षणयोः क्रिययोः, यज्ञदत्तः मित्रदत्तश्च इत्यनयोः नाम्नोश्च स्वरूपपार्थक्यं ते समुच्चयता चकारेण बोध्यते। ये क्रियाविशेषेण उपजनितस्य उत्पन्नस्य सम्बन्धस्य कार्यकारणभावादेः अवच्छेदहेतवः निश्चयकारकाः ते कर्मप्रवचनीयाः । यथा ध्यानमनु समनन्ददित्यत्र भगवदध्यक्षीकरणरूपक्रियाविशेषोपजनितं सम्बन्धं कार्यकारणभावाख्यं परिच्छिनत्ति उपलक्षणार्थकोऽनुः । रूपं शब्दस्वरूपादिः । अर्थः शब्दसमुच्चयादिः ।

द्विधेति । कैश्चिदाचार्यैः पदं द्विधा सुबन्ततिङन्ततया द्विप्रकारं भिन्नं भेदवत्

अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥" इति ।
एतच्च वक्ष्यते । वाक्यमेकप्रकारं, क्रियाप्राधान्यात्, तस्याश्चैकत्वात् ।
यदाहुः—

"साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते ॥"

---

### व्यक्तिविवेकव्याख्यानम् ।

**पञ्चधेति** । कर्मप्रवचनीयः पञ्चमो भेदः । **अपोद्धृत्येति** वैयाकरणदर्शने वाक्यस्यैव वाचकत्वम् । ततः पदानामपोद्धृत्यान्वाख्यानं यथा पदेभ्यः प्रकृतिप्रत्ययादीनाम् ।

**वाक्यमिति** । 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायेन क्रियैदम्पर्याद्वाक्यस्य क्रियाप्राधान्यम् ।

**साकाङ्क्षावयवमिति** । देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादौ वाक्य एकैकस्य पदस्य खण्डनायां साकाङ्क्षत्वम् । अखण्डितैस्तु पदैः परं पदान्तरं नाकाङ्क्ष्यते । **गुणवत्** क्रियाकारकविशेषणयुक्तम् । केचित्तु क्रियायाः प्राधान्यस्योक्तौ कारकाणां परार्थत्वाद् गुणत्वमिति तद्युक्तमित्याहुः । **एकार्थमिति** । प्रधानभूतक्रियारूपैकार्थमित्यर्थः ।

### मधुसूदनी विवृतिः ।

कथितम् । कैश्चित् चतुर्धा चतुःप्रकारं नामाख्यातोपसर्गनिपातभेदात् । तथा पंचधा पंचप्रकारवत् । नामाख्यातोपसर्गनिपातकर्मप्रवचनीयत्वेन कथितम् । एतत्सर्वं भेदकथनं वाक्येभ्यः पदानि अपोद्धृत्य पृथक्कृत्य भवति । यथा पदेभ्यः रामादिभ्यः प्रकृतेः "रम्" इति धातोः प्रत्ययस्य "घञ्" इति कृतः अपोद्धरणं विधायोपदेशार्थं भेदः तथैव वाक्येभ्यः पदानामपोद्धृत्य भेदो बोध्यः । वैयाकरणनये अखण्डस्य वाक्यस्य वाचकत्वात् प्रवृत्तिनिवृत्तिकारित्वाच्च पदानामपोद्धारः । एतच्च अपोद्धरणमग्रे वक्ष्यते ।

**वाक्यमेकप्रकारमेकविधम्** । क्रियायाः प्राधान्यात् तस्याः क्रियायाश्चैकत्वात् । एकतिङन्तार्थमुख्यविशेष्यकबोधजनकत्वस्य वाक्यलक्षणत्वादिति भावः ।

यदाहुरिति स्वोक्तार्थं वृद्धोक्त्या संवादयति–साकाङ्क्षेति । प्रभोः कथनाद् यज्ञदत्तो देवदत्ताय काष्ठैः स्थाल्यामोदनं पचतीत्यादिवाक्यानां भेदे खण्डशः करणे साकाङ्क्षावयवम् । साकाङ्क्षाः परस्परं संगन्तुमिच्छवोऽवयवा एकदेशाः पदानीति यावत् यत्र तत् । परस्मिन् स्वाघटक इत्यर्थः संगन्तुमनाकाङ्क्षाः शब्दा अवयवभूता यत्र तत् । क्रिया एव प्रधानं यत्र तत् । सिद्धसाध्ययोर्मध्ये साध्यस्य अनुष्ठेयतया प्राधान्यं भवति क्रिया च अनुष्ठेयस्वरूपा ततो वाक्ये सा प्रधानीभूतैवेति भावः । गुणवत् क्रियाकारकविशेषणयुक्तम् । प्रधानतया वर्तमान एकोऽर्थो यत्र तदेकार्थम् । अन्येषां सिद्धपदार्थानां साध्ये समन्वीयमानत्वात् प्रधानीभूतक्रियार्थस्य एकत्वमेवेति तत्वम् । एवं भूतं वाक्यमिष्यते ।

अर्थोऽपि द्विविधो वाच्योऽनुमेयश्च । तत्र शब्दव्यापारविषयो वाच्यः । स एव मुख्य उच्यते । यदाहुः—

"श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते ।
तं मुख्यमर्थं मन्यन्ते गौणं यत्नोपपादितम्"

इति । तत एव तदनुमिताद्वा लिङ्गभूताद्यदर्थान्तरमनुमीयते सोऽनुमेयः । स च त्रिविधः । वस्तुमात्रमलङ्कारा रसादयश्चेति । तत्राद्यौ वाच्यावपि सम्भवतः । अन्यस्त्वनुमेय एवेति । तत्र पदस्यार्थो वाच्य एव नानुमेयः,

---

व्यक्तिविवेकव्याख्यानम् ।

अर्थोऽपीति । शब्दस्य व्यापारान्तरनिराकरणार्थमर्थद्वैविध्यघटनम् । तथा हि । वृद्धव्यवहारात् सङ्केताद्वा शब्देष्वर्थनिर्णयः । तेषां च यत्रार्थे विद्यमानत्वं तस्य वाच्यत्वमेव । अन्यस्य तु तेषामभावादर्थसामर्थ्यादवगतिः । न चासम्बद्धोऽर्थस्तमर्थं प्रत्याययति सम्बद्धाच्चार्थादर्थान्तरप्रतिपत्तावनुमानमेव । तेन लक्षणाया अनुमानान्तर्भावः प्रतिपादितो भवति । तस्य च व्यापकत्वात् । यद्यपि च सौगतैर्लक्षणार्थव्यापार इष्यते न शब्दव्यापारः "(पक्षो ?) धर्मी अवयवे समुदायोपचारादि"ति शब्दोपचारं परिहृत्य समुदायस्वभावार्थोपचारवचनात्, तथापि वक्ष्यमाणनयेनानुमानलक्षणयोगादनुमानमेवैपाभ्युपगन्तव्या । न च लक्षणायामनुमानस्यान्तर्भावः इति वाच्यं, तस्य तत्परिहारेण वृत्तेर्व्यापकत्वात् । व्यञ्जकत्वमनुमानमेवेति वक्ष्यते वितत्य । तदेवं वाच्यानुमेयत्वभेदेनार्थस्य द्वैविध्यम् ।

श्रुतिमात्रेणेति । यत्रास्य शब्दस्य श्रुतिमात्रेणोच्चारणमात्रेण तादर्थ्यम् अर्थविषयत्वं प्रतीयते स मुख्योऽर्थः । गौणम् । उक्तयुक्त्या परमार्थत आनुमानिकम् । यत्नोपपादितं प्रतिबद्धार्थसामर्थ्योपनीतम् ।

तत एव वाच्यात् तदनुमिताद् वाच्यानुमितात् लिङ्गभूतात् । स च त्रिविध

मधुसूदनीविवृतिः ।

अर्थोपीत्यपिना एवं बोध्यते यद् द्विविधः शब्दः पदवाक्यभेदादित्युक्त्यनुसारमेवार्थभेदः । तत्र वाच्यानुमेययोः शब्दयोः यो व्यापारोऽभिधा तस्य विषयो गोचरः अर्थः वाच्यः । स वाच्य एव मुख्यः प्रधानमुच्यते ।

श्रुतमात्रेणेति । यत्र स्थले अस्य शब्दस्य श्रुतिः श्रवणं तन्मात्रेण उच्चारणमात्रणेति यावत् । तादर्थ्यम् अर्थविषयत्वम् स्वार्थप्रतिपादनोन्मुखत्वमिति भावः । अवसीयते प्रतीयते तं मुख्यं प्रधानमर्थं मन्यन्ते । यत्नेन उपपादितं बाधितमुख्यार्थसामर्थ्योपनीतं गौणं गुणादागतं ( ग्रन्थकारमतेन ) अनुमानिकम् मन्यन्ते ।

तत एव वाच्यात्, अथवा तदनुमिताद् वाच्यद्वारानुमिताद् लिङ्गभूताद् हेतुभूताद् यदर्थान्तरमनुमीयते ज्ञायते सोऽर्थोऽनुमेयः । स च अनुमेयश्च त्रिविधः । तत्र

तस्य निरंशत्वात् साध्यसाधनभावाभावतः ।

वाक्यार्थस्तु वाच्यस्यार्थस्यांशपरिकल्पनायामंशानां विध्यनुवादभावेनावस्थितेर्विधेयांशस्य सिद्धासिद्धतयोपपादनानपेक्षसापेक्षत्वेन द्विविधो बोद्धव्यः ।

व्यक्तिविवेकव्याख्यानम् ।

इति । तदेतत् प्रथमसुपक्षिप्तम् 'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्' इति । तदुपपादयितुमासूत्रयति । ( *योग्यो वा स्वशब्देन प्रतिपादयितुं योग्यो वाच्यतासहिष्णुः ? ) क्वचिच्छब्दवाच्याविति । 'द्विविधो हि शब्दः पदवाक्यभेदादि'ति पूर्वोपक्रान्तयोः पदवाक्ययोरेवार्थं निरूपयति—निरंशत्वात् भागरहित्वात् ।

**वाक्यार्थस्त्विति** । तथा हि । **वाक्यार्थो** द्विविधः वाच्योऽनुमेयश्च । तत्र वाच्यस्यैव वाक्यार्थत्वान्निरंशस्यापि विधेयानुवाद्यांशरूपत्वेनांशकल्पनं क्रियते । विध्यनुवादभावमन्तरेण तयोरंशयोः समन्वयायोगाद् । विधेयश्च कश्चिल्लोकप्रसिद्धतयोपपादनानेपक्षः, कश्चित् पुनरप्रसिद्धत्वादुपपादनापेक्षः । उपपादनं चात्र नानुमानम् । अप्रतीतप्रतीत्युत्पादनाभावाद्, अपि तु शब्दप्रतीतस्यैवार्थान्तरन्यासन्यायेन समर्थनम् । ततश्चोद्भटकाव्यहेतुन्यायेनानुमानं व्यवस्थितम्, अर्थान्तरन्यासन्यायेन तूपपादनम् । साध्यसाधनभावः पुनरुभयानुयायी । अत एव वाच्यार्थविपयादनुमेयार्थविषयं साध्यसाधनभावं पृथग् वक्ष्यति, 'अनुमेयार्थविषयो यथे'ति ।

मधुसूदनीविवृतिः।

त्रयाणां मध्ये आद्यौ वस्तुमात्रालङ्कारौ वाच्यौ अव्यङ्ग्यावस्थायां वाच्यतासहिष्णू अपि । अपेरयं भावो यद् व्यङ्ग्यावस्थायां कथमपि न वाच्यौ । अयमेव संभवतेरभिप्रायः । अन्यो रसादिरूपः अनुमेय एव इति प्रतिपादयिष्यते ।

**तस्येति** । साध्यसाधनभावस्य हेतुहेतुमद्भावस्य अभावाद्धेतोः तस्य वाच्यार्थस्य नानुमेयत्वम् । साध्यसाधनभावाभावे हेतुमाह—**निरंशत्वादिति** । निरंशत्वात् अंशशून्यत्वात् भागरहितत्वादित्यर्थः । तस्य वाच्यार्थस्य न साध्यसाधनभावः । यत्र साध्यसाधनभावानुगमस्तत्रैवानुमेयत्वमिति भावः ।

**वाक्यार्थस्तु द्विविधो बोद्धव्यः** । यतस्तत्रत्यवाच्यार्थस्य उद्देश्यविधेयविधया अंशांशपरिकल्पना कर्त्तुं शक्या । अंशानां भागानां च यत्र परस्परं विध्यनुवादभावेन अवस्थितिः तत्रापि विधेयांशस्य अप्रसिद्धतया क्वचिदुपपादनसापेक्षत्वं प्रसिद्धतया क्वचिदुपपादननिरपेक्षत्वं वर्त्तते अतः वाक्यार्थो द्विविधो वाच्यः अनुमेय इति । उपपादनं चात्र नानुमानम्, तस्य अप्रतीतप्रतीतिजनकत्वाभावात, अपितु अर्थान्तरन्यासवत् समर्थनम् तस्य पदप्रतीतप्रतीतिजनकत्वात् ।

---

* कोष्ठान्तर्गतम्—"आद्यौ वाच्यावपि सम्भवतः" इति वाक्यस्य व्याख्यानम्, परमशुद्धम्, ततश्चैवं पठनीयम् । आद्यौ वाच्यौ स्वशब्देन प्रतिपादयितुं योग्यौ वाच्यतासहिष्णू इति ।

**तत्र सिद्धौ विध्यनुवादभावः स्वरूपमात्रानुवादाद्, यथा—**
**'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः,**

व्यक्तिविवेकव्याख्यानम् ।

तत्रेति तयोः सिद्धासिद्धयोर्विधेयांशयोर्मध्ये । सिद्धौ उपपादनानपेक्षत्वे । शुद्ध उपपादनानपेक्षो विध्यनुवादभावः ।

हिमालयो नाम नगाधिराज इति । अत्रास्तीति हि विधिः सुप्रसिद्धत्वादुपपादनानपेक्षः । द्वितीयस्तु साध्यसाधनभावरूपो द्विविधः अतिप्रसिद्धत्वादुपपादकोपादानानपेक्ष उपपादकोपादानापेक्षश्चेति । उपपादकोपादानापेक्षश्च द्विविधः । शाब्दश्चार्थश्च । तत्र शाब्दो यत्र हेतुत्वेनोपादानम् । आर्थो यत्रोपात्तस्य हेतुत्वम् । सोऽपि च शाब्दार्थत्वभेदेन द्विविध उपपादकोपादानापेक्षः साध्यसाधनभावः प्रत्येकं पदवाक्यार्थरूपतया द्विधा भवंश्चतुर्धा भवति । पदार्थो हि पदार्थान्तरं प्रति हेतुत्वं भजते वाक्यार्थो वा वाक्यार्थान्तरं प्रतीति पूर्वं विधेयस्यासिद्धावुपपादनापेक्षत्वम् । सोऽपि च साध्यसाधनभावरूपोऽपि च । एकपदार्थगतत्वेन साध्यसाधनभावनिराकर-(णा) न्न विरोधः क्वश्चित् । पदार्थस्य तु जातिगुणक्रियाद्रव्यरूपेण चातूरूप्यं तथाभूतस्य च यथासम्भवमनुभयरूपत्वेन धर्मधर्मित्वेन च भेदः । धर्मस्यापि सामानाधिकरण्यवैयधिकरण्याभ्यां द्वैरूप्यम् । सामानाधिकरण्ये विशेषणद्वारेण हेतुत्वादार्थः साध्यसाधनभावः । वैयधिकरण्ये तु शाब्दः पञ्चम्यादिना हेतुत्वेनोपादानात् । वाक्यार्थस्य कारकवैचित्र्याद् वैचित्र्येऽपि क्रियैक्यादेकरूपत्वम् । ( *आगमस्य निबन्धाप्रसिद्धिरूपत्वेन द्वैरूप्यम् । अनुमानमात्रं न गणितम् ? ) तत्र यथादिशब्दानां हेतुत्वप्रकाशकानां प्रयोगे वाक्यार्थगतः शाब्दः साध्यसाधनभावः । तत्र च क्वचिदनुमानानुमेयभावोऽप्यस्ति अप्रतीतस्य प्रतीत्यापादनाद् यथा 'सरस्यामि'ति वक्ष्यमाणोदाहरणे । यत्र तु हेतुत्वप्रकाशकस्य कस्यचिन्न प्रयोगस्तत्रार्थः यथोदाहरिष्यते । एवमुपपादकोपादानापेक्षः साध्यसाधनभावः पदार्थवाक्यार्थयोः प्रत्येकं शाब्दत्वार्थत्वभेदेन चतुर्विधः सन् बहुविधः प्रपञ्चितः । सर्वस्य चास्य साध्यसाधनभावस्य प्रमाणसिद्धाविनाभावमूलत्वम् ।

मधुसूदनीविवृतिः ।

तत्रेति । तत्र प्रसिद्धाप्रसिद्धयोर्विधेयांशयोर्मध्ये सिद्धौ प्रसिद्धौ सत्यां स्वरूपमात्रानुवादात् केवलं स्वरूपानुवादकरणात् शुद्धः उपपत्तिनिरपेक्षः विध्यनुवादभावः उद्देश्यविधेयभावो यथा—

अस्तीति । उत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः अस्ति । अत्र हिमालयमुद्दिश्य अस्तीति विधिः प्रसिद्धत्वान्नोपपत्तिमपेक्षते ।

* कोष्ठान्तर्गतपाठ अशुद्धः अनन्तरमेव उल्लिखितश्च अत्र तु लेखकप्रमादादुद्धृतोवगन्तव्यः ।

 

इत्यत्र। असिद्धौ साध्यसाधनभावरूपोऽनूद्यमानस्यांशस्य साधनधुराधिरोहात्। साध्यसाधनभावश्चानयोरविनाभावावसायकृतोऽवगन्तव्यः।

स च प्रमाणमूलः। तच्च त्रिविधम्। यदाहुः—

"लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम्।" इति।

तत्र लोकप्रसिद्धार्थविषयो लोकः। यथा—

"कयासि कामिन् सरसापराधः पादानतः कोपनयावधूतः।
यस्याः करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम्॥"

अत्र हि पादानतितदवधूत्योः सरसापराधकोपनत्वयोश्च लोकप्रमाण-

---

व्यक्तिविवेकव्याख्यानम्।

प्रमाणं च त्रिधा लोकवेदाध्यात्मरूपत्वेन। तत्राध्यात्मं प्रत्यक्षम्। निबन्धप्रसिद्धरूपं वेदः। अनिबन्धप्रसिद्धस्वभावं लोकः। भङ्ग्या प्रत्यक्षागमरूपं प्रमाणद्वयं स्वीकृतम्। आगमस्य निबन्धानिबन्धप्रसिद्धरूपत्वेन द्वैविध्यम्। अनुमानमत्र न गणितं तस्योपकार्यत्वेन प्रस्तुतत्वात्। तत्र चन्द्रं गतेत्यत्र कारणभूतं साधनमनुपात्तमतिप्रसिद्धत्वात्।

कयासि कामिन्नित्यत्र सापराधत्वं पादानतत्वे कारणभूतं साधनसार्थं पदार्थरूपम्। कोपनात्वं चावधूतत्वे तथाभूतमेव। लोकप्रमाणसिद्धश्चात्र 'कार्यकारणभावः अतिप्रसिद्धत्वाभावात् साधनमुपात्तमेव।

मधुसूदनीविवृतिः।

असिद्धौ अप्रसिद्धौ अनूद्यमानस्य उद्देश्यस्य अंशस्य भागस्य साधनधुरायामधिरोहात् हेतुत्वेनावगमाद् साध्यसाधनभावरूपः विध्यनुवादभावः। ननु कुतोऽनयोः विध्यनुवादयोः साध्यसाधनभावरूपत्वमित्यत आह—अविनाभावेति। अविनाभावो व्याप्तिः तस्य अवसायो निश्चयः तेन कृत उपपन्नः।

सचेति। स च उक्तरीत्या सिद्धः साध्यसाधनभावः प्रमाणमूलः प्रमितिकरणसिद्धः। तच्च प्रमाणम्।

तत्रेति। तत्र प्रमाणेषु लोकप्रसिद्धार्थविषयः संसारप्रसिद्धवस्तुगोचरीभूतं प्रमाणं लोकः तदाख्यम्।

कयासीति। कामिन्? इयं कुमारसंभवे इन्द्रं प्रति कामोक्तिः। स्त्रीलम्पट! कया कोपनया क्रुद्धया सरसः प्रत्यग्रोऽपराधो गोत्रस्खलनादिः यस्य सः पादयोरवनतो भवान् अवधूतः तिरस्कृतः। आज्ञापयेति गर्भोक्तिः। यस्याः कोपनायाः शरीरं दृढमनुतापो यस्मिंस्तम्, अत एव प्रवालानां कोमलपत्राणां शय्या एव शरणं तापनिवर्त्तकतया रक्षकं करिष्यामि। मया कर्त्तव्यमिति भावः। अत्र आर्द्रापराधः कामी स्वापराधक्षमापनायै पादानतिं विधत्ते इति पादानतिसरसापराधयोः अथ कोपना पादावनत

सिद्धः कार्यकारणभावस्तन्मूलश्च साध्यसाधनभावः । यथा वा—

"चन्द्रं गता पद्मगुणान् न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥"

अत्र हि पद्मगुणानां चान्द्रमस्या अभिख्यायाश्च युगपद्भोगे लक्ष्म्या यत् कारणद्वयं रात्रिसङ्कोचदिवानुदयलक्षणं तल्लोकप्रसिद्धमेवेति नोपादेयतामर्हति ।

शास्त्रमात्रप्रसिद्धार्थविषयो वेदः । वेदग्रहणमितिहासपुराणधर्मशास्त्राद्युपलक्षणं तेषां तन्मूलत्वोपगमात् । यथा—

"अयाचितारं नहि देवमद्रिः सुतां प्रतिग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

अयाचितारमिति । अयाचनं कारणानुपलब्धिरूपमार्थं पदार्थरूपम् । वेदप्रमाणसिद्धकार्यकारणभावसम्बन्धं याचनं हि कन्याग्राहणशक्तत्वस्य कारणम् । कारणाभावाच्च कार्याभावः साध्यः । कार्याभावप्रतीत्युत्पादनानुमानमेतत् ।

मधुसूदनीविवृतिः ।

कामिनोऽवधूतिं करोतीति तदवधूतिक्रोधयोश्च कार्यकारणभावः सम्बन्धः । स च लोकरूपप्रमाणेन प्रसिद्धः । एवं तन्मूलः लोकरूपप्रमाणमूलस्तत्र साध्यसाधनभावः हेतुहेतुमद्भावः सम्बन्धः । स च हेतुत्वप्रकाशकपञ्चम्यन्तशब्दानामप्रयोगादार्थः ।

चन्द्रं गतेति । लोला चञ्चला भ्रमणस्वभावेति भावः । लक्ष्मीः कान्त्यभिमानिनी देवता रात्रौ चन्द्रं गता सती पद्मगुणान् सौरभादीन् न भुङ्क्ते नानुभवति । रात्रौ पद्मानां संकुचिततया सौरभानाकलनात् । दिवा पद्माश्रिता कमलसङ्गता सती चान्द्रमसीमैन्दवीमभिख्यां शोभां न भुङ्क्ते । दिवा चन्द्रस्यानुदितत्वात् शोभाराहित्यम् । किन्तु उमामुखं पार्वतीवदनम् प्रतिपद्य संगत्य द्विसंश्रयामुभयानुगतां प्रीतिमवाप । उमामुखस्य चन्द्रपद्मोभयगतगुणशोभास्पदत्वात् । इयं व्यतिरेकमुखोक्तिः ।

अत्र पद्ये पद्मगुणानाम् सौरभादीनाम् चान्द्रमस्या अभिख्यायाः शोभायाश्च लक्ष्म्याः युगपद्भोगे लक्ष्मीकर्तृकैककालावच्छेदेनानुपभोगविषये यत् रात्रौ पद्मसंकोचरूपं दिवा चन्द्रानुदयरूपं कारणद्वयमस्ति तत्कारणद्वयं लोके प्रसिद्धम्, इत्यतः उपादेयतां हेतुत्वेन काव्यघटकत्वं नार्हति ।

शास्त्रेति । शास्त्रमेव शास्त्रमात्रम् । तत्रैव केवलं प्रसिद्धो योऽर्थः । तद्विषयः प्रमाणं वेदः । तेषामितिहासादीनां तन्मूलत्वोपगमात् वेदमूलकत्वस्वीकारात् ।

यथेत्युदाहरति—अयाचितारमिति । अद्रिर्हिमालयः सुतामुमाम् अयाचितारम् अप्रार्थयितारं देवं शंभुम् प्रतिग्राहयितुं स्वीकारयितुं न हि शशाक समर्थो न

अत्र हि कारणभूतस्य भगवद्गतस्य सम्प्रदानत्वनिबन्धनस्य याचनस्याभावे भूधरेन्द्रगतस्य कार्यस्य कन्याग्राहणशक्तत्वस्याभावोपनिबन्धः शास्त्रमूलः, तयोः कार्यकारणभावस्य तन्मूलत्वेन प्रसिद्धेः। यदाहुः—

"अयाचितानि देयानि सर्वद्रव्याणि भारत!।
अन्नं विद्या तथा कन्या अनर्थिभ्यो न दीयते॥"

अर्थी च सम्प्रदानम्। यदुक्तम्—

"अनिराकरणात् कर्त्तुस्त्यागाङ्गं कर्मणेप्सितम्।
प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम्॥"

---

व्यक्तिविवेकव्याख्यानम्।

अनिराकरणादिति। कर्तुर्नृपादेः। कर्मणा हिरण्यादिना। ईप्सितम् आप्तुमिष्टम्। ब्राह्मणादि सम्प्रदानम्। तच्च त्यागाङ्गं त्यजनस्योपकरणभूतं तेन विना त्यागासम्भवात्। तच्च त्रिधा प्रेरकं याचकब्राह्मणादि। अनुमन्तृ सद्ब्राह्मणादि। अनिराकर्तृ देवतादि।

मधुसूदनीविवृतिः।

बभूव। साधुः पुरुषः समीचीनः मानीति तात्पर्यम्, अभ्यर्थनाया भंगस्य भयेन इष्टेप्यर्थे वाञ्छितेपि विषये माध्यस्थ्यमौदासीन्यमवलम्बते स्वीकरोति।

अत्र सति याचने दानम्, याचनाभावे दानाभावः इति शास्त्रम्। तन्मूलः शास्त्रमूलः दानकारणभूतस्य, भगवच्छिवगतस्य, सम्प्रदानत्वे अर्थित्वे निबन्धनस्य हेतोः याचनस्य अभावे, याचनकार्यस्य भूधरेन्द्रहिमालयगतस्य कन्याग्राहणे शक्तत्वस्य सामर्थ्यस्य अभावोपनिबन्धः अभावनिरूपणम् वर्त्तते। अभावोपनिबन्धः शास्त्रमूल इत्यन्वयः। यस्मात्तयोः दानयाचनयोः कार्यकारणभावरूपसम्बन्धस्य तन्मूलत्वेन शास्त्रहेतुत्वेन प्रसिद्धेः।

दानयाचनयोः कार्यकारणभावे यदाहुरिति शास्त्रं दर्शयति—अयाचितानीति। भारत युधिष्ठिर? सर्वाणि द्रव्याणि अयाचितान्यपि याच्ञां विनापि देयानि किन्तु अन्नं, विद्या तथा पुनः कन्या अनर्थिभ्यः अयाचकेभ्यो न दीयते।

पदशास्त्रासङ्गत इत्यपि दर्शयितुमाह—अनिराकरणादिति। कर्तुर्यजमानस्य कर्मणा गोस्वर्णादिना ईप्सितमभिप्रैतुमिष्टम् यत्त्यागाङ्गं दानोपकरणं तेन विना दानासंभवात्। तत्संप्रदानताम् अर्थित्वम् लभते। अनिराकरणात् इष्टानिष्टदेवादिप्रीत्यै प्रत्यवायशान्तयेऽवश्यं कर्त्तव्यत्वात्, अहरहः संध्यामुपासीतेति विधेरकरणात्प्रत्यवायश्रुतेः, प्रेरणाया मह्यमिदं देहीति याचकस्य कथनात्, अनुमतेः अप्रामाण्यशंकया दातुः शिथिलस्य सतः कस्यचिदनुमोदनात् प्रवर्त्तनात्। तच्च सम्प्रदानम्। अनिराकर्तृ "सूर्यायार्घ्यं ददाति"। नात्र सूर्य इच्छति नच निषेधति नाप्यनुमन्यते। प्रेरकं "वराय कन्यां ददाति"। अनुमन्तृ "उपाध्यायाय गां ददाति" इति त्रिधा भवतीति संगतिः।

एवञ्च कारणानुपलब्धिप्रयोगोऽयमार्थ इति मन्तव्यं, यथा नात्र धूमोऽग्नेरभावादिति ।

आध्यात्मिकार्थविषयमध्यात्मं । यथा—

"पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥"

अत्र हि भगवत्पशुपतिगतस्य कृच्छ्राद्दिवसातिवाहनस्याद्रिसुतासमागमोत्कत्वस्य चाध्यात्मसिद्धः कार्यकारणभावः यन्मूलोऽयमनयोस्साध्यसाधनभावः ।

स हि द्विविधः शाब्दश्चार्थश्चेति । सोऽपि च साध्यसाधनयोः प्रत्येकं

---

व्यक्तिविवेकव्याख्यासम् ।

'पशुपतिरि' त्याद्यावार्थं पदार्थरूपमध्यात्मप्रमाणसिद्धसम्बन्धं साधनम् ।

मधुसूदनीविवृतिः ।

एवमयं कारणस्यानुपलब्ध्या प्रमाणेन प्रयुज्यते । शम्भुकर्तृकयाचनस्याभावज्ञानेन निरूप्यतेऽत आर्थ अर्थबललब्ध इति मन्तव्यम् । यथा दृष्टान्तः । अत्र देशे धूमो नास्ति, कुतः ? अग्नेरभावात् ततश्चात्राग्नेरनस्तित्वे कार्यस्य धूमस्यापि अनस्तित्वं तथैव अद्रौ देवाय कन्याग्राहणशक्तिर्नास्ति देवस्य अयाचितृत्वात् । नायाचित्रे कन्या प्रदीयते इति शास्त्रम् । यतोऽयं देवो महेश्वरः याचिता न ततोऽद्रौ सुताग्राहणशक्तिर्नेति अनुपलब्धिप्रमाणवेद्योऽत आर्थ इति स्वीकार्यमिति भावः ।

आध्यात्मिकेति । आत्मनीति अध्यात्मं प्रत्यक्षं तत्र भव आध्यात्मिकः । सचासौ अर्थस्तद्विषयं प्रमाणमध्यात्मं प्रत्यक्षम् । यदेति दर्शयति—पशुपतिरपीति । अद्रिसुतया सह समागमे परिणये मिलन इत्यर्थः । उत्कः उत्सुकः पशुपतिरपि तान्यहानि त्रीणीति शेषः कृच्छ्रात् कष्टात् अगमयत् व्यत्याययत् । यद्यदा अमी भावाः उत्कण्ठाकष्टानुभवादयः तं स्मरहरत्वेन प्रसिद्धं विभुमपि ईशमपि संयोगचैतन्याभ्यां मूर्त्तामूर्त्तसकलवस्तुव्याप्तवन्तं स्वाधीनमपीत्यर्थः । स्पृशन्ति स्वसम्पर्किणं कुर्वन्ति । तदेत्यध्याहार्यम् । तदा अपरमीशातिरिक्तमवशमदृष्टादिपरतंत्रं जीवं कं न विप्रकुर्युः विकारास्पदं सम्पादयेयुः । अत्र प्रभुविकारसमर्थनादितरजनविकारः कैमुतिकन्यायात् इत्यर्थापत्तिरलंकारः ।

अत्र भगवत्पशुपतिगतस्य शिवनिष्ठस्य कृच्छ्राद्दिवसातिवाहनस्य कार्यस्य अद्रिसुतासमागमोत्कत्वस्य कारणस्य सम्बन्धः अध्यात्मसिद्धः प्रत्यक्षप्राप्तः । कुतः ? शिवः दिवसान् कष्टादत्यवाहयत् यतः स पार्वत्यां समुत्सुक इत्येवंरूपः कार्यकारणभावः । अनयोः तादृशदिवसातिवाहनसमागमोत्कत्वयोर्हेतुहेतुमद्भावः कार्यकारणभावः सम्बन्धः । सचार्थः ।

सहीति । सहि साध्यसाधनभावः शाब्दः यथेत्यादिर्हेतुत्वप्रकाशकशब्दप्रयोगे शा-

पदार्थवाक्यार्थरूपत्वात्, पदार्थस्य च जातिगुणक्रियाद्रव्यभेदेन भेदाद्, धर्मधर्मितया च धर्मस्यापि सामानाधिकरण्य-वैयधिकरण्य-भेदाद्, वाक्यार्थस्य च क्रियात्मनः कारकवैचित्र्येण वैचित्र्याद्, यथायोग्यमन्योन्यसाङ्कर्याद्बहुविध इति तस्य दिङ्मात्रमिदमुपदर्श्यते।

तत्र धर्ममात्रस्य साधनभावे शाब्दो यथा—

"प्रजानां विनयाधानाद्रक्षणाद् भरणादपि
स पिता पितरस्तासां केवलं जन्महेतवः॥" इति।

तस्यैव धर्मस्य समानाधिकरणस्योपादाने सत्यार्थो यथा—

---

मधुसूदनीविवृतिः।

ब्दः तदभावे आर्थः। सोऽपि च शाब्दत्वार्थत्वभेदाभ्यां द्विविधोऽपि साध्यसाधनयोर्मध्ये प्रत्येकं एकैकस्य पदार्थत्वेन वाक्यार्थत्वेन द्विविधः। अर्थात् क्वचित्पदार्थः पदार्थान्तरं प्रति हेतुभावमाकलयति क्वचिद्वाक्यार्थो वा तथेति द्विधा, ततो मिलित्वा चतुर्धा। तत्र पदार्थस्यापि जातिगुणक्रियाद्रव्यभेदेन चातुर्विध्यम्, धर्मधर्मिभेदेन द्वैविध्यम्। तत्र धर्मस्यापि सामानाधिकरण्येन वैयधिकरण्येन च द्वैरूप्यम्, परंतु सामानाधिकरण्य-वैयधिकरण्ययोरियान् विशेषः। यत्र साध्यसाधनयोः सामानाधिकरण्यम्—यथा पशुपतिरपीत्यत्र "यत्र कष्टादिवसातिवाहनत्वं" साध्यं तत्रैव "अद्रिसुतासमागमोत्कत्वं" साधनम्, यथा वा "क्वयासी"ति पद्ये "यत्र सरसापराधत्वं" साधनं तत्रैव "पादानतिः" साध्येति दिशा—तत्र विशेषणरूपेणोपात्तस्य हेतुत्वादार्थः साध्यसाधनभावः। यत्र तयोर्वैयधिकरण्यं तत्र स शाब्दः—"यथा प्रजानामित्यत्र" अपितरि राज्ञि दिलीपे प्रजानिरूपितपितृत्वं "साध्यम्, तत्र" "विनयाधानकर्तृत्वरूपं" साधनं पञ्चमीविभक्तेरुपादानात् शाब्दम्। क्रियात्मनः क्रियाप्रधानस्य वाक्यार्थस्य च कारकविभक्तेः वैचित्र्येण वैलक्षण्येन वैचित्र्यमनेकप्रकारत्वम्। पुनश्चैषां यथायोग्यं यथासम्भवमन्योन्यसाङ्कर्यम्। इति हेतोरयं साध्यसाधनभावो बहुविधः प्रभूतभेदवान् सर्वेपीमे भेदाः अप्रसिद्धस्य विधेयांशस्य उपपादनसापेक्षतादशायामेव। यत्र तु विधेयांशः प्रसिद्धस्तत्र न तदपेक्षेति तस्मान्नेमे भेदास्तत्र भवितुमर्हन्तीति बोध्यमिति सारः। अत्र हेत्वर्थकसर्वपञ्चम्यन्तानां बहुविध इत्यत्रान्वयः। एवंबहुविधस्य तस्य सर्वभेदोपभेदप्रदर्शनेन ग्रन्थवाहुल्यं स्यादिति दिङ्मात्रमल्पमेवोपदर्श्यते।

तत्र भेदेषु केवलस्य धर्मस्य साधनभावे हेतुत्वे। केवलं यत्र विनयाधानादिहेतुं दृष्ट्वा धर्मी साध्यते तत्रेत्यर्थः।

उदाहरणं निरूप्यते—प्रजानामिति। स्पष्टोऽर्थः। अत्र अपितरि दिलीपे राज्ञि विनयाधायकत्वरक्षितृत्वभर्तृत्वहेतवः शाब्दाः।

तस्यैवेति—तस्यैव केवलस्यैव समानाधिकरणभावमाकलयत उपादाने ग्रहणे।

"द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरस्तु मृष्यते ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥"

इति । अत्र हि द्विषदुदयगतस्यास्वन्तत्वस्य सुमर्षणत्वस्य च तत्परिक्षयगतस्य फलसम्पत्प्रवणत्वस्य दुर्मर्षणत्वस्य चार्थः साध्यसाधनभावो निबद्धः ।

धर्मधर्मिभावाभावे तु पदार्थमात्रस्य साधनत्वाच्छाब्द एव यथा—

"दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालना-
द्विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रया-
न्मैत्री चाप्रणयात् समृद्धिरनयात् त्यागात् प्रमादाद्धनम्" इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

द्विषतामिति । तथाहि । शत्रूणां गुरुरप्युदयः सुखेन मृष्यते परैः अस्वन्ततरत्वाद् अतिशयेनारमणीयपरिणामत्वात् । तथा महानपि परिक्षयः सुखेन न मृष्यते फलसम्पदौन्मुख्यात् ।

दुर्मन्त्रात्कुतनयान्मद्यादित्यत्र धर्मधर्मिभावो नास्ति । शाब्दं तु पदार्थरूपं साधनम् । लोकप्रसिद्धश्च सम्बन्धः ।

मधुसूदनीविवृतिः ।

द्विषतामिति । भूतिमैश्वर्यमिच्छता सुमेधसा विदुषा पुरुषेण द्विषतां शत्रूणाम् अस्वन्ततरः । नास्ति अतिशयेन सुष्ठु रमणीयः अन्तः परिणामो यत्र स । गुरुरपि महानपि उदयः समृद्धिर्मृष्यते सह्यते उपेक्ष्यते । फलरूपायां सम्पदि प्रवणः अधीनः उन्मुखो महानपि परिक्षयो नाशो न मृष्यते नोपेक्ष्यते ।

अत्र द्विषतामुदयगतसुमर्षणत्वस्य कार्यस्य अस्वन्ततरत्वं हेतुः । तथा तत्परिक्षयगतामर्षणस्य कार्यस्य फलसम्पत्प्रवणत्वं हेतुः । अयं च हेतुहेतुमद्भावः स्वप्रकाशक शब्दाभावादार्थः । यत्र द्विषतामुदये सुमर्षणत्वं तत्रैव अस्वन्ततरत्वस्य हेतोः वर्तमानत्वात्सामानाधिकरण्यम् ।

धर्मधर्मिभावेति । यत्र तु उभयोः धर्मधर्मिभावो नास्ति तत्र केवलं पदार्थस्य हेतुत्वम् । हेतोश्च स्वप्रकाशकपञ्चम्यादिनिरूपण्यत्वाच्छाब्द एव नत्वार्थः । तस्योदाहरणं यथाः—

दुर्मन्त्रादिति । दुर्मन्त्रात् कुत्सितैः शास्त्रमूढैश्च सहायविचारान्नृपती राजा विनश्यति नाशमाप्नोति । विनश्यतीति सर्वत्र । यतिः भिक्षुः सङ्गात् विषयेष्वासक्तेस्तथा । लालनात् आपञ्चमवर्षम् षोडशवर्षावधि केवललालनात्ताडनाभावात्सुतो नश्यति। विप्रो ब्राह्मणोऽनध्ययनात् अपठनात् । खलोपासनात् दुर्जनैः सह संगकरणात् । मद्यात् सुरादिमादकवस्तुसेवनात् । प्रवासाश्रयात् निरन्तरविदेशस्थितेः । अप्रणयात् प्रेमाभावात् ।

एवं वाक्यार्थविषयोऽपि साध्यसाधनभावो द्विविधो बोधव्यः । तत्र शाब्दो यथा ।

"सरस्यामेतस्यामुदरवलिवीचीविलुलितं
यथा लावण्याम्भो जघनपुलिनोल्लङ्घनपरम् ।
यथा लक्ष्यश्चायं चलनयनमीनव्यतिकर-
स्तथा मन्ये मग्नः प्रकटकुचकुम्भस्स्मरगजः ॥" इति ।

आर्थो यथा—

"निवार्यतामालि ! किमप्यसौ वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

निवार्यतामिति । अत्र वाक्यार्थस्य साधनत्वं यत्र सम्बन्धो वेदसिद्धः ।

मधुसूदनीविवृतिः ।

अवलोकनादिना प्रकर्षं नीतम् अपराधसहस्रेणाप्यविचलितं प्रेमैव प्रणयस्तदभावात् । शेषः सुगमः । अत्र दुर्मन्त्रनृपतिनाशयोः धर्मधर्मिभावो नास्ति परमुपपाद्योपपादकभावोऽस्त्येव । स च शाब्दः लोकमूलश्च । एवमुपदर्शितप्रकारेण द्विविधः शाब्दार्थभेदेन ।

सरस्यामिति । एतस्यामिति एतच्छब्देन नायिका निर्दिश्यते । तेन नायिकायां सरसीत्वारोपः । तन्निमित्तश्च उदरवलिषु वीचीत्वारोपः, लावण्ये अम्भस्त्वारोपः, जघने पुलिनत्वारोपः, नयनयोर्मीनत्वारोपः, कुचयोः कुम्भत्वारोपः, स्मरे गजत्वारोपः । तथाचायमर्थः। एतस्यां पुरोवर्त्तिन्यां नायिकारूपायां सरस्याम् । उदरवलिरूपाभिः वीचीभिः विलुलितं संचालितं, जघनरूपस्य पुलिनस्य तटस्य उल्लङ्घने आक्रमणे परं तत्परं लावण्यरूपमम्भो जलं यथा लक्ष्यं यादृशं दृश्यते । यथा चायं चलनेन चलनक्रियया नयनरूपयोर्मीनयोर्व्यतिकरः सम्बन्धो लक्ष्यः दृष्टिगोचरो भवति । तथा तेन हेतुना मन्ये शङ्के अत्र सरस्याम् प्रकटौ स्फुटलक्ष्यौ कुचावेव कुम्भौ यत्रासौ स्मररूपो गजो हस्ती मग्नः ब्रुडितः ।

अत्र स्मरः प्रविष्ट इति साध्यवाक्यार्थे उदरवलिसंभूतिजघनवैपुल्यपूर्वकलावण्यसंदर्शनात्मको वाक्यार्थो हेतुः शाब्दः यथापदनिर्देशात् । अत्रापि न धर्मधर्मिभावः । पूर्वत्र दुर्मन्त्रादिति पद्ये पदार्थरूपं साधनमत्र तु वाक्यार्थरूपं साधनमित्यनयोर्भेदः ।

वाक्यार्थविषय आर्थः साध्यसाधनभावो यथा—निवार्यतामिति । हे आलि ! हे सखि ! स्फुरितौ उत्तराधरौ यस्यासौ वटुः ( वटुवेषधारी शिवः ) पुनः किमपि विवक्षुर्निवार्यताम् दूरीकरणीयः । ननु किमिति निवारणीयः कथयत्वयं स्ववक्तव्यमिति प्रश्ने निवारणे हेतुमाह—न केवलमिति । यः महतो गुरूनपभाषते निन्दति न स केवलं पापभाङ् अपि तु यस्तस्माच्छृणोति सोपि पापभाक् । तथा च स्मर्यते—

यथा च—

"दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥"

व्यक्तिविवेकव्याख्यानम् ।

दिवं यदि प्रार्थयस इति । अत्र प्रार्थनीयनिष्ठस्य प्रार्थनीयगतं दूरत्वपरायत्तत्वाभ्यामसुलभत्वं कारणं, तद्विरुद्धं निकटत्वस्वायत्तत्वाभ्यां सुलभत्वमिति तदुपलभ्यमानं स्वविरुद्धकार्यस्य प्रार्थनस्य श्रमलक्षणप्रवृत्तिपर्यन्तस्याभावं गमयतीति प्रथमेऽर्धे कारणविरुद्धोपलब्धिः। द्वितीयेऽर्धे तस्यैव प्रार्थयितृत्वस्याप्रार्थनीयत्वं व्यापकं, तद्विरुद्धं च प्रार्थनीयत्वं तदुपलभ्यमानं स्वविरुद्धव्याप्यस्य प्रार्थयितृत्वस्याभावं गमयतीति व्यापकविरुद्धोपलब्धिः। ( प्रार्थनीयत्वादेरपि सिद्धं ? ) तदेवं वाक्यार्थगतत्वेन वाच्यनिष्ठं शुद्धं विध्यनुवादभावमस्त्युत्तरस्यामित्यादौ प्रतिपाद्य तत्संलग्नत्वेन साध्यसाधनभावः प्रतिपादितः ।

मधुसूदनोविवृतिः ।

गुरोः प्राप्तः परीवादो न श्रोतव्यः कथञ्चन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ इति ॥

अत्र यः महतो निन्दां करोति तथा शृणोति च स पापं भजते ततः एनं निन्दकं निवारयेत्येवं पूर्वार्द्धोत्तरार्द्धयोरार्थः साध्यसाधनभावो हेतुत्वप्रकाशकपंचम्यन्तादिपदाभावात् । तत्र पूर्वार्द्धार्थः साध्यः उत्तरार्द्धार्थः साधनम् ।

यथा चेति वाक्यार्थविषयमार्थं साध्यसाधनोदाहरणं पुनर्निर्दिशति—दिवमिति । हे पार्वति ! यदि त्वम् दिवं स्वर्गं प्रार्थयसे अभिलषसि तर्हि तव पितुर्हिमाद्रेः प्रदेशाः देवभूमयः स्वर्गाः । अतः प्रार्थनया अलम् । अथ यदि उपयन्तारमुद्वोढारं प्रार्थयसे तर्हि अपि समाधिना योगेन अलम् । यतः रत्नं कर्तृ न कमपि स्वीकर्त्तारमन्विष्यति मृगयति किन्तु जनैरेव तदलं मृग्यते अन्विष्यते ।

अत्र वाक्यचतुष्टयं वर्त्तते तेपूत्तरं वाक्यं पूर्वस्मिन् वाक्ये हेतुः । तद्यथा—स्वर्गार्थप्रार्थनायां, श्रमो वृथा साध्यम् कस्मात् पितुः प्रदेशानामेव स्वर्गत्वादिति हेतुः । अयं भावः । अत्र स्वर्गः दूरत्वपरायत्तत्वाभ्यामसुलभ इति हेतोः प्रार्थनीयो भवेत् किन्तु नैवं, स पितुः प्रदेशतया निकटः स्वाधीनश्च ततः सुलभ एव । एवं च तत्प्राप्त्यै प्रार्थनारूपश्रमो व्यर्थः "यद्यत् प्रार्थनीयं तत्तदसुलभत्वहेतुज्ञानपूर्वकम्" । अत्र तु तादृशनिकटत्वस्वाधीनत्वाभ्यां तद्विरुद्धं सुलभत्वमेवेति हेतुविरुद्धोपलब्धिः श्रमगतवैफल्यं द्योतयति। एवमेव उत्तरार्द्धेऽपि बोध्यम्। तथाहि–रत्नाप्रार्थनीयं व्यापकम् , जनत्वं (प्रार्थित्वम्) व्याप्यम् यत्र रत्नाप्रार्थनीयत्वं तत्र जनत्वम् ( प्रार्थित्वम् ) यत्र च रत्नाप्रार्थनीयत्वाभावः अर्थात् रत्नप्रार्थनीयत्वं तत्र न जनत्वम् (प्रार्थित्वम् ) यदा रत्नमेवान्वेपकस्तदा जनोऽन्वेष्यो भवेत्परं नैवम् , प्रत्युत जन एवान्वेषक इति भावः। व्यापकस-

इति । अनुमेयार्थविषयो यथा—

"सुवर्णपुष्पां पृथिवीं चिन्वान्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥"

अत्र हि सर्वत्र सुलभा विभूतयः शूरादीनामित्ययमर्थोऽनुमीयत इत्येतद्वितनिष्यते । अनुमितानुमेयार्थविषयो यथा

---

व्यक्तिविवेकव्याख्यानम् ।

वाच्यानुमेयार्थविषयत्वेन द्विविधः साध्यसाधनभाव उद्दिष्टः । तत्र वाच्यार्थविषये तस्मिन्निर्णीते अनुमेयार्थविषयं निर्णेतुमाह—अनुमेयार्थेति । अत्र व्यक्तिवादिना व्यङ्ग्यत्वेन योऽर्थ उक्तः स इहानुमेयत्वेनोच्यते, व्यक्तेरनुपपत्तेरुपपादयिष्यमाणत्वात् शब्दस्य व्यापारान्तराभावाच्च ।

मधुसूदनीविवृतिः ।

त्तायां व्याप्यसत्ता व्यपकाभावे व्याप्याभावः इत्येष "न रत्नमन्विष्यति मृग्यते हि तत्" इत्यस्य प्रसवः, तथा शास्त्रलोकयोर्नियमश्च । किन्तु अत्र रत्नभूतस्य पार्वत्या अप्रार्थनीयस्य उपयन्तुर्वरस्य कृते तपस्या इति व्यापकस्य रत्नाप्रार्थनीयस्य विरुद्धं तत्प्रार्थनीयत्वं पार्वतीकर्तृकतपस्यया शिवेष्यत्वम् , तस्योपलब्धिरिति भावः ।

पूर्वं "तत्र पदस्यार्थो वाच्य एव नानुमेयः वाक्यार्थस्तूभयात्मक" इति पदार्थस्य अनुमेयत्वं निषिद्ध्य वाक्यार्थस्योभयात्मत्वमभ्युपगतम् । ततश्च वाक्यार्थो द्विविधः वाच्योऽनुमेयश्चेति । तत्र वाच्यरूपवाक्यार्थस्य साध्यसाधनभावे निर्णीते अनुमेयार्थविषयं तं निर्णेतुमवतरति—अनुमेयार्थेति । इदं तु बोध्यम् , ध्वनिवादिनो यमर्थं व्यङ्ग्यत्वेनोपदिशन्ति तमेवायमनुमेयमिति व्यपदिशति, वक्ष्यमाणयुक्तिभिः व्यञ्जनाया असिद्धत्वात् व्यापारान्तरस्य शब्देऽभावादित्यादिभिः । अनुमेयश्चासौ अर्थः तद्विषयः साध्यसाधनभावो यथेत्युहाहरति—सुवर्णेति । सुवर्णानि पुष्प्यतीति सुवर्णपुष्पा तां तादृशीं पृथ्वीं त्रयः पुरुषाः चिन्वन्ति स्ववशे कुर्वन्ति। के ते इत्यत आह—शूरश्चेति। यः शूरः गत्वरैरसुभिः स्थास्नुयशश्चिचीषन् , यः कृतविद्यः प्रत्यहनवागतशिष्यप्रसारितयशःसुरभितदिगन्तः, यश्च सेवितुं जानाति पराराधनपण्डितः यो यथा परितुष्यति तं तथैवानुवर्त्तनशीलः इत्यर्थः ।

अत्र पद्ये शूरकृतविद्यसेवकानां कृते सर्वत्र स्थानेषु विभूतय ऐश्वर्याणि सुलभा इत्ययं वैयञ्जनिकबोधानुगतोर्थः अनुमीयते अनुमाविषयीक्रियते । इत्येतत्सर्वं व्यञ्जनाया अनुपपत्त्या शब्दनिष्ठव्यापारास्वीकाराच्च वितनिष्यते विस्तृतं निरूपयिष्यते ।

अनुमितेति । अनुमितेन अनुमेयो योर्थस्तद्विषयो यथेत्युदाहरति—पत्युरिति । अयं कुमारसम्भवे सप्तमसर्गे पार्वत्याश्चरणयोः लाक्षयारञ्जितीकरणोत्तरं प्रसाधिकायाः सख्याः तां प्रति परिहासोक्तिरूपः श्लोकः । सख्या प्रेयस्या कर्त्र्या । चरणौ रञ्जयि-

"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥"

इत्यत्र हि नखरञ्जनानन्तरं परिहासपूर्वं सख्या कृताशिषो देव्या यदेतद्वचनं माल्येन हननं तत् तदनुभावभूतं तस्याः कौतुकौत्सुक्यप्रहर्षलज्जादिव्यभिचारिसम्पदमनुमापयति । सा चानुमीयमाना सती भगवती भवे भर्तरि रतिमनुमापयति । यथा च—

"एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥"

व्यक्तिविवेकव्याख्यानम् ।

पत्युरिति । अत्र विशिष्टाशीर्वचनमौत्सुक्यादेर्व्यभिचारिणो विभावः, सख्या माल्येन ताडनं च अनुभावः । तौ व्यभिचारिभावं कारणत्वात् कार्यत्वाच्च गमयतः । स च सहकारित्वाद् रूप(१)मिव रसो रतिस्थायिभावं गमयति ।

एवंवादिनीति । अत्र लज्जाख्यस्य व्यभिचारिणो देवर्षे रेवंवादित्वं पितुश्च पार्श्ववर्त्तित्वं कारणत्वेन द्वौ विभावौ, तथाधोमुखत्वं लीलाकमलपत्रगणनं च कार्यत्वेन

मधुसूदनीविवृतिः ।

त्वा लाक्षारससम्पृक्तौ सम्पाद्य ततः, अनेन चरणेन । यद्यपि पूर्वं चरणाविति द्वित्वोक्त्या अनेनेति इदंशब्देनापि तयोः द्वयोरेव परामर्शो नितरामुचितः तथापि ताडनकर्मणि औचित्यादेकवचनोक्तिः । रञ्जनकर्मणि च एकस्योपयोगोऽत्यन्तमनुचितः श्रृङ्गारविघातकतयेति चरणाविति द्वित्वोक्तिः । पत्युरीश्वरस्य शिरश्चन्द्रकलां ललाटेन्दुकलां हरतसमये स्पृशेति परिहासपूर्वं कृताशीः प्रयुक्ताशीर्वादा सा पार्वती तां सखीं माल्येन मालया निर्वचनं मौनं यथा स्यात्तथा जघान ताडयामास । निर्वचनमित्यनेन विहृताख्यः श्रृङ्गारानुभावः प्रादुर्भावितः। तदुक्तं, प्राप्तकालं तु यद्ब्रूयात्कुर्याद्वा विहृतं तु तत् ।

अत्र पद्ये हि नखानां चरणनखानां रञ्जनानन्तरं लाक्षाविधानोत्तरं पूर्वं सख्या स्नेहपात्रया कृताशिषो देव्याः पार्वत्या यदेतद्वचनं (निर्वचनं) मालया आहननं ताडनं तत् ताडनं तस्याः पार्वत्या अनुभावभूतं विहृताख्यश्रृङ्गारानुभावतां गतं कौतुकोत्सुकताहर्षलज्जादीनाम् आदिपदात् अवहित्थातजन्येर्ष्यासाध्वससौभाग्यप्रभृतयो गृह्यन्ते । व्यभिचारिभावानां सम्पदमनुमापयति । तत्र तादृशाशीर्वचनं विभावः सखीकर्मकं ताडनमनुभावः । ताभ्यामनुमीयते व्यभिचारिसम्पत् । सा चानुमीयमाना सती व्यभिचारिसम्पत्तिः भगवति शिवे पत्यौ रतिस्थायिभावमनुमापयपि । तथा च प्रयोगः । पार्वती शिवानुरागवती, अवचनं कृताशीर्वादसखीताडनकर्तृत्वात् ।

एवंवादिनीति । देवर्षावङ्गिरसि एवंवादिनि सति उक्तप्रकारेण कथयति सति

(१) आस्वादः व्यक्तिस्वरूपमिवेत्यर्थः ।

यथा वा—

"प्रयच्छतोच्चैः कुसुमानि मानिनो
विपक्षगोत्रं दयितेन लम्भिता ।
न किञ्चिदूचे चरणेन केवलं
लिलेख बाष्पाकुललोचना भुवम् ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

स्थितौ । सा च गम्यभूता लज्जा सहचारित्वाद्रतिं गमयति । ततश्चात्रानुमितानुमेयार्थनिष्ठत्वम् ।

एवं प्रयच्छतेत्यत्रावसेयम् । अत्र हि मानिनी प्रकृत्यैवाभिमानवती न तु सर्वंसहा दयितेन आत्मरागविषयेण न तु पतिमात्रेण । पुष्पाणि प्रदातुम् । विपक्षस्य विद्वेषिण्याः सपत्न्याः न तु तटस्थायाः गोत्रं गां वाचं त्रायतेऽन्यस्माद् व्यवच्छिनत्ति नियतविषयत्वेन स्थापयति यत्तन्नाम लम्भिता गोत्रस्खलनविषयभावं प्रापिता विशिष्टमनुभावमकरोदिति तावदर्थः । अत्र लज्जादेर्व्यभिचारिणो विपक्षगोत्रग्रहणं विभावो 'न किञ्चिदूचे' इत्यनुभावश्च गमकत्वेन स्थितौ । स च लज्जादिः सहचारित्वादीर्ष्याविप्रलम्भं गमयतीति ।

मधुसूदनीविवृतिः ।

पार्वती पितुर्हिमालयस्य पार्श्वे सन्निधौ स्थिता अत एव अधोमुखी मुग्धात्वात् लज्जया नीचैराननना सती लीलायै कमलपत्राणि गणयामास । लज्जावशात् कमलदलगणनाव्याजेन "स ते दुहितरं साक्षाद् वृणुते" इत्येवं मुनेरुक्तिश्रुतिसञ्जायमानमानन्दं जुगोपेति तात्पर्यम् । अत्र पार्वत्या अधोमुखत्वकमलपत्रगणनरूपाभ्यामनुभावाभ्यां लज्जावहित्थे व्यभिचारिभावौ अनुमीयेते । ( अवहित्था आकारगुप्तिः । अवहित्था तु लज्जादेर्हर्षाद्याकारगोपनमित्युक्तेः ) तैश्च पार्वतीनिष्ठा शिवविषयिणी रतिरनुमीयते सहृदयैः । अङ्गिरस एवंवादित्वं पितुः पार्श्ववर्तित्वं च विभावद्वयम् । तथाच पार्वती शिवविषयकरतिमती अधोमुखीत्वादितद्व्यङ्ग्यलज्जादिमत्वादित्यनुमितिः ।

प्रयच्छतेति । काचिन्मानिनी एषोऽस्य स्वो भावो मानकरणं नाम न तु सर्वंसहा उच्चैरुन्नतानि कुसुमानि स्वयं ग्रहीतुमशक्यतया तत्प्रीतये प्रयच्छता ददता दयितेन स्वानुरागास्पदेन न तु पतिमात्रेण । विपक्षायाः सपत्न्या गोत्रं लम्भिता पुष्पाणां प्रदाने विद्विष्टनायिकानामोच्चारणरूपात्स्खलनादपराद्धा सती किञ्चिदपि नोचे केवलं वाष्पैराकुले लोचने यस्याः सा भुवं पृथ्वीं न तु भूमौ लिलेख ।

अत्र गोत्रस्खलनं विभावः, किञ्चिदपि न कथनम् , वाष्पाकुललोचनत्वम् , भूकर्मकलेखनं चानुभावास्तैश्च असूयानुतापशून्यहृदयत्वादयो व्यभिचारिभावा अनुमिता भवन्ति अनुमितैश्च तैः "प्रिये सपत्नीरक्ते कोप ईर्ष्या" इत्युक्तलक्षणेर्ष्याहेतुको मानाख्यो विप्रलम्भोऽनुमीयते । इयं नायिका ईर्ष्यासम्पृक्तरतिमती, किञ्चित्कथना-

यथा च वाक्यार्थविषये साध्यसाधनभावे साध्यसाधनप्रतीत्योः सुल-क्षः क्रमभावः तथा वस्तुमात्रादावनुमेयविषयेऽप्यवगन्तव्यः । केवलं रसा-दिष्वनुमेयेष्वयमसंलक्ष्यक्रमो गम्यगमकभाव इति सहभावभ्रान्तिमात्रकृ-तस्तत्रान्येषां व्यङ्ग्यव्यञ्जकभावाभ्युपगमः, तन्निबन्धनश्च ध्वनिव्यदेशः । स तु तत्रौपचारिक एव प्रयुक्तो न मुख्यः तस्य वक्ष्यमाणनयेन बाधितत्वात् । उपचारस्य च प्रयोजनं सचेतनचमत्कारकारित्वं नाम । तद्धि मुख्ये चित्रपुस्तकादौ व्यक्तिविषये परिदृष्टमेव ।

---

व्यक्तिविवेकव्याख्यानम् ।

चित्रपुस्तकादावति । आलेख्यलेख्यादौ सन्तमसावस्थिते प्रदीपादिना प्रका-शिते झटित्यद्भुतार्थप्रकाशनाच्चमत्कारो जायते । तद्वद्रसादावित्युपचारप्रयोजनम् ।

मधुसूदनीविवृतिः ।

भावाद्यनुभावतद्व्यङ्ग्यासूयादिमत्वात् ।

यथाचेति । यथा वाक्यार्थविषयेऽर्थात् पदार्थवाक्यार्थविषयके साध्यसाधनभावे हेतुहेतुमद्भावे साध्यस्य साधनस्य च प्रतीत्योः क्रमभावः पूर्वापरीभावः सुलक्षः सुखबो-ध्यः तथैव वस्तुमात्रादौ आदिपदाद् अलङ्कारे च अनुमेये तादृशः प्रतीत्योः क्रमोऽवग-न्तव्यो बोधव्यः। केवलमेकः अनुमेयेषु अनुमितिविषयेषु रसादिषु । आदिपदात् भाव-तदाभासादिषु गम्यगमकभावः असंलक्ष्यक्रमः । अर्थात् रसविभावादिविषयकप्रतीत्योः लाघवप्रयुक्तयौगपद्यरूपसहभावभ्रान्तेः क्रमः असंलक्ष्यः इति एवं सहभावभ्रान्तिमात्रेण कृतः प्राप्तः । वस्तुतस्तु—"सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानवे-क्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्तिरि"ति नियमात् तत्रैव व्यङ्ग्य-व्यञ्जकभावो यत्र गम्यगमकप्रतीत्योः साहचर्यं भवेत् अत्र तु "नहि विभावानुभा-वव्यभिचारिण एव रसा इति कस्यचिदवगमः । अत एव विभावादिप्रयीत्यविनाभा-विनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः क्रमोऽवश्यं भावी"त्युक्तेः क्रमस्य विद्यमान-त्वान्न सहभावः किन्तु भ्रमः। तत्कृत एव तत्र रसादिषु अन्येषामानन्दवर्द्धनप्रभृतीनां व्यङ्ग्यव्यञ्जकभावस्य अभ्युपगमः स्वीकृतिः। तन्निबन्धनः अभ्युपगमहेतुकश्च ध्वनिव्य-पदेशो ध्वनिव्यवहारः । यत्र स्थले तादृश प्रतीत्योर्व्यङ्ग्यव्यञ्जकभावाभ्युपगमस्तत्र तेषां ध्वनिव्यवहारः । इति भावः ननु दृष्टं क्वापीत्याह-नहीति । किन्तु तैस्तत्र रसादिषु ध्वनिव्यवहारः औपचारिको लाक्षणिक एव प्रयुक्तः, न स मुख्यः प्रयोगस्तेषाम् । तस्य वक्ष्यमाणनयेन कथयिष्यमाणोपपत्त्या बाधितत्वात् निराकृतत्वात् ।

ननु अन्यत्रान्यप्रयोगः सप्रयोजनस्ततश्चात्र किं तत्प्रयोजनमित्यपेक्षायामाह—उप-चारस्येति। उपचारस्य भक्तेः प्रयोजनमभिप्रायः सचेतनानां सहृदयानां चमत्कारकारि-त्वम् आनन्दजनकत्वम् । तच्चमत्कारकारित्वं मुख्ये भक्तिविषयपरिहृते चित्रे आलेख्ये पुस्तकेत्यत्र स्वार्थे कन् बोध्यः तथाच पुस्ते लेप्यादिकर्मणि इत्यर्थः । चित्रपुस्तादेरपि

वाच्यो ह्यर्थो न तथा चमत्कारमातनोति यथा स एव विधिनिषेधादिः काक्वभिधेयतामनुमेयतां वावतीर्ण इति स्वभाव एवायमर्थानाम्। तथा हि—

"मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥"

---

व्यक्तिविवेकव्याख्यानम्।

स एव विधीति। इहाभिधेयानभिधेयत्वेन द्विविधोऽर्थः। अभिधेयो विधिनिषेधादिः प्रसिद्ध एव। अनभिधेयः पुनः काक्वभिधेयोऽनुमेयश्चेति द्विविधः। प्रत्येकं च विधिनिषेधादिरूपत्वेन भेदः। तत्र काक्वभिधेयो विधिनिषेधरूप इहोदाहृतः। अनुमेयः पुनः "अता एत्थे"त्यादौ "भम धम्मिअ", इत्यादौ चोदाहरिष्यते। यो ह्यनभिधेयो विधिः स क्वापि निषेधद्वयं नामार्थनिष्ठमाख्यातार्थनिष्ठं च द्विविधमुदाहृतम्।

मधुसूदनीविवृतिः।

खड्गतुरगादिबन्धादेः शब्दभागाभिष्यन्दवन्नाप्यल्पैवार्थविभागनिष्यन्दाच्चमत्कारकारित्वमिति भावः। व्यक्तिविषयये जाते अर्थात् कारणादाच्छादिते परं कथमपि प्रकाशिते सति परिदृष्टमेवानुभूतमेव। केनापि कौतुकादिहेतुना आच्छादितं वस्तु कश्चिन्नाव्येन प्रकाशयेत्तदा यथा साद्भुतार्थप्रकाशनाच्चमत्कारोऽनुभूयते तथा शृङ्गारादिरसेष्वपि स इति भावः।

वाच्यो हीति। अत्र हिस्तोरर्थे। वाच्यस्तु पदप्रतिपाद्योऽर्थस्तु तथा चित्रपुस्तादिवन्मुख्यतया न चमत्कारमानन्दमातनोति जनयति यथा यादृशं चमत्कारं स एव वाच्य एव विधिरूपः निषेधरूपः काक्वादिभिरभिधेयतां प्रतिपाद्यतामथवा अनुमेयतामनुमितिविषयतामवतीर्णः प्राप्तः सन् जनयति। कुत एतदिति ब्रूते—इति स्वभाव इति। इत्येष अयमेतादृशोऽर्थानां स्वभावः निसर्गः अतस्तत्र औपचारिक एव प्रयोग इति भावः।

तथाहीति वाच्यविधिनिषेधादिः काक्वाद्यभिधेयतामवतीर्णश्चमतत्कृतिभूमिरिति दर्शयितुमुपक्रमते, तत्र निषेधो विधित्वेन यथा—मथ्नामीति। वेणीसंहारे प्रथमाङ्के सन्धिश्रवणकुपितस्य भीमसेनस्य सहदेवं प्रत्युक्तिरियम्। अहं समरे युद्धे कोपात् कौरवाणां दुर्योधनप्रभृतीनाम्। यद्यपि कुरुपत्यत्वं पाण्डवधार्त्तराष्ट्राणामुभयेषां तथापि धार्त्तराष्ट्राणां राज्याधीशत्वात्तथैव बाहुल्येन प्रसिद्धेः। शतं न मथ्नामि। मथ्नामी, त्यत्र क्रोधातिशयाद्वर्त्तमानताव्यपदेशः। यद्वा वर्त्तमानसामीप्ये वर्त्तमानवत्प्रयोगः। दुःशानस्य उरस्तः हृदयात् रुधिरं रक्तं न पिबामि। सुयोधनस्य दुर्योधनस्य ऊरू सक्थियुग्मं गदया न सञ्चूर्णयामि। भवतो न तु मम प्रजानां वा नृपतिर्युधिष्ठिरः पणेन ग्रामपञ्चकरूपेण सन्धिं करोतु।

इत्यतो,

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्टपाण्डववधूपरिधानकेशाः
स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥"

इत्यतश्च यथा विधिनिषेधयोश्चारुतावगतिर्न तथा शब्दाभिधेययोरिति । यथा च प्रतिषेधद्वयानुमितस्य प्रकृतस्यैवार्थस्य विधेश्चारुतावगतिर्न तथा स्वशब्दवाच्यस्य । द्विविधश्च प्रतिषेध उक्तः सुप्तिङन्तविषयत्वात् । तद्यथा—

## मधुसूदनीविवृतिः ।

अत्र प्रतिज्ञातकुरुकुलक्षयस्य भीमस्य न मथ्नामीति निषेधोक्तिर्विरुद्धेति नञि अभ्यनुज्ञा काकुः । तया काक्वाभिहितो "न मथ्नामि" इति न अपि तु मथ्नाम्येवेति विधिः परिणतो यथा चमत्करोति न तथा स्वशब्दप्रतिपाद्यः स ।

लाक्षागृहेति । वेणीसंहारे प्रथमांके "निर्वाणवैरदहना प्रशमादरीणां नन्दतु पाण्डुतनयाः सह माधवेन । रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः । इति सूत्रधारपठितस्य द्व्यर्थकवाक्यस्य अर्थं गृहीत्वा ( नेपथ्ये ) आः दुरात्मन् ? वृथामङ्गलपाठक ! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः" इत्युक्तवतः सूत्रधारनिष्क्रमणोत्तरं प्रविष्टस्य पुनरुक्तिरियम् । लाक्षेति । लाक्षया निर्मिते गृहे अनलस्याग्नेः दानेन, विषसम्पृक्तान्नभोजनेन, द्यूतसभायां प्रवेशेन नोऽस्माकं प्राणेषु जीवनेषु वित्तनिचयेषु च धनधान्यादिसम्पत्स्वपि प्रहृत्य अर्थात्तानि यथारुचि विनाश्य अपच्छिद्य च आकृष्टाः परिधर्षिताः सभायामिति शेषः । पाण्डवयुधिष्ठिरादिवध्वाः द्रौपद्याः परिधानसहिताः सोत्तरीयाः केशाः कचा यैस्ते धार्त्तराष्ट्राः धृतराष्ट्रपुत्रा दुर्योधनादयो मयि भीमसेने प्रतिज्ञातकुरुकुलक्षये जीवति प्राणान् धारयति सति मृते तु मयि यद्भवतु तद्भवतु । स्वस्थाः सुखिनो भवन्तु अपि तु न भवन्तु ।

अत्र "स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्रा" इति चतुर्थपादगताक्षेपकाका अभिहितः यदि निर्बाधं मज्जीवनं भविष्यति तदा ते सुखिनो न भविष्यन्तीत्येवंरूपो निषेधः यथा चमत्करोति न तथा स्वशब्दाभिहितो निषेधः ।

निषेधद्वयस्यापि विधावेव परिणतौ चमत्कार इत्युदाहर्त्तुमुपक्रमते—यथा चेति । प्रतिषेधद्वयेन अनुमितस्य ज्ञातस्य प्रकृतस्य प्रस्तुतस्य विधिरूपस्यार्थस्य यथा चारुताया चमत्कृतेरवगतिस्तथा न स्वशब्दद्वारा उपस्थितस्य विधेश्चारुत्वम् । तत्र प्रतिषेधो निषेधः सुबन्तविषयत्वेन तिङन्तविषयत्वेन च द्विविध उक्तः कथितः । तदुभयं सुप्तिङन्तविषयं यथा—

"अथाङ्गराजादवतार्य चक्षुर्यातेति जन्यामवदत् कुमारी ।
नासौ न काम्यो न च वेद सम्यक् द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥"
इति । सम्भाव्यनिषेधनिवर्तनं हि प्रतिषेधद्वयस्य विषय इति ।

तथा चाह ध्वनिकारः—'साररूपो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरां शोभामावहति । प्रसिद्धिश्चेयमस्त्येव विदग्धपरिषत्सु यदभिमततरं वस्तु व्यङ्ग्यत्वेन प्रकाश्यते न वाच्यत्वेन' इति ।

---

मधुसूदनीविवृतिः ।

अथाङ्गराजेति । अथ अङ्गाधिपतिनिरीक्षणानन्तरं कुमारी सा इन्दुमती अङ्गराजात् अङ्गदेशाधिपतेः सकाशाच्चक्षुर्नेत्रमवतार्य निवर्त्य यात प्रचलत इति जन्यां धात्रीवदुपकारिणीत्वेन जन्येति निर्देशः अथवा जन्यां सखीमवदत्। अथ कविः संभाव्य निषेधति–नेति । असौ अङ्गपतिः काम्यः स्पृहणीयो न भवति इति न अपि तु काम्यः कामयितुं योग्यः । तर्हि सेयं कुमारी सम्यग् द्रष्टुं तत्वतो ज्ञातुं न वेद इत्यपि न सम्भाव्यम् अपि तु सम्यग् द्रष्टुं वेद एव । ततः किमभूत् यदयं न वृतः, तत्रोत्तरति–भिन्नरुचिर्हीति । लोको जनः भिन्नरुचिः भिन्नस्पृहो भवति । यदेकस्मै रोचते तदन्यस्मै न रुचिकरमित्येतादृशो लोकानां स्वभावः ।

अत्र न काम्यः, न सम्यग्द्रष्टुं वेदेत्यस्य सम्भाव्यनिषेधात्मकवाक्यार्थद्वयस्य इति नेति निषेधात् स्वीकृतिरूपो विधिः प्रतीयते । पूर्वत्र सुबन्तरूप उत्तरत्र तिङन्तरूपः । तदुक्तं वामनेन—संभाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ ॥ इति । अत्रेदं वामनोक्तमेव ग्रन्थकारेणानूदितं संभाव्यनिषेधनिवर्तनमित्यादि ।

इत्येवमिह साक्षात्प्रतिपाद्याप्रतिपाद्यत्वेन द्विविधोर्थः दर्शितः । तत्र साक्षात्प्रतिपाद्यो विधिनिषेधः एवं कुरु एवं मा कुरु इति प्रसिद्धः । साक्षादप्रतिपाद्यः पुनः काक्वा "मथ्नामीति" "लाक्षागृहेति" द्वाभ्यामुपदिशति । अनुमेयः स "अत्ता एत्थेति" "भम धम्मि ए"इति उदाहरिष्यते । यश्च पुनः साक्षादप्रतिपाद्यो विधिः स च क्वापि निषेधद्वयानुमितो भवति सोऽपि सुबन्ततिङन्तविषयतया द्विविधः "अथाङ्गराजे"त्यनेन उदाहृतः ।

वाच्योऽर्थः काक्वाद्यभिधेयतां गतो यथा चमत्कारोति न तथा स्वरूपावस्थ इति पदार्थस्वभाव इति न केवलं ममैवाशयः किन्तु व्यक्तिवादिनोऽपीति दर्शयति—तथा चाह ध्वनिकारश्चतुर्थोद्योते–साररूपो हीति । हि यतः साररूपः तत्वभूतः अर्थो वस्तु स्वैस्तदर्थप्रतिपादकैः शब्दैरनभिधेयोऽप्रतिपाद्यः अर्थात् अभिधावृत्या न प्रतिपाद्यो किन्तु व्यञ्जनया प्रकाशितो भवति तदासौ सुतरामात्यन्तिकीं शोभां कान्तिमावहति इति इयमेव एतादृशी एव विदग्धपरिषत्सु सहृदयसमाजेष्वित्यर्थः प्रसिद्धिश्च ख्यातिरपि यद् अभिमतरम् अतिशयेनाभीष्टं वस्तु अर्थः व्यंग्यत्वेन प्रकाश्यते बोध्यते "सर्वं

आद्ययोस्तु क्रमस्य सुलक्षत्वाद् भ्रान्तिरपि नास्तीति निर्निबन्धन एव तत्र व्यङ्ग्यव्यपदेशग्रहः । अत एव श्रूयमाणानां शब्दानां ध्वनिव्यपदेश्यानामन्तः सन्निवेशिनश्च स्फोटाभिमतस्यार्थस्य व्यङ्ग्यव्यञ्जकभावो न सम्भवतीति व्यञ्जकत्वसाम्याद्यः शब्दार्थात्मनि काव्ये ध्वनिव्यपदेशः सोऽप्यनुपपन्नः, तत्रापि कार्यकारणमूलस्य गम्यगमकभावस्योपगमात् ।

व्यक्तिविवेकव्याख्यानम् ।

श्रूयमाणानामिति । वर्णानां ध्वनिव्यपदेश्यानां व्यञ्जकानां तथा स्फुटत्यस्मादर्थ इत्यन्वर्थनाम्नः स्फोटस्यान्त्यबुद्धिनिर्ग्राह्यस्याखण्डवाचकस्य जन्यजनकभावेन गम्यगमकत्वाद् व्यङ्ग्यव्यञ्जकत्वमिति तत्साम्येन व्यङ्ग्यव्यञ्जकत्वघटनमयुक्तमेव ।

मधुसूदनीविवृतिः ।

वाक्यं सावधारणं भवति" इति नयाद् व्यञ्जनयैव न वाच्यत्वेन नाभिधयापीति भावः । इति शब्दस्तद्ग्रन्थोद्धरणसमाप्तौ ।

इदानीं वस्तुमात्रालङ्कारयोर्मध्ये ध्वनिव्यवहारबीजं निराकरणबुद्ध्या विवेक्तुकाम उत्तरग्रन्थमातनुते–आद्ययोस्त्विवति । वस्तुमात्रालंकारध्वन्योर्मध्ये । वस्त्वलंकाररसादिरिति संग्रहधिया प्रतिपन्नध्वनिषु प्रथमयोरित्यर्थः। क्रमस्य वाच्यव्यङ्ग्यार्थविषयकसाध्यसाधनप्रतीतिपरिपाट्याः सुलक्षत्वात् सुखेन लक्षयितुं शक्यत्वात्, भ्रान्तिरपि सहभावभ्रमोऽपि नास्ति इति तत्राद्ययोः भेदयोः व्यङ्ग्यव्यपदेशस्य व्यङ्ग्यव्यवहारस्य ग्रह आग्रहो निर्निबन्धनो निष्कारण एव ।

यथा वाक्यार्थे साध्यसाधनप्रतीत्योः क्रमस्य वर्त्तमानत्वात् न व्यङ्ग्यव्यपदेशस्तथात्रापि न व्यङ्ग्यव्यवहारो भवितुमर्हः ।

अत एव क्रमस्य सुलक्षत्वादेव श्रूयमाणानां श्रुतिविषयाणां ध्वनिव्यपदेश्यानां ध्वनित्वेन व्यवहर्तुं योग्यानां स्फोटाभिव्यञ्जकानां शब्दानामन्तर्मध्ये सन्निवेशिनः सन्निवेशवतः अर्थात् व्यङ्ग्यत्वेन स्थितस्य स्फोटाभिमतस्य स्फोटत्वेन स्वीकृतस्य अर्थस्य वस्तुनः व्यङ्ग्यव्यञ्जकभावो न सम्भवति । यद्यपि शब्दः स्फोटार्थं गमयति, न जनयति इत्येवं यस्तत्र तयोः गम्यगमकभावः स व्यङ्ग्यव्यञ्जकभाव एव तथापि अर्थप्रत्ययरूपफलजनकत्वात्तत्र जन्यजनकभावात्मको गम्यगमकभाव इति बोध्यम् । यदेतद्वक्ष्यति–तत्रापि कार्यकारणमूलस्य गम्यगमकभावस्योपगमादिति ।

इतिहेतौ । इति हेतोः । व्यञ्जकत्वसाम्यात् गमकत्वरूपसमानधर्मसम्बन्धात् शब्दार्थोभयस्वरूपे काव्ये यो ध्वनिव्यपदेशः सोऽपि व्यपदेशः अनुपपन्न उपपत्तिरहितः, यतः तत्रापि शब्दस्फोटयोरपि स गम्यगमकभावः कार्यकारणमूलोऽभ्युपगतः । कार्यकारणमूलत्वे च तस्य न सहभावस्ततो व्यञ्जकत्वसाम्यात्स्वीकृतो व्यङ्ग्यव्यञ्जकभावो न सिद्धिमित इति भावः ।

ननु विभावादिवाक्यार्थसमकालमेव रत्यादीनां भावानां प्रतीतिरुप-

व्यक्तिविवेकव्याख्यानम् ।

ननु विभावादीत्यादिना विभावादिभिस्सह रसादीनां निमित्तनिमित्तिभावेन क्रमिकप्रतीतिसिद्धेर्ध्वनिकारेणाभ्युपगतत्वान्मुख्यं व्यङ्ग्यत्वं दूषयित्वा गम्यत्वं समर्थितम् । अलौकिकचमत्कारसिद्धिप्रयोजनश्च व्यङ्ग्यत्वोपचारः संश्रितः । तत्र व्यक्तिवादिनो व्यङ्ग्यत्वाभ्युपगमेऽयमभिप्रायः—इह विभावादिस्वभावनिमित्तप्रतिपत्तिकाले निमित्तिनो रसादेः प्रतिपत्तिर्नास्ति, निमित्तिनो निमित्तमुखप्रेक्षित्वेन; ततो व्यङ्ग्यत्वं नोपपद्यते । गम्यत्वं पुनर्निर्बाधमेवेति तावद् भवतोऽनुमानवादिनः परमार्थः । न चैतदस्माभिरपह्नूयते घटप्रदीपादौ व्यक्तिविषये तथा दर्शनात् । किन्तु व्यङ्ग्याभिमते रसादौ यदा प्रतिपत्तिर्जायते, तदा व्यञ्जकस्य विभावादेः प्रतिपत्तिर्न निवर्त्तते तत्सहभावेन रसादेः प्रतीतेः । अलक्ष्यक्रमव्यङ्ग्यत्वेन तु वास्तवक्रमाभ्युपगमो व्यञ्जकाभिमतविभावादिप्रतीत्युपक्रमाभिप्रायेण ।

व्यञ्जकप्रतीतिकाले हि नियमेन व्यङ्ग्यप्रतीतिरिति नास्माकमाशयः । व्यङ्ग्यप्रतीतिकाले तु नियमेन व्यञ्जकप्रतीतिर्भवत्येवेत्याशयेनाक्रमत्वं व्यक्तिश्च समर्थिता । तथा चोक्तम्—"न हि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धिर्दूरीभवति वाच्याविनाभावेन तस्य प्रकाशनादि"त्यादि, न तु विपर्ययेणोक्तं--"न हि वाच्ये प्रतीयमाने व्यङ्ग्यबुद्धिर्दूरीभवती"ति ।

निमित्तनिमित्तिभावस्तु नाङ्गीकृतोऽस्माभिः । केवलं सोऽन्यादृशो गम्यगमकभावप्रयोजको, यत्र गम्यस्य गमकोपरागो न प्रतीयते । अन्यादृशश्च व्यङ्ग्यव्यञ्जकभावप्रयोजको, यत्र प्रत्याय्यस्य प्रत्यायकोपरागप्रतिपत्तिः । तेन नास्ति रसादीनां व्यङ्ग्यत्वे विप्रतिपत्तिः ।

यदपि विभावादीनां रत्यादीनां च कृत्रिमत्वमाश्रित्यनुमानमेव समर्थितम् । (१)औपमानिकं च व्यङ्ग्यत्वं स्थापितम् । तदप्यसमीचीनम्, यतः सहृदयानामेव

मधुसूदनीविवृतिः ।

यत्र हि प्रकाश्यस्य प्रकाशकेन सहैव प्रतीतिः सा व्यक्तिरिति व्यञ्जनाबीजाज्ञस्य-स्वीकारात् यः पुनः रसादिष्वसंलक्ष्यक्रमेषु व्यङ्ग्यव्यञ्जकभावाभ्युपगमः स केवलं सहत्वे प्रतीत्योः भ्रमात्, वस्तुतस्तु तत्र रसादिषु प्रतीत्योः पौर्वापर्येण भिन्नकालिकत्वमेवेति ब्रुवन्तं प्रति समाधानदिशा व्यक्तिवादी शङ्कते–ननु विभावादिवाक्येति। रत्यादीनां रतिर्हासश्चेत्येवं परिगणितानां भावानां स्थायिनां या प्रतीतिर्बोधः सा विभावादिरूपस्य वाक्यार्थस्य समकालमेव सहैव उपजायते, यस्मिन् समये रत्यादिस्थायिभावानां

(१) औपमानिकम्-उपमा गौणी लक्षणा तस्या हेतुः सादृश्याख्यः सम्बन्धः । तेन सम्बन्धेन प्रवर्त्तनमुपमानम् अर्थात् उपचारः । तत आगतम् औपमानिकम् औपचारिकमित्यर्थः ।

व्यक्तिविवेकव्याख्यानम् ।

चर्वयितृत्वाच्चर्वणानुप्राणत्वाच्च रसस्य तद्गतमेव रसस्वरूपं निरूपणीयम् । न रसादिरनुकार्यस्थः, नानुकर्तृस्थः केवलं देशकालप्रकृत्यवस्थाप्रतिनियमावत्रोटनेन साधारण्येन प्रतीतेः । रामानुकर्त्रोरपि तत्रानुप्रवेशात् तद्गतत्वेनापि व्यपदेशो नातीवासम्बद्धः । न तु तद्गतत्वेनैव तस्य व्यवस्थानं युक्तं यतः 'स्थाय्येव रसीभवेदि'ति मुनिवचनप्रामाण्यात् ।

स्थायिनो रसत्वे नीरसानां च रसचर्वणाभावे सद्भाविवासनात्मकरत्यादिस्थायिभावानां चर्वणैकगोचराणां रसत्वमित्यास्माकीनो राद्धान्तः । न च तत्र रत्यादीनां रसानां कृत्रिमत्वम् । नापि कारणादीनां साधारण्येन प्रतीतेर्विभावादिव्यपदेश्यानां वस्तुसद्भावित्वात् कृत्रिमत्वम् । तथाभूतसहृदयप्रतीतिगोचराणामेव तेषां मुख्यतया विभावादित्वम्, अन्येषां तु कारणादित्वम् । "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति मुनिनैतदाशयेनैव लोकोत्तरविभावादिशब्दव्यपदिष्टं च । तस्माद्विद्यमान एव वासनात्मा रत्यादिः स्थायिभावो विभावादिभिः सम्बन्धस्मरणादिव्यवधानमन्तरेण व्यक्त इति स्थितौ मुख्यमेव व्यङ्ग्यत्वं रसस्य नौपचारिकं नाप्यनुमेयत्वमिति तावत् । एवं भावादीनामपि ज्ञेयम् ।

यत्तु सदसद्विषयत्वेन चतुर्विधा व्यक्तिरत्रोन्मीलिता तदपि न सङ्गतं घटप्रदीपन्यायस्यात्रेष्टत्वात्। योऽपीन्द्रियगोचरतापत्तिप्रसङ्ग उद्भावितः सोऽप्यसमञ्जसः। न ह्यात्मीयेन लक्षणेन परमतं दूष्यते । न हीन्द्रियगोचरतापत्तिः केनचिद्व्यक्तिलक्षणं कृतं 'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जकोमतः । यथा दीपो घटस्ये'ति सामान्येन धीगोचरतापत्तिलक्षणत्वाद्व्यक्तेः । ततश्च रसादौ व्यङ्ग्यत्वमनवद्यमेव ।

यत् पुनर्वस्त्वलङ्कारयोर्नियमेन वाच्यानन्तरकालभाववित्त्वेन प्रतीतेर्व्यङ्ग्यत्वमसमञ्जसं भवतीत्युक्तं, तत्र प्रतिविधीयते । इह शब्दस्याभिधालक्षणाभेदेन द्विविधो व्यापारश्चिन्तनैरभ्युपगतः। न स तृतीयकक्षानिक्षिप्तेऽर्थे प्रगल्भत इति तत्र व्यापारान्तरमभ्युपेयम् । रसादौ च तत्तुल्यकक्ष्ये व्यञ्जनमुपपादितमितीहापि तदेव संश्रयितुं युक्तम् । यत् तत्र वाच्यव्यङ्ग्ययोः सहप्रतीतिर्नास्तीत्युक्तं तदपि न युक्तं रसादिन्यायेन व्यङ्ग्यप्रतीतिकाले वाच्यस्यापि प्रकाशकस्य प्रतीतेः । वाच्यकाले तु यद्व्यङ्ग्यस्य न प्रतीतिस्तन्न दूषणमित्युक्तमेव ।

नन्वविरोधिव्यङ्ग्यप्रतीतिकाले वाच्यस्य कथञ्चिद प्रतीतिरस्तु । 'भम धम्मिअ' इत्यादौ तु विरोधिव्यङ्ग्यप्रतीतिकाले वाच्यस्य कथं प्रतीतिः नैष दोषः । तत्रापि प्रकाशकतया । ( यत्र तु ? ) ततोऽसत्येनापि प्रतीतिसद्भावाद्व्यङ्ग्यत्वं नासमञ्जसं किञ्चित् यतः काव्यार्थो गोप्यमानत्वेन प्रतिपत्तृमात्रस्याप्रतिभातः सहृदस्यैव भासते जातीपलाण्डुन्यायेन नि( गुम्भि ? ) कुम्बितस्य प्रकटनात् ( इति ) व्यक्तिवाचो युक्तिरेव लौकिकी समीचीनेति तत्र व्यञ्जकत्वमेव साधीय इति ।

जायमाना सर्वैरेवावधार्यंते । न तु तत्रान्तरा सम्बन्धस्मरणादिविघ्नव्यवधानसंविचित्तिः काचिद् ।

रत्यादिप्रतीतिरेव रसादिप्रतीतिरिति मुख्यवृत्त्यैव व्यङ्ग्यव्यञ्जकभावाभ्युपगमः । तत्र प्रदीपघटादिवदुपपन्नो गम्यगमकभावः । यत् स ए-

व्यक्तिविवेकव्याख्यानम् ।

अधुना अक्षरार्थः प्रकाश्यते । रत्यादिप्रतीतिरेव रसादिप्रतीतिरिति 'स्थाय्येव रसीभवेदि'ति वचनात् ।

मधुसूदनीविवृतिः ।

प्रतीतिस्तस्मिन्नेव न तु भिन्ने समये विभावादीनां प्रतीतिर्भवतीति सर्वैः रसादीन् स्वीकुर्वद्भिरवधार्यंते निश्चीयते इति तत्त्वम् ।

ननु तयोः प्रतीत्योः कार्यकारणभावरूपतया पूर्वापरीभावस्य नान्तरीयकत्वात्कुतः समकालत्वमित्यत आह–न तु तत्रान्तरेति । तत्र तयोः प्रतीत्योरन्तरा मध्ये काचित् सम्बन्धस्मरणादिविघ्नव्यवधानसंवित्तिर्नास्ति । सम्बन्धः कार्यकारणभावादिस्तस्य यः स्मरणादिस्तद्रूपो यो विघ्नः प्रतीतौ प्रतिबन्धकः तत्कृतं यद् व्यवधानं पौर्वापर्यरूपं तद्रूपा संवित्तिर्ज्ञानम् । नहि प्रकाशकः सम्बन्धस्मरणादीनपेक्षते प्रकाशनवेलायामिति भावः ।

नन्वेवमसामञ्जस्यं स्यादित्युत्तरति–रत्यादिप्रतीतिरिति । स्थायीभावो रसः स्मृत इति सिद्धान्तात् याहि रत्यादिविषयिणी प्रतीतिः सैव रसविषयविषयिणी प्रतीतिरस्ति इत्येवं मुख्यया वृत्त्या प्रधानीभूतेनैव व्यापारेण मुख्यप्रणालिकयेति भावः, न तु गौण्या वृत्त्या लक्षयेणति भ्रमितव्यम् । अयं भावः । कुम्भकारः प्रदीपश्चोभौ घटाविर्भावकौ न द्वयोस्तत्राविर्भावने कोपि बाधः इति मुख्या एव वृत्तिस्तयोर्यथा, परं सामग्रीभेदादेको जनकः, द्वितीयः प्रकाशकस्तथैवात्रापि अभिधाव्यञ्जनयो रसविषये मुख्या वृत्तिरिति अभ्युपगमः स्वीकारः ।

व्यङ्ग्यव्यञ्जकभावाभ्युपगमे बीजं दर्शयति––तत्र प्रदीपघटादिवदिति । तत्र प्रतीत्योर्मध्ये घटप्रदीपादिवत् गम्यगमकभावः उपपन्नः सिद्धः ।

अयं भावः । सन्तमसाच्छन्ने सद्मनि प्रदीपे प्रज्वालिते दीपस्य वस्तूनां च सहैव भानं न तु मध्ये व्यवधानं किंचित् तथैव प्रकाशकविभावादिप्रतीतिसमकालमेव रसादिप्रतीतिः । अभ्यासस्यैष प्रभावः । यत् विनैव प्रणिधानादिनापि संस्कारबलवत्त्वात्सदैव प्रबुभुत्सुतया स्थापनम्, यथा यत्र धूमस्तत्राग्निरिति व्याप्तेः हृदयस्थितत्वात् हेतुज्ञानमात्रमेव उपयोगि भवतीति व्याप्तिं विनापि परामर्शस्थानमाक्रामति, उत्पन्ने धूमज्ञाने झटिति तद्व्याप्तिस्मृतौ तद्विजातीयप्रणिधानानुसरणादिप्रतीत्यन्तरानुप्रवेशविरहाद् आशुभाविन्यामग्निप्रतीतौ क्रमो न लक्ष्यते तद्वदिहापि काव्ये रसानां प्राधान्यादेव तत्पर्यन्तानुधावनत्वरिता मध्ये विश्रान्तिं न कुर्वत सहृदया इति सतोऽपि क्रमस्यालक्षणम् । अपरं च प्रकाश्यसमसत्ताकालः प्रकाशक इति सत्ताकालयोः सम·

वाह—'व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरं द्योतयति तदा स्वरूपं प्रकाशयन्नेवासावन्यस्य प्रकाशकः प्रतीयते प्रदीपवद् । यथा—

"लीलाकमलपत्राणि गणयामास पार्वती ।"

इत्यादौ' इति । पुनः स एवाह—'नहि व्यङ्ग्ये प्रतीयमाने वाच्यबुद्धि-

---

मधुसूदनीविवृतिः ।

त्वमवश्यमभ्युपेयमकामेनापि भविष्यति अनुभवस्यापलपितुमशक्यत्वात्, अन्यथा कुतः प्रकाशकत्वं कस्य च प्रकाश्यत्वं स्यात । किं घटपटादिवस्तुप्रतीतिसमये तेभ्यः पृथक् सत्ताकालतया सूर्याचन्द्रमःप्रभृतीनां तेजस्वतां तेजः प्रतीयते । अतः समीचीन एव व्यञ्जकत्वमार्गे तु यदार्थोऽर्थान्तरमित्यादिः, नहि व्यङ्ग्ये प्रतीयमाने इत्यादिश्च सिद्धान्तः नात्र न कुतश्चिद्विप्रतिपत्तिलेशावकाशः सम्भाव्यः ।

ननु क्रमोऽपि सहभावोऽपि इति परस्परविरुद्धमुच्यते इति चेत् । नैष विरोधः । प्रकाशकमन्तरा प्रकाश्या घटादयो न प्रतीयन्ते सति च तस्मिन् प्रकाशन्ते इति निमित्तनिमित्तिभावात्क्रमः । प्रकाश्यप्रकाशकयोः विलक्षणस्वभावमाहात्म्यात्तस्याऽप्रतीतेः सहभावोऽपि । पर्यालोचयतु आयुष्मान् स्वानुभवम् । प्रतीतौ नाम सहभावोऽपेक्ष्यते न वस्तुषु यथा पितापुत्रयोः सत्यपि पूर्वापरीभावे पुत्र इति प्रतीतौ सममेव नियता पितृप्रतीतिरिति साहचर्यं न विरुध्यते तथात्रापि बोध्यमिति दिक् ।

उक्तार्थे ध्वनिकारस्य मतमुद्धरति-यत् स एवाहेति । लक्षणाव्यञ्जनयोः परस्परं रूपभेदमालोचयन्नाह स ध्वनिकार एव-व्यञ्जकत्वमार्गे त्विति । अत्रेत्थं बोध्यम् । यत्र लक्षणाव्यापारः प्रवर्त्तते तत्र यदा पदार्थः पदार्थान्तरमुपलक्षयति तदा उपलक्षकार्थं एव स्वमात्मानमुपलक्षणीयार्थस्वरूपेण परिणमयति स एव आत्मानं तादृशं प्रकटयति न हि तत्र वस्तुतो भिन्नत्वम् । व्यञ्जकत्वमार्गे तु व्यञ्जनायाः प्रस्थाने तु यदा अर्थः अर्थान्तरं द्योतयति तदार्थः स्वं प्रकाशयन्नेव अन्यस्य स्वातिरिक्तस्य प्रकाशकः यथा प्रदीपो घटस्य । न हि प्रदीप एव घटः । स्वरूपं प्रकाशयन्नेव परावभासकत्वं नाम व्यञ्जकत्वमित्येव लक्षणम् । एवं (परान्यशब्दयोः श्रुत्या ) व्यंजनायां प्रकाश्यप्रकाशकयोः भिन्नत्वं लक्षणायामेकत्वमित्यनयो रूपभेदः ।

नन्वनेन लक्षणव्यञ्जनयो रूपभेदपरिष्कारेण प्रकृते किमायातमिति चेच्छृणु । प्रकाशयन्नेवेति वर्त्तमानकालिकेन शता एवेन च प्रकाश्यप्रकाशकयोः भिन्नकालिकत्वं व्यवच्छिन्दता तयोरेककालिकत्वं नियम्यते । सहभावश्च द्योत्यते । यथा लीलाकमलपत्राणि इत्यत्र पार्वत्या लीलाकमलपत्रगणनेन आकारगोपनात्मकः अवहित्थाख्यो भावो द्योत्यते । तत्र लीलापत्रगणनं स्वं प्रकाशयन्नेव परमवहित्थाभावं प्रकाशयति इति ।

पुनश्चेति ध्वनिकारमतं पुनरुद्धरति—नहि व्यङ्ग्ये प्रतीयमान इति । अत्रेयं सङ्गतिः । यथा पदार्थः वाक्यार्थं प्रत्याययति तथैव वाच्यार्थोऽपि व्यङ्ग्यार्थं प्रत्याययति

दूरीभवति । वाच्याविनाभावेन तस्य प्रकाशनात् । तस्माद् घटप्रदीप-न्यायस्तयोः । यथैव हि प्रदीपद्वारेण घटप्रतीतावुत्पन्नायां न प्रदीपप्रकाशो निवर्तते तद्वद्व्यङ्ग्यप्रतीतौ वाच्यावभास' इति ।

---

### व्यक्तिविवेकव्याख्यानम् ।

वाच्याविनाभावेनेति । अत्र ध्वनिकृतो नानुमानाङ्गमविनाभावोऽभिप्रेतः । किन्तु निमित्तत्वमात्रं यदनुमानेऽपि सम्भवति, यथा 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते' । अनुमानवादिनस्तु अनेनैव शब्दच्छलेनोत्थानम् ।

### मधुसूदनीविवृतिः ।

इति तयोः पदार्थवाक्यार्थन्यायं वदतां मतं निराकृत्य घटप्रदीपन्यायस्तयोरिति व्यवस्थापयन्नाह–नहीति । अयं भावः । यथा घटाद्यभिमतपदार्थे ज्ञायमाने प्रदीपप्रकाशो न निवर्त्तते परं सहैव प्रकाशत एव तथैवेदं वाच्यज्ञानं व्यङ्ग्यावबोधवेलायां सहैव प्रकाशते इत्यतोऽत्र व्यङ्ग्यव्यञ्जकभावाभ्युपगमः । इति ।

ननु कुतोऽयं नियमो यद् व्यङ्ग्ये प्रतीयमाने वाच्यज्ञानमपि प्रकाशते इत्याशङ्कायामाह—वाच्याविनाभावेनेति । व्यक्तिविवेकमूलपाठः वाच्याविनाभावः । ध्वनिकारपाठश्च वाच्यावभासाविनाभाव इति । पूर्वमते वाच्यावभासेन अविनाभाव इति वाच्याविनाभाव इति मध्यमपदलुप्तः समासः । अथवा वाच्यस्यैव वाच्यावभास इति अर्थः । वाच्यस्य अवभासो ज्ञानं तेन सह योऽविनाभावः सम्बन्धः तेन सम्बन्धेन तस्य व्यङ्ग्यस्य प्रकाशनात् ।

इदं तु बोध्यम् । वाच्यावभासाविनाभावेन तस्य प्रकाशनादित्यत्र, विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरित्यत्र च यो हि "अविनाभाव" इति पदविशेषः तन्मोहमाहात्म्यम्–यदनुमानव्यसनिनः अविनाभावपदार्थे भ्रान्ता स्तदर्थं व्याप्तिं मन्वाना रसमनुमेयमभिमन्यन्ते। व्यक्तिवादिनां च मते अविनाभावोऽत्र केवलं सम्बन्धः। तद्यथा "अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते" इति भट्टकारिकाव्याख्यायाम् , अविनाभावोऽत्र सम्बन्धमात्रम् नतु नान्तरीयकत्वम् ( व्याप्तिः ) तथात्वे हि मञ्चाः क्रोशन्तीत्यादौ लक्षणा न स्यात् अविनाभावे च आक्षेपेणैव सिद्धेर्लक्षणाया नोपयोगः इत्युक्तमिति मम्मटोक्तेः ।

अन्यच्च—

कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमः ।

इति सिद्धान्तानुसारेण कार्यकारणभावे निश्चित एव व्याप्तिः । स एव न निश्चितः। तथाहि–"रत्यादिस्थायी एव रसीभवति" इति तवापि सम्मतः सिद्धान्त । तत्र यदि स्थायी जन्यत्वमुपेयात् तर्हि कुतस्तस्य स्थायित्वम् स्थायिनो वासनात्मकत्वात् ।

उच्यते । वाच्यप्रतीयमानयोरर्थयोर्यथा क्रमेणैव प्रतीतिर्न समकालं यथा चानयोर्गम्यगमकभावः तथा तेनैव व्यक्तिवादिना तयोः स्वरूपं निरूपयितुकामेनाप्युक्तं, तदेवास्माभिः समाधित्सुभिरिह लिख्यते परम् ।

तद्यथा-'न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः । अत एव विभावादिप्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेनावस्थानात् क्रमोऽवश्यम्भावी । स तु लाघवान्न लक्ष्यत इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादय इत्युक्तम्' इति ।

पुनश्च 'तस्मादभिधानाभिधेयप्रतीत्योरिव वाच्यव्यङ्ग्यप्रतीत्योर्निमित्तनिमित्तिभावाद् नियमभावी क्रमः । स तूक्तयुक्तेः क्वचिल्लक्ष्यते क्वचित्तु न लक्ष्यत' इति ।।

तदेवं वाच्यप्रतीयमानयोर्वक्ष्यमाणक्रमेण लिङ्गलिङ्गिभावस्य समर्थनात् सर्वस्यैव ध्वनेरनुमानान्तर्भावः समन्वितो भवति तस्य च तदपेक्षया महाविषयत्वात् । महाविषयत्वं चास्य ध्वनिव्यतिरिक्तेऽपि विषये

---

व्यक्तिविवेकव्याख्यानम् ।

अक्रमप्रतीतित्वं समाधित्सुभिः परिहरद्भिः लिख्यते परमित्यन्वयः ।

तत्प्रतीयोः कार्यकारणभावेनेति । विभावादीनां रसानां च व्याख्यातो यो व्यङ्ग्यव्यञ्जकभावोपयोगी निमित्तनिमित्तिभावस्तदभिप्रायेणैतत् ध्वनिकृतोक्तम् ।

मधुसूदनीविवृतिः ।

वासनायाश्च प्राक्तन्या अपि स्वीकारात्, तद्व्याहतमेव स्यात् । एवं हि विभावादिभिः स्थायी न जन्यते । ततश्च न तयोः कार्यकारणभावः । तस्मान् मूलं नास्ति कुतः शाखेति नयेन अविनाभावोऽपि न सिद्ध्यति । केवलमुपायमात्रसाम्यान्निमित्तनिमित्तिभावोऽभ्युपगतः । स्वभावस्तु अस्मदुक्त एव पर्यवस्यति इति ।

उच्यते उत्तर्यते इति तात्पर्यम् । तदेव अक्रमप्रतीतित्वम् । समाधित्सुभिःपरिहरद्भिः । परम् उत्तरग्रन्थः ।

अवान्तरमुपसंहरन्नाह—तदेवमिति । तत्तस्मादुक्तप्रकारात् । एवं रसविभावादिप्रतीत्योर्मध्ये क्रमत्वे सिद्धे वक्ष्यमाणक्रमेण "सतोऽभिव्यक्तिस्त्रिधा तस्य त्रैविध्यात्" इत्यारभ्य तृतीयस्यास्तु यल्लक्षणं तदनुमानस्यैव संगच्छते न व्यक्तेः । तदुक्तं त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमानमिति । तच्चानुमानमेवेत्यादिनिर्देक्ष्यमाणदिशा वाच्यप्रतीयमानयोरर्थयोर्मध्ये लिङ्गलिङ्गिभावस्य समर्थनात् साधनात् । लिङ्गम् हेतुः साधनम् । लिङ्गी साध्यम् । तस्य अनुमानस्य तदपेक्षया ध्वनेरपेक्षया महाविषयत्वात् ध्वनिगुणीभूतयव्ङ्ग्यपर्यायोक्तसमासोक्त्याद्यखिललक्ष्यव्यापित्वात् ।

महाविषयत्वं समर्थयितुमाह—महाविषयत्वं चास्येति । अस्य अनुमानस्य

पर्यायोक्तादौ गुणीभूतव्यङ्ग्यादौ च सर्वत्र सम्भवात्। तच्च वचनव्यापारपूर्वकत्वात् परार्थमित्यवगन्तव्यम्। त्रिरूपलिङ्गाख्यानं परार्थमनुमानमिति केवलमुक्तनयानभिज्ञतया तन्न लक्षयत्यविचक्षणो लोकः।

अथ यदि सर्व एव वाक्यार्थः साध्यसाधनभावगर्भ इत्युच्यते। तद्यथा साध्यसाधनयोस्तत्र नियमेनोपादानं तथा दृष्टान्तस्यापि स्यात्

व्यक्तिविवेकव्याख्यानम्।

**पर्यायोक्तादौ** अलङ्कारविशेषे। आदिशब्दात् समासोक्त्यादिग्रहः। **गुणीभूतव्यङ्ग्ये** अलङ्कारव्यतिरिक्ते 'ग्रामतरुणं तरुण्या' इत्यादौ यदनलङ्कारत्वेनोक्तम्। अत्रादिग्रहणादन्यगतोऽनुमानानुमेयभावः स्वीकृतः।

मधुसूदनीविवृतिः।

ध्वनेः व्यतिरिक्ते भिन्नेऽपि विषये स्थले यत्र ध्वनिरिति व्यवहारः त्वयापि न स्वीक्रियते तत्र पर्यायोक्तसमासोक्तिसदृशे अलङ्कारे गुणीभूते व्यङ्ग्ये च सर्वत्र लक्ष्ये सम्भवात् वर्त्तमानत्वात् महाविषयत्वम्।

ननु यत्-अनुमानं नाम अनुमित्सोः हेत्वादिदर्शकस्य हेतुभिः ज्ञानं तच्च स्वप्रयोजनकं पर्यवसितं भवति। एतच्च विविच्यमानं न स्वप्रयोजनकं प्रतिभाति तर्हि कीदृशमिहानुमानमित्यत आह—**तच्च वचनव्यापारपूर्वकत्वादिति**। अनुमानं द्विविधं भवति स्वार्थं परार्थम्। यत्र स्वस्यानुमेयप्रतिपत्तिर्भवेत्तत्स्वप्रयोजनकम्। यत्र तु पूर्वं स्वयं हेतोः साध्यमनुमाय तदनन्तरं परं प्रति बोधयितुं वाक्यं प्रयुज्यते तत्परप्रयोजनकमनुमानम्। एवं चात्रापि तदनुमानम् परार्थम् वचनव्यापारपूर्वकत्वात्, अर्थात् परं बोधयितुं वचनस्य व्याप्रियमाणत्वात् इत्यवगन्तव्यम् बोधव्यम्।

**त्रिरूपलिङ्गाख्यानमिति**। यत्र त्रिरूपस्य पक्षसत्वसपक्षसत्वविपक्षव्यावृत्तत्वरूपत्रयवतः लिङ्गस्य। लीनमर्थं व्याप्तिबलेन गमयतो हेतोरित्यर्थः। आख्यानं परं प्रति बोधयितुं कथनं भवति तत्परार्थमनुमानं भवति इति यः सिद्धान्तः, तत्सिद्धान्तभूतं वस्तु केवलमुक्तनयात् यत्र परं प्रति बोधयितुं त्रिरूपलिङ्गस्य आख्यानं भवति (न तु ज्ञानम्, ज्ञाने तु स्वार्थमेवानुमानं स्यात्) तत्परार्थानुमानमिति सिद्धान्तात् अनभिज्ञतया अपरिचिततया अविचक्षणो लोकः तर्कशास्त्रापण्डितो जनो न लक्षयति चेतयते। न च शंक्यं न लिङ्गमेवानुमानमिति लिङ्गपरामर्शप्रयोजकत्वाल्लिङ्गस्येत्यनुमानमेवेति दिक्।

वाक्यानां प्रवृत्तिनिवृत्तिकारित्वात् प्रवृत्तिनिवृत्त्योः साध्ययोः, किमिति प्रवर्त्तयति निवर्त्तयति च इति हेत्वोश्च सद्भावोऽस्ति परं नान्तरीयकस्य व्याप्तिप्रतिपादकस्य दृष्टान्तवाक्यस्य काव्येषु अभावात् कुतोऽनुमानमित्याशङ्क्य समाधानमाह–**अथ यदीति**। अथ स्वीकारार्थः। अथ यदि भवता उच्यते सर्वोपि वाक्यार्थः साध्यसाधनभावगर्भः लिङ्गलिङ्गिभावमध्यः इति, तत्तर्हि यथा तत्र वाक्ये साध्यसाधनयोः कार्यहेत्वोः निय-

तस्यापि व्याप्तिसाधनप्रमाणविषयतयावश्यापेक्षणीयत्वात् । न । प्रसिद्ध-सामर्थ्यस्य साधनस्योपादानादेव तदपेक्षया प्रतिक्षेपात् । तदुक्तम्—

"तद्भावहेतुभावौ हि दृष्टान्ते तदवेदिनः ।
ख्याप्येते विदुषां वाच्यो हेतुरेव च केवलः ॥"

ननु कुतोऽयं रत्यादीनां सुखाद्यवस्थाविशेषाणां काव्यादौ सचेतन-

---

व्यक्तिविवेकव्याख्यानम् ।

तद्भावहेतुभावौ तादात्म्यतदुत्पत्ती । तदवेदिन इति । अत्र तच्छब्देन तौ परामृष्टौ । नन्वत्र विद्वदविद्वद्भेदेन व्याप्तिसाधनप्रमाणविषयस्य दृष्टान्तस्याप्रयोगः प्रयोगश्चोक्तः । न काव्ये कदाचिद् दृष्टान्तस्य प्रयोगो दृश्यते । तत् कथमत्रानुमानस-

मधुसूदनीविवृतिः ।

मेन नियततया उपादानं ग्रहणं भवति तथा दृष्टान्तस्यापि उपादानं नियमेन स्यात् भवितुमर्हमित्यर्थः ।

ननु नियमेन दृष्टान्तस्यापेक्षा कुत इत्यत आह—तस्यापीति । तस्यापि दृष्टान्तस्यापि व्याप्तिसाधनं यत्प्रमाणमुदाहरणाख्यं तद्विषयतया तद्घटकतया अवश्यं नितराम् अपेक्षणीयत्वात् उपादेयत्वात् । अयं भावः । अनुमानं व्याप्तिज्ञानजन्यम्, यो यो भीरुः भ्रमणवान् स स भयकारणाभावज्ञानवान् इत्यादिदृष्टान्तवाक्यम् यद्यद्भीरुभ्रमणं तत्तद्भयकारणाभावज्ञानपूर्वकमि"त्येवरूपां व्याप्तिं साधयति । अतो व्याप्तिसाधकप्रमाणविषयस्य दृष्टान्तस्याभावे व्याप्तिमूलस्यानुमानस्याप्यभाव इत्यर्थात्पर्यवसितमिति । नेत्युत्तरति—यदुच्यते दृष्टान्तस्यावश्यमपेक्षा तन्न । प्रसिद्धं साध्यप्रमापणे निश्चितं सामर्थ्यं बलं यस्य तस्य साधनस्य हेतोरुपादानादेव ग्रहणादेव साध्यसिद्धेः तदपेक्षायाः साध्यजनकव्याप्तिसाधनदृष्टान्तापेक्षायाः प्रतिक्षेपात् निराकरणात् ।

तदुक्तमिति न केवलं वयं ब्रूमः प्राच्यैरप्येतदुच्यते इति प्राचीनोक्तिमुद्धरति— तद्भावहेतुभावौ हीति । दृष्टान्तवाक्ये । तयोरवेदी तदवेदी । तस्य तदवेदिनः साध्यहेतुभावादर्शिनः पुरुषस्य कृते तद्भावहेतुभावौ साध्यहेतुभावौ ख्याप्येते स्थाप्येते इत्यर्थः । विदुषां साध्यहेतुभावयोर्ज्ञानिनां कृते केवलं साध्ये हेतुरेव वाच्यः वक्तव्यः । दृष्टान्तमन्तरापि प्रसिद्धसामर्थ्येन हेतुनैव साध्यस्य साधनात् तर्कन्यायविसदृशे सहृदयस्पृहणीये काव्यानुमाने न व्याप्तेर्गवेषणेति भावः ।

एवं व्यक्तिवादिस्वीकृतं रसविभावादिप्रतीत्योः समकालत्वं तन्निरुक्तपथेनेव निराकृत्य "सहभावभ्रान्तिकृतस्तत्रान्येषां व्यङ्ग्यव्यञ्जकभावाभ्युपगम" इति स्वोक्तं संसाध्य च "स तु तत्र औपचारिक एव प्रयुक्तो न तु मुख्यः तस्य वक्ष्यमाणनयेन बाधितत्वादित्युक्तं साधयितुम् औपचारिकत्वप्रदर्शकनयोद्घाटनार्थं भूमिकामाबध्नन्नाह—ननु कुतोऽयमिति । काव्ये आदिपदान्नाट्ये उपात्तानां सुखाद्यवस्थाविशेषाणां रत्यादीनां

चमत्कारी सुखास्वादसम्भवः, यो रसादीनामनुमेयानां व्यङ्ग्यत्वोपचारस्य प्रयोजनांशतया कल्प्यते । न हि लोके लिङ्गतः शोकादिष्वनुमीयमानेष्वनुमातुः सुखास्वादलवोऽपि लक्ष्यते । प्रत्युत साधूनामुदासीनानामपि वा भयशोकदौर्मनस्यादिदुःखमसमसुपजायमानमवधार्यते । न च लोकतः काव्यादौ कश्चिदतिशयः येनासौ तत्रैवोपगम्येत, न लोके । त एव हि लौकिका विभावादयो हेतुकार्यसहकारिरूपा गमकाः । त एव च रत्यादयोऽवस्थाविशेषरूपा भावा गम्याः । तत् कोऽतिशयः काव्यादौ, यत् तत्रैव रसास्वादो न लोक इति प्रयोजनांशासम्भवाद् रत्यादिषु व्यङ्ग्यत्वोपचारोऽनुपपन्न एव ।

उच्यते । यत्र विभावादिमुखेन भावानामवगमस्तत्रैव सहृदयैक-

## व्यक्तिविवेकव्याख्यानम् ।

मर्थनम् । उच्यते । काव्यानुमानं तर्कानुमानविलक्षणं काव्यस्य चमत्कारसारत्वात् । न्यायमुखेनापि चमत्कार एव विश्रान्तेः । तर्कानुमानं तु कर्कशन्यायरूपतया प्रवृत्तं तर्कस्य कर्कशतामुद्वहति । काव्ये त्वेतद्वैपरीत्यात् सहृदयानामधिकाराद् न व्याप्त्यादिमुखेनानुमानप्रदर्शनसमर्थनमिति ।

## मधुसूदनीविवृतिः ।

मध्ये अयमेषः सचेतनान् चमत्कर्त्तुं प्रभुः सुखास्वादस्य सम्भवः । ननु कोयं सुखास्वाद इत्याशङ्कायामुत्तरति—यो रसादीनामिति । यः सुखास्वादः रसादीनाम् आदिपदाद् भावतदाभासादीनां मध्ये विद्यमानस्य व्यङ्ग्यत्वोपचारस्य व्यङ्ग्यव्यञ्जकभावरूपस्य उपचारस्य लक्षणायाः प्रयोजनांशतया फलांशतया कल्प्यते अभिमन्यते । स कुतः । हि यस्मात् लोके लिङ्गतः करुणशोकादीनां हेतोः सकाशात् अनुमीयमानेषु अनुमितिविषयीक्रियमाणेषु शोकादिषु अनुमातुः पुरुषस्य सुखास्वादस्य लवोऽपि न लक्ष्यते दृश्यते कुतो वैपुल्यम् । प्रत्युत तद्विरुद्धं साधूनाम् उदासीनानां विरक्तानामपि जायमानमनुभूयमानम् असमं विषमं भयं भीतिः, शोकः करुणा, दौर्मनस्यं चेतसो वैकल्यम् अवधार्यते निश्चीयते । अतिशयो वैलक्षण्यम् । असौ सुखास्वादः । तत्रैव काव्यादावेव उपगम्येत लभ्येत । त एव यादृशा लोकेऽनुभूतास्तादृशा एवेत्यर्थः । गमकाः बोधकाः । गम्याः बोध्याः । तत्रैव काव्ये नाट्ये च । इति रीत्या प्रयोजनांशस्य उपचारहेतो रूढ्यतिरिक्तस्य प्रयोजनरूपस्य अंशस्य असम्भवात् अवर्त्तमानात् । रत्यादिषु भावेषु व्यङ्ग्यत्वोपचारः रसादयो व्यङ्ग्या इत्यौपचारिकप्रयोग अनुपन्नोऽसिद्धः ।

उच्यते समाधीयते । यत्र काव्ये विभावादिमुखेन विभावानुभावव्यभिचारिद्वारा भावानां रत्यादीनामवगमः बोधः तत्रैव काव्येषु नाट्येषु च केवलं सहृदयः काव्यभा-

संवेद्यो रसास्वादोदय इति वस्तुस्वभाव एवायं न पर्यनुयोगपदवीमवतरति प्रामाणिकानाम् । यदाह भरतः-'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति । यथोक्तम्—

"भावसंयोजनाव्यङ्ग्यपरसंवित्तिगोचरः ।
आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते ॥"

न च लोके विभावादयो भावा वा सम्भवन्ति हेत्वादीनामेव तत्र

---

व्यक्तिविवेकव्याख्यानम् ।

भावसंयोजनेति । भावानां विभावानुभावव्यभिचारिणां संयोजनया व्यङ्ग्यो व्यक्तिवादिना तथात्वेनाभिप्रेत इह दर्शने तूपचरितव्यङ्ग्यभावः तथाभूतः सन् परसंवित्तिगोचरः लोकोत्तरायाः प्रतीतेरभिन्नोऽपि साकारतया विषयत्वेन स्फुरन्नास्वादस्वभावः । अनुभवो यद्यपि तस्य ग्राहकस्तथाप्यभेदोपचारादियमुक्तिः । तस्य प्रयोजनं नित्यं प्रतीत्यविनाभावित्व(त्?)रसानाम् । काव्यार्थ इति व्यङ्ग्यतया वाक्यार्थी-

मधुसूदनीविवृतिः ।

वनाभावितान्तःकरणैः । संवेद्यो ज्ञेयो रसास्वादोदयः इत्येवंरूपः वस्तूनां पदार्थानां स्वभाव एव कुलधर्म एव । अयमेतादृशो वस्तुस्वभावः प्रामाणिकानां शास्त्राचार्याणां प्रमाणहृदयवेत्तॄणां पर्यनुयोगपदवीं नावतरति । काव्यादौ कुतो रसोदयः कुतो न लोके इति प्रश्नान् प्रामाणिका न कर्त्तुमर्हन्ति स्वभावस्य विलक्षणत्वादिति भावः ।

एतदर्थसाधनाय भरतं नाट्यशास्त्रप्रणेतारं नियुनक्ति—यदाह-भरतः-विभावानुभावसञ्चारिसंयोगादिति । अयमाशयः । कविवर्ण्यमानैर्विभावादिभिरेव रसो निष्पद्यते न तु लोकोपात्तैः हेत्वादिभिः स निष्पद्यते । यदि तैरपि निष्पद्येत तर्हि नैवं प्रोच्येतेति ।

अन्यच्च काव्यार्थ एव रसो न लौकिकार्थ इति साधयितुमाह—यथोक्तम्—भावसंयोजनाव्यङ्ग्येति । भावानां विभावानुभावव्यभिचारिणां संयोजनया संयोगात् व्यङ्ग्यः व्यञ्जनाव्यापारप्रतिपाद्यः । संवेदनाख्यव्यङ्ग्यस्वपरसंवित्तिगोचर इत्येतादृशः पाठः श्रीशङ्कुकस्य हृदयदर्पणे वर्त्तते इति नाट्यशास्त्रटीकायामभिनवगुप्तोक्तेः प्रतीयते । परा विलक्षणा या संवित्तिर्ज्ञानं तस्या गोचरो विषयः । संवित्तौ वैलक्षण्यं च गुणालङ्काराद्यसंभिन्नरसादिविषयकलौकिकप्रमायाः, युञ्जानपदाभिधेयापरिपक्वयोगिनो जगद्भेदविषयकविज्ञानात्, युक्तपदवाच्यपरिपक्वयोगिनो बाह्यार्थसंस्पर्शरहितस्वात्ममात्रविषयकसंवेदनाच्च भिन्नत्वमेव । आस्वादनात्मना चर्वणास्वरूपेण अनुभवो ज्ञानं यस्य सः । एवंभूतः काव्यार्थः काव्यप्रतिपादितोऽर्थः रस उच्यते कथ्यते अभिज्ञैः।

त एव हीत्यादिवाक्योक्तं "लौकिका विभावा हेतुकार्यसहकारिरूपाः" इति खण्डयितुमुपक्रमते—न च लोक इति प्रभृति । अर्थात् लौकिकानां कारणकार्यस-

सम्भवात् । न च विभावादयो हेत्वादयश्चेत्येक एवार्थ इति मन्तव्यम् । अन्ये हेत्वादयोऽन्य एव विभावादयः । तेषां भिन्नलक्षणत्वात् । तथा हि-ये लोके रत्यादयो रामादिगताः स्थेमभाजोऽवस्थाविशेषाः केचित् त एव काव्यादौ कविप्रभृतिभिर्वर्णनाद्यर्थमात्मन्यनुसंहिताः सन्तो भावयन्ति तांस्तान् रसानिति भावा इत्युच्यन्ते । यदाह भरतः—

"नानाभिनयसम्बन्धाद्भावयन्ति रसानिमान् ।
यस्मात्, तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥"

ये च तेषां हेतवः सीताद्याः केचित्, त एव काव्यादिसमर्पिताः सन्तो विभाव्यन्ते भावा एभिरिति विभावा इत्युच्यन्ते । यदाह भरतः—

"बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः ।
अनेन यस्मात्, तेनायं विभाव इति संज्ञितः ॥"

ये च तेषां केचित् कार्यरूपा मुखप्रसादादयोऽर्थास्त एव काव्याद्युपदर्श्यमानाः सन्तोऽनुभावयन्ति तांस्तान् भावानित्यनुभावा इत्युच्यन्ते ।

---

व्यक्तिविवेकव्याख्यानम् ।

भावनतोऽस्य काव्येऽवस्थानात् । काव्यग्रहणेन नाट्यमप्युपलक्षितम् । स्थेमभाक्त्वेन स्थायित्वमुचितम् ।

मधुसूदनीविवृतिः ।

हकारिणां कारणकार्यसहकारित्वमेव न तेषां विभावादिपदव्यपदेश्यत्वम् । काव्योपात्तानामेव तेषां तथा व्यपदेशः । ननु कुत एवमित्याह-तेषां भिन्नलक्षणत्वादिति । लौकिकानां हेत्वादीनां स्वरूपमन्यत् काव्योपात्तानां तेषां लक्षणमन्यत् ।

तथाहीत्यादिना भिन्नत्वं दर्शयति—ये लोक इति । स्थेमभाजः स्थायित्वमापन्नाः । आदिपदात् प्रयोगकरणाय नाट्ये वर्णनाद्यर्थम् काव्यादौ आत्मनि स्वस्मिन् अनुसंहिताः रामोऽहं सीताविषयकरतिमान् इत्याकारकज्ञानविषयीकृताः । चित्तवृत्तिविशेषा भावाः ।

नानाभिनयसम्बद्धानिति । यस्मात् हेतोः स्थायिपदव्यपदेश्या अवस्थाविशेषा नाना अनेके ये अभिनयाः । वागङ्गमुखरागात्मानः सत्वलक्षणाश्च अनुभावाः तैः सम्यक् बद्धान् हृदयसंवादक्रमेण तन्मयीभावापन्नप्रमातृभूम्यभेदमुपसंप्राप्तान् रसान् रसनयोग्यचित्तवृत्तिविशेषान् इमान् अर्थात् एभ्यः सामाजिकेभ्यः । भावयतेः बुद्ध्यर्थत्वाद् द्विकर्मकता । भावयन्ति गमयन्ति बोधयन्ति अर्थात् बुद्धिविषयं प्रापयन्ति, तस्मादमी भावा भावपदभाजो विज्ञेयाः । कैर्विज्ञेया इत्याह नाट्येति । नाट्ययोक्तृभिः नाट्यप्रयोगं कारयद्भिरिति भावः ।

बहवोऽर्था इति । वागङ्गादिस्वरूपाणामभिनयानामाश्रयाः जनका ये बहवो-

यदाह भरतः—

"वागङ्गसत्त्वाभिनयैर्यस्मादर्थोऽनुभाव्यते ।
वागङ्गोपाङ्गसंयुक्तः सोऽनुभाव इति स्मृतः ॥"

ये च तेषामन्तरान्तरानवस्थायिनोऽवस्थाविशेषास्तदवान्तरहेतुजनिता उत्कलिकाकाराः केचिदुत्पद्यन्ते, त एव निजनिजविभावानुभाववर्गमुखेनोपदृश्यमानाः सन्तो विशेषेणाभिमुख्येन चरन्ति तेषु तेषु भावेष्विति व्यभिचारिण इत्युच्यन्ते । यदाह भरतः—'विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः' इति ।

ये चैते स्थायिव्यभिचारिसात्त्विकभेदादेकोनपञ्चाशद्भावा उक्तास्ते सर्वे व्यभिचारिण एव । केवलमेषां प्रतिनियतरूपापेक्षो व्यपदेशभेदः । तथा हि स्थायित्वं स्थायिष्वेव प्रतिनियतं, न व्यभिचारिसात्त्विकेषु ।

---

मधुसूदनीविवृतिः ।

ऽर्थाः स्थायिव्यभिचारिणः यस्मादनेन विभाव्यन्ते विशिष्टतया इमे करुणस्य विप्रलम्भस्य वेति विशेषरूपेण ज्ञायन्ते तेन अयं विभाव इति संज्ञितः संज्ञां प्राप्तः ।

वागङ्गसत्त्वाभिनयैरिति । यस्माद्धेतोःवागङ्गसत्वरूपैरभिनयैः अर्थात् एतेषां द्वारा वागङ्गोपाङ्गसंयुक्तः अर्थोऽनुभाव्यते अनुभवविषयीक्रियते स अनुभाव इति स्मृतः।

अन्तरा अन्तरा मध्ये मध्ये । तदवान्तरहेतुभिर्जनितस्य स्थायिनोऽवस्थाविशेषस्य जनका ये अवान्तरहेतवः तैर्जनिताः । यथा मालतीमाधवे—मालतीविषयके माधवानुरागे प्ररूढतां गच्छति सति कपालकुण्डलाप्रभृतीनां मालत्या अपहरणं तदुपमर्दनार्थमुत्साहः क्रोधश्च उत्तरं पुनः माधवकर्तृककपालकुण्डलादीनां हतिः, तयो रतिश्चेत्येवं भावाः संकुचन्ति विकासन्ति उद्गच्छन्ति वारिधौ कल्लोला इव ।

एकोनपञ्चाशद्भावा इति । अष्टौ भावाः स्थायिनः, त्रयस्त्रिंशद् व्यभिचारिणः अष्टौ सात्त्विका एवमेते एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः । ते सर्वे व्यभिचारिण एवेति ।

अत्रायं भावः । स्थायिसात्त्विकव्यभिचारिषु स्थायित्वादिव्यपदेशः सबीजः । तत्र यदि रत्यादयो भावा पूर्णावस्थाकविभावादिभिः परिपुष्टा रसतामापद्यन्ते तदा स्थायित्वेन व्यपदिश्यन्ते । अन्यथा व्यभिचारिण एव । तदुक्तम्—

रसावस्थः परं भावः स्थायितां प्रतिपद्यते । इति ।
रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते । इति ।
रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः । रसा इति शेषः ।
स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः । इति ।
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते । इति च ।

व्यभिचारित्वं व्यभिचारिष्वेव, नेतरयोः । सात्त्विकत्वमपि सात्त्विकेष्वेव, नेतरयोरिति । तत्र स्थायिभावानामुभयी गतिः । न व्यभिचारिसात्त्विकानाम् । ते हि नित्यं व्यभिचारिण एव न जातुचित् स्थायिनः प्रकल्पन्ते ।

यत्तु भावाध्याये स्थायिनां लक्षणमुक्तं तद्व्यभिचारिदशापन्नानामेव

व्यक्तिविवेकव्याख्यानम् ।

**यत्तु भावाध्याय इति** । स्थायिनामपि व्यभिचारित्वं भव(ती?)ति । यथा

मधुसूदनीविवृतिः ।

सात्त्विका अपि कदाचिदुदयन्ते कदाचिदपयन्ति इति तदभिव्यक्तेर्विद्युद्द्योतप्रायत्वाद्व्यभिचारिसमानाः इति व्यभिचारिणः । अतो नायं जन्मसिद्धाधिकारो यत् रत्यादयः स्थायिन एव, स्तम्भचेष्टादयः सात्त्विका एव । लोकेपि चैतद् दृश्यते समानाभिव्यञ्जनाः एकाभिजनाः तुल्यपाणिपादोदरशरीरास्त एव पुरुषाः कुतोऽपि हेतोः क्वचिद्राजत्वं क्वचिद्दासत्वं च लभन्ते इति ।

प्रतिनियतं यद्रूपं विभावादीनां पुष्टापुष्टत्वनिश्चितं यत्स्वरूपं तदपेक्षः तत्साकांक्षः तत्कृतः इति यावत् व्यपदेशभेदः नामभेदः ।

**स्थायिभावानामुभयी गतिरिति** । यदा ये भावा विभावादिभिः प्ररूढाः सन्तो रसत्वं गता तदा स्थायिनः, अन्यथा व्यभिचारिण इत्युक्तमेव ।

**तेहोति** । व्यभिचारिणो हीति । अयमेषामभिप्रायः । यदि व्यभिचारिणामपि व्यभिचारिणः स्युस्तदा तदास्वादे रसान्तरमपि स्यात् । यत्रापि वा व्यभिचार्यन्तरं व्यभिचारिणि सम्भाव्यते यथा पुरूरवस उन्मादे तर्कचिन्तौत्सुक्यमतिप्रभृतयस्तत्रापि तैरुर्वशीविषयिणी रतिरेव पुष्यते । अञ्जिते व्यभिचारिणि भावध्वनौ तु विभावानुभावौ केवलं व्यञ्जकौ न तत्र व्यभिचार्यन्तरापेक्षा व्यभिचार्यन्तरस्यैव प्राधान्यप्रसक्तेरिति । अन्येत्वाहुः प्रकरणादीनां नियामकतया जागरूकत्वे व्यभिचार्यन्तरस्य प्राधान्यासम्भवात् प्रस्तुते तस्मिन् व्यभिचारिणि प्राधान्यमनुभवति स्वविभावानुभावव्यङ्ग्यत्वेन नान्तरीयकतया आक्षिप्तस्य अत एव तन्निमानमावहतो व्यभिचार्यन्तरस्याङ्गत्वेऽपि नास्ति कापि नो हानिः । यथा गर्वादावमर्षस्य, अमर्षादौ वा गर्वस्य, निर्वेदे चिन्तायाः, श्रमे निर्वेदस्य चेति । ननु गुणीभूतत्वं तस्य स्यादिति हानिरिति चेत्, नामकरणसंस्कारे पण्डितोऽसि । अनुभूयते प्राधान्यं व्यपदेशो गुणीभूतत्वेन, मन्ये वेदपाठी असि । वेदाभ्यासजडोऽसि । नान्तरीयकतयाक्षिप्तस्यैव तथात्वम्, विभावो हि केवलमेतादृशस्थले व्यभिचारिणो निमित्तकारणम् न तु रसस्येव सर्वथा आलम्बनोद्दीपनत्वेन अपेक्षित इति ।

**यत्तु भावाध्याय इति** । अत्रायं निष्कर्षः । "तत्राष्टौ भावाः स्थायिनः त्रयस्त्रिंशद् व्यभिचारिणः अष्टौ सात्त्विका इति त्रिभेदाः । एवमेते काव्यरसाभिव्यक्ति-

तेषामवगन्तव्यं नान्येषां, लक्षणवचनस्य वैयर्थ्यप्रसङ्गात्। स्थाय्यनुकरणात्मानो हि रसा इष्यन्ते, ते च प्रधानमिति तल्लक्षणमुखेनैव तेषां स्व-

व्यक्तिविवेकव्याख्यानम् ।

रतेर्देवादिविषयायाः, हास्यस्य शृङ्गारादौ, शोकस्य विप्रलम्भशृङ्गारादौ, क्रोधस्य

मधुसूदनीविवृतिः ।

हेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्या इति, विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः" इति चोक्त्या स्थायिनामपि व्यभिचारित्वनिर्देशो यथा वर्तते तथा व्यभिचारिषु स्थायिनां निर्देशो नास्ति। कृते तु निर्देशे यथा स्थायिनामुभयी गतिस्तथा व्यभिचारिणामपि स्यात्, सिद्धान्तोऽपि "ते हि नित्यं व्यभिचारिण एव न जातुचित् स्थायिनः" इतिस्वरूपो व्याहन्येत । अष्टौ स्थायिन इत्यादिपृथङ् निर्देशस्तु रत्यादिष्वष्टसु स्थायिभवनयोग्यता स्तम्भस्वेदादिष्वष्टसु सात्विकभवनयोग्यता निर्वेदादिषु त्रयस्त्रिंशति केवलं व्यभिचारिभवनयोग्यता इतित्रित्वसंख्यायाः तादृशयोग्यतायाश्च ज्ञापनार्थं परं ते व्यभिचारिण एवेत्युक्तं यत् स्थायिनां लक्षणमुक्तं तद्व्यभिचारिदशापन्नानामेवेति ।

नान्येषामिति । न रसत्वप्राप्तियोग्यानामित्यर्थः । इदानीं भावसामान्यलक्षणमभिधास्यामः, तत्र स्थायिभावान् वक्ष्यामः इत्युक्तेः ।

ते च प्रधानमिति । ते रसाः । तल्लक्षणमुखेन रसस्वरूपनिर्वचनद्वारा । तेषां रत्यादीनाम् ।

स्थाय्यनुकरणात्मानो हि रसा इति । अत्रेदं तत्त्वम् । "त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम्" "लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम्" "सप्तद्वीपानुकरणं नाट्यमेतद्भविष्यति । येनानुकरणं नाट्यमेतत्तद्यन्मया कृतम्" इत्यादिषु भरताचार्यैः तथा "तस्मान्नाट्यरसा इत्यभिव्याख्यास्यामः" इत्यस्य व्याख्यायां "नाट्यमेव रसाः रससमुदायो हि नाट्यम्" इत्यभिनवगुप्तैश्च नाट्यस्य अनुकरणात्मकतोक्ता । एवं हि अनुकरणात्मकनाट्यस्य रसत्वात् अनुकरणात्मानो रसा इत्येका संगतिः । मुख्यतो रामादिगतः स्थायी रतिर्लिङ्गबलतोऽनुकर्तृस्थत्वेन प्रतीयते इति स्थायी अनुकरणरूपः तथात्वादेव च शृङ्गारादिनामान्तरेण व्यपदिष्टः। विभावाः काव्यात्प्रत्येतव्याः अनुभावाः शिक्षातः संचारिणः कृत्रिमस्वानुभावतः स्थायी तु एष्वेकस्मादपि न प्रत्येतव्यः। केवलं सोऽनुक्रियते तत एव विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति भरतसूत्रे स्थायिशब्दो नोपात्तः तेन अनुक्रियमाणा रतिः शृंगारः । एवं स्थाय्यनुकरणात्मानो रसा इति अपरा संगतिः । एतच्च काव्येऽपि सङ्गच्छतेऽत एव "काव्येऽपि नाट्यायमाना एव रसा काव्यार्थविषये हि प्रत्यक्षकल्पसंवेदनोदये रसोदय" इति "काव्यं तावन्मुख्यतो दशरूपकात्मकमेवे"ति "काव्यं च नाट्यमेवे"ति च अभिनवगुप्तपादाः ।

रूपावगमसिद्धेः, तेषां बिम्बप्रतिबिम्बन्यायेनावस्थानात्, स्थायिभावेषु च निर्वेदादिष्विव व्यभिचारिणामनुपादानात्। तदुपादाने हि तेषां स्थायित्वमेव स्यान्न व्यभिचारित्वं निर्वेदादिवत्। तस्माद्योग्यतामात्रप्रवर्तितोऽयं वर्गत्रयविभागोपदर्शनाय व्यभिचारिष्वपि स्थायिव्यपदेशस्तन्मा-

व्यक्तिविवेकव्याख्यानम्।

प्रणयकोपादौ, विस्मयस्य व्रीरादौ, उत्साहस्य शृङ्गारादौ, भयस्याभिसारिकादौ,

मधुसूदनीविवृतिः

प्रयोगत्वमनापन्ने काव्ये नास्वादसम्भवः। इति।

वर्णनोत्कलिकाभोगप्रौढोक्त्या सम्यगर्पिताः॥

उद्यानकान्ताचन्द्राद्याः भावाः प्रत्यक्षवत्स्फुटाः। इति च भट्टेन्दुराजः।

ध्वनिवादिनामेष आशयः। येन यत्र सप्तद्वीपानुकरणं नाट्यमित्युक्तं तेन तत्रैव "नाट्यं वृत्तान्तदर्शकमित्युक्तम्" तथा चेयं सङ्गतिः। निराधारस्य वृत्तस्य दर्शयितुमशक्यतया निर्व्याजसहजौदात्त्यौदार्यधर्मादिविषये रामबलिप्रह्लादादीनां तथा प्रसिद्धेश्च केवलं वृत्ताश्रयतया रामादयो नामग्राहमुक्ताः। न तत्र रामत्वेन सीतात्वेन बोधे किमपि प्रयोजनं निष्पद्यते। केवलमुपदेशेन एतादृशाचरणेन उदयास्तमयौ भवत इत्याद्यर्थौ विनेयेभ्यः शिक्षयितुं दुःशकः, तावन्मात्रबोधने च नाट्यस्य तात्पर्यम्। अन्यथा परचेष्टानुकरणाद्धासः समुपजायते। इति उपहासमात्रं स्यात् न केवलमुपहासः यदर्थमयमारम्भः स एव विनश्येत्।

अथ च अनुकरणं नाम पश्चात्करणं सदृशकरणं वा तच्च नियतस्यैव। अनियतत्वे च को वानुकारार्थः, प्रत्युत असंभवश्च स्यात्। पश्चात्करणमनुकरणं चेत् तदा कार्यमात्रमेवानुकरणात्मकं स्यात् न च तथा प्रतिपत्तिः। सदृशकरणं नामानुकरणं च मुख्यादर्शने तत्स्वभावानुपलब्धौ च कर्तुं दुःशकम्। नह्यन्यगतरतिरुपलभ्यते अन्येन। तच्छरीरं तन्निष्ठप्रतिशीर्षकादि रोमाञ्चगद्गदिकादि भुजाक्षेपवलनप्रभृति भ्रूक्षेपकटाक्षादिकं च जडत्वेन भिन्नेन्द्रियग्राह्यत्वेन भिन्नाधिकरणत्वेन च चित्तवृत्तिरूपाया रतेरनुकारत्वेन वक्तुं न शक्यते। यद्युच्यते क्रोधशोकरूपाश्चित्तवृत्तीरनुकरोति, तत्कथं करोतीति गवेषणीयम्। न हि नटो रामसादृश्यं स्वात्मनः शोकं करोति सर्वथैव तस्य तदभावात्। स्वीये भावे वाननुकार एव। न च नटोऽनुभावकः स तु पात्रम्, मद्यास्वादोपायकचषकादिरिव। किञ्च नान्यद्वस्तु विद्यते यच्छोकेन समानं स्यात्। नचाश्रुपातादिना शोकस्यानुकारः, तद्विलक्षणत्वात्। एवमपि न भवेत्—उत्तमप्रकृतेः ये शोकानुभावास्ताननुकरोतीति। तत्रापि सजातीयानित्येव वक्तुं पार्यते न तत्सदृशानिति। सदृशत्वं च न विशेषात्मना युगपदुपपन्नं भवति। यदि स्यात्तर्हि क्रमेणैव। ततश्च नियतस्यैवानुकारः। तत्रापि कस्य। यस्य कस्यचिदिति चेत्सोऽपि विशिष्टतां विना कथं बुद्धौ

त्रविप्रलम्भकृतोऽन्येषां स्थायिभावलक्षणभ्रम इत्यलमप्रस्तुतवस्तुविस्तरेण ।

तदेवं विभावादीनां हेत्वादीनां च कृत्रिमाकृत्रिमतया काव्यलोकविषयतया च स्वरूपभेदे विषयभेदे चावस्थिते सत्येकत्वासिद्धेर्यदा विभावादिभिर्भावेषु रत्यादिष्वसत्येष्वेव प्रतीतिरुपजन्यते तदा तेषां तन्मात्रसारत्वात् प्रतीयमाना इति गम्या इति च व्यपदेशा मुख्यवृत्त्योपपद्यन्त एव । तत्प्रतीतिपरामर्श एव च रसास्वादः स्वाभाविक इत्युक्तम् ।

आस्तां वा रत्यादिर्नित्यपरोक्षः । प्रत्यक्षोऽपि ह्यर्थः साक्षात् संवेद्यमानः सचेतसां न तथा चमत्कारमातनोति यथा स एव सत्कविना वचनगोचरतां गमितः । यदुक्तम्—

"कविशक्त्यर्पिता भावास्तन्मयीभावयुक्तितः ।
तथा स्फुरन्त्यमी काव्यान्न तथाध्यक्षतः किल ।।" इति ।

सोऽपि च तेषां न तथा स्वदते, यथा तैरेवानुमेयतां नीत इति स्व-

---

व्यक्तिविवेकव्याख्यानम् ।

जुगुप्सायाः संसारनिन्दादौ, शमस्य कोपा(दि?)भिहतस्य प्रसादोद्गमादौ । अनुकार्यस्य बिम्बत्वमनुकरणस्य प्रतिबिम्बत्वम् ।

मधुसूदनीविवृतिः ।

आरोपयितुं शक्यः । य एवं करोतीति चेत्स्वात्माऽपि मध्ये तस्यानुप्रविष्टः । तर्हि समासोऽनुकार्यानुकर्तृभाव इति ।

तदेवं विभावादीनामिति । तदेवम् "न च लोके विभावादयो भावा वे"ति प्रघट्टकेन विभावादीनामकृत्रिमत्वेन हेत्वादीनां कृत्रिमत्वेनेति स्वरूपभेदे काव्यगतत्वेन लोकगतत्वेन चेति विषयभेदे च । एकत्वासिद्धेः भिन्नत्वेन प्रतीतेः ।

असत्येष्वेवेति । अनुकार्ये विभावादयः पारमार्थिकाः अनुकर्त्तरि तु असत्या एवेत्यभिमानः । तन्मात्रसारत्वात् प्रतीतिमात्रसारत्वात् । मुख्यवृत्त्या साक्षादेव नोपचरितवृत्त्या । तत्प्रतीतिपरामर्श एव विभावादिभिः रत्यादिविषयकप्रतीतेः परामर्शः अनुभवात्मा । स एव रसास्वादः ।

आस्तामिति । रत्यादयो नितान्तमपरोक्षाः स्वस्मिन् सामाजिकेऽविद्यमानत्वात् । कविवचनगोचरीभूता आस्वादं गमयन्तीति कथा तिष्ठतां नाम परं प्रत्यक्षेप्यर्थे इयमेव दशा ।

कविशक्त्यर्पिता इति । कविना स्वशक्तिद्वारा अर्पिताः अमी रत्यादयो भावाः तन्मयीभावकारिण्या युक्त्या यथा चमत्कुर्वन्तः स्फुरन्ति प्रतीयन्ते तथा अध्यक्षतः प्रत्यक्षं दृष्टा अपि न स्फुरन्ति ।

भाव एवायं न पर्यनुयोगमर्हति । तदुक्तम्—

"नानुमितो हेत्वाद्यैः स्वदतेऽनुमितो यथा विभावाद्यैः ।
न च सुखयति वाच्योऽर्थः प्रतीयमानः स एव यथा ॥"

इति । ध्वनिकृताप्युक्तम्—'साररूपो ह्यर्थः स्वशब्दानभिधेयत्वेन प्रकाशितः सुतरां शोभामावहति' इति । प्रतीतिमात्रपरमार्थं च काव्यादि तावतैव विनेयेषु विधिनिषेधव्युत्पत्तिसिद्धेः ।

तदुक्तम्—'भ्रान्तिरपि सम्बन्धतः प्रमा' इति ।

"मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।
मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥" इति च ।

व्यक्तिविवेकव्याख्यानम् ।

**नानुमित इति** । अत्र वाच्यापेक्षया गम्यतालक्षणस्य प्रतीयमानस्य चारुत्वम् । तस्यापि हेत्वाद्यैर्लौकानुमितस्य न तथास्वादः यथा काव्ये विभावाद्यैरनुमीयमानस्येत्यर्थः ।

**मणिप्रदीपप्रभयाविषये अभिधावतोः** प्रतिपत्त्रोः । अत्र प्रतीतिसारत्वात् काव्यस्यानुमेयगतं वास्तवावास्तवत्वमप्रयोजकम् । उभयथा चमत्कारप्रतीतिलक्षणार्थक्रियासिद्धेः । प्रत्युतावास्तवत्वे यथा सिध्यति न तथा वास्तवत्व इति काव्यानुमितेरेषानुमानान्तरविलक्षणतेत्यनुमानवादिनोऽयमभिप्रायः । व्यक्तिवादिनः पुनरवस्तुमुखेन प्रतिबद्धाद्वस्तुनः प्रतीतावर्थक्रियाविसंवादादस्त्वनुमानत्वम् । अवस्तुन एव तु प्रतीतौ कथमनुमानत्वं स्यात् । अर्थक्रिया तु व्यक्तिपक्ष उपपद्यते । व्यज्यमानस्य वासनात्मनः स्थायिनो वस्तुत्वादित्याशयः ।

मधुसूदनीविवृतिः ।

**नानुमित इति** । हेत्वाद्यैः लौकिकैर्धूमादिभिरनुमितोऽर्थो वह्न्यादिः न तथा स्वदते यथा विभावाद्यैः काव्योपात्तैस्तैरनुमितः स्वदते । वाच्योर्थस्तथा न सुखयति सुखकरो भवति यथा स एव प्रतीयमानः गम्यः सन् सुखयति ।

ननु असद्भिर्विभावादिभिरसतां रत्यादीनां प्रतीयमानत्वे कोर्थस्तैः शशश्रृङ्गायमाणैः विनेयानां साधितो भवति—इत्यत आह— **तदुक्तमिति—भ्रान्तिरपि सम्बन्धतः प्रमेतीति** । भ्रान्तिरपि भ्रमात्मकं ज्ञानमपि सम्बन्धतः प्रमा प्रमाणम् अर्थक्रियाकारिणीति यावत् भवति । यथा असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते" इति भावः ।

**मणिप्रदीपप्रभयोरिति** । वस्तुत इयं मणिप्रभैवेति अजानतः किन्तु चाकचिक्येन मणिबुद्धिं कृत्वा प्रवर्त्तयितुः । तथा प्रदीपप्रभायामपि मणिबुद्ध्या अभिधावतः प्रवर्त्तयितुः पुरुषस्य उभयत्र प्रभायां मिथ्याज्ञानस्य भ्रान्तेरविशेषेऽपि समानेऽपि अर्थक्रियां प्रति विशेषो भेदः । एकत्र मणिलाभः अन्यत्र केवलमभिधावनम् । परं प्रवृत्तिस्तु समानैव ॥

तेनात्र गम्यगमकयोः सचेतसां सत्यासत्यत्वविचारो निरुपयोग एव । काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यत्वविचारो निरुपयोग एवेति तत्र प्रमाणान्तरपरीक्षोपहासायैव सम्पद्यत इति ।

तत्र हेत्वादिभिरकृत्रिमैरकृत्रिमा एव प्रत्याय्यन्ते । तत्रैषामनुमेयत्वमेव न व्यङ्ग्यत्वगन्धोऽपीति, कुतस्तत्र सुखास्वादलवोऽपि सम्भवति । एष एव लोकतः काव्यादावतिशय इत्युपपद्यत एव रत्यादौ गम्ये सुखास्वादप्रयोजनो व्यङ्ग्यत्वोपचार इति ।

मुख्यवृत्त्या द्विविध एवार्थो वाच्यो गम्यश्चेति । उपचारतस्तु व्यङ्ग्यस्तृतीयोऽपि समस्तीति सिद्धम् ।

वाचो गुणीकृतार्थत्वं न सम्भवति जातुचित् ।

---

व्यक्तिविवेकव्याख्यानम् ।

शब्दस्योपसर्जनीकृतार्थत्वं विशेषणं व्यक्तिवादिनो यथा सम्भवति तथा प्राक् प्रतिपादितम् ।

(१) वाचो गुणीकृतार्थत्वं व्यङ्ग्यमर्थं प्रति स्थितम् ।

मधुसूदनीविवृतिः ।

तेनात्रेति । अत्र काव्ये । तत्र वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यत्वविषये । तत्र हेत्वादिभिरिति । तत्र काव्यविषये । तत्रैषामिति । यत्र कृत्रिमैर्हेतुभिः कृत्रिमस्यार्थस्यप्रतिपत्तिस्तत्र लोके । रत्यादिष्वनुमेयेषु व्यङ्ग्यत्वव्यवहारः लक्षणया । तस्याः प्रयोजनं फलमिति यावत् सुखास्वादः । लोके च तेषु व्यङ्ग्यत्वलेशोऽपि नास्ति व्यङ्ग्याभावे च कुत आस्वादः । एष एव लोककाव्ययोर्मार्गभेदे हेतुरिति भावः ।

इदं तु बोध्यम् । यैर्लोके नास्वादः तैरेव काव्योपात्तैरास्वाद इति साधनार्थं यां सरणिराहता ग्रन्थकृता तया न समीहितसिद्धिः । तथाहि—यत्रासतोऽपि हि सुखास्वादजनकत्वं तथा तादृशस्यैव आस्वाद्यत्वं तत्र वस्तुसतः कुतो नास्वाद्यत्वम् आस्वादजनकत्वं च । एवंच लौकिकेष्वपि तेष्वास्वादसम्भवः । अन्यच्च-यत्र धूमज्ञानं मिथ्या तत्र तदभ्यासवशादपि यथाऽग्नेरनुमानमयुक्तमेव अर्थात् तादृशानुमितिरेव नोदेति तत्रैव धूमानुकारान्नीहारादग्न्यनुकारस्य जपापुष्पस्य अनुमितिः कथं समुदियात् । अतोऽलीकैर्विभावादिभिः कथमलीकाया रतेरनुमितिः । यतस्त्वन्मते अनुकार्ये रामादौ रत्यादयः पारमार्थिका अनुकर्त्तरि नटे च असन्त एव । व्यक्तिवादिमते तु सामाजिकैः स्वीयैव रतिरास्वाद्यते नान्यगता रतिरनुमीयते तस्याश्च वासनात्मकतया पारमार्थिकत्वमेवेति सर्वं निरवद्यम् ।

एतावता व्याख्यानेन सिद्धं वस्तु संगृह्य श्लोकेन दर्शयति—वाचो गुणीकृता-

---

(१) 'वाचो गुणीकृतार्थत्वमिति' कारिकायाः प्रतिद्वन्द्विकारिकेयम् ।

तदर्थं तदुपादानादुदकार्थं दृतेरिव ॥ इति सङ्ग्रहश्लोकः ।

नापि वाच्यप्रतीयमानयोर्मुख्यवृत्त्या व्यङ्ग्यव्यञ्जकभावः सम्भवति व्यक्तिलक्षणानुपपत्तेः । तथा हि । सतोऽसत एव वार्थस्य प्रकाशमानस्य सम्बन्धस्मरणानपेक्षिणा प्रकाशकेन सहैव प्रकाशविषयतापत्तिरभिव्यक्ति-

---

व्यक्तिविवेकव्याख्यानम् ।

तदर्थं तदुपादानादुदकार्थं दृतेरिव ॥ ४ ॥

इति सङ्ग्रहश्लोकः । तत्राविवक्षितवाच्ये ध्वनौ व्यञ्जकवाच्यस्यानपेक्षणीयत्वमेव गुणीकृतत्वमिति शब्दो गुणीकृतार्थः ।

शब्दे गुणीकृतार्थत्वं वाच्यस्य (१)क्वाप्यसम्भवः ।
बाधितत्वादथा(२)न्यत्र व्यङ्ग्यं प्रत्यनपेक्ष्यता ॥ ५ ॥

इति सङ्ग्रहश्लोकः । शब्दस्य तु व्यापारान्तरं स्वविषय एव समर्थयिष्यते ।

इह च सदसद्विषयत्वेनाभिव्यक्तिर्द्विधा प्रतिपादिता । तत्रापि सद्विषया त्रिप्रकारा । शक्त्यवस्थस्य व्यक्तीभावः यथा दध्यादेः । आविर्भूतस्य च घटादेः सन्तमसादिप्रतिबन्धकप्रत्ययानिरासादप्रकाशमानस्य प्रदीपादिप्रकाशकेन सह प्रकाशनम् । अनुभूतस्य च संस्कारात्मना स्थितस्य कुतश्चित् प्रबोधकप्रत्ययात् प्रबोधमात्रम् । तदपि प्रबोधकत्रैविध्यात् त्रिविधम् । प्रबोधकं च नान्तरीयकं धूमादि, सदृशवस्त्वन्तरं, वाचकः शब्द इति त्रिविधम् । तदेवं पञ्चधा सद्विषयाऽभिव्यक्तिः । असद्विषया त्वेकैवेति षोढा व्यक्तिराशङ्क्य प्रकृते दूषिता । तत्र व्यक्तिवादिना घटप्रदीपन्यायेन सद्विषया व्यक्तिरङ्गी-

मधुसूदनी विवृतिः

र्थत्वमिति । शब्दः स्वमर्थमसम्भवान्न गुणीकरोति । अर्थबोधनायैव शब्दस्योपादानात् यथा जलार्थं घटस्योपादानात् । एवमत्र यथा जलार्थमुपात्तो घटो जलं न गुणीकरोति तथैव अर्थबोधनायैव उपादीयमानः शब्दः स्वार्थं कथं गुणीकुर्यात् ।

रत्यादिषु व्यङ्ग्यत्वप्रयोग उपचारेणेति संसाध्य मुख्यवृत्त्यैव तत्र तत्प्रयोग इति ध्वनिकारोक्तं निराकरिष्णुः व्यक्तिस्वरूपं परिच्छिकीर्षुः भूमिकामारचयति–नापि वाच्यप्रतीयमानयोरिति । तथाहीति व्यक्तिं लक्षयति–सतोऽसत एवार्थस्येति । सतो विद्यमानस्य अर्थस्य घटादेः । असतो मिथ्याभूतस्य अर्थस्य इन्द्रचापादेः । सम्बन्धस्मरणम् अनयोः शब्दार्थयोः सम्बन्ध इति स्मृतिं न अपेक्षते न पर्यालोचयति यस्तेन प्रकाशकेन । न हि प्रकाशकं दीपादि वस्तु पदपदार्थयोः सम्बन्धं गवेषते तस्य तु केवलं प्रकाशनमात्रं व्यापारः । सहैव एककालावच्छेदेन प्रकाशविषयतापत्तिः

---

(१) क्वापीति निश्वासान्ध इत्यादौ अत्यन्ततिरस्कृतवाच्ये ।
(२) अन्यत्रेति 'रामोऽस्मि सर्वं सहे' इत्यादौ अर्थान्तरसंक्रमितवाच्ये ।

रिति तल्लक्षणमाचक्षते । तत्र सतोऽभिव्यक्तिस्त्रिविधा, तस्य त्रैविध्यात् ।

तत्र कारणात्मनि कार्यस्य शक्त्यात्मनावस्थानात् तिरोभूतस्येन्द्रिय-गोचरत्वापत्तिलक्षण आविर्भाव एका, यथा क्षीराद्यवस्थायां दध्यादेः । तथावस्थानानुपगमे तु सैवोत्पत्तिरित्युच्यते कैश्चित् । तस्यैवाविर्भूतस्य कुतश्चित् प्रतिबन्धादप्रकाशमानस्य प्रकाशकेनोपसर्जनीकृतात्मना सहैव प्रकाशो द्वितीया, यथा प्रदीपादिना घटादेः । तदुक्तम्—

"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः ।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात् ॥"

इति । ध्वनिकारेणाप्युक्तं—'स्वरूपं प्रकाशयन्नेव परार्थावभासनो व्यञ्जक इत्युच्यते यथा प्रदीपो घटादेः' इति ।

तस्यैवानुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्तिनः कुतश्चिदव्यभि-चारिणोऽर्थान्तरात् तत्प्रतिपादकाद्वा संस्कारप्रबोधमात्रं तृतीया, यथा धूमाद्वह्नेः, यथा चालेख्यपुस्तकप्रतिबिम्बानुकरणादिभ्यः, शब्दाच्च गवा-

---

व्यक्तिविवेकव्याख्यानम् ।

कृता । यथा च न दोषस्तथोपपादितम् । शिष्टं तु पक्षपञ्चकमनभ्युपगमपराहतमेव ।

मधुसूदनीविवृतिः ।

प्रकाशनम् । यस्मिन् समये प्रकाशकस्य ज्ञानं तस्मिन्नेव प्रकाश्यस्यापि भवेत्तदेव व्यक्तिस्वरूपम् ।

तत्र कारणात्मनि मृत्तिकादौ बीजे वा तिरोभूतस्य लीनस्य कार्यस्य घटादेः वृ-क्षस्य। तिरोभूतत्वे हेतुः–शक्तिरूपेण अवस्थानम् । शक्तिः कार्यजननसामर्थ्यम् । इन्द्रिय-गोचरताः साक्षात्कारः । तथावस्थानस्य शक्त्यात्मना अवस्थानस्य अनुपगमे अनुप-लब्धौ । कार्यजनकत्वरूपायाः शक्तेः स्वात्मन उपयोग उत्पत्तिः । इदं च सांख्यमतेन । यथा मृदि विद्यमानस्य घटस्याविर्भाव एव उत्पत्तिस्तथैव कारणात्मना विद्यमानानां तत्त्वानामाविर्भावोऽपि उत्पत्तिर्विवक्षिता इति तेषामाशयः ।

कुतश्चित्प्रतिबन्धात् सन्तमसादेः । उपसर्जनीकृतात्मना गुणीभूतेन ।

स्वज्ञानेनान्यधीहेतुरिति । अर्थे सिद्धे सति स्वज्ञानेन स्वं व्यञ्जकं तस्य ज्ञानेन सह अन्यस्य व्यङ्ग्यस्य धियो बुद्धेः हेतुः कारणम् स्वबोधसमकालमेवेतरबोधहेतुर्व्य-ञ्जको मतः । यथा घटधीकारणं दीपः । अन्यथात्वे स्वज्ञानसमकालमेवेतरबोधहेतुत्वा भावे अस्य व्यञ्जकस्य कारकाख्यहेतोः को विशेषः को भेदः ।

तस्यैव आविर्भूतस्यैव पूर्वं क्वचित्स्थले अनुभूतस्य अत एव संस्कारात्मना संस्काररूपेण अन्तर्विपरिवर्त्तिनः अन्तः करणे वर्तमानस्य कुतश्चित् अव्यभिचारिणो नियताद् वस्तुविशेषाद् धूमात्, आलेख्यात्, पुस्तकात् लेप्यादिकर्मणः, प्रतिबिम्बात्,

देः। असतस्त्वेकप्रकारैव, तस्य प्रकारान्तरासम्भवाद्, यथार्कालोकादिनेन्द्रचापादेः। इति।

न चैतल्लक्षणं वाच्ये सङ्गच्छते। तथा हि—सतोऽभिव्यक्तिराद्ययोरर्थयोर्लक्षणं न तत्प्रतीयमानेष्वेकमपि संस्प्रष्टुं क्षमते तस्य दध्यादेरिवेन्द्रियविषयभावापत्तिप्रसङ्गाद् घटादेरिव वाच्यार्थसहभावेनेदन्ताप्रतीतेरसम्भवात्। न च स्वरूपासंस्पर्शि लक्षणं भवति।

तृतीयस्यास्तु यल्लक्षणं तदनुमानस्यैव सङ्गच्छते, न व्यक्तेः। यदुक्तं–'त्रिरूपाल्लिङ्गाद्यदनुमेये ज्ञानं तदनुमान' मिति। तच्चानुमानमेव। न ह्यर्थादर्थान्तरप्रतीतिरनुमानमन्तरेणार्थान्तरमुपपद्यते। उपमानादीनां च तत्रैवान्तर्भावात्।

---

मधुसूदनीविवृतिः।

अनुकरणात्, अथवा वस्तुविशेषप्रतिपादकशब्दात् केवलं संस्कारप्रबोधः वासनाभ्युत्थानम् तृतीया अभिव्यक्तिः। असतोऽभिव्यक्तिः। एतल्लक्षणम् अभिव्यक्तिलक्षणम्।

सतोऽभिव्यक्तिराद्ययोरर्थयोरिति विसंस्थुलः पाठः। सतोऽभिव्यक्तेराद्यं द्वयं यत् लक्षणम् तदेकमपि लक्षणं प्रतीयमानेषु व्यङ्ग्यपदाभिधेयेषु संस्प्रष्टुं मनागपि सम्प्रष्टुं न क्षमते न सहते। प्रथमस्मिन् लक्षणे तस्य प्रतीयमानस्य दध्यादेरिवेन्द्रियसाक्षात्कारः स्यात्। द्वितीयस्मिन् लक्षणे घटादेरिव वाच्यार्थसमकालम् अयमीदृग् स इति प्रतीतेर्ज्ञानस्यासंभवात्।

ननु दृष्टान्तदार्ष्टान्तयोर्न समानमनुगमो लक्षणस्य सादृश्यस्य भेदघटितत्वात्, इत्यत आह—न च स्वरूपासंस्पर्शीति। यल्लक्षणं वस्तुनः स्वरूपमेव न स्पृशति अनुगतिस्तु पश्चात्पदा। न तल्लक्षणम् भवतीति शेषः।

तृतीयस्या अभिव्यक्तेः। अनुमेये इति विषयसप्तमी। ततश्च अनुमेयविषयकं ज्ञानम्। तच्चानुमानमेवेति। ततश्च सा अभिव्यक्तिरनुमानमेव। तदिति क्लीबनिर्देशः अनुमानाभिप्रायेण। अनुमानमन्तरेण अनुमानव्यतिरिक्तम् अर्थान्तरम् अभिव्यक्तिनामकम्।

ननु यत्र गोसदृशो गवय इत्यत्र गोरूपात्सदृशादर्थाद्गवयस्यार्थान्तरस्य ज्ञानं तदुपमानम्, यत्र यज्ञदत्तं दृष्ट्वा देवदत्तं स्मरति सा स्मृतिः, इत्युपमानस्मृत्यादिष्वपि अर्थादर्थान्तरप्रतीतिरित्यनुमानप्रकारत्वेऽपि नानुमानम् तथैव अभिव्यक्तिरपि अनुमानात् पृथगित्यत आह—उपमानादीनामिति। उपमानप्रभृतेः तत्रैव अनुमान एवान्तर्भावः। नानुमानात् पृथग्भूतमुपमानादि व्याप्तिपरामर्शौ विना एषामनवस्थितेः। विशेषस्तु आकरे द्रष्टव्यः।

यदाहुः-'न चान्यदर्शनेऽन्यकल्पना युक्तातिप्रसङ्गात् । तस्य नान्तरीयकतायां स्यात् । न हि यथाविधसिद्धः तथाविधन्निधानं सूचयति । सामान्येन च सम्बधिनार्थप्रतिपत्तिरनुमानमिति द्वे एव प्रमाणे' इति ।

न च वाच्यादर्थादर्थान्तरप्रतीतिरविनाभावसम्बन्धस्मरणमन्तरेणैव सम्भवति, सर्वस्यापि तत्प्रतीतिप्रसङ्गात् । नापि सहभावेन, धूमाग्निप्रतीत्योरिव तत्प्रतीत्योरपि क्रमभावस्यैव संवेदनाद् इत्यसम्भवो लक्षणदोषः ।

अथ रसाद्यपेक्षया तयोः सहभावेन प्रकाशोऽभिमत इत्युच्यते, अव्याप्तिस्तर्हि लक्षणदोषः । वस्तुमात्रालङ्कारप्रकाशस्य प्रकाशकासहभावेनाव्याप्तेः ।

न च रसादिष्वपि विभावादिप्रकाशनसहभावेन प्रकाशनमुपपद्यते । यतस्तैरेव कारणादिभिः कृत्रिमैर्विभावाद्यभिधानैरसन्त एव रत्यादयः प्रतिबिम्बकल्पाः स्थायिभावव्यपदेशभाजः कविभिः प्रतिपत्तृप्रतीतिपथमुपनीयमाना हृदयसंवादादास्वाद्यत्वमुपयन्तः सन्तो रसा इत्युच्यन्ते । न च कारणादिभिः कार्यादयः प्रतिबिम्बकल्पाः सहैव प्रकाशितुमुत्सहन्ते

---

मधुसूदनीविवृतिः ।

आकरमुद्धरति-न चान्यदर्शन इति । अन्यस्य दर्शने अनुभवे इत्यर्थः । अन्यस्य उपमानादेः कल्पना विभागरचना पृथङ् न युक्ता उचिता । ननु किमन्यस्य कल्पनैव नास्तीत्यत आह-तस्य नान्तरीयकतायामिति । नान्तरीयकतायां अवश्यम्भावितायां तस्य अन्यस्य कल्पना युक्ता स्यात् । ननु क्वेयं स्थितिरित्यत आह—नहीति । यत्र यथाविधसिद्धो वस्तुविशेषः तथाविधस्य वस्तुनः सन्निधानं सामीप्यं न सूचयति बोधयति तत्र अर्थान्तरस्य कल्पना युक्ता । अतः सामान्येन सामान्यरूपेण सम्बन्धिद्वारा एकसम्बन्धिज्ञानमपरसम्बन्धिनः स्मारकं भवति इति नियमात् । अर्थस्य प्रतिपत्तिः ज्ञानम् । तदेकं प्रमाणम् शब्द इत्यर्थः । द्वितीयं च अनुमानमिति द्वे प्रमाणे इति । अविनाभावो व्याप्तिः । तत्प्रतीत्योः वाच्यव्यङ्ग्यज्ञानयोः ।

ननु रसाद्यसंलक्ष्यक्रमेषु सहभाव एवेति चेदाह—अथ रसाद्यपेक्षयेति । तयोः वस्तुमात्रालंकारयोः । प्रकाशकासहभावेनेति पाठः ।

विभावाद्यभिधानैः विभावादिनामधेयैः । प्रतिपत्तुः श्रोतुः दर्शकस्य च प्रतीतिपथं ज्ञानविषयम् । उपनीयमानाः काव्येन नाट्येन च । कविभिरिति नटानां च चोपलक्षणम् । कवयो हि लौकिकरतिवासनानुविद्धास्तथा विभावानाहरन्ति नटाश्चानुभावान् यथा रत्यास्वादे शृङ्गारो भवति । परमार्थतः रतिक्रीडा च सार्धं कामिनेरेव तत्रैव सुखधाराया विश्रान्तेः अपरस्य तु ऋतुमाल्यालंकारादिविषयसौन्दर्यस्य कविना निबद्धस्यास्वादः अत एव रत्यादयः प्रतिबिम्बकल्पाः । पूर्वं कारणम् उत्तरं च कार्यमिति नियमः सहभावे तु पूर्वोत्तरीभावरूपस्य नियमस्य भङ्गात् कार्यकारणभावोपि भग्नः

कार्यकारणभावावसायस्यैवावसादप्रसङ्गाद्। यत्र तु तल्लक्षणं मुख्यतया सम्भवति तत् काव्यमेव न भवतीति कुत एव तद्विशेषध्वनिरूपता स्यत्।

द्विविधो हि प्रकाशकोऽर्थ उपाधिरूपः स्वतन्त्रश्चेति। तत्र ज्ञानशब्दप्रदीपादिरुपाधिरूपः। तदुक्तं–'त्रयः प्रकाशाः स्वपरप्रकाशा' इति। अन्यः स्वतन्त्रो धूमादिः। तत्राद्यस्तावद् भवद्भिर्नाभ्युपगन्तव्य एव प्रत्यक्षाभिधेययोरेवार्थयोः काव्यतापत्तिप्रसङ्गात्। अन्यस्य तु लिङ्गत्वमेवोपपद्यते न व्यञ्जकत्वं व्यक्तेरनुपपत्तेः। न च त्रिविधस्यापि व्यङ्ग्याभिमतस्यार्थस्य प्रकाशकसहभावेन प्रकाशस्तस्यापि ध्वनिकारस्याभिमतः।

यदयमाह—'न हि विभावानुभावव्यभिचारिण एव रसा इति कस्यचिदवगमः। तत एव च तत्प्रतीत्यविनाभाविनी रसादीनां प्रतीतिरिति तत्प्रतीत्योः कार्यकारणभावेनावस्थानात् क्रमोऽवश्यम्भावी। स तु लाघवान्न प्रकाशत इत्यलक्ष्यक्रमा एव सन्तो व्यङ्ग्या रसादय' इति।

---

व्यक्तिविवेकव्याख्यानम्।

यत्र तु तल्लक्षणमिति। व्यक्तिलक्षणं प्रदीपघटादौ। उपाधिरूप इति उपाधिस्वरूपोपरञ्जनेनान्यप्रतीतिहेतुः। तथा हि–ज्ञानं, ज्ञेयं गर्भीकृत्य ज्ञातोऽयमर्थ इति ज्ञेयं प्रकाशयति; शब्दोऽप्यध्यवसायाश्रयेण स्वरूपं प्रकाशयन्नर्थप्रकाशकः।

विषयत्वमनापन्नैश्शब्दैर्नार्थः प्रकाश्यते।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः॥"

मधुसूदनीविवृतिः।

सुतराम्। तल्लक्षणम् निर्दिष्टाभिव्यक्तिलक्षणम्। तद्विशेषध्वनिरूपता काव्यविशेस्य ध्वनिसंज्ञत्वम्।

त्रयः प्रकाशाः स्वपरप्रकाशा इति। ज्ञानरूपः स्वप्रकाशः। शब्दरूपः प्रदीपादिरूपः परप्रकाशः। आदिपदात् मण्यादेः परिग्रहः। आद्यस्तावदिति। आद्य उपाधिरूपः। ज्ञानस्य प्रदीपादेश्च अभ्युपगमे प्रत्यक्षभूतस्यार्थस्य, शब्दस्य च स्त्रीकारे अभिधेयार्थस्य काव्यत्वं स्यात। अन्यस्य तु स्वतन्त्रस्य धूमादेः।

ननु कुतोऽन्यस्य स्वतन्त्राख्यस्य प्रकाशकस्यार्थस्य लिङ्गत्वमेव कुतो न व्यञ्जकत्वमित्यपेक्षायामाह—न च त्रिविधस्यापीति। अयं भावः। प्रकाशकसहभावेन प्रकाश्यार्थप्रकाशो व्यक्तिर्भवति। एवंविधा च सा विभावादिप्रतीतिरसादितीत्योः कार्यकारणभावेन अवस्थितेः पूर्वापरक्रमवत्तयाभिमानात् ध्वनिकारैरस्वीकृता इत्युच्यते न व्यञ्जकत्वं व्यक्तेरनुपपत्तेरिति।

कथमवगतं ध्वनिकारस्यानभिमतमिति तन्मतमुद्धरति—यदयमाह—नहि विभाव इत्यादिना रसादय इत्यन्तेन। स्पष्टम्।

अथैतद्दोषभयात् सहभावानपेक्षमेतल्लक्षणमुच्यते । तथाप्यनुमानेऽतिव्याप्तिः । तत्राप्युपसर्जनीकृतात्मना धूमादिना प्रकाश्यस्य प्रकाशोऽस्त्येव । अथासद्ग्रहणेन सा निरस्तेत्युच्यते तर्हि घटप्रदीपयोस्तस्याव्याप्तिः घटस्य सत्त्वात् ।

अथासद्ग्रहणं न करिष्यत इति तर्हि अर्कालोकेन्द्रचापादावव्याप्तिः । इन्द्रचापादेरसत्त्वात् ।

अथोभयोरपि ग्रहणं न करिष्यत इति तर्ह्यनुमानस्यैव तल्लक्षणं पर्यवस्यति, न व्यक्तेः । तच्चेष्टमेव नः, वाच्यप्रतीयमानयोः सतोरेव च क्रमेणैव प्रकाशोपगमात् ।

तस्मात् तदवस्थ एवासम्भवो लक्षणदोषः । किञ्च सदसद्भावेन प्रकाश्यस्य विशेषणमनुपपन्नं व्यावर्त्याभावाद् इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

इति । प्रदीपस्योपाधित्वं 'स्वज्ञानेनान्यधीहेतुरि' त्यादिना प्रतिपादितम् । तत्र व्यक्तिवादिना यथा प्रदीपवृत्तान्त इहाङ्गीकृतो नेन्द्रियगोचरतापत्तिस्तथा प्रतिपादितं प्राक् । अतश्च अथैतद्दोषभयादित्यादिना यो धूलिप्रक्षेपः कृतः, स स्वमनीषिकया शङ्कितपक्षदूषणप्रपञ्चो निरुत्थान एव ।

मधुसूदनीविवृतिः ।

अत्र अथचतुष्टयं विकल्पार्थकम् । एतद्दोषभयात् लक्ष्येष्वसमन्वयरूपदोषभयात् सहभावानपेक्षं सहभावरहितं व्यक्तिलक्षणं निरुच्यते तथापि अनुमाने अति व्याप्तिः लक्ष्यमतिक्रम्य अलक्ष्येऽपि लक्षणसंचारः । तत्रापि उपसर्जनीकृतात्मनेति। वाक्येन अतिव्याप्तिं दर्शयति । अथोच्यते असद्ग्रहणेन प्रकाश्ये इति शेषः । अर्थात् असत्यानामेव रत्यादीनामभिव्यक्तेः धूमादिभिश्च सतोऽग्नेरेव 'ततः सा अतिव्याप्तिः निरस्ता परिहृता इति । तथापि पुनस्तत्रैवावस्थितो वेतालः अर्थात् पुनरव्याप्तिः प्रदीपाद् घटाभिव्यक्तौ घटस्य सद्रूपत्वात् । व्यक्तिश्च असत एवेति लक्ष्ये एव लक्षणाननुगमः ।

प्रकाश्ये असतो ग्रहणमेव न करिष्यते, इत्युच्यते तर्हि अपि केवलं सतो ग्रहणेन यत्र अर्कालोकादिना असतामिन्द्रचापादीनामभिव्यक्तिः तत्र लक्षणागमनादव्याप्तिर्दोषः ।

अथोभयोरपि ग्रहणं न करिष्यतअर्थात् सदसद्भिरहितं लक्षणं क्रियते । सहभावानपेक्षमितित्वनुस्यूतमेवेति बोध्यम् । तर्हि तत्पूर्वोक्तं लक्षणं अनुमानस्यैव अन्ततो गत्वा भवति । न व्यक्तेः, केवलं नाममात्रे विवाद इति भावः । तच्च अनुमानलक्षणं इष्टमेव नोऽस्माकमनुमानवादिनाम् । तस्मात् धूमाग्निप्रतीत्योरिव विभावादिप्रतीत्योः क्रमभावेनैव प्रकाशात् । तदवस्थ एव अपरिहृत एव । व्यावर्त्याभावात्

किञ्च यत्र वाच्यस्यार्थस्य व्यञ्जकत्वं स चेद् ध्वनिस्तर्हि तदनुमितस्य व्यञ्जकत्वे ध्वनित्वं न स्यात् तस्य वाच्यत्वाभावात्। ततश्च "एवं वादिनि देवर्षौ" इत्यादौ ध्वनित्वमिष्टं न स्याद् इत्यव्याप्तिर्लक्षणदोषः। अथार्थशब्देनोभयमपि संगृहीतं तस्योभयार्थविषयत्वेनेष्टत्वात्। यदाह-

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ ॥"

इति। सत्यम्। किन्तु तमर्थमिति तच्छब्देनानन्तर्यात् प्रतीयमानस्यार्थस्य परामर्शे सति पारिशेष्याद् "अर्थो वाच्यविशेष" इति स्वयं विवृतत्वाच्च अर्थशब्दो वाच्यविषय एव विज्ञायते नोभयार्थविषय इति तदवस्थो दोषः

अस्तु वोभयार्थविषयः। तथाप्यतिव्याप्तिर्लक्षणदोषः, यत्र वाच्यार्था-

मधुसूदनीविवृतिः

सदसद्भिन्नस्य वस्तुनः परिहार्यस्य अभावात्।

किञ्चेत्यनेन पुनर्व्याचिख्युस्य अर्थपदोपादाने दोषमुद्भावयति। तदनुमितस्य वाच्यादनुमितस्य। अयं भावः। यत्रार्थः शब्दो वेति ध्वनिलक्षणकारिकायाम् अर्थपदेन किं गृह्यते। यदि तेन वाच्यार्थो गृह्यते तर्हि यत्र व्यङ्ग्यस्यापि व्यञ्जकत्वम्–यथा "एवंवादिनी देवर्षौ" इत्यादौ अधोमुखीत्यनेन लज्जा व्यज्यते तया च शिवविषयिणी पार्वतीतिष्ठा रतिर्व्यज्यते तत्र द्वितीयस्मिन् व्यङ्ग्ये ध्वनित्वं न स्यात्स्वीकृतं तु सर्वैरिति अव्याप्तिर्दोषः। इति। तस्य अर्थशब्दस्य उभयार्थविषयत्वेन वाच्यप्रतीयमानार्थविषयत्वेन इष्टत्वात् स्वीकृतेः।

अर्थः सहृदयश्लाघ्य इति। ललितोचितसन्निवेशसुन्दरस्य काव्यस्य शरीरस्य आत्मा इव आत्मा साररूपतया जीवनाधायकत्वेन व्यवस्थितः सहृदयश्लाघ्यः समनःस्पृहणीयो योऽर्थो वर्त्तते तस्य वाच्यप्रतीयमानाख्यौ द्वौ भेदौ अंशौ स्मृतौ।

सत्यमित्यर्धाङ्गीकारे। तमर्थमिति ध्वनिलक्षणकारिकास्थतच्छब्देन आनन्तर्यात् "प्रतीयमानः पुनरन्यदेवे"ति "सरस्वती स्वादुतमि"त्यादिभिरनन्तरमभिहितत्वात् प्रतीयमानस्यार्थस्य परामर्शे ग्रहणे सति पारिशेष्यात् परिशेषन्यायात्, वृत्तौ "अर्थो वाच्यविशेष" इत्येवं स्वयं ध्वनिकारेण विवृतत्वात् स्पष्टीकृतत्वात्। चकारः समुच्चयार्थः। तथा च पारिशेष्यविवृतत्वहेतुभ्याम् अर्थशब्दः केवलं वाच्यार्थविषयः इत्येव विज्ञायते न उभयार्थयोः वाच्यप्रतीयमानयोः विषयः। इति हेतोः दोषोऽव्याप्त्याख्यः तदवस्थः अपरिहृत इति यावत्।

ननु वाच्यपदेन सामान्यतः अर्थो गृह्यते प्रतीयमानं च व्यञ्जकशब्दस्यार्थः तथा च वाच्यविशेषः अर्थविशेष इति पर्यायवाचकशब्दा एव न तयोः भिन्नाऽर्थता ततश्च परिहृतो दोष। इत्यभ्युपगम्य ब्रूते—अस्तु वोभयार्थविषय इति। परिहरति–त-

द्वस्तुमात्रेणैकेन द्वित्रैर्वान्तरिता वस्तुमात्रस्यैव साध्यस्य प्रतीतिस्तत्रापि ध्वनित्वापत्तेः, तल्लक्षणानुगमाविशेषात् ।

न च तत् तत्रेष्यते, चारुतातिवृत्तेः । व्यभिचारिभावालङ्कारान्तरिताया एव तस्या ध्वनिविषयभावाभ्युपगमात्, अन्यत्र तु तद्विपर्ययात् । चारुत्वाचारुत्वनिश्चये च काव्यतत्त्वविदः प्रमाणम् ।

तत्रैकेन वस्तुमात्रेणान्तरिता सा यथा—

"सिहिपिञ्छकण्णऊरा वहुआ वाहस्स गव्विरी भमइ ।
मुत्ताहलरइअपसा, हणाण मज्झे सवत्तीणम् ॥"

मधुसूदनीविवृतिः ।

थापीति अर्थपदेन प्रतीयमानस्य ग्रहणेऽपि अतिव्याप्तिर्नाम लक्षणदोषः । अतिव्याप्तिलक्षणदोषं समन्वेति-यत्र वाच्यार्थादिति । यत्र काव्ये । वाच्यार्थादित्यस्य साध्यस्य प्रतीतिरित्यत्रान्वयः । वाच्यार्थात् एकेन वस्तुमात्रेण । अत्र मात्रपदेनव्यभिचारिणः अलङ्कारस्य च व्यवच्छेदः । द्वित्रैर्वा द्वाभ्यां त्रिभिर्वा वस्तुभिरन्तरिता व्यवहिता वस्तुमात्रस्य साध्यस्य प्रतीयमानस्य प्रतीतिर्बोधः । एकद्वित्रिवस्त्वन्तरितप्रतीयमानप्रतीति स्थले ध्वनित्वापत्तिः स्यादित्यव्याप्तिः । कुत इति हेतुमाह—तल्लक्षणेति । ध्वनिलक्षणानुगमस्य अविशेषात् सामान्यात् । अनन्तरिते यथा ध्वनिलक्षणसमन्वयस्तथा अन्तरिते ऽपि समन्वयमानं तत् केन वार्येत इति तत्त्वम् ।

किन्तु तद् ध्वनित्वं तत्र वस्त्वन्तरिते न इष्यते चारुतायाः चमत्कारस्य अतिवृत्तेरपगमात् । व्यभिचारिभावान्तरिताया अलङ्कारान्तरिताया वा एव तस्या प्रतीतेः ध्वनिविषयत्वस्य अभ्युपगमात् स्वीकारात् । यत्र व्यभिचारिभवेन अलङ्कारेण वा अन्तरिता साध्यस्य प्रतीतिः भवेत्तत्रैव ध्वनिरिति भावः । अन्यत्र वस्तुमात्रेण अन्तरितायां साध्यप्रतीतौ तु तद्विपर्ययात् ध्वनित्वस्यास्वीकारात् ।

ननु वस्त्वन्तरितत्वेन प्रतीतौ चारुतापगमः व्यभिचार्याद्यन्तरित्वेन चारुताया अवस्थानमिह किं विनिगमकमित्यत आह—चारुत्वाचारुत्वनिश्चये चेति । इदं चारु सुन्दरम् इदमचारु असुन्दरम् इत्येवं विषयके निश्चये काव्यतत्त्वविदः काव्यमर्मज्ञाः प्रमाणम् प्रमात्वग्राहकाः । सा चारुता ।

सिहिपिञ्छकण्णउरेति । शिखिपिच्छकर्णपूरा वधूर्व्याधस्य गर्विणी भ्रमति । मुक्ताफलरचितप्रसाधनानां मध्ये सपत्नीनाम् । इति च्छाया । शिखिनो मयूरस्य पिच्छस्य कर्णपूरो यस्याः सा एतादृशतुच्छभूषणेऽपि व्याधस्य वधूः गर्विणी भ्रमति । क्व भ्रमतीत्याह–मुक्ताफलैः रचितानि प्रसाधनानि अलङ्कारणानि याभिस्तासां सपत्नीनां मध्ये । एतदत्र सगर्वभ्रमणकारणम्—एतस्य व्याधस्य बह्वयः पत्न्यः पूर्वाः सन्ति परं तासु नैतादृशः प्रेमा यादृशो मयि । तस्य चेदं माहात्म्यम् यत् तासु सतीष्वपि आसक्तेरभावात् स्वसामार्थ्येन दूरदेशकालव्यवधानसाध्यमहारम्भाकुलः हस्तिनो

अत्र हि वक्ष्यमाणप्रकारेण व्याधवध्वाः सपत्नीभ्यः सौभाग्यातिरेको-ऽनुमेयः। स चाविरतसम्भोगसुखासङ्गनिस्सहतया पत्युर्मयूरमात्रमारणक्षमतयानुमीयमानयान्तरितः।

द्वाभ्यामन्तरिता यथा—

"वाणिअअ हत्थिदन्ता कत्तो अह्माण वग्घकित्ती अ।
जावलुळिआळअमुही घरम्मि परिसक्कए सोह्ना॥"

अत्र हि वक्ष्यमाणप्रकारेण वृद्धव्याधेन वाणिजकं प्रति हस्तिदन्ता-

मधुसूदनीविवृतिः।

प्यमारयत्, यतस्तासां सम्भोगव्यग्रिमाभावतया विरचनशिल्पकौशलमेव परं साध्यमासीत्। मदासक्तस्य अत एव त्यक्तसकलकार्यस्य तु मदौत्सुक्यविनिवृत्त्यै स्वसमीपागतशिखिमात्रमारणे सामर्थ्यं मम च केवलं तस्यानुरञ्जनं साध्यमिति स्वस्याः परमसौभाग्यम् प्रकाश्यते तासां च दौर्भाग्यातिशय इति।

अत्र पद्ये वक्ष्यमाणप्रकारेण तृतीयविमर्शसाधितप्रकारेण। व्याधवध्वा नवोढाया इति शेषः। सौभाग्यातिरेकोऽनुमेयः शिखिपिच्छकर्णपूराया अपि तस्याः सगर्वभ्रमणहेतुना। व्याधवधूः, सपत्नीभ्योऽधिकसौभाग्या शिखिपिच्छमात्रकर्णपूरत्वे सति सगर्वभ्रमणवत्वात्। इत्यनुमानम्। स अनुमेयश्च अविरतं यः सम्भोगसुखे आसङ्गस्तेन निःसहतया सामर्थ्यरहिततया हेतुना अनुमीयमानया पत्युर्व्याधस्य मयूरमात्रस्य मारणे या क्षमता सामर्थ्यं तया अन्तरितः व्यवहितः।

द्वाभ्यां वस्तुभ्यामन्तरिता चारुता यथा—वाणिअअ इति। "वाणिजक? हस्तिदन्ता कुतोऽस्माकं व्याघ्रकृत्तिश्च। यावल्लुलितालकमुखी गृहे परिष्वक्कते स्नुषा।" इति च्छाया। परिक्रेतारं वाणिजकं प्रति जरद्व्याधस्य वाक्यम्। हे वाणिजक? हस्तिदन्ता व्याघ्रकृत्तिः व्याघ्रचर्म च अस्माकं पार्श्वे विक्रेयत्वेन तावत् कुतः। यावत् लुलिता चञ्चलाः अलकाः कुटिलकेशाः यस्मिन् तादृशं मुखं यस्याः एवंविधा स्नुषा पुत्रवधूः गृहे परिष्वक्कते परिभ्रमति। वध्वासक्तः सुतो मृगयार्थं न व्रजतीति ध्वन्यते।

अत्र पद्ये वक्ष्यमाणप्रकारेण तृतीयविमर्शसाधितरीत्या वृद्धव्याधेन जरल्लुब्धकेन वाणिजकं क्रेतारं प्रति हस्तिदन्तस्य आदिपदात् व्याघ्रचर्मणश्च अभावप्रतिपादनाय राहित्यबोधनाय व्यापकविरुद्धस्य कार्यस्य उपलब्धिः प्रयुक्ता कथिता। यथा नात्र तुषारेति। अत्र धूमात् वन्हेरनुमितिः तया तुषारस्पर्शाभावस्य। अनुमानं चात्र-अस्मद्गृहे, हस्तिदन्ताद्यभावः, अस्मत्समर्थसुतकर्तृकहस्त्यादिव्यापादनव्यापारपरायणत्वाभावात्। यतस्तत्रैव हस्तिदन्तव्याघ्रचर्मादिसत्ता स्यात् यत्र व्याधतत्समर्थसुतकर्तृकहस्तिव्याघ्रादिव्यापादानपरायणता स्यात्। अत्र च तत्परायणता नास्ति अतः हस्तिदन्ताद्यपि नास्ति इयं व्यतिरेकव्याप्तिः। व्यतिरेकव्याप्तौ साध्याभावो व्याप्यः हेत्वभावो

ध्यभावप्रतिपादनाय व्यापकविरुद्धकार्योपलब्धिः प्रयुक्ता । यथा नात्र तुषारस्पर्शो धूमादिति ।

हस्तिदन्तव्याघ्राजिनादिसद्भावो ह्यस्मद्गृहे समर्थस्य सतः सुतस्य तद्व्यापादनव्यापारपरतया व्याप्तः । तद्विरुद्धं च स्नुषासौभाग्यातिरेकप्रयुक्तमविरतसम्भोगसुखासङ्गजनितमस्य निस्सहत्वम् । तत्कार्यं च स्नुषाया विलुलितालकमुखीत्वमिति ।

---

मधुसूदनीविवृतिः ।

व्यापकः तथा व्याप्यस्य वचनं पूर्वं भवति व्यापकस्य परमिति नियमः । तथा चोक्तम्—

(व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते ।
तयोरभावयोस्तस्माद्विपरीतः प्रतीयते ॥
अन्वये साधनं व्याप्यं साध्यं व्यापकमिष्यते । )
साध्याभावोऽन्यथा व्याप्यो व्यापकः साधनात्ययः ॥
व्याप्यस्य वचनं पूर्वं व्यापकस्य ततः परम् ॥ इति ।

( अन्यथा व्यतिरेक इत्यर्थः )

तथा च साध्यम् हस्तिदन्ताद्यभावः, साध्याभावः हस्तिदन्ताद्यभावाभावः अर्थात् हस्तिदन्तसत्ता । हेतुः व्याधसमर्थसुतकर्तृकहस्त्यादिव्यापादनव्यापारपरायणत्वाभावः, हेत्वभावो व्याधसमर्थसुतकर्तृकहस्त्यादिव्यादनव्यापारपरायणत्वाभावाभावः अर्थात् व्याधसमर्थसुतकर्तृकहस्त्यादिव्यापादनव्यापारपरायणत्वमेव । एवं च व्याप्यो हस्तिदन्तव्याघ्राजिनादिसद्भावो व्यापकेन अस्मद्गृहे समर्थस्य सतः सुतस्य तद्व्यापादनव्यापारपरायणत्वेन व्याप्तः । व्याप्यस्य वचनं पूर्वमिति नियमोऽपि सङ्गतः ।

ननु कुतो न तद्व्यापादनव्यापारपरतेति प्रश्नस्योत्तरे हस्तिदन्ताद्यभावं बोधयितुं जरद्व्याधेन वाणिजकं प्रति व्यापकस्य समर्थसुतकर्तृकहस्त्यादिव्यापादनव्यापारपरताया विरुद्धं यत् स्नुषासौभाग्यातिरेकप्रयुक्तमविरतसम्भोगसुखासङ्गजनितं स्वसुतस्य निःसहत्वम् । तस्य च कार्यं स्नुषाया विलुलितालकमुखीत्वम् तदुपलब्धिः प्रयुक्ता । तथा चात्र वाच्येन स्नुषायाः विलुलितालकमुखीत्वेन कार्येण व्यापकविरुद्धस्य कारणस्य निःसहत्वस्यानुमानम्, तेन च व्याधसमर्थसुतकर्तृकहस्त्यादिव्यापादनव्यापारपरायणत्वाभावोऽनुमीयते ततश्च हस्तिदन्ताद्यभावः सिद्ध्यति इति द्वाभ्यां निःसहत्वतद्व्यापादनव्यापारपरत्वाभावाभ्यामन्तरिताऽनुमेयार्थप्रतिपत्तिर्वर्तते ।

अनुमानोद्भावनप्रकारो यथा—ननु कुतो न तद्व्यापादनव्यापारपरतेति चेत् अविरतस्नुषासम्भोगसुखासङ्गजनितान्निःसहत्वादिति गृहाण । ननु कथं तत एव निःसहत्वं, कारणान्तरादनिच्छादेर्नास्तीति प्रतीयते, स्नुषायाः विलुलिताकमुखीत्वात् । अर्थात् कृतप्रसाधनायास्तस्या अलकानां विलुलितत्वस्य सम्भोगकार्यस्य प्रत्यक्षायमाणत्वात्

त्रिभिरन्तरिता यथा—

"विवरीअसुरअसमए बह्मं दड्ढूण णाहिकमलम्मि ।
हरिणो दाहिणणअणं चुम्बइ हिलिआउला लच्छी ॥"

अत्र हि लक्ष्मीलज्जानिवृत्तिस्साध्या । तत्र च भगवतो हरेर्दक्षिणस्याक्ष्णः सूर्यात्मनो लक्ष्मीपरिचुम्बनं हेतुः । तद्धि तस्य तिरोधानलक्षणमस्तमयमनुमापयति । सोऽपि च साहचर्यान्नाभिनलिनस्य सङ्कोचम् । सोऽपि ब्रह्मणो दर्शनव्यवधानमिति त्रयाऽन्तरितानुमेयार्थप्रतिपत्तिः । तदियमुपायपरम्परोपारोहनिस्सहा न रसास्वादान्तिकमुपगन्तुमलमिति प्रहेलिकाप्रायमेतत् काव्यमित्यतिव्याप्तिः ।

---

मधुसूदनीविवृतिः ।

यदीयं कृतप्रसाधनतया अविलुलितालकमुखी तिष्ठेत्तदा सम्भोगासक्त्यभावेन निःसहत्वं न स्यात्, किन्तु नैवम्, ततश्च सम्भोगजनितमेवास्य निःसहत्वं नान्यस्मात्कारणादिति ।

अथवा स्नुषायाः विलुलितालकमुखीत्वात् अर्थात् अकृतप्रसाधनत्वात् । यद्ययं समर्थः स्यात्तदेयमकृतप्रसाधता न तिष्ठेत् सति सामर्थ्ये सम्भोगः सम्भोगार्थं चास्याः कृतप्रसाधनत्वमावश्यकं तच्च नास्तीति असामर्थ्यं सूचयति अतः सम्भोगजनितमेवास्य निःसहत्वं नान्यस्मात्कारणादिति द्विधा व्याख्यानुसन्धेया ।

"विपरीअसुरअ" इति । विपरीतरसुरतसमये ब्रह्माणं दृष्ट्वा नाभिकमले । हरेर्दक्षिणनयनं चुम्बति ह्रियाकुला लक्ष्मीः । इत्यनुवादः । लक्ष्मीः विपरीतसुरतसमये पुरुषायितसुरतकाले । नायके प्रहणनादिव्यापारेण परिश्रान्ते सति नायिका पुरुषवदाचरेदिति पुरुषायितम्, तदेव विपरीतरतम् । तदुक्तम्—नायकस्य सन्तताभ्यासात्परिश्रममुपलभ्य रागस्य चानुपशमम्, अनुमता तेन तमधोऽवपात्य पुरुषायितेन साहाय्यं दद्यात् स्वाभिप्रायाद्वा विकल्पयोजनार्थिनी नायककुतूहलाद्वेति । आकुला सुरतान्निवर्तितुमक्षमा अत एव नाभिकमले हरेर्नाभिकमलात् प्रादुर्भूततया तत्र विद्यमानमित्यर्थः ब्रह्माणं दृष्ट्वा लज्जया हरेर्दक्षिणनयनं चुम्बति ।

तत्र लक्ष्मीलज्जानिवृत्तौ । सूर्यात्मन हरेर्दक्षिणवामनयनयोः सूर्याचन्द्रात्मकत्वेन पुराणप्रसिद्धेः सूर्यस्वरूपस्य । लक्ष्मीकर्तृकं परिचुम्बनम् । तद्धि चुम्बनं हि । तस्य दक्षिणाक्ष्णः । अस्तमयम् अप्रकाशम् । सोऽपि अस्तमयोऽपि । सङ्कोचं मुद्रणम् । सोऽपि सङ्कोचोऽपि ब्रह्मणः स्थगनतया दर्शनव्यवधानं ब्रह्मकर्तृकगोप्याङ्गकर्मकदर्शनराहित्यमनुमापयति । इति अस्तमयसङ्कोचदर्शनव्यवधानत्रयेण अन्तरिता पिहिता अनुमेयस्य लक्ष्मीलज्जाभावस्य प्रतिपत्तिः । तत्तस्मात् इयमनुमेयार्थप्रतिपत्तिः उपायपरम्परामुपारोढुमसहा सती रसास्वादस्य अन्तिकं समीपम् गन्तुम् रसमास्वादयितुमित्यर्थः न अलं न समर्था इत्यतः प्रहेलिकाप्रायमेतत् सिहिपिच्छेत्यादि विपरीतेत्यादि काव्यमि-

व्यभिचारिभावव्यवहिता यथा—

"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥"

अत्र ह्युक्तप्रकारेणानुमितकौतुकौत्सुक्यप्रहर्षलज्जादिव्यभिचारिभावान्तरिता गौर्यामाभिलाषिकश्रृङ्गारावगतिः । अलङ्कारव्यवहिता यथा—

"लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ! ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जडराशिरयं पयोधिः ॥"

अत्रापि कस्याश्चिदुक्तक्रमेण वदनपूर्णेन्दुबिम्बयो रूप्यरूपकभावोऽनुमितः । तदन्तरिता चानुकार्यावगतिः । सैव ध्वनेर्विषयभावेनोपगन्तव्या, नान्या ।

नच व्यवधानाविशेषाद्व्यभिचार्यलङ्कारव्यवधानपक्षेऽप्येतत् समा-

मधुसूदनीविवृतिः ।

त्येवमत्र ध्वनित्वस्वीकारेऽतिव्याप्तिः ।

पत्युरिति । व्याख्यातमेतत्प्राक् ७१ पृष्ठे । आभिलाषिकश्रृङ्गारावगतिः अभिलाषहेतुकस्य विप्रलम्भश्रृङ्गारस्य ज्ञानम् ।

लावण्यकान्तीति । हे तरले चञ्चले आयते विस्तृते अक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ । लावण्यकान्तिभ्यां सम्पूरितानि सम्भरितानि हृद्यानि सम्पादितानि दिशां मुखानि येन तस्मिन् । अधुना कोपकालुष्यापगमादनन्तरं प्रसादौन्मुख्येन स्मेरे विकसिते अस्मिंस्तव मुखे त्वन्मुखं दृष्ट्वेत्यर्थः कोपकषायपाटलोत्तरं स्मेरं तव मुखं सांध्यतणिमोत्तरमनुभूयमानपूर्णशशधरमण्डलमेवेति भावः । अयं पयोधिः जलधिः यत् मनागपि क्षोभं मनसिजसम्बन्धिविकारं न एति न प्राप्नोति । तेन हेतुना मन्ये संभवयामि सर्वस्यापि सहृदयस्य त्वन्मुखं वीक्ष्य मानसिको विकारोऽवश्यं सम्भाव्यः अस्य च नास्तीति तेन मन्ये सुव्यक्तमेव अन्वर्थतया अयं जडराशिः जाड्यसंचयः । डलयोरैक्यात् ।

अत्रापि पद्ये कस्याश्चित् सख्याः उक्तक्रमेण अभिधानपरिपाट्या वदनस्य मुखस्य पूर्णेन्दुबिम्बस्य पूर्णचन्द्रमण्डलस्य रूप्यरूपकभावः । रूप्यं वदनम् रूपकं चन्द्रमण्डलम् । तदन्तरिता रूप्यरूपकभावव्यवहिता च अनुकार्यस्य चन्द्रस्य अवगतिः । सा अवगतिरेव ध्वनेर्विषया न अन्या अवगतिः ।

ननु यादृशं वस्तुमात्रकृतं व्यवधानं तादृशं व्यभिचार्यलंकारयोरपीति समानमेव तत्कृतचारुत्वातिवर्त्तनं नात्र कश्चिद्विशेष उपलक्ष्यते इत्यत आह—न च व्यवधानाविशेषादिति । व्यवधानाविशेषात् व्यवधानसामान्यात् । व्यभिचार्यलङ्कार-

नमिति मन्तव्यं, वस्तुमात्रस्य व्यभिचार्यलङ्कारादीनां च भिन्नजातीयत्वात् । वस्तुमात्रं ह्यनुमेयादत्यन्तविलक्षणस्वभावमग्न्यादेरिव धूमादि । व्यभिचार्यादयस्तु तच्छायानुविधायिनस्तदुपरक्ता इव तदालिङ्गिता इवोत्पद्यन्ते न ततोऽत्यन्तविलक्षणा एवेति तद्व्यवधानमन्यदेव वस्तुव्यवधानादित्यसिद्धस्तदविशेषः । अलङ्कारोऽप्यलङ्कार्यान्न पृथगवस्थातुमर्हति तयोराश्रयाश्रयिभावेनावस्थानाद् इति तद्व्यवधानस्याप्यविशेषोऽसिद्ध एवेति तदवस्थैवातिव्याप्तिः ॥

यद्यर्थ इति वाच्योऽर्थोऽभिमतोऽव्याप्तिरेव सा ।
येनैवंवादिनीत्यादावर्थस्यार्थान्तराद्गतिः ॥ २१ ॥
अथोभौ तर्ह्यतिव्याप्तिर्द्वित्रवस्तुव्यवायिनि ।
प्रहेलिकादिरूपेऽपि काव्ये ध्वन्यात्मता यतः ॥ २२ ॥

---

मधुसूदनीविवृतिः ।

कृतव्यवधानपक्षेपि एतत् चारुत्वातिवर्तनम् समानमिति न च मन्तव्यम् स्वीकार्यम् । भिन्नजातीयत्वात् भिन्नप्रकारत्वात् । भिन्नप्रकारत्वमुद्भावयति—वस्तुमात्रमिति । अनुमेयादनुमेयापेक्षया । तच्छायाम् अनुमेयच्छायाम् अनुविधत्ते । तदुपरक्ता इव अनुमेयोपरञ्जनं प्राप्ता इव । तदालिङ्गिता इव अनुमेयसंश्लिष्टा इव । न ततोऽत्यन्तविलक्षणाः न अनुमेयाद्भिन्नस्वभावाः । तद्व्यवधानम् व्यभिचार्यादिव्यवधानम् । तदविशेषः व्यवधानाविशेष व्यवधानसामान्यमिति यावत् । तद्व्यवधानस्यापि अलङ्कार्यव्यवधानस्यापि अविशेषः समानता ।

"किञ्च यत्र वाच्यार्थस्य व्यञ्जकत्वमित्यारभ्य तदवस्थैवातिव्याप्ति"रिति यावदुक्तं वस्तु द्वाभ्यां कारिकाभ्यां संगृह्णाति-यद्यर्थ इतीति । अथोभाविति च । यदि "यत्रार्थः शब्दो वे"ति ध्वनिकारिकायाम् अर्थ इति पदेन वाच्योऽर्थ इत्यभिमतस्तर्हि "एवं वादिनि देवर्षौ" इत्यादिस्थले यत्र अर्थान्तरात् अर्थस्य गतिः ज्ञानम् ग्रन्थकारमते वाच्यानुमितात् अनुमेयस्य ज्ञानम् । व्यक्तिवादिमते व्यङ्ग्याद् व्यङ्ग्यस्य प्रतीतिः तत्राऽव्याप्तिः स्यात् व्यञ्जकस्य अर्थान्तरस्य वाच्यत्वाभावात् ध्वनिलक्षणाननुगमः ततश्चाऽव्याप्तिरेवेति भावः ।

**अथोभाविति ।** अथ उभौ गृहीतौ अर्थात् यदि अर्थपदेन उभौ वाच्यप्रतीयमानौ संगृह्येते तर्हि अतिव्याप्तिः स्यात् । यतः एकेन द्वाभ्यां त्रिभिर्वस्तुभिर्वा व्यवधानवति अत एव प्रहेलिकादिस्वरूपे सिहिपिच्छेत्यादि काव्येऽपि ध्वन्यात्मता वर्त्तते ध्वनिलक्षणस्यानुगमात् । यदि अर्थपदेन व्यङ्ग्यार्थोऽपि गृह्यते तर्हि द्वित्रिव्यङ्ग्योत्तरप्रतीयमानव्यङ्ग्यवति काव्येऽपि ध्वनित्वं स्यात् ध्वनिलक्षणानुगमाविशेषादिति भावः । वस्तुतस्तत्काव्यं प्रहेलिकाप्रायमेवेति अलक्ष्ये लक्षणानुगमादतिव्याप्तिः । व्यक्तिवादि-

इति सङ्ग्रहश्लोकौ ।

केवलमत्रैवार्थस्योभयात्मनः सामान्येन यः काव्यात्मत्वेन व्यपदेशः सोऽनुपपन्नः । स हि प्रतीयमानार्थैकविषयो युक्तः, तस्यैव काव्यजीवितभूतस्य प्रधानतया ध्वनित्वेनेष्टत्वात् । यत् स एवाह 'काव्यस्यात्मा ध्वनिरि' ति । 'काव्यस्यात्मा स एवार्थ' इति । 'प्रतीयमाना त्वन्यैव भूषा लज्जेव योषित' इति च । तेन 'यः काव्यस्य व्यवस्थित' इति तत्रोचितः पाठः ।

किञ्चात्र वाशब्दो विकल्पार्थो वा स्यात् समुच्चयार्थो वा । न तावद्वि-

---

मधुसूदनीविवृतिः ।

मते तु एतद्दूषणम् वाच्यव्यङ्ग्ययोर्विषयभेदबोधकत्वात् व्यङ्ग्यस्य लक्षणाद्येकानुगत्यविरहत्वप्रतिपादकत्वाच्च ।

केवलमत्रैवेति । अत्रैव "अर्थः सहृदयश्लाघ्य" इत्यस्मिन्नेव पद्ये केवलम् नान्यत्र क्वापि स्थले इति भावः । वाच्यप्रतीयमानोभयरूपस्य अर्थस्य यः सामान्यरूपेण काव्यस्यात्मा इति व्यपदेश सः अनुपपन्नः युक्त्या न सिद्धो भवति । स हि काव्यात्मत्वेन व्यपदेशो हि केवलं प्रतीयमानार्थविषयो युक्तः उपपन्नः । तस्यैव प्रतीयमानस्यैव काव्यजीवितभूतस्य काव्यात्मभूतस्य ध्वनित्वेन ध्वनिपदव्यवहार्यत्वेन इष्टत्वात् । अत्र प्रधानतयेति पदमसमीचीनमेव । यतः प्रतीयमानस्य प्रधानतया ध्वनित्वेनेत्यस्याऽयमर्थः समापतति प्रतीयमानस्य प्रधानतया वाच्यस्याप्रधानतया ध्वनित्वं, वाच्यस्य तु प्रत्युत ध्वनित्वनिरासायोद्योग इति ।

"प्रतीयमानस्यैव ध्वनित्वमिति न ममैवेष्टं ध्वनिकारेणैवैतदुद्घोषितमिति ध्वनिकारोक्तिं दर्शयति–यत् स एवमाहेत्यादिना । यदा स्वयं भवता सर्वत्र तथैव प्रतिपाद्यते तेन हेतुना तत्र अर्थः सहृदयश्लाघ्य इति पद्ये काव्यात्मा यो व्यवस्थित इत्यत्र यः काव्यस्य व्यवस्थित इति पाठः उचितः ।

ध्वनिलक्ष्मणि दूषणान्तरमुद्घाटयितुमाह—किञ्चात्र वाशब्द इति । अत्र ध्वनिलक्ष्मणि "यत्रार्थः शब्दो वे"ति वाशब्दो विकल्पार्थः . द्वयोः सम्भवे एकतरेण कार्यनिर्वाहो विकल्पस्तदर्थकोऽस्ति । अथवा समुच्चयार्थः । आद्यं दूषयति—न तावद्विकल्पार्थ इति । विकल्पार्थो वाशब्द इति न संभवति । कुत इत्याकांक्षायां हेतुमाह—पक्षान्तरस्येति । पक्षान्तरासंभवस्य पक्षान्तरगतसत्तायाः अभावस्य व्युत्पादितत्वात् उक्तत्वात् । यदि शब्दार्थयोः द्वयोः व्यञ्जकत्वसद्भावः सिद्धः स्यात्तदा संभवे सति शब्दो वा व्यनक्तु अर्थो वा व्यनक्तु इति व्यवस्था स्यात् । परन्तु शब्दस्य अभिधैवैको व्यापारो नान्य अतो व्यञ्जकत्वं नास्ति । अर्थस्य व्यञ्जकतायाञ्चाव्याप्त्यादिदोष आपतति अतो लिङ्गत्वमेव न व्यञ्जकत्वमिति पक्षान्तरासंभवो व्युत्पादित इति भावः ।

 

कल्पार्थः पक्षान्तरासम्भवस्य व्युत्पादितत्वात्। सम्भवे वास्य द्विवचनानुपपत्तिः, तयोस्समुच्चयाभावाद्। यथा 'शिरः श्वा काको वा द्रुपदतनयो वा परिमृशेत्' इत्यत्र बहुवचनस्य। समुच्चयार्थत्वे यत्र शब्दार्थयोरेकैकस्य व्यञ्जकत्वं तत्र ध्वनित्वमिष्टं न स्यात्।

शब्दस्य च विशेषणमनुपादेयमेव स्याद्, अर्थस्य विशिष्टत्वेनैव तदवगतिसिद्धेः। अत एव च लक्षणवाक्ये दीपकाद्यलङ्कारमुखेनोपमाद्यभिव्यक्तौ ध्वनित्वमिच्छता गुणीकृतात्मनोऽभिधाया उपादानं न कृतम्। अन्यथा तदपि कर्त्तव्यं स्यात्। तदाश्रितत्वादर्थस्यार्थाश्रितत्वाच्चालङ्काराणामिति पक्षद्वयमप्यनुपपन्नम्।

अत्र केचिद्विद्वन्मानिनो द्विवचनसमर्थनामनोरथाक्षिप्तचित्ततया वाच्यवाचकयोर्विस्मृतसुप्रसिद्धप्रतीतिक्रमभावास्तयोरेककालिकतां शब्दस्योक्तनयनिरस्तामपि व्यञ्जकतां पश्यन्तस्तन्निबन्धनां ध्वनिभेदयोरविवक्षितविवक्षितान्यपरवाच्ययोर्ध्वननव्यापारं प्रति पर्यायेणान्योन्यसहकारितां, तदपेक्षां चानयोः प्रधानेतरतामुपकल्प्य सहकारितया व्यक्ति-

मधुसूदनी विवृतिः।

अभ्युपगम्य ब्रूते—संभवे वेति। अस्य पक्षान्तरस्य संभवेऽपि अर्थात् एकतरेणैव कार्यनिर्वाहाद्वाशब्दस्य विकल्पार्थकत्वेऽनुमतेऽपि व्यङ्क्त इति द्विवचनस्यानुपपत्तिः असंगतिः। विकल्पे एकवचनेन भाव्यम्। समुच्चये द्विवचनस्योपपत्तिः स्यात् तदभावेत्वत्रानुपत्तिरेव। यथा शिरः श्वा काको वेति पद्ये वाशब्दस्य विकल्पार्थत्वे परिमृशेदित्यस्य स्थाने बहुवचस्यानुपपत्तिर्भवेत्। समुच्चयश्च नास्त्येव। तयोः शब्दार्थयोः व्यञ्जकतादशायां समुच्चयाभावात्। ननु कुतो वाशब्दस्य समुच्चयार्थत्वं नास्तीत्याह—समुच्चयार्थत्व इति।

प्राग्विंशतिपृष्ठे २० उक्तं प्रसंगेनानुवदति—शब्दस्य चेति। अन्यच्च यदि शब्दार्थयोः व्यञ्जकतादशायां समुच्चयो विवक्षितस्तदा शब्दस्य विशेषणम् गुणीकृतार्थत्वम् अनुपादेयमेव अनाख्येयमेव स्यात्। अर्थस्य विशिष्टत्वेनैव विशेषणनैव तदवगतिसिद्धेः तस्य शब्दविशेषणस्य अवगतिसिद्धेः। अत एव अर्थविशेषणग्रहणगृहीतत्वादेव दीपकाद्यलंकारद्वारा उपमादेरभिव्यक्तौ ध्वनिरितीच्छता ध्वनिकृता लक्षणवाक्ये ध्वनिलक्ष्मणि गुणीकृतात्मनः उपसर्जनीभूताया अभिधाया उपादानं ग्रहणं न कृतम्। अन्यथा अर्थविशेषणेन शब्दविशेषणप्रयुक्तकार्यनिर्वाहास्वीकारे तदपि अभिधोपादानमपि कर्त्तव्यं स्यात्। तदाश्रितत्वात् अभिधाधीनत्वात्। पक्षद्वयमपि वाशब्दो विकल्पार्थो वा समुच्चयार्थो वेति पक्षद्वयमपि।

अत्र केचिदित्यनेन अभिनवगुप्ताचार्याणां मतमाक्षिपति। तयोः वाच्यवाचकयोः। एककालिकतां पश्यन्त इत्यन्वयः। तन्निबन्धनां व्यञ्जकत्वहेतुकाम्। पर्यायेण

क्रियां प्रत्युभयोरपि कर्तृत्वात् तदपेक्षो व्यङ्क्त इति द्विवचननिर्देशः, प्राधान्यापेक्षश्च 'यत्रार्थः शब्दो वेति' विकल्प इति मन्यमानाः "व्यङ्क्त इति द्विवचनेनेदमाह—

यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकस्तथाप्यर्थस्य सहकारिता न त्रुट्यति । अन्यथाऽज्ञातार्थोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव । विशिष्टशब्दाभिधेयतया विना तस्यार्थस्याव्यञ्जकत्वादिति सर्वत्र शब्दार्थयोर्ध्वननव्यापारः । एवञ्च भट्टनायकेन द्विवचनं यद् दूषितं तद् गजनिमीलिकयैव । अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण" इति यदाहुस्तद् भ्रान्तिमात्रमूलं न तत्त्वमित्यलमवस्तुनिर्बन्धेन ।

किञ्च तमिति तदः पुंस्त्वेन निर्देशोऽनुपपन्नः । तस्यानन्तरप्रक्रान्तार्थपरामर्शिनस्तल्लिङ्गतापत्तेः । न चात्र तल्लिङ्गताविशिष्टः कश्चिदर्थः प्रक्रान्तः, वस्तुतो नपुंसकलिङ्गस्यानन्तरं प्रक्रान्तत्वात् । तेन तत्रैव—

"प्रतीयमानः पुनरन्य एव सोऽर्थोऽस्ति वाणीषु महाकवीनाम् ।
योऽसौ प्रसिद्धावयवातिरिक्तश्चकास्ति लावण्यमिवाङ्गनासु ॥"

इति । 'सरस्वतो स्वादुतमं तमर्थमि'ति च पाठविपर्यासः कर्तव्यः । न त्वत्रैव 'वस्तु तदि'ति । तत्रैव हि पाठविपर्यासे पर्यायप्रक्रमभेदः

मधुसूदनाविवृतिः ।

अनुक्रमेण । अन्योन्यसहकारितां परस्परोपकारित्वम् । तदपेक्षां परस्परोपकारित्वाधीनाम् । अनयोः शब्दार्थयोः । तदपेक्षः व्यक्तिक्रियां प्रति उभयनिष्ठकर्तृत्वाधीनः । प्राधान्यापेक्ष इति । कदाचिच्छब्दः प्रधानतया व्यञ्जकः कदाचिदर्थः प्रधानतया व्यञ्जकः । निर्बन्धेनेत्यत्र निबन्धेन लेखेनेत्यर्थः ।

किञ्चेति दूषणान्तरं सूचयति—तमिति तद इति । यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थावित्यत्र तमिति पदे तदः तच्छब्दस्य । तस्य तच्छब्दस्य तल्लिङ्गतापत्तेः प्रक्रान्तार्थलिङ्गतास्वीकारादिति भावः । अत्र ध्वनिलक्ष्मणि तल्लिङ्गताविशिष्टः तच्छब्दनिष्ठपुँल्लिङ्गतायुक्तः । प्रक्रान्तः आरब्धः उक्त इति यावत् । प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनामित्यत्र, सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कविनामित्यत्र, च सर्वत्र अनन्तरं समीपे नपुंसकलिङ्गस्य वस्तुनः प्रक्रान्तत्वात् । तेन उक्तेन हेतुना तत्रैव प्रतीयमानमित्यत्र सरस्वती स्वादु तदर्थेत्यत्र च पाठविपर्यासः कर्त्तव्यः । न तु अत्रैव ध्वनिलक्षणे । ननु कोयं हेतुः यत्तत्रैव पाठो विपर्यस्यते नात्रेत्यत आह—तत्रैव हि पाठविपर्यास इति । अयं भावः । उक्तयोः पद्ययोः वस्तुपदेन क्लीवतया च निर्देशः । अत्र लक्षणे च तच्छब्देन पुंल्लिङ्गत्वेन निर्देशः इति वस्तुतदोः पर्यायतायाः लिङ्गस्य च विभिन्नता वर्त्तते । वस्तुतश्च व्यङ्ग्यपदाभिधेयः अर्थ

पुंस्त्वनिर्देशश्च परिहृतौ भवतः। अत्र त्वेक एव तदः पुंस्त्वनिर्देशदोषः। एषैव च प्रमेयशय्या श्रेयसी।

अपि च काव्यविशेष इत्यत्र काव्यस्य विशिष्टत्वमनुपपन्नम्, काव्यमा-

व्यक्तिविवेकव्याख्यानम्।

काव्यविशेष इत्यत्रेति। अत्र विशेषशब्दः प्रभेदपर्यायोऽतिशयपर्यायो वा स्यात्। प्रभेदपक्षे 'काव्यमात्रस्य' इत्यादिनाऽव्याप्तिलक्षणं दूषणमुक्तम्। अतिशयपक्षे 'न च तस्ये' त्यादिनाऽसम्भवाख्यदोषोपन्यासः। काव्यमात्रस्य सामान्येन गुणीकृतव्यङ्ग्या-देरपि। निरतिशयो निर्विशेषः सुखास्वादः। 'पाठ्यादि' त्यादिना ध्रुवाख्यगीतिसाम-र्थ्यानुगुण्येन नाट्यविषयरसस्वरूपवर्णनम्। काव्यविषये तु गानवर्जमिति तदेव रसस्व-रूपम्।

काव्यस्य वैशिष्ट्यं स्वरूपकृतं रसकृतं चेति पक्षद्वयम्। रसस्यापि वैशिष्ट्यं चमत्कारातिशयकृतं वा, भेदान्तरकृतं वा, रसरहितसुन्दरशब्दार्थापेक्षाकृतं, वस्तुमात्रादि-व्यङ्ग्यरूपकृतं वा, अङ्गीभावकृतं वेति पक्षपञ्चकम्।

तत्र सर्वस्य रसवत्त्वेनैकरूपतयेष्टत्वान्न स्वरूपकृतः कश्चिद्विशेषः। कुतः पुनस्तत्कृतः काव्यविशेषस्स्यात्। एतेन रसस्य चमत्कारातिशयविशेषपक्षो निराकृतः। भेदान्तरकृ-तविशेषपक्षे तु न तत्कृतः काव्यविशेषः।

भेदान्तरवतः काव्यस्य ध्वनित्वाभावप्रसङ्गेनाव्याप्तिः स्यात्।

रसरहितसुन्दरशब्दार्थापेक्षाकृतविशेषपक्षे तु रसरहितस्य शब्दार्थयुगलस्य काव्य-त्वमेव न, कुतो विशेषग्रहणेन तद्व्यावृत्तिः। वस्तुमात्रादिव्यङ्ग्यकृतविशेषोऽपि नास्ति वस्तुमात्रादीनां व्यञ्जकत्वाव्यञ्जकत्ववैशिष्ट्ये व्यङ्ग्यवैचित्र्याभावात्।

वैशिष्ट्ये वा वस्तुमात्रादिव्यङ्ग्याभावे केवलरससद्भावे च ध्वनित्वं न स्याद् इत्य-व्याप्तिः। प्रहेलिकादौ वस्तुमात्रादिव्यङ्ग्यसद्भावे रसाभावे ध्वनित्वं स्याद् वस्तुमा-त्रादीनामेव व्यङ्ग्यानां प्रयोजकत्वादित्यतिव्याप्तिः।

मधुसूदनीविवृतिः।

एवं स च पुंल्लिङ्ग एव। वस्तुपदं च सामान्यार्थकं तेनान्येषामपि ग्रहणं संभाव्यते अथ च पूर्वोक्तस्य मुख्यपदेनाभिधाने पुनरुक्तिरिति तच्छब्देन उक्तार्थपरामर्शस्य शास्त्रशैलीसिद्ध-त्वाच्च। वस्तुपदेन अनिर्दिश्य अर्थपदेन निर्देशो ज्यायान् युक्तश्चातस्तत्रैव पद्ययोः पाठो विपर्यस्यते नात्र लक्षणवाक्ये। अन्यच्चात्र एक एव पुंस्त्वनिर्देशदोषः; तत्र च द्वौ दोषौ इत्यपि च तत्रैवेत्युक्तमिति।

काव्ये वैशिष्ट्यं द्विधा भवति, स्वप्रभेदकृतम् स्वगतातिशयकृतम्। विशेषपदार्थोपि द्विधाऽनुभूयते इति द्विधाऽऽशंक्य दूषितम्। तत्र प्रभेदार्थको यथा मनौ—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः। स्त्रियः श्रियश्च गेहेषु न विशेषो ऽस्ति कश्चन। इति विशेषो भेद इत्यर्थः।

अस्य ध्वनिव्यपदेशविषयत्वेनेष्टत्वात् तस्य रसात्मकत्वोपगमाद् । यत् स एवाह—

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा ।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः ॥"

व्यक्तिविवेकव्याख्यानम् ।

अङ्गीभावपक्षे तु रसस्य स्वात्मविश्रान्तत्वेन कदाचिदप्यङ्गत्वाभावः । इत्थं च न स्वरूपकृतं नापि रसकृतं काव्यस्य वैशिष्ट्यम् । वैशिष्ट्ये वा लक्षणमाहात्म्यात् तस्य प्रतीतेर्विशेषग्रहणमनर्थकमिति पिण्डितार्थः ।

अक्षरार्थस्तु तस्येति काव्यस्य । स्वरूपकृतं वैशिष्ट्यं निराकृत्य न च तस्येत्यादिना रसगतचमत्कारातिशयपक्षं निराकरोति । तस्य रसस्य ।

मधुसूदनीविवृतिः ।

अतिशयतार्थको यथा रघुवंशे—

शशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिरिति । विशेषा अतिशयितेत्यर्थः ।

तत्रात्र ग्रन्थकृता काव्यविशेषः काव्यप्रभेद इति पक्षः काव्यमात्रस्य ध्वनित्वमुपगम्य विमतलक्षणस्य गुणीभूतव्यङ्ग्येऽसमन्वयादव्याप्त्या दूष्यते ।

अपि चेत्यनेन ध्वनिलक्ष्मणि दूषणान्तरमुद्भावयति—काव्यविशेष इत्यत्रेति । अत्र काव्यविशेष इत्यत्रेति पाठो मूले विच्छिन्नः प्रतिभाति सोऽत्र योजनीयः । ध्वनिलक्षणघटके काव्यविशेष इति पदे काव्यस्य विशिष्टत्वं विशेष इति पदप्रदानमिति यावत् अनुपन्नं युक्तिरहितम् । युक्तिरहितत्वे हेतुं दर्शयति—काव्यमात्रस्येति । काव्यमात्रस्य गुणीभूतव्यङ्ग्यादेरपीति भावः । तस्य काव्यस्य रसात्मकत्वस्वीकारात् । प्रधानव्यङ्ग्यं गुणीभूतव्यङ्ग्यं वा काव्यसामान्यं ध्वनिरिति व्यवहारो नितरामपेक्षणीयः इत्यर्थः ।

काव्यं रसात्मकमिति न ममैवाग्रहः किन्तु ध्वनिकारस्यापीति दर्शयितुमाह—यत् स एवाह-काव्यस्यात्मेति । स एव रस एव अर्थः विविधवाच्यवाचकरचनाप्रपञ्चचारुणः काव्यस्यात्मा सारभूतः । ननु कुत रस एव काव्यात्मेतीतिहासदिशा निर्दिशति । तथाचेति । तथाहि भगवान् वाल्मीकिः पुरा कस्मिंश्चित्समये यदा भारद्वाजेनानुगम्यमानो माध्यन्दिनसवनमनुष्ठातुं तमसातीरमुपक्रान्तस्तदा । आदिकवेः भूतले काव्यावतारप्रथमप्रयोजकत्वादितिभावः, क्रौञ्चद्वन्द्ववियोगोत्थः सन्निहतसहचरविरहकातरक्रौञ्च्याक्रन्दोत्थः चर्व्वणाविषयमुपगतः शोकः करुणस्थायिभावः स्वाभाविकावेशवशात् श्लोकत्वमागतः समुचितवर्णादिनियन्त्रितमानिषादेत्यादिवृत्तरूपतामाप्तः ।

अयं भावः । यद्यपि चित्तवृत्तिरूपस्य शोकस्य श्लोकत्वाप्त्या रसः काव्यस्या-

न च तस्य विशेषः सम्भवति निरतिशयसुखास्वादलक्षणत्वात् तस्य । यदाहुः—

"पाठ्यादथ ध्रुवागानात् ततः सम्पूरिते रसे ।
तदास्वादभरैकाग्रो हृष्यत्यन्तर्मुखः क्षणम् ॥
ततो निर्विषयस्यास्य स्वरूपावस्थितौ निजः ।
व्यज्यते ह्लादनिष्यन्दो येन तृप्यन्ति योगिनः ॥"

व्यक्तिविवेकव्याख्यानम् ।

ध्रुवागानादिति ध्रुवाख्यगीत्युपादानेन नाट्यविषयरसस्वरूपप्रदर्शनमित्युक्तम् । एतद्वर्जितत्वे तत् काव्यगतं रसस्वरूपम् ।

निर्विषयस्येति । अत्रान्तर्मुखत्वं हेतुः । अस्य चर्वयितुः स्वरूपमन्तर्मुखानन्दरूपसंविदात्मकम् ।

मधुसूदनीविवृतिः ।

त्मेति न प्राप्तमिति सत्यम् । तथापि चर्वणया स्थायिभाव एव विभावानुभावादिद्वारा रसतामापद्यते अर्थात् पूर्वं स्वसंवित्तिविषयमुपगता परत्रानुमिताः रत्यादयो भावाः प्राक्तनेदानींतनवासनावशेन हृदयसंवादमादधानाः चर्वणायामुपयुज्यन्ते चर्वणात्मा च रसः । ध्वनिकृताप्येतदुम्—"शोको हि करुणरसस्थायिभावः प्रतीयमानरूप एवेति" इति।

इदानीं काव्यविशेषः काव्यातिशय इति द्वितीयं पक्षं दूषयितुमाह—न च तस्येति । तस्य रसात्मनः काव्यस्य विशेषः अतिशयो न सम्भावति । ननु कुतो न सम्भवतीत्याह—निरतिशयेति । निर्गतोऽतिशयो यस्मात्तत् निरतिशयम् अतिशयशून्यम् अर्थात् सर्वोत्कृष्टम् तादृशस्य सुखस्यास्वाद एव लक्षणं स्वरूपं यस्य तस्य भावस्तत्त्वात् । तस्य रसस्य । अयं भावः । काव्यं रसवदेव रसश्च निरतिशयसुखास्वादरूपः । एवं हि नास्ति तादृशो विशेषोऽतिशयः यो रसात्मनि काव्ये काञ्चिदपूर्वतामाधातुं शक्नुयात् लक्ष्यासंभवश्चेत्युक्तम्—न च तस्य विशेषः संभवतीति ।

यदाहुरित्यादिना । रसस्य निरतिशयसुखास्वादलक्षणत्वं परमतेन दर्शयति—पाठ्यादथेति । पाठयात् केवलं पठनीयात् काव्यादित्यर्थः । ध्रुवादेः गानं यत्र तस्माद् ध्रुवागानात् नाट्यादित्यर्थः । ततः उभाभ्यामपि । रसे रागे सम्पूरिते सम्भरिते हृद्यत्वं सम्पादिते तदास्वादभरेण रागानन्दसमूहेन एकाग्रो भूत्वा एकलयो भूत्वा क्षणं यावत् अन्तर्मुखः विगलितबाह्यवेद्यान्तरः सन् हृष्यति प्रसीदति। ततः अन्तर्मुखतया प्रसादात् निर्विषयस्य विगलितवेद्यान्तरस्य अस्य आस्वादयितुः स्वरूपावस्थितौ आनन्दरूपसंविदवस्थायां सत्यां निजः स्वीयः ह्लादनिःष्यन्दः चित्तनिर्वृतिरूपानन्दनिःस्यन्दो व्यज्यते प्रकाश्यते । येन आनन्देन योगिनः तृप्यन्ति सुखमनुभवन्ति ।

इति । तदभावे चास्य काव्यतैव न स्यात् किमुत विशेष इति अनारम्भणीयमेवैतत् प्रेक्षावतां स्याद् वैफल्यात् ।

कविव्यापारो हि विभावादिसंयोजनात्मा रसाभिव्यक्त्यव्यभिचारी काव्यमुच्यते । तच्चाभिनेयानभिनेयार्थत्वेन द्विविधम् । सामान्येनोभयमपि

---

व्यक्तिविवेकव्याख्यानम् ।

तदभावे । रसाभावे । एतत काव्यम् । प्रेक्षावतां विचारयितॄणाम् । वैफल्यादिति फलमत्र चतुर्वर्गसाधनव्युत्पत्तिः । रसाभावे काव्यतैव न घटत इति ।

कविव्यापारः । अनेन कवेः कर्म काव्यमिति काव्यकौतुकविहितां काव्यस्य शब्दव्युत्पत्तिं कविमूलकाव्यत्वप्रतिपादिकां दर्शयति । तत्र ह्युक्तं 'तस्य कर्म स्मृतं काव्यम् ।' इति । हृदयदर्पणे च 'तत्कर्त्ता च कविः प्रोक्तो भेदेऽपि हि तदस्ति यद्' इति काव्यमूलं कवित्वं प्रतिपादितम् । तत् पुनरस्य ग्रन्थकृतो नावर्जकम् अप्रातीतिकत्वात् । कविव्यापारश्च न सामान्येन किन्तु विभवादिघटनास्वभावः । अत एव नियमेन रसापेक्षी ।

सामान्येनेति । विशेषाः पुनरस्य सर्गबन्धनाटकादयः । जाड्यं काव्यनाट्यविषयं सुकुमारमतित्वम् । जाड्यं चात्र शास्त्रविषयं शास्त्रं चात्र दृष्टान्तत्वेनोपात्तमिति न प्रपञ्चयिष्यते । न फलभेदः न व्युत्पत्तिभेदः । आद्यं काव्यम् । ( भवति तथापि ? ) प्रसिद्धं च विधिनिषेधात्मकं च यच्चरितमिति व्याख्या । यद्यपि चोत्पाद्यवस्तु काव्यं भवति, तथापि तत्र तथा हृदयसंवाद इति प्रसिद्धग्रहणम् ।

मधुसूदनीविवृतिः ।

तदभावे च रसाभावे च अस्य काव्यस्य । किमुत विशेष इति किमुत काव्यविशेष इति । अतः रसाभावे काव्यत्वाभावेन वैफल्यात् विनेयजनव्युत्पत्तिरूपफलाभावात् एतत्काव्यं प्रेक्षावतां विचारकाणाम् अनारम्भणीयमेव अग्राह्यमेवेति भावः ।

रसोद्भावनमेव कवेः कर्म भवतीति दर्शयितुमुपक्रमते—कविव्यापारो हीति । रसस्याभिव्यक्तौ प्रकाशने अव्यभिचारी नान्तरीयकः विभावानुभावसञ्चारिभावानां संयोजनात्मा मेलनस्वरूपः ( व्यक्तिरित्यर्थः ) कवेः व्यापारः लोकोत्तरवर्णनारूपं निपुणं कर्म काव्यमित्युच्यते । तच्च काव्यम् । अभिनेयार्थकं नाट्यम् । अनभिनेयार्थकं गद्यपद्योभयात्मकम् काव्यम् ।

सामान्येनेति । विशेषाः पुनः चम्पूप्रभृतयः । उभयमपि अभिनेयानभिनेयार्थत्वेनोक्तं द्विविधमपि तत् काव्यम् । शास्त्रं यथा अहरहः सन्ध्यामुपासीत इति विधायकवाक्येन मा कलञ्जं भक्षयेदिति प्रतिषेधवाक्येन प्रेरयति निवर्तयति चेति विधिनिषेधविषयिणीं व्युत्पत्तिं बोधं फलति करोतीत्यर्थः तथैव काव्यमपि करोतीति ।

च तच्छास्त्रवद्विधिनिषेधविषयव्युत्पत्तिफलम् । केवलं व्युत्पाद्यजनजाड्याजाड्यतारतम्यापेक्षया काव्यनाट्यशास्त्ररूपेऽयमुपायमात्रभेदो न फलभेदः ।

तत्राद्यं प्रख्यातरामरावणादिनायकप्रतिनायकसमाश्रयेण प्रसिद्धविधिनिषेधास्पदचरितवर्णनमात्रात्मकम् । अपरं पुनरनुकारक्रमेण साक्षात् तत्प्रदर्शनात्मकम् यदाहुः—

"अनुभावविभावानां वर्णना काव्यमुच्यते ।
तेषामेव प्रयोगस्तु नाट्यं गीतादिरञ्जितम् ॥"

एवञ्च ये सुकुमारमतयः शास्त्रश्रवणादिविमुखाः सुखिनो राजपुत्रप्रभृतयः पूर्वत्राधिकृताः, ये चात्यन्ततोऽपि जडमतयस्तावता व्युत्पादयि-

---

व्यक्तिविवेकव्याख्यानम् ।

तावता काव्यमात्रेण । तत्र काव्ये नाट्ये च । प्रभेदपक्षं दूषयितुं ग्रन्थः ।

मधुसूदनीविवृतिः ।

ननु शास्त्रकाव्ययोः फलैक्यं तर्हि किमिति काव्ये आदरः करणीयः इत्याशङ्कायामाह—केवलं व्युत्पाद्येति । जाड्यम् गभीरदुरूहशास्त्रबोधाऽक्षमता । अजाड्यं तत्क्षमता । उपायमात्रे भेदः न फले व्युत्पत्तौ भेदो विशेषः ।

आद्यं काव्यम् । प्रख्यातः प्रसिद्धः रामादिर्नायकः रावणादिः प्रतिनायकः । तयोः समाश्रयेण प्रसिद्धः लोके प्रकटीभूतः । न तु अप्रसिद्धः यथा वने सीतारामयोः रतिकेलिप्रभृतिः । यो विधिः आचारः निषेधः अनाचारः । तयोरास्पदं यच्चरितम् । तस्य वर्णनमात्रात्मकम् । अपरं नाट्यम् । अनुकारक्रमेण अवस्थाचेष्टादेः ताद्रूप्यकृतिक्रमेण तादात्म्यापत्तिक्रमेणेत्यर्थः ।

उक्तं चान्यत्र—

अवस्थानुकृतिर्नाट्यमिति सामान्यलक्षणम् ।
रामादितादात्म्यापत्तिर्नटे या नाट्यमुच्यते ।
रूपकत्वं यदारोपात्कमलारोपवन्मुखे ॥ इति ।
साक्षादभिनीय प्रदर्शनात्मकम् ।

यदाहुरिति काव्यनाट्ययोः स्वरूपं परमतेन सम्वादयति—अनुभावेति । स्पष्टम् । तेषामेव अनुभावविभावसञ्चारिणामेव । प्रयोगोऽभिनयः साक्षाच्चेष्टादिप्रदर्शनात्मकः । काव्यं गीतादिवर्जितम् । नाट्यं तत्सहितम् ।

इदानीं काव्यनाट्ययोरधिकारिभेदं निरूपयन् तयो रसवत्त्वमावश्यकमिति द्रढयति एवञ्चेति । एवञ्च व्युत्पाद्यजनजाड्याद्यपेक्ष्य काव्यनाट्यरूपोपायावतारात् सुकुमारमतयः एतेन एषां जडत्वनिरासेन बुद्धिमत्ता स्वीकृता । को हेतुः बुद्धिमते शास्त्रं विहाय काव्योपदेश इत्यत आह—शास्त्रश्रवणेति। सुखिस्वभावतया दुरूहशास्त्रस्य श्रवणादौ

तुमशक्याः स्त्रीनृत्यातोद्यादिप्रसक्ता उभयेऽपि तेऽभिमतवस्तुपुरस्कारेण गुडजिह्विकया रसास्वादसुखं मुखे दत्वा तत्र कटुकौषधपानादाविव प्रवर्तयितव्याः । अन्यथा प्रवृत्तिरेवैषां न स्यात् , किमुत व्युत्पत्तिः । काव्यारम्भस्य साफल्यमिच्छता तत्प्रवृत्तिनिबन्धनभावेनास्य रसात्मकत्वमवश्यमुपगन्तव्यम् । तन्मात्रप्रयुक्तश्च ध्वनिव्यपदेशः ।

न च रसानां वैशिष्ट्ये तदात्मनः काव्यस्य विशिष्टत्वमिति युक्तं

मधुसूदनीविवृतिः ।

आदिपदात् बोधाचरणादेः परिग्रहः । विमुखा आदरतारहिताः । राजपुत्रप्रभृतयः पूर्वत्र काव्ये अधिकृताः । ये च अत्यन्तं जडमतयः बुद्धिरहिता अथ च स्त्रीनृत्यातोद्यादिषु न केवलं सक्ता एव परन्तु प्रकर्षेण सर्वथा सक्ता अत एव तावता काव्यमात्रेण । व्युत्पादयितुं अभिमतवस्तु शिक्षयितुम् । अशक्याः एवमेषां कृते नाट्यमावश्यकम् । अन्यथा रसास्वादाभावे । काव्यनाट्ययोरारम्भस्य निर्माणस्य साफल्यमिच्छता ग्रन्थकृता सामान्येन च तेषां शास्त्रश्रवणविमुखानां नृत्यातोद्यप्रसक्तानां च राजपुत्राणां प्रवृत्तौ यन्निबन्धनं हेतू रसः । तद्भावेन तत्त्वेन । अस्य कविव्यापारस्य रसात्मकत्वमवश्यमभ्युपगन्तव्यं स्वीकार्यम् । तन्मात्रप्रयुक्तः केवलरसात्मकत्वहेतुकः ध्वनिव्यपदेशः ध्वनिव्यवहारः ।

ननु रसवत एव न तु नीरसस्य काव्यत्वस्वीकारेण काव्यमात्रस्य न तु काव्यविशेषस्य ध्वनित्वमिति यावल्लक्ष्यस्य रसवत्त्वेन एकरूपतयेष्टत्वात्स्वरूपकृतो विशेषः कश्चिन्न संभाव्यते इत्यस्तु नाम, परन्तु स्वविशेषेण स्वाधीनस्य विशेषो यथार्थात्प्रतीयते तथैव रसविशेषेण अनुभूयमानो रसवतः काव्यस्य विशेषः स्यादेव स केन वार्येतेति चेत् । सत्यम् । रसस्य विशेषः पंचप्रकारेण संभवति—अतिशयकृतः, रसत्वेन सजातीयश्शृङ्गारहास्यादिभेदकृतः व्यङ्ग्यत्वेन समानकोटिकवस्त्वलङ्कारभेदकृतः अङ्गत्वकृतः स्वराहित्यकृतः । यत्र स्वस्य रसस्य राहित्यं तत्र गुणालंकारोपस्कृतशब्दार्थमात्रमपेक्ष्यते । इति ।

तत्र अतिशयकृतो विशेषः रसस्य निरतिशयत्वस्वीकारादसंभवः । सजातीयभेदकृतो विशेषः सर्वेषां श्रृङ्गारादिरसानां संभूय एकत्रानवस्थानात् प्रतिनियतस्यैकस्यावस्थानाच्च तदितररसात्मनि ध्वनित्वाभावेनाव्याप्तिः स्यादित्यनुपपन्नः । व्यङ्ग्यत्वेन समानकोटिकवस्त्वलंकारभेदकृतपक्षोऽपि युक्त्या न सिध्यति–वस्तुमात्रस्य विभावादित्वम् विभावादेश्च रसकारणत्वम् । एवं हि कारणकृतविशेषः कार्ये नाधीयते शाबलेयादिकृतविशेषो गोत्व इव । कारणकृतविशेषस्य कार्यो स्वीकारे वा वस्त्वलंकारव्यङ्ग्याभावे केवलरसवति काव्ये ध्वनित्वाभावदव्याप्तिः, रसाभावे वस्त्वलंकारव्यङ्ग्यवति काव्ये ध्वनित्वादतिव्याप्तिरिति असिद्ध एव स पक्षः । अङ्गत्वकृतपक्षस्तु अविचारितरमणीयः । यतो हि रसस्य स्वात्ममात्रविश्रान्तत्वेन कदाचिदप्यङ्गत्वं नास्ति । रसरा-

वक्तुम् अव्याप्तेः । एवं हि प्रतिनियतरसात्मन एव तस्य ध्वनित्वं स्यात्, नान्यस्यान्यरसात्मनः, वैशिष्ट्याभावात् । इष्यते च तत्रापीत्यव्याप्तिलक्षणदोषः ।

अत एव च न गुणालङ्कारसंस्कृतशब्दार्थमात्रशरीरं तावत् काव्यं, तस्य यथोक्तव्यङ्ग्यार्थोपनिबन्धे सति विशिष्टत्वमिति शक्यं वक्तुम् । तस्य रसात्मताभावे मुख्यवृत्त्या काव्यव्यपदेश एव न स्यात्, किमुत विशिष्टत्वम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

अत एवेत्यादिना रसरहितसुन्दरशब्दार्थापेक्षापक्षोऽपि निराक्रियते ।

मधुसूदनीविवृतिः ।

हित्यपक्षस्तु क्षोदक्षम एव न यदा नीरसस्य काव्यत्वमेव नांगीकृतं तर्हि तत्कृतविशेपस्तु कुत एव स्यात् । इत्थं च न स्वरूपकृतो न च रसकृतः काव्यस्य विशेपः । अस्तु वा विशेषः परन्तु तस्य लक्षणमाहात्म्यात् प्रतीतिः स्यादिति विशेषग्रहणमकिञ्चित्करमिति सर्वमेकैकं खण्डयितुमुपक्रमते । न च रसानां वैशिष्ट्ये इति ।

ननु यदि रसात्मन एव काव्यत्वं तत्सत्त्वैव ध्वनिव्यपदेशस्तर्हि तेषां रसानामेव वैशिष्ट्ये सति कुतो न काव्यवैशिष्ट्यं स्वीक्रियते इति चेन्न । यद्येवं स्वीक्रियेत तर्हि अव्याप्तिः स्यात्। ननु कीदृशी अव्याप्तिः स्यादित्यत आह–एवं हि प्रतिनियतेति । अयं भावः । सामान्यतो रसवैशिष्ट्येन काव्यवैशिष्ट्यस्य वक्तुमशक्यत्वं यतो रसा हि बहवः रुचीनां वैचित्र्यात् । तथा च तेषां संभूय एकत्रानवस्थानात् प्रकरणवशात् प्रबन्धवशाद्वा एकस्य कस्यचिदुपनिबन्धः स्यात् ततश्च प्रतिनियतस्यैव एकस्य कस्यचिदवस्थानं स्यात् । एवं हि–प्रतिनियतरसात्मन एव काव्यस्य ध्वनित्वं स्यात, अन्यरसात्मनः प्रकृतभिन्नरसात्मानः अन्यस्य काव्यस्य ध्वनित्वं न स्यात् । परन्तु इष्यते तत्रापि प्रकृतभिन्नरसात्मनि अपि काव्ये ध्वनित्वमिष्यते प्रकृतभिन्नरसस्य रसत्वं सर्वसिद्धान्तसिद्धम् । ततोऽवश्यं तदात्मनि काव्ये ध्वनित्वमीषणीयम् । परं त्वदुक्तरीत्या रसकृतवैशिष्ट्येन काव्यविशिष्टत्वस्वीकारे लक्ष्य एव लक्षणासङ्गम इत्यव्याप्तिरेवेति ।

ननु रसात्मैव काव्यमिति स्वीकारे उक्तप्रकारो दोष आपतति ततश्च सामान्यतः सगुणौ सालंकारौ शब्दार्थौ काव्यमित्यभ्युपगमनीयम् । एवं हि वस्त्वलंकाररसानां मध्यात् यत्र यस्योपनिबन्धस्तत्र तस्य वैशिष्ट्यं स्यात । प्रातिस्विकरूपेण कथन आनन्त्यात्सामान्यत ऐकानुगम्यार्थं काव्यविशेषो ध्वनिरिति समीचीनमेवेत्याह— अत एव चेति । अत एव रसात्मन एव काव्यत्वादेव। यदा रसरहितस्य काव्यत्वमेव नास्ति तर्हि कुतस्तस्य विशिष्टत्वम् । यदि रसरहितयोः गुणालंकारसंस्कृतयोः शब्दार्थयोरेव काव्यत्वं स्यात् तर्हि यथोक्तानां व्यङ्ग्यानां मध्यादेकस्य उपनिबन्धे सति विशिष्टत्वमपि अभ्युपेयम् स्यात्परं तदेव नास्ति ततश्च मूलं नास्ति कुतः शाखेति

न च रसात्मनः काव्यस्य वस्तुमात्रादिभिर्विशेषः शक्य आधातुं, तेषां विभावादिरूपतया रसाभिव्यक्तिहेतुत्वोपगमात् । न च व्यञ्जकानां वैचित्र्ये व्यङ्ग्यस्य विशेषोऽभ्युपगन्तुं युक्तः शाबलेयादीनामिव गोत्वस्य ।

ततोऽस्य विशिष्टतोपगमे वा यत्र तयोरुभयोरेकैकस्य वा व्यङ्ग्यता तत्रैव ध्वनिव्यपदेशः स्यान्न केवलरसात्मनि काव्ये वैशिष्ट्याभावात् ।

व्यक्तिविवेकव्याख्यानम् ।

न च रसात्मन इत्यादौ वस्तुमात्रादिव्यङ्ग्यपक्षः परिहृतः। शक्यमिति(१)। सामान्योपक्रमान्नपुंसकलिङ्गता । वस्तुमात्रादीनां रसं प्रति व्यञ्जकत्वाद् व्यञ्जकवैचित्र्ये च व्यङ्ग्यवैचित्र्याभावान्न तैरसौ विशेषणीयः। गोत्वस्य विशेष इति सम्बन्धः।

ततो व्यञ्जकाद् । अस्य रसस्य । तयोरिति शब्दोपात्तवस्तुमात्रमादिग्रहणगृहीतश्चालङ्कारो गृह्यते । तत्र वस्त्वलङ्कारौ समस्तौ व्यस्तौ वा यत्र व्यङ्ग्यौ व्यञ्जके संक्रान्तौ तत्रैव ध्वनित्वं स्यात् । न केवलरसयोगिनि काव्य इत्यव्याप्तिः ।

मधुसूदनाविवृतिः ।

भावः । मुख्यवृत्त्या स्वरसप्रवाहेणेत्यर्थः । गौणवृत्त्यैव स्यात् यदि स्यादिति भावः ।

ननु अस्तु तथा काव्यं रसवदेव परन्तु अन्यर्व्यङ्ग्यैर्वस्तुमात्रादिभिस्तस्य विशेषोस्तु—इत्यत आह—नच रसात्मन काव्यस्येति । विशेष आधातुं शक्य इत्यन्वयः । तेषाम् वस्तुमात्रादीनाम् आदिपदात् अलङ्कारस्य परिग्रहः । रसाभिव्यक्तौ रसप्रकाशने हेतुत्वोपगमात् कारणत्वस्वीकारात् । ननु वस्त्वादीनां रसाभिव्यक्तिहेतुत्वेऽपि विशेषाधायकत्वे का हानिरित्याह—न च व्यंजकानामिति । यथा शाबलेयादीनाम् वैचित्र्ये गोत्वस्य विशेषो नाभ्युपगम्यते तथा व्यञ्जकवैचित्र्येण व्यङ्ग्यवैचित्र्यमभ्युपगन्तुं न युक्तम् । अयं भावः । वर्णभेदेन शबली धवला कृष्णा कपिलेत्यादिभेदः । प्रमाणभेदेन ह्रस्वा खर्वा वामनीत्यादिभेदः । अवयवभेदेन पिङ्गाक्षी लम्बकर्णी वक्रश्रृङ्गीत्यादिभेदः । तदपत्यानि च शाबलेयधावलेयप्रभृतीनि च वर्णतः प्रमाणतः अवयवतः भिन्नानि परं गोत्वं तु सर्वेषां समानं न हि वर्णादिकृतो भेदो गोत्व उपलभ्यते इति । अयमत्र परमार्थः । रसात्मैव काव्यम् । अथ जगति उपलभ्यमानं वस्तुमात्रं दृश्यं नायकनायिकाद्यालम्बनं चन्द्रोद्यानाद्युद्दीपकं विभावः, तयोः कर्मानुभावः, अदृश्यमान्तरं चित्तवृत्त्यादि संचारी । एषां विभावादीनां च रसकारणत्वम् । कारणकृत वैशिष्ट्यं कार्ये आधातुं दुःशकमेव शाबलेयकृतवैशिष्ट्यस्य गोत्वे व्यभिचारदर्शनात् ।

ननु न शाबलेयादेः गोत्वस्य परस्परं कार्यकारणभावः इत्येष दृष्टान्तोपन्यासो विषमः । अतः सामान्यतः शब्दार्थौ काव्यमिति स्वीकृत्य यथोक्तव्यङ्ग्योपनिबन्धे विशिष्टत्वं वक्तुं शक्यमेवेत्यभ्युपगम्य समाधत्ते—ततोऽस्येति । ततो व्यञ्जकात् ।

(१) मूले तु शक्य इति पुंल्लिङ्गः पाठः ।

इष्यते चासौ तत्रापि। प्रहेलिकादौ च नीरसे स्यात्। तत्राप्युक्तक्रमेण वस्तुमात्रादेरभिव्यङ्ग्यत्वेनेष्टत्वाद् इत्यन्वयव्यतिरेकाभ्यां काव्यत्वमात्रप्रयुक्तोऽसावित्यनुमीयते।

अतश्च समासोक्त्यादावप्यसावुपगन्तव्य एव, न प्रतिषेध्यः। प्रतीयमानस्य चार्थस्य द्वैविध्यमेव। तृतीयस्य रसादेः प्रकारस्योक्तनयेन काव्यत्वादेव सिद्धत्वादिति।

---

व्यक्तिविवेकव्याख्यानम्।

प्रहेलिकादाविति अतिव्याप्तिः। ननूभयसद्भावे वैशिष्ट्यं प्रस्तुतम्। तत्र का कथा रसाभावे वस्त्वादिमात्रभावे वैशिष्ट्यस्य। नैतत्। वस्त्वादीनामेव प्रयोजकत्वात् तन्मात्रकृतं वैशिष्ट्यमुच्यते। तथा हि वस्त्वाद्यभावे रससद्भावेऽपि न ध्वनित्वमिष्टं भवता,'वस्त्वादिसद्भावेत्विष्यत एव। अतोऽन्वयव्यतिरेकाभ्यां वस्त्वादीनामेव प्रयोजकत्वमिति प्रहेलिकादावतिव्याप्तिः।

समासोक्त्यादाविति। तत्रापि रसमयत्वेन काव्यत्वाद् रससद्भावे च ध्वनित्वात्।

मधुसूदनीविवृतिः।

अस्य व्यङ्ग्यस्य विशिष्टतोपगमे व्यञ्जकाधीनं व्यङ्ग्यस्य विशिष्टत्वमिति स्वीकारे यत्र स्थले तयोरुभयोः समस्तयोरित्यर्थः वस्तुमात्रालङ्कारयोः एकैकस्य व्यस्तस्येत्यर्थः वस्तुमात्रस्य अलङ्कारस्य वा व्यङ्ग्यता स्यात् तत्रैव काव्ये ध्वनिव्यवहारः स्यात्। केवलरसवति वस्तुमात्रालङ्कारव्यञ्जकरहिते काव्ये वैशिष्ट्याभावात् व्यञ्जककृतविशिष्टत्वस्याभावात् न ध्वनिव्यपदेशः इष्यते च असौ ध्वनिव्यपदेशः तत्रापि केवलरसवत्यपि काव्येऽपि। यत्र नीरसे प्रहेलिकादौ नेष्यते तत्रायं ध्वनिव्यपदेशः स्यात्। तत्रापि प्रहेलिकादिप्राये नीरसेऽपि काव्ये सिहिपिच्छेत्यादौ उक्तक्रमेण सम्बद्धसम्बन्धविधया। रसाभावे वस्तुमात्रादिव्यङ्ग्यसद्भावे ध्वनिः रससद्भावेऽपि वस्तुमात्रादिव्यङ्ग्याभावे ध्वन्यभावः इत्यन्वयव्यतिरेकाभ्यां यत्र काव्यत्वं तत्र सर्वत्र केवले काव्येऽपि न तु काव्यविशेषे इति नियमः असौ ध्वनिव्यपदेशः प्रयुक्त इत्यनुमीयते।

नन्वेवं काव्यमात्रस्य ध्वनित्वे गुणीभूतव्यङ्ग्यस्यापि ध्वनित्वं स्यादिष्टापत्तिरेवेत्याह—अतश्च समासोक्त्यादाविति। अतो हेतोः काव्यमात्रे ध्वनेः व्यपदेशात् हेतोः समासोक्त्यादौ गुणीभूतव्यङ्ग्ये वाच्यालङ्कारवति काव्येऽपि असौ ध्वनिव्यपदेशः अभ्युपगन्तव्य एव स्वीकार्य एव, न प्रतिषेध्यः। उक्तनयेन "तस्य रसात्मकत्वोपगमात्। यत् स एवाह—काव्यस्यात्मे"त्यादिना "काव्यारम्भस्य साफल्यमिच्छता तत्प्रवृत्तिनिबन्धनभावेनास्य रसात्मकत्वमवश्यमभ्युपगन्तव्यमि"त्यन्तेन प्रतिपादितया रीत्या।

रसस्य काव्यव्यवहारबीजतया काव्यमात्रे व्यापकत्वेन अवस्थानम्। वस्त्वलङ्कारयोश्च व्याप्यत्वमनियतत्वाच्चेति वस्त्वलङ्कारयोः रसस्य परस्परं न समकक्षत्वमतो रस-

न च तस्य तदङ्गभावो भणितुं युज्यते अङ्गित्वेनेष्टत्वाद् इति काव्यत्वमेव ध्वनिव्यपदेशविषयोऽभ्युपगन्तुं युक्तो न तद्विशेषः ।

किञ्च मुख्ये रसात्मनि काव्ये सम्भवति न तस्य गौणस्याश्रयणं युक्तं गौणमुख्ययोर्मुख्ये सम्प्रत्यय इति नियमात् ।

यस्तु मेघदूतादौ काव्यविशेषव्यपदेशः सोऽभिधेयार्थविशेषसमारोपकृतो न मुख्यः ।

इत्थञ्च काव्यस्य विशिष्टतानुपपत्तावितरतल्लक्षणविधायिमतातिरिक्तं न किञ्चिदनेनाभिहितं स्याद्, अन्यत्र ध्वनिव्यपदेशमात्रात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

द्वैविध्यमेवेति रसस्य काव्यमात्रलक्षणत्वाद्वस्त्वलङ्कारव्यापित्वेन तत्प्रतियोगित्वाभावान्न प्रकारत्वं प्रकारित्वेन प्रकाशमानत्वात् ।

न च तस्येत्यादिना अङ्गत्वकृतं विशेषं दूषयति । अङ्गित्वेनेष्टत्वादिति चमत्कारविश्रान्तिसारत्वाद्रसस्याङ्गित्वमेव नाङ्गत्वम् ।

किञ्चेत्यादिना अभ्युपगमवादेन रसप्रतियोगिना गौणस्य काव्यत्वेऽपि गौणत्वादेव तदाश्रयत्वं न भविष्यतीत्याह । अभिधेयार्थविशेषेति । अभिधेयस्यार्थस्य यो विशेषो मेघादेर्वैचित्र्येण वर्णनं तस्य काव्ये समारोपात् काव्यविशेष इत्युक्तिः ।

मधुसूदनीविवृतिः ।

स्य तृतीयप्रकारत्वं नोपगतं भवति । तस्य तु केवलं प्रकारित्वमित्याशयेनाह—द्वैविध्यमेवेति । द्वैविध्यमेव वस्तुमात्रालङ्काराभ्याम् । एवकारो रसगततृतीयप्रभेदत्वनिरासाय ।

नच तस्येति । तस्य रसस्य तदङ्गत्वं वस्तुमात्रालङ्काराङ्गत्वम् । इतिशब्दो हेत्वर्थकः । काव्यत्वमेव काव्यसामान्यमेव । तद्विशेषः काव्यविशेषः ।

किञ्च मुख्ये रसात्मनीति । तस्य रसशून्यस्य । मुख्ये कार्यसम्प्रत्ययः । सम्प्रत्ययो निर्वाहः । आश्रयणं स्वीकारः ।

ननु रसानां वैशिष्ट्येन काव्यस्य वैशिष्ट्यं मेघदूतादौ विप्रलम्भकाव्ये दृश्यते इत्याशङ्कायामाह—यस्तु मेघदूतादौ ।

उपसंहरन्नाह—इत्थं च काव्यस्येति । विशिष्टताया अनुपपत्तौ युक्त्याऽसिद्धौ । इतरत् प्रसिद्धाद्भिन्नं यत् तल्लक्षणं काव्यलक्षणम् । तद्विधातुं शीलं यस्य तस्य मतादतिरिक्तं विलक्षणं किञ्चिदपि अनेन लक्षणेन अभिहितं प्रतिपादितं न स्यात् केवलं ध्वनिव्यपदेशाद् ध्वनिरिति नाम्नोऽन्यत्र । काव्यविशेषो ध्वनिरित्यमुया भाषया न केनापि काव्यलक्षणं विधत्तमिति प्रसिद्धप्रस्थानातिरिक्तलक्षणकरणयशःप्रसारमिच्छुः किमपि काव्यलक्षणं विहितं परमेतेन लक्षणेन काव्यस्य नामान्तरप्रदानमात्रादन्यन्न साधितं किञ्चिदिति भावः ।

न च तेनापि किञ्चित् । कथञ्चिद्वा तदुपपत्तौ तदवाच्यमेव तस्य तत्पर्यवसायिनो लक्षणविशेषसम्बन्धादेव तदवगतेः । यथा योऽश्वमारूढः स पुरुषो राजेत्यत्र ।

अथ पुरुषस्याश्वविशिष्टस्यैव सतस्तल्लक्षणसम्बन्धो न तु तत एवा-

---

व्यक्तिविवेकव्याख्यानम् ।

तदुपपत्तौ तस्य काव्यस्य । तत्पर्यवसायिनो विशेषपर्यवसितस्य । तदवगतेः विशेषावगतेः । योऽश्वमारूढ इति लक्षणविशेषादेव पुरुषविशेषप्रतीतिः । अथेति । इह विशिष्टस्य वा लक्षणं लक्षणाद्वा विशेषप्रतीतिः । तत्रोत्तरस्मिन् पक्षे विशेषग्रहणं न वक्तव्यमित्युक्तमित्याद्यः पक्ष आश्रयिष्यते । तत्रापि काव्यमात्रलक्षणादेव विवक्षितविशेषप्रतीतिः काव्यमात्रस्य रसमयत्वेनेष्टत्वात् । अन्यस्याकाव्यत्वम् । रसयोगिनि च ध्वनिव्यवहार इति च सर्वथा विशेषग्रहणं न कर्त्तव्यम् ।

मधुसूदनीविवृतिः ।

नामकरणेऽपि दूषणमुद्भावयति—न च तेनापि किञ्चिदिति । तेन ध्वनिरिति व्यपदेशेनाऽपि न किञ्चित् अर्थात् काव्ये न किमपि वैशिष्ट्यमायातम् ।

अभ्युपगम्य ब्रूते—कथञ्चिद्वेति । ननु ये केचन त्रिभुवनेऽनुभूयमानाः भावास्तेषु रुचीनां वैचित्र्यात् कस्यचन विभावत्वं कस्यचिच्च अनुभावत्वं सञ्चारित्वमिति नास्ति कोऽपि काव्यलेशो यत्र रसो न स्यात् एवं हि सर्वेषां रसमयत्वे ध्वनित्वमायातम्, न चेदं कस्यापि सहृदयासहृदयसाधारणजनस्याऽपि अभ्युपगन्तव्यं स्यादतः सामान्यविशेषयोर्भेदस्य अवश्यमाश्रयणीयत्वादाह—कथञ्चिद्वेति । कथञ्चित् । तदुपत्तौ तस्य काव्यवैशिष्ट्यस्योपपत्तौ युक्त्या सिद्धौ निर्विशेषं न सामान्यमिति नीत्या तत्पर्यवसायिनः । तस्मिन् विशेषे पर्यवसायिनः । तस्य सामान्यस्य काव्यस्य तद् विशिष्टत्वम् अवाच्यमेव ।

ननु कथनमन्तरा कथं तस्य काव्यविशिष्टत्वस्यावगतिरित्याह—लक्षणविशेषेति । लक्षणेन कृतो यो विशेषः तस्य सम्बन्धात् समन्वयात् तदवगतेः तस्य विशेषस्य अवगतेः ज्ञानात् । दृष्टान्तेन साधयति—यथेति । अत्र अश्वारोहणरूपेण लक्षणेन पुरुषविशेषस्य राज्ञोऽवगतिः ।

ननु यदि बोद्धव्यः पुरुषो तल्लक्षणवस्तुविशिष्टो न चेत्तर्हि कथं तदन्तरेण लक्षणविशेषात् पुरुषविशेषप्रतिपत्तिः । अतः पूर्वमेव विशिष्टस्य सतो लक्षणात्प्रतीतिरित्येव साधुवृत्तमित्याह—अथ पुरुषस्येति ।

अथेति पक्षान्तरे । पूर्वमेव पुरुषोऽश्वविशिष्टः ततश्च तल्लक्षणसम्बन्धः अश्वलक्षणसम्बन्धः न तु तत एव लक्षणादेव अस्य पुरुषस्य वैशिष्ट्यमिति चेत् । तथापि विशिष्टस्य लक्षणसम्बन्धस्वीकारेऽपि अवाच्यम् वैशिष्ट्यं न वाच्यमेव । कुतो न वाच्य-

स्य वैशिष्ट्यमिति, तथाप्यवाच्यं; काव्यत्वादेव तस्याप्यवगतत्वात् । तच्चोक्तमित्यवाच्यवचनं दोषः ।

किञ्च 'सूरिभिः कथित' इति कथनक्रियाकर्तृनिर्देशः पक्षद्वयेऽप्यवाच्य एव । कर्तृमात्रविवक्षायां क्रियायाः कर्त्रव्यभिचारात् कर्तृविशेषविवक्षायामनन्तरोक्तक्रमेण व्यापारविशेषसम्बन्धादेव तद्विशेषावगतिसि-

व्यक्तिविवेकव्याख्यानम् ।

(१)अत्रव्यक्तिवादिनस्त्वयमभिप्रायः—इह प्रसिद्धं लक्ष्यमाश्रित्य लक्षणं प्रवर्त्तते । लक्ष्ये च द्विविधं काव्यं दृश्यते मुख्यं गौणं च । तत्र मुख्यं यत्र व्यङ्ग्यस्य प्राधान्यं शिष्टं गुणीभूतव्यङ्ग्यादि गौणम् । उभयं च ग्राह्यमनादिकालिकव्यवहारसिद्धत्वात् । तेन गौणमुख्यन्याय इह नाश्रीयते । तत्र च गुणीभूतव्यङ्ग्यनिरासाय विशेषग्रहणं कर्त्तव्यम् । सर्वस्यैव काव्यस्य रसमयत्वं न गुणीभूतव्यङ्ग्यादिसद्भाव इति चेन्न । अस्फुटरस्याङ्गभूतरसस्य वा काव्यस्य विद्यमानत्वात् । यत्र हि प्राधान्येन स्फुटोऽङ्गी रसः प्रतीयते तत्र ध्वनित्वमन्यत्र तु काव्यान्तरत्वमिति । रसस्य च विश्रान्तिसारत्वादङ्गभावो नोपपन्न इति चेन्न । स्वापेक्षयैतद्रूपत्वात् । व्यापकरसान्तरापेक्षया तु न्यग्भावेनाङ्गत्वाद् विचोरभाण्डागारिकवत् (२)तथाह्यङ्गीभावमेव मनसिकृत्य मुनिना रसेष्वपि स्थायिसञ्चारिव्यपदेशः कृतः—

'सर्वेषामेव सद्भावे रूपं यस्य भवेद् बहु ।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥"

इति । केचित्तु स्थाय्यपेक्षाङ्गाङ्गिभावो रसेषूपचर्यत इत्याहुः । ततश्चाङ्गभूतरसकाव्यं व्यावर्त्यमस्ति विशेषग्रहणस्य । यतश्चास्फुटरसस्यापि काव्यस्य सम्भवस्ततो ध्वनेर्भेदत्रयमभ्युपपद्यते ।| अस्फुटरसे हि काव्ये वस्त्वलङ्कारध्वनी । स्फुटाङ्गीभूतरसे तु रसध्वनिः । तत्रैव वस्त्वलङ्कारध्वनिसम्बन्धे सङ्करसंसृष्टी । तस्माद् ध्वनिमते सर्वमेतत्समञ्जसमेव ।

पक्षद्वयेऽपीति कर्तृमात्रपक्षे कर्तृविशेषे च । अनन्तरोक्तक्रमेणेति । योऽसौ

मधुसूदनीविवृतिः ।

मित्याह—काव्यत्वादेवेति । काव्यस्यादः सर्वातिशायि माहात्म्यम् यत्काव्यत्वादेव तस्य वैशिष्ट्यस्य अवगतिः स्यात् । तच्च अवगमनम् उक्तम् काव्यत्वमेव ध्वनिव्यपदेशविषयो न तु तद्विशेष इत्यादिषु प्रतिपादितम् । इत्यतोऽत्र लक्षणे अवाच्यवचनं नाम दोषः ।

किञ्चेति ध्वनिलक्ष्मणि दोषान्तरं सूचयति—"सूरिभिः कथितः" इति ।

(१) व्यक्तिवादिपक्षमभ्युपगच्छन् विशेषग्रहणं समर्थयते—अत्रेत्यादिना ।

(२) विचोरोऽपि भाण्डागाराधिपतिरपि । चोरावस्थायां तिरस्करणीयः भाण्डागाराधीशावस्थायामादरणीयस्तद्वत् रसः अङ्गश्च अङ्गी च ।

द्धेरित्यवाच्यवचनं दोषः ।

अर्थस्य[1] विशिष्टत्वं, शब्दः[2] सविशेषणस्तदः[4] पुंस्त्वम् , ।
द्विवचन[5]वा[6]शब्दौ च, व्यक्तिर्[7]ध्वनि[8]नाम, काव्यवैशिष्ट्यम्, ॥२३॥
वचनञ्च [10]कथनकर्तुः, कथिता ध्वनिलक्षमणीति दश दोषा ।
ये त्वन्ये तद्भेदप्रभेदलक्षणगता न ते गणिताः ॥ २४ ॥

व्यक्तिविवेकव्याख्यानम् ।

लक्षणाद्विशेषावगमः सोनन्तरोक्तः क्रमः । व्यापारविशेषो लक्षणवशायातविचारसरणिमाश्रित्य विशेषविशिष्टं कथनम् ।

इति श्रीराजानकरुय्यकविरचिते व्यक्तिविवेकव्याख्याने प्रथमो विमर्शः समाप्त् ।

---

मधुसूदनीविवृतिः

सूरिभिः कथित इत्यत्र वाक्ये कथित इति कथनक्रियायाः सूरिभिरिति कर्तृनिर्देशः । पक्षद्वयेऽपि कर्तृसामान्यविवक्षायां कर्तृविशेषविवक्षायामितिपक्षद्वयेऽपि अवाच्य एव । कर्तृसामान्यविवक्षापक्षे तु कर्त्रा विना क्रियाऽनुपपन्नेति येन विना यदनुपपन्नं तत्तेनाक्षिप्यते इतिनयात् कर्तुराक्षेपः । कर्तृविशेषविवक्षायां तु अनन्तरोक्तक्रमेण काव्यविशेषप्रदर्शितपरिपाट्या अर्थात् यथा काव्ये लक्षणविशेषसम्बन्धात् काव्यविशेषावगतिर्भवति तथैव व्यापारविशेषस्य सम्बन्धात् तद्विशेषावगतिसिद्धेः कर्तृविशेषप्रतीतिसिद्धेः । इत्यतः अवाच्यवचनं नाम दोषः ।

इदानीं ध्वनिलक्षणगतान् दोषान् संगृह्य द्वाभ्यां कारिकाभ्यां दर्शयति । अर्थस्य विशिष्टत्वमिति । वचनं च कथनकर्तुरिति च । अर्थस्य विशिष्टत्वम् उपसर्जनीकृतात्मत्वं विशेषणं विफलमित्येको दोषः १ । शब्दः सविशेषण इति च । विशेषणेन सहितः सविशेषणः शब्दः एवंहि ध्वनिलक्षणे शब्दः पुनरनुपादेय एवेति शब्दग्रहणं दूषितमिति शब्दग्रहणं द्वितीयं दूषणम् २ । विशेष्यस्य दुष्टत्वे विशेषणस्य दुष्टत्वं सुतरामिति विशेषणदूषणं तृतीयम् ३ । तदः पुंस्त्वकरणे द्वौ दोषौ पर्यायप्रक्रमभेदः लिङ्गभेदश्चेति द्वयोरेकगतत्वादेकत्वमिति चतुर्थः ४ । व्यङ्क्तः इत्यत्र द्विवचनमनुपपन्नमिति अनुपपत्तिः पञ्चमः ५ । वाशब्दस्य विकल्पार्थेऽसम्भवः षष्ठः ६ । व्यक्तिरिति त्वदनुकूलव्यक्तिस्वीकारे अव्याप्त्यतिव्याप्त्यसम्भवदोषसंघः इति सप्तमो दोषः ७ । ध्वनिनामेति काव्यस्य ध्वनिनाममात्रकरणे न किञ्चित्कृतमिति वैफल्यं दोषः अष्टमः ८ । काव्यवैशिष्ट्यमिति काव्यस्य विशिष्टत्वकथने अवाच्यवचनं दोषो नवमः ९ । कथनक्रियायाः कर्तुः वचनं निर्देशः इति । अत्रापि अवाच्यवचनं दोषो दशमः १० । इत्येवं ध्वनिलक्ष्मणि दश दोषाः । ये तु अन्ये तस्य ध्वनेः भेदप्रभेदलक्षणगता ते दोषाः न गणिताः न संख्याताः ।

तदेवं लक्षणदोषदुष्टपदव्युदासेन परिशुद्धो ध्वनिलक्षणवाक्यस्यायमर्थोऽवतिष्ठते ।

वाच्यस्तदनुमितो वा यत्रार्थोऽर्थान्तरं प्रकाशयति ।
सम्बन्धतः कुतश्चित् सा काव्यानुमितिरित्युक्ता ॥ २५ ॥ इति ।

एतच्चानुमानस्यैव लक्षणं नान्यस्य । यदुक्तं "त्रिरूपलिङ्गाख्यानं परार्थानुमानमि"ति । केवलं संज्ञाभेदः ।

काव्यस्यात्मनि संज्ञिनि रसादिरूपे न कस्यचिद्विमतिः ।
यतः—संज्ञायां सा, केवलमेषापि व्यक्त्ययोगतोऽस्य कुतः ॥ २६ ॥
शब्दस्यैकाभिधा शक्तिरर्थस्यैकैव लिङ्गता ।
न व्यञ्जकत्वमनयोः समस्तीत्युपपादितम् ॥ २ ॥
उक्तं वृथैव शब्दस्योपादानं लक्षणे ध्वनेः ।

मधुसूदनीविवृतिः ।

(१)तदेवं ध्वनिकारलक्षणं विदूष्य स्वाभिमतमनुमितिलक्षणं प्रदर्शयितुमाह—तदेवमिति । तदेवं ध्वनिलक्षणस्य दुष्टत्वे लक्षणगतदोषैर्दुष्टानां पदानां व्युदासेन निरासेन परिशुद्धो दोषरहितः । अयमुच्यमानोऽर्थः । अवतिष्ठते प्राप्तो भवतीत्यर्थः ।

वाच्यस्तदनुमितो वेति । यत्र स्थले वाच्यो वाच्यार्थः तदनुमितः वाच्यादनुमितो वा अर्थः कुतश्चित्सम्बन्धात् व्याप्यव्यापकसम्बन्धादिति भावः अर्थान्तरमनुमेयार्थं प्रकाशयति द्योतयति सा काव्यानुमितिरित्युक्ता ।

काव्यस्यात्मनीति । रसादिरूपे संज्ञिनि नामिनि । क्वचित्साहित्यदर्पणादौ "सङ्गिनि" इति पाठः स तु भ्रष्ट एव बोध्यः । काव्यस्यात्मनि सारभूततया जीवनाधायके । कस्यचिदपि विप्रतिपन्नस्यापीत्यर्थः विमतिरस्वरसो न वर्त्तते । सा विमतिः केवलं संज्ञायां नामनि वर्त्तते । भवान् व्यङ्ग्य इति ध्वनिरिति च संज्ञपयति वयं च अनुमितिरिति संज्ञपयामः । समीपतरवर्त्तिक्ते चैतदो रूपमिति नयेन एषेत्यनेन सेतिपदार्थः बोध्यः । सेतिपदस्यार्थश्च विमतिरिति एषाऽपि विमतिरपि । अन्यच्च विमतिरपि अस्य ध्वनिकारस्य मते कुतः स्यात् । उक्तार्थे हेतुमाह—व्यक्त्ययोगतः । व्यञ्जनायाः असम्बन्धात् । व्यञ्जनायोगे व्यङ्ग्यत्वं परं सैव नोपपद्यते इति भावः ॥

ननु कुतो व्यक्त्ययोग इत्याह—यत इति । यत इत्यस्य शब्दस्यैकाभिधेति कारिकया सम्बन्धः । यतः अनयोः शब्दार्थयोः व्यञ्जकत्वं न समस्ति ततः व्यक्तियोगोऽपि नास्तीत्युपपादितमुपरिष्टादिति शेषः । एकाभिधेति अभिधातिरिक्तव्यापारस्यासत्वादिति भावः ।

ध्वनिलक्षणदोषोपपादकमर्थं कारिकाभिः संगृह्णाति विनेयजनसौकर्यार्थम्—उक्तं

(१) यस्तु मेघदूतादाविति । काव्यविशेषेण मेघदूतेति पदेन व्यवहारः । अभिधेयार्थविशेषस्य दैवात्प्रविरहस्यान्योन्यानुरागिणो यस्य कस्यचित्कामिजनस्य समागमसौख्याय सदैव गृहीतव्रतोऽस्मीतिवाक्यार्थस्य । समारोपः उपचारः । १०१ पृ० । २६ पं० ज्ञेया ।

न हि तच्छक्तिमूलेष्टा काचिदर्थान्तरे गतिः ॥ २८ ॥
न चोपसर्जनत्वेन तयोर्युक्तं विशेषणम् ।
यतः काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता ॥ २९ ॥
अत एव विशेषस्योपादानमपि नार्थवत् ।
संज्ञासम्बन्धमात्रैकफलं तदिति गम्यते ॥ ३० ॥
तदा चातिप्रसङ्गः स्यात्संज्ञायां यस्य कस्यचित् ।
यद्वाक्यवर्त्तिनोऽन्यस्य विशेषस्य तदाश्रितः ॥ ३१ ॥
तस्मात् स्फुटतया यत्र प्राधान्येनान्यथापि वा ।
वाच्यशक्त्यानुमेयोऽर्थो भाति तत् काव्यमुच्यते ॥ ३२ ॥
वाच्यप्रत्येययोर्नास्ति व्यङ्ग्यव्यञ्जकतार्थयोः ।
तयोः प्रदीपघटवत् साहित्येनाप्रकाशनात् ॥ ३३ ॥
पक्षधर्मत्वसम्बन्धव्याप्तिसिद्धिव्यपेक्षणात् ।
वृक्षत्वाम्रत्वयोर्यद्वद् यद्वच्चानलधूमयोः ॥ ३४ ॥

---

मधुसूदनीविवृतिः ।

**वृथैवेत्यादि** । ध्वनेर्लक्षणे शब्दस्य उपादानं वृथैव कृतमिति उक्तमेव । यतः तच्छक्तिमूला शब्दशक्तिमूला अर्थान्तरे शब्दस्य अर्थान्तरबोधने काचिद्गतिः सामर्थ्यं नेष्टेति ।

**नचोपसर्जनत्वेनेति** । तयोः शब्दार्थयोः । चारुता ध्वनित्वमिति यावत् ।

**अत एव विशेषस्येति** । अत एव काव्यसामान्ये ध्वनित्वस्य इष्टत्वादेव । काव्यविशेषेत्यत्रत्यविशेषपदस्य । नार्थवत् निष्फलमित्यर्थः । तत् विशेषपदोपादानम् । काव्यविशेषस्य ध्वनिरिति संज्ञया सह सम्बन्ध एव एकं फलं यत्र तत् ।

**तदा चातिप्रसङ्ग इति** । संज्ञायामिति च पाठः । तदा संज्ञायां यस्य कस्यचित् काव्यविशेषस्य ध्वनिरिति संज्ञायां कृतायाम् सत्याम् अतिप्रसङ्गः अतिव्याप्तिः । यद् यदा वाक्यवर्तिनः अन्यस्य रसातिरिक्तस्य वस्तुविशिष्टस्य अलंकारविशिष्टस्य वा काव्यस्य विशेषः तया संज्ञया आश्रितः ग्रहणात् । केवलरसात्मनः काव्यस्य ग्रहणं स्यात् । अयं भावः । यदि काव्यविशेषस्य ध्वनिरिति संज्ञा स्यात्, विशेषश्च व्यङ्ग्यकृत एवेति निश्चयः । तत्र रसरूपव्यङ्ग्यं विना काव्यत्वस्यानवस्थानादिति काव्यत्वव्यहारबीजत्वं तस्य स्वीकृतम् । पारिशेष्यात वस्त्वलंकारयोः, व्यस्तस्य समस्तस्य वा व्यङ्गतायां विशेषो लभ्यते, न रसकृतः, स च व्यङ्ग्यो रसादन्य एवेत्यत उक्तम्—तदा चातिप्रसङ्ग इति ।

**वाच्यप्रत्येययोरिति** । स्फुटम् । **पक्षधर्मत्वसम्बन्धेति** । हेतोः पक्षधर्मत्वेन ( धूमवत्वेन ) सम्बन्धस्य विशेषस्य सिद्धेः व्यपेक्षणात्, व्याप्तेश्च द्वारा साध्यसामान्यस्य सिद्धेरपेक्षणात् अनुमानम् । अनुमानमेवेति पुरोवर्तिनिपदेऽन्वयः अयं भावः । साध्यस्य पक्षधर्मत्वं हेतोः पक्षधर्मताबलात्सिध्यति । यतोऽनुमानस्य द्वे अङ्गे पक्षधर्मता

अनुमानत्वमेवात्र युक्तं तल्लक्षणान्वयात् ।
असतश्चेन्द्रचापादेः का व्यक्तिः कृतिरेव सा ।। ३५ ।।
कार्यत्वं ह्यसतोऽपीष्टं हेतुत्वं तु विरुध्यते ।
सर्वसामर्थ्यविगमाद् गगनेन्दीवरादिवत् ।। ३६ ।।
शब्दप्रयोगः प्रायेण परार्थमुपयुज्यते ।
नहि तेन विना शक्यो व्यवहारयितुं परः ।। ३७ ।।
न च युक्तिनिराशंसात् ततः कश्चित् प्रवर्त्तते ।
निवर्तते वेत्यस्येष्टा साध्यसाधनगर्भता ।। ३८ ।।

---

मधुसूदनोविवृतिः ।

व्याप्तिश्च । तत्र पूर्वं व्याप्त्या साध्यसामान्यस्य सिद्धिः, पश्चात् पक्षधर्मतया साध्यस्य पक्षसम्बन्धो विशेषः सिध्यति । अन्यथा साध्यसामान्यस्य व्याप्तिग्रहादेव सिद्धे कृतमनुमानेनेति । यथा पर्वतधर्मेण धूमवत्वेन अग्नेः पर्वतसम्बन्धः सिध्यति । यथा च अयं देशः आम्रवान् तादृशवृक्षवत्वादित्यत्र इदंदेशधर्मेण तादृशवृक्षवत्वेन आम्रस्य इदंदेशसम्बन्धः सिध्यति ।

**अनुमानत्वमिति** । अत्र वाच्यप्रत्येययोर्मध्ये । ननु घटप्रदीपयोर्व्यक्तिलक्षणस्यावश्यमभ्युपेयत्वादसन्तं विहाय सतो ग्रहणं व्यक्तिलक्षणे नितरामपेक्षितम् । ततश्च यत्रार्कालोकादिनाऽसत इन्द्रचापादेः प्रकाशस्तत्र व्यक्तिर्न स्यादितीष्टापत्तेराह—अथवा वाच्यप्रत्येययोरर्थयोः घटप्रदीपवत् साहित्येनाप्रकानाद्व्यक्तिर्नाङ्गीक्रियते इति चेत्तर्हि अर्कालोकादिना इन्द्रचापादेः प्रकाशनेऽपि व्यक्तिर्नस्यादितीष्टापत्तेराह—**असतश्चेन्द्रचापादेरिति** । व्यक्तिलक्षणे सतो ग्रहणे यत्रार्कालोकादिना असत इन्द्रचापादेर्बोधस्तत्र का कीदृशी व्यक्तिः सा न व्यक्तिरित्यर्थः किन्तु कृतिरेव कारणमेव ।

ननु विषम उपन्यासः । यादृशं कारणं तादृशं कार्यम् । परं चात्र सतः कारणात् असत् कार्यमुत्पन्नमिति चेदस्तु । सत्याद् ब्रह्मणः असतो जगतः उत्पत्तेः कारणाद्विसदृशमपि कार्यं परिदृश्यते इति नायं विषम उपन्यास इत्यभ्युपगम्याह—

**कार्यत्वमसतोऽपीष्टमिति** । असतोऽपि पदार्थस्य कार्यत्वमिष्टम् । यथा असत्यस्य जगतः कार्यत्वं वर्त्तते । किन्तु असतः पदार्थस्य हेतुत्वं विरुध्यते । असतो हेतुत्वं युक्तेरागमाच्च विरुद्धमिति भावः । ननु कुतोऽसतो हेतुत्वं विरुद्धमित्याह—**सर्वसामर्थ्येति** । सर्वसामर्थ्यस्य कार्यजनकत्वरूपस्य सामर्थ्यस्य शक्तेः विगमात् अभावात् स एव हेतुर्भवितुमर्हति यत्र कार्यजनकत्वरूपं सामर्थ्यं स्यात् । असति च तस्मिन् तन्नास्ति इति विरुद्धमेव तस्य हेतुत्वमिति भावः । यथा गगनेन्दीवरम् । अत्र गगनेन्दीवरेण हेतुना सुरभित्वस्य साध्यस्य असिद्धत्वमेव ।

**न च युक्तिनिराशंसादिति** । युक्तेः निराशंसः अप्रयोगः । ततो युक्तिरहितवाक्यात् । न हि युक्तिमनवगच्छन् कश्चिद्विपश्चिद्वचनमात्रात्संप्रत्ययभाग् भवति ।

ते प्रत्येकं द्विधा ज्ञेये शाब्दत्वार्थत्वभेदतः ।
पदार्थवाक्यार्थतया ते अपि द्विविधे मते ॥ ३६ ॥
तत्र साध्यो वस्तुमात्रमलङ्कारा रसादयः ।
इति त्रिधैव, तत्राद्यौ पदं शब्दानुमानयोः ॥ ४० ॥
अन्त्योऽनुमेयो भक्त्या तु तस्य व्यङ्ग्यत्वमुच्यते ।
भक्तेः प्रयोजनांशो यश्चमत्कारित्वलक्षणः ॥ ४१ ॥
स तत्रास्तीति, सोऽप्यस्य विभावाद्येकहेतुकः ।
अत एव न लोकेऽपि चमत्कारः प्रसज्यते ॥ ४२ ॥
तत्र हेत्वादयः सन्ति न विभावादयो यतः ।
न चैकार्थत्वमाशङ्क्यमेषां लक्षणभेदतः ॥ ४३ ॥
स्वभावश्चायमर्थानां यन्न साक्षादमी तथा ।
स्वदन्ते सत्कविगिरां गता गोचरतां यथा ॥ ४४ ॥

इति सङ्ग्रहश्लोकाः ।

यत् पुनरस्यानेकशक्तिसमाश्रयत्वाद्व्यापारान्तरपरिकल्पनं तदर्थस्यै-

---

मधुसूदनीविवृतिः ।

ते प्रत्येकं द्विधेति । ते वाक्यस्य साध्यसाधनगर्भते । ते अपीति । ते अपि शाब्दत्वार्थत्वभेदेन द्विविधेऽपि साध्यसाधनगर्भते ।

तत्र साध्य इति । तत्र साध्यसाधनयोर्मध्ये । तत्राद्याविति । तत्र वस्तुमात्रालङ्काररसेषु आद्यौ वस्तुमात्रालङ्कारौ । शब्दस्य पदं स्थानम् अर्थात् वाच्यावपि भवतः । अनुमानस्य अनुमितिसाधनस्य पदं भवतः । भक्तेः लक्षणायाः ।

स तत्रास्तीति । स चमत्कारः अत्रानुमेयेऽस्ति इति हेतोरनुमेयो भक्त्या व्यङ्ग्य इत्युच्यते । सोऽपि चमत्कारोऽपि अस्य अनुमेयस्य व्यङ्ग्यस्य वा । अत एव विभावाद्येकहेतुकत्वादेव चमत्कारस्य ।

तत्र हेत्वादय इति । तत्र लोके लौकिकवाक्येऽपीत्यर्थः । एकार्थत्वं एकरूपत्वमिति तात्पर्यम् । एषां हेत्वादीनां विभावादीनाम् ।

अथ महता समारम्भेण अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधेति आलङ्कारिकमतदूषयितुमुपक्रमते—यत्पुनरस्यानेकशक्तिसमाश्रयत्वादिति । ननु यदि "शब्दस्यैकाभिधैवास्ति" इति भवता शब्दस्य एकमात्रशक्तिकत्वमुरीक्रियते तर्हि "वयस्था नागराऽऽसङ्गादङ्गानां हन्ति वेदनाम्" "जैमिनीयमलं धत्ते रसनायामयं द्विजः" इत्यादि नानार्थप्रतिपादकशब्दस्थले "वयस्था युवती नागरासङ्गात् नागरिकपुरुषासङ्गात् अङ्गानां नागरिकाङ्गानामित्यर्थः वेदनां कामजनितपीडां हन्ति निवारयति" "अयं द्विजो ब्राह्मणः रसानायां जिह्वायां जैमिनीयं शास्त्रं मीमांसाम् अलं पर्याप्तं धत्ते धारयति" इत्येतादृशैकविधबोधोत्तरं सहृदयहृदये जायमानः अप्राकरणिकस्य अन्यविधस्य

वोपपद्यते न शब्दस्य, तस्यानेकशक्तिसमाश्रयत्वासिद्धेः । तथा हि—एकाश्रयाः शक्तयोऽन्योन्यानपेक्षप्रवृत्तयोऽपाकृतपौर्वापर्यनियमा युगपदेव स्वकार्यकारिण्यो दृष्टाः यथा दाहकत्वप्रकाशकत्वादयोऽग्नेः । न च शब्दाश्रयाः शक्तयस्तथा दृश्यन्ते, अभ्युपगम्यन्ते वा, नियोगतोऽभिधाशक्तिपूर्वकत्वेनेतरशक्तिप्रवृत्तिदर्शनात् । तस्माद्भिन्नाश्रया एव ता न शब्दैकसमाश्रया इत्यवसेयम् ।

मधुसूदनीविवृतिः ।

अर्थस्य "वयस्था हरीतकी नागरासङ्गात् शुण्ठीसहयोगात्" "जैमिनीयं मलं पुरीषम्" इत्येतादृशस्य बोधस्य अनुभवो दुर्घटः । अप्राकरणिकार्थस्य चमत्कारविशेषजनकत्वेन तत्र वैजात्यमवश्यं वाच्यम् । वैजात्यस्य च कारणविशेषाधीनसिद्धिकत्वेन कारणरूपव्यापारान्तरमवश्यमभ्युपेयम् । न वाच्यमभिधायवास्त्विति । अभिधेयार्थबोधे तात्पर्यज्ञानस्य अथवा तात्पर्यग्राहकप्रकरणादिज्ञानस्य हेतुत्वात् । द्वितीयार्थविषयकशाब्दबोधे च प्रकरणादिज्ञानस्याभावात् । नापि लक्षणयैवास्त्विति साम्प्रतम्, अभिधेयार्थे तदसम्भवादिति व्यापारान्तरपरिकल्पनमुचितमित्यत आह—

यत्पुनरस्येति । यत्पुनः यच्च अस्य शब्दस्य अनेकशक्तिसमाश्रयत्वात् अनेकविधार्थबोधाय नानाशक्तीनां सहकारित्वमावश्यकमिति भावः । व्यापारान्तरस्य स्वार्थप्रकाशनातिरिक्तस्य व्यङ्ग्यार्थबोधनस्य परिकल्पनं क्रियते, तत् परिकल्पनम् अर्थस्यैव उपपद्यते युक्तियुक्तं भवति न शब्दस्य । तस्य शब्दस्य अनेकविधार्थबोधाय अनेकशक्तीनां समाश्रयत्वस्य स्वीकारस्य असिद्धेः ।

तथाहीति—शब्दगतानेकशक्तिसमाश्रयत्वासिद्धिं दर्शयितुमुपक्रमते । यत्र स्थले एकाश्रयाः एकनिष्ठाः अनेकाः शक्तयोः वर्त्तन्ते तत्र अन्योन्यनिरपेक्षाः परस्पराकाङ्क्षारहिताः अपाकृतपौर्वापर्यनियमाः पूर्वापरीभावनियमविधुराः युगपदेव सहैव स्वकार्यकारिण्यो दृष्टाः । यथा अग्नेः दाहकत्वशक्तिः न प्रकाशकतां शक्तिमनुरुणद्धि प्रवर्त्तने, न च प्रकाशकता शक्तिः दाहकताशक्तिम् । एवमेव न पूर्वं दाहकता शक्तिः पश्चात्प्रकाशकता शक्तिः प्रवर्त्तते, न वा पूर्वं प्रकाशकता पश्चाद्दाहकता किन्तु सहैव ते प्रवर्त्तेते ।

शब्दाश्रयाः शब्दगतास्ताः शक्तयः तथा अन्योन्यानपेक्षप्रवृत्तयः, अपाकृतपौर्वापर्यनियमाः, युगपदेव स्वकार्यकारिण्यो वा न दृष्टाः क्वचित्स्थले न अनुभूताः, न वा केनचन पुरुषेण तथा अभ्युपगम्यन्ते स्वीक्रियन्ते । किन्तु तद्विरुद्धं नियोगतः प्रकरणादिना नियन्त्रणात् अभिधाशक्तिपूर्वकत्वेन इतरस्याः शक्तेः प्रवृत्तिदर्शनात् अन्योन्यापेक्षप्रवृत्तयः स्वीकृतपौर्वापर्यनियमाः भिन्नकाले स्वकार्यकारिण्योऽनुभूयन्ते ।

तस्मात् उक्तकारणाद्धेतोः ताः शक्तयः भिन्नाश्रया भिन्नप्रस्थानाः स्वीकार्या इति शेषः । शब्द एव निष्ठाः इति नावसेयम् इति न बोध्यम् ।

यश्चासावाश्रयो भिन्नः सोऽर्थ एवेति तद्व्यापारस्यानुमानान्तर्भावोऽभ्युपगन्तव्य एव। तथा हि। गौर्वाहीक इत्यादौ तावद्गवादयोऽर्था बाधितवाहीकाद्यर्थान्तरैकात्म्यास्ताद्रूप्यविधानान्यथानुपपत्त्या केनचिदंशेन तत्र तत्त्वमनुमापयन्ति न सर्वात्मना।

न ह्यनुन्मत्तः कश्चित् क्वचित् किञ्चित् कथंचित् साधर्म्यमनुत्पश्यन्नेवाकस्मात् तत्त्वमारोपयतीति परिशीलितवक्तृस्वरूपः प्रतिपत्ता तत्त्वारोपनिमित्तं सादृश्यमात्रमेव प्रतिपत्तुमर्हति न तत्त्वम्।

तद्धि वाच्यतयोपक्रम एव भासते, न प्रतीतिपर्यवसानास्पदं भवितुमर्हति, तस्य बाधोपपत्तेः। तस्य चैवंविधस्योपक्रमस्य निमित्तं साधर्म्यमात्रप्रतिपादनम्। प्रयोजनञ्च लाघवेन वाहीकादौ गवादिगतजाड्यादिधर्मप्रतिपादनं यस्मादतिदेशप्रकारोऽयमर्थान्तरे शब्दविनिवेशो नाम। यदुक्तम्—

---

मधुसूदनीविवृतिः।

एवं शक्तीनां भिन्नाश्रयत्वं समाधाय शक्त्यन्तरस्य अनुमानान्तर्भावं साधयति—यश्चासावाश्रय इति। यश्चासौ शक्तेराश्रयः भिन्नः स आश्रयः अर्थ एव इति हेतोः तद्व्यापारस्य अर्थगतव्यापारस्य अनुमानान्तर्भावः स्वीकार्यः।

कथमनुमानान्तर्भाव इति दर्शयितुमुपक्रमते–तथाहीति। "गौर्वाहीक" इत्यादि स्थले गवादयोऽर्थाःबाधितम्। गोत्ववाहीकत्वेतिभिन्नधर्मप्रकारकोपस्थित्या सामानाधिकरण्येनान्वयस्य अनुपपन्नत्वादिति भावः। वाहीकाद्यर्थान्तरैः सह ऐकात्म्यं ताद्रूप्यं येषां ते तथोक्ताः। ताद्रूप्यविधानस्य वाहीको गौरिति कथनस्य अन्यथा प्रकारान्तरेण वाहीके गोगतधर्मास्वीकारेण अनुपपत्त्या असङ्गत्या केनचिदंशेन केनाप्येकेन न सर्वतो भावेन धर्मेण जडादिना तत्र वाहीके तत्त्वं गोत्वमनुमापयन्ति वाहीको गवाभिन्नः गोगतजाड्यादिधर्मसमानधर्मवत्त्वादित्यनुमितिं जनयन्ति।

ननु न शक्याभेदबुद्धिर्लक्षणायाः फलम् अपि तु सादृश्यातिशयबुद्धिः। तच्च त्वन्मते न प्रतीतिपथमवतरति केवलस्य अभेदस्यैव अनुमापनादित्याह—नह्यनुन्मत्तः इति।

साधर्म्यं समानेन धर्मेण सम्बन्धम् अनुत्पश्यन् अनुत्प्रेक्षमाणः अकस्मादेव कारणं विनैव तत्वं गोत्वं न आरोपयति। इति तत्वारोपस्य गोत्वारोपस्य निमित्तं कारणं सादृश्यमात्रमेव प्रतिपत्ता बोद्धा परिशीलितवक्तृस्वरूपः सन् स्वायत्ते शब्दयोगे किमिति अवाचकः शब्दः प्रयुज्यते इति कारणं गवेषयन् सन् प्रतिपत्तुं ज्ञातुमर्हति। न केवलं तत्वं गोत्वं प्रतिपत्तुमर्हति।

तद्धि गोत्वं हि वाच्यतया गौर्वाहीक इत्यत्र गोशब्दस्याभिधेयतया उपक्रम एव प्रयोगकाल एव भासते सर्वस्य हृदीत्यर्थः। अतः प्रतीतिपर्यवसानास्पदं प्रतीत्यु-

'जातिशब्दोऽन्तरेणापि जातिं यत्र प्रयुज्यते ।
सम्बन्धिसदृशाद्धर्मात् तं गौणमपरे विदुः ।। ४५ ।।

एवं 'कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्, इत्यादाववगन्तव्यम् । अविनाभावावसायपूर्विका ह्यन्यतोऽन्यस्य प्रतीतिरनुमानमित्यनुमानलक्षणमुक्तम् । तच्चात्रोपलभ्यत एव ।

तथा हि वदतीत्यादौ वदनादेरर्थान्तरस्य प्रकाशादेः प्रतीतिः । तयोश्चाविनाभावः कार्यकारणभावकृतः प्रकाशनस्य वदनकार्यत्वप्रसिद्धेः ।

---

मधुसूदनीविवृतिः ।

त्तरकालत्वं नार्हति इति भावः । उपक्रमभासने एव तस्य गोत्वस्य बाधोपपत्तेः । तस्य चैवंविधस्य बाहीके गोत्वारोपस्य निमित्तं हेतुः केवलं साधर्म्यप्रतिपादनम् । लाघवेन झटिति बाहीकादौ आरोपविषये गवादिगतस्य जाड्यादिधर्मस्य प्रतिपादनं प्रयोजनम् । यस्मात्कारणात् अर्थान्तरे शब्दनिवेशः शब्दप्रयोगः अयं अतिदेशस्य प्रकारः अतिशयप्रतिपादनस्य भेदः । तथाच न्यायः "अन्यत्रान्यशब्दप्रयोगः तद्धर्मप्राप्त्यर्थः" इति ।

अर्थान्तरे शब्दनिवेशः अतिदेशः यमन्ये गौण इति जानन्तीति वृद्धोक्त्या प्रकाशयति—जातिशब्दोऽन्तरेणापीति । यत्र स्थले जातिमन्तरेणापि जातिं विनाऽपि जातिशब्दः जातिप्रवृत्तिनिमित्तकः शब्दः सम्बन्धिसदृशात् सम्बन्धितुल्यात् धर्मात् प्रयुज्यते तं शब्दम् अपरे आचार्याः गौणं विदुः गौणनामकं जानन्ति ।

लक्ष्यान्तरमुदाहरति—एवं कृशाङ्ग्याः सन्तापमिति । एवमनुना प्रकारेण

परिम्लानं पीनस्तनजघनसङ्गादुभयतः ।
स्तनोर्मध्यस्यान्तः परिमलनमप्राप्य हरितम् ॥
इदं व्यस्तन्यासं प्रशिथिलभुजाक्षेपवलनैः ।
कृशाङ्ग्याः सन्तापं वदति विसिनीपत्रशयनम् ॥

इत्युदाहरणे अवगन्तव्यम् बोद्धव्यम् । अविनाभावो व्याप्तिः तदवसायपूर्विका तन्निश्चयहेतुका अन्यतः हेतोः सकाशात् अन्यस्य साध्यस्य प्रतीतिर्ज्ञानम् अनुमानमिति इत्येवंरूपमनुमानलक्षणमुक्तमाचार्यैः । तच्च अनुमानं च अत्र कृशाङ्ग्याः सन्तापं वदतीत्यादौ उपलभ्यत एव ।

तथाहीति । कृशाङ्ग्याः सन्तापमिति स्थले अनुमानोद्भावनप्रकारं दर्शयति—वदतीत्यादौ इति । वदतीत्यादौ लक्ष्ये वदनादेः सकाशात् अर्थान्तरस्य प्रकाशादेः प्रतीतिः । तयोश्च वदनप्रकाशयोश्च कार्यकारणभावकृतः अविनाभावो व्याप्तिरस्ति वदनादेः सकाशात् प्रकाशनस्य प्रतीत्या प्रकाशनं वदनस्य कार्यम् । तथैव कार्यत्वेनैव प्रसिद्धेः । ननु शयनस्य जडस्य वदनक्रियासम्भवात् "वदति" इत्यस्य "प्रकाशयति" इति अर्थ एवेति चेदाह-न वदतेरिति । प्रकाशो वदतेः क्रियायाः वाच्यः अभिधेय

न च वदतेः प्रकाशो वाच्य इति शक्यं वक्तुं तस्य तत्रासमितत्वात् प्रकाशस्य चातत्त्वात्। न चायं स्वार्थमेव प्रतिपादयति, तस्य बाधोपपत्तेः

अथोपचारत उपादानान्यथानुपपत्त्या वदनक्रियायाः सदृशे प्रकाशनाख्ये क्रियान्तरे वर्त्ततेऽयं वदतिरित्युच्यते। तर्ह्यन्यथानुपपत्त्या वदनादेः प्रकाशादिः प्रतीयमानोऽनुमेय एव भवितुमर्हति, अर्थापत्तेरनुमानान्तर्भावाभ्युपगमादित्युक्तम्।

तस्माद्योऽयं वाहीकादौ गवादिसाधर्म्यावगमः स तत्त्वारोपान्यथानुपपत्तिपरिकल्पितोऽनुमानस्यैव विषयः। न शब्दव्यापारस्येति स्थितम्।

---

मधुसूदनीविवृतिः।

इति वक्तुं न शक्यम्।

को हेतुरित्याह-तस्य तत्रासमितत्वादिति। तस्य प्रकाशस्य तत्र वदने असमितत्वात् असंकेतितत्वात्। समितपदार्थः संकेतित इत्यत्र प्रमाणम्—"जातिः क्रिया गुणः संज्ञा वाच्योऽर्थः समितध्वनिः" इति कारिका "तेन समितः संकेतितो ध्वनिः शब्दो यत्र सोर्थः" इति तद्वृत्तिरिति—मम्मटाचार्यविरतिशब्दो व्यापारविचाराख्यो ग्रन्थः। ननु मा भवतु संकेतस्तत्र तस्य परन्तु यो घटः स एव कलशः यः कलशः स एव घटः इत्यनयोरिव वदतेरपि अर्थात् कथनक्रियाऽपि अर्थस्य प्रकाशनं करोतीति वदतिप्रकाशनयोः पर्यायत्वमस्तु इत्याह—प्रकाशस्य चेति। प्रकाशस्य अन्यत्वात् स्वरूपतो प्रकारतश्च वदतेः भिन्नत्वात्। एकत्वे हि क्वचिदपि नीलपीतादौ भेदो न स्याद्गुणत्वेन एकत्वादिति। न पर्यायत्वमित्याशयः।

ननु अन्योक्तिषु यथा अचेतनानामपि वाकोवाक्यं वर्त्तते तथैवात्रापि वाक्ये व्यवस्थास्यात्तथा च स वदतिः स्वार्थमेव प्रतिपादयतीति चेन्न-तस्य वदतेः बाधोपपत्तेः। अन्योक्तिष्वपि चेतनाध्यारोपेणैव वाकोवाक्यसमन्वयः। एवमत्र अचेतने शयने कथनानुपपत्त्या बाध एव सङ्गच्छते इत्याशयः।

नन्विदं वदतिपदमुपचारेण प्रयुक्तं तदन्यथानुपपत्तिरूपार्थापत्त्या प्रकाशो वदत्यर्थ एवेत्याशंक्य समाधत्ते—अथोपचारत उपादानेति। अथेति पक्षान्तरे। उपचारत उपादानस्य लक्षणया कृतस्य प्रयोगस्य अन्यथा अर्थान्तरं विना अनुपपत्त्या अर्थापत्तिरूपयेति भावः। तर्हि तथापि। अर्थापत्तेरपि व्याप्तिज्ञानाधीनतयैव अर्थोपस्थापकत्वात् व्याप्तिज्ञानपूर्विका अन्यतोऽन्यस्य प्रतीतिरिति लक्षणके अनुमाने एवान्तर्भावः।

उपसंहरन्नाह—तस्माद्योऽयमिति। तस्मादुपदर्शितप्रकारेण अनुमानलक्षणसङ्गतेः। तत्वारोपान्यथानुपपत्त्या वाहीकादौ गवादिसाधर्म्यस्य गोत्वारोपं विना अनुपपत्तिरिति अन्यथानुपपत्तिरूपयाऽर्थापत्त्या परिकल्पितः निश्चितो योऽयं वाहीकादौ गवा-

गोत्वारोपेण बाहीके तत्साम्यमनुमीयते ।
को ह्यतस्मिन्नतत्तुल्ये तत्त्वं व्यपदिशेद् बुधः ॥ ४७ ॥

इति सङ्ग्रहश्लोकः ।

गङ्गाया घोष इत्यादावपि गङ्गादयोऽर्थाः स्वात्मन्यनुपपत्तिबाधित-घोषाद्यधिकरणभावास्तदुपादानसामर्थ्यात् सम्बन्धमात्रपरिकल्पिततत्त्वारोपं तदधिकरणभावोपगमयोग्यमर्थान्तरमेव तटादिरूपमनुमापयन्ति ।

न हि तत्सादृश्यमेवैकं तत्त्वारोपनिबन्धनमिष्यते, किन्तर्हि, तत्सम्बन्धादिरपि, इति तत्सम्बन्धमात्रसमारोपिततद्भावस्तटादिरेव घोषाद्यधिकरणभावोपादानान्यथानुपपत्त्या गङ्गादीनामर्थानामनुमेय एव भवितुमर्हति ।

शब्दः पुनः स्वार्थाभिधानमात्रव्यापारपर्यवसितसामर्थ्यो नार्थान्तरस्य तटादेर्वार्तामपि वेदितुमुत्सहते, किं पुनः संस्पर्शमित्युक्तम् । प्रयोजनं पुनरस्यैवंविधस्योक्तिवैचित्र्यपरिग्रहस्य तटादावारोपविषये वस्तुन्यारो-

---

मधुसूदनीविवृतिः ।

दिसाधर्म्यस्यावगमः स अनुमानस्यैव नान्यस्य । शब्दव्यापारस्य विषयः इति स्थितम् सिद्धमिति परमार्थः ।

उक्तार्थं कारिकया संगृह्णाति—गोत्वारोपेणेति । गोत्वारोपेणेति हेत्वर्थकनिमित्ते तृतीया । तथा च बाहीके गोत्वारोपनिमित्तं तत्साम्यं गवादिसाधर्म्यमनुमीयते । हि यस्मात् को बुधः अतिदेशप्रकारविशेषज्ञः अतस्मिन् स्वभिन्ने अतत्तुल्ये स्वासदृशे वस्तुनि तत्त्वं स्वत्वं व्यपदिशेत् व्यवहरेत् ।

लक्ष्यान्तरेऽपि एषैव प्रमेयशय्येति संगमय्य दर्शयति—गङ्गायां घोष इति । गङ्गायां घोष इत्यादौ स्थले गङ्गादयोऽर्थाः स्वात्मनि गङ्गायां घोषान्वयस्य अभावात् अनुपपत्त्या असंगत्या बाधितो घोषादेरधिकरणभावो आश्रयत्वं येषां ते तादृशाः । तदुपादानसामर्थ्यात् तादृशशब्दप्रयोगवशात् । सम्बन्धमात्रेण सामीप्यसम्बन्धमात्रेण परिकल्पितं कृतं तत्त्वारोपं गोत्वारोपम् । तदधिकरणभावोपगमयोग्यम् घोषाश्रयत्वज्ञानार्हम् ।

ननु पूर्वं तत्त्वारोपनिमित्तं सादृश्यमुपात्तमिह तु तन्निमित्तं सम्बन्ध इति विभिन्नमेवोच्यत इत्याशंकायामाह-न हि तत् सादृश्यमेवेति । एकं केवलम् । तत्सम्बन्धमात्रसमारोपिततद्भावः गङ्गासम्बन्धमात्रेण समारोपितः तद्भावः गङ्गात्वम् यस्मिन् स तटादिः । घोषाद्यधिकरणत्वेन उपादानस्य अन्यथा तत् विना अनुपपत्त्या असंगत्या ।

शब्दः पुनः गङ्गाशब्दः पुनः स्वस्य गङ्गाशब्दस्य अर्थः प्रवाहः तस्य अभिधानम् अभिधया प्रतिपादनं तन्मात्रव्यापारे पर्यवसितः समाप्तः सामर्थ्यः शक्तिर्यस्य सः

प्यमाणगङ्गादिगतपुण्यत्वशीतलत्वादिधर्मप्रतिपत्तिर्न सादृश्यमिति पूर्वस्मादस्य विशेषः। उभयत्रापि च तत्त्वारोप एव हेतुः। स हि तत्साम्यतत्सम्बन्धादिनिबन्धनत्वाद् बहुविध इष्टः। यदाहुः—

"अभिधेयेन सम्बन्धात् सादृश्यात्समवायतः।
वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥"

---

मधुसूदनीविवृतिः।

वेदितुमपि ज्ञातुमपि न उत्सहते चेष्टते। उक्तिवैचित्र्यपरिग्रहस्य स्वायत्ते शब्दप्रयोगे किमिति अन्यार्थं बोधयितुमन्यार्थकान् शब्दान् प्रयोक्ष्याम अस्ति किमपि तादृश शब्दप्रयोगस्वारस्यमिति गवेषणया धर्मलाभः प्रयोजनं प्रतिपद्यते इति युक्त्या गङ्गातटमिति प्रयोगं विहाय (तटस्य) गङ्गायां घोष इत्यनेन वाक्येन उक्तिः कथनमेव वैचित्र्यम्। तादृशवैचित्र्यस्य परिग्रहः स्वीकारः तस्य।

**पूर्वस्मात् गौर्वाहीक इति प्रयोगात्** अस्य गङ्गायां घोष इत्यस्य वाक्यस्य विशेषः भेदः "गौर्वाहीकः" "गंगायां घोषः" इत्युभयस्थले धर्मप्रतीतिरूपं प्रयोजनं समानम्। परं पूर्वस्मिन् प्रयोगे सादृश्यप्रतीतिरधिका इतीयान् भेदः। अर्थात् पूर्वस्मिन् गौणी लक्षणा उत्तरत्र शुद्धेति रहस्यम्। उभयत्रापि सादृश्ये सम्बन्धे च। स हि हेतुर्हि तत्साम्यम् अभिधेयेन साम्यम् सादृश्यम्। तेन सम्बन्धः सामीप्यकार्यकारणभावादिः। तन्निबन्धनत्वात् बहुविधः अनेनप्रकारः।

तत्वारोपे हेतोरुक्तं बहुविधत्वमाचार्यभर्तृमित्रोक्त्या सम्वादयति—**अभिधेयेन सम्बन्धादिति**। अभिधेयसम्बन्धादिभिर्ज्ञायमाना लक्षणा पञ्चधा मतेत्यन्वयः— अभिधेयो वाच्योऽर्थः तेन सम्बन्धात् लक्षणा मता। यथा द्विरेफादिशब्दस्य भ्रमरादिशब्दोऽभिधेयः, तत्सम्बन्धात्तेन द्विरेफपदेन षट्पदो लक्ष्यते। प्रयोजनं चैवंविधेषु लक्ष्येषु सान्तरार्थपरिग्रहे अनादिवृद्धव्यवहारप्रसिद्ध्यनुसरणात्मकत्वात् रूढ्यनुवृत्तिस्वभावमेव न फलस्वभावम्। एवमेव द्विपादिपदेषु बोध्यम्। **सादृश्याद्यथा**=गौर्वाहीकः, गौरवायम्, इत्यादौ मुख्यार्थस्य सास्नादिमत्वादेः प्रत्यक्षादिप्रमाणेन बाधात् अभिधेयेन सादृश्यात् तद्गतजाड्यमान्द्यादिगुणयुक्तो बाहीको लक्ष्यते। प्रयोजनं च सारोपायां तादूप्यप्रतिपत्तिः, साध्यवसानायां सवर्थाऽभेदप्रतिपत्ति। **समवायः** उक्तसम्बभ्यो भिन्न सम्बन्धः। स च सामीप्यात्मकः साहचर्यात्मकः कार्यकारणभावात्मकः इत्यादिः। तत्र **सामीप्याद्यथा**—गङ्गायां घोषः अत्र गङ्गाशब्दाभिधेयस्य स्रोतोविशेषस्य घोषाधारतानुपपत्तेः मुख्यार्थबाधे योऽयं तटस्य समवायः समीपसमीपिभावात्मा सम्बन्धस्तदाश्रयणेन गङ्गाशब्दस्तटं लक्षयति। प्रयोजनं च गङ्गात्वैकार्थसमवेतशैत्यपावनत्वादिप्रतिपादनम्। न ह्येतत्पावनत्वादि, गङ्गातटेत्यादिस्वशब्दैः स्प्रष्टुमपि शक्यम् अव्याप्त्यतिव्याप्तिप्रसङ्गात्। **साहचर्याद्यथा**—छत्रिणो यान्ति कुन्ताः

इति । तस्य च तैरविनाभावनियमो लोकत एवावसित इति न तत्र प्रमाणान्तरापेक्षाप्रयासः । लोको हि तत्सदृशमर्थं तत्सम्बद्धं च तत्त्वेन व्यवहरन् दृश्यते, तद्यथा दीर्घग्रीवं विकटकायं च कश्चित् पश्यन् करभ इति व्यपदिशति, मञ्चसम्बद्धांश्च कांश्चित् क्रोशतो मञ्चाः क्रोशन्तीति ।

किञ्चोपचारवृत्तौ शब्दस्य मा भूदतिप्रसङ्ग इत्यवश्यं किमपि निमि-

---

मधुसूदनीविवृतिः ।

प्रविशन्ति । अत्र गमनलक्षणायां क्रियायां छत्रिणा सह योऽयं छत्रशून्यानां समवायः साहचर्यं तद्वशात् छत्रिपदेन छत्रशून्या अपि लक्ष्यन्ते । प्रयोजनं चात्र छत्रशून्यानां सर्वात्मना छत्रोपेतस्वाम्यनुयायित्वेन प्रतिपादनम् । द्वितीयस्थले च कुन्तानां प्रवेश-क्रियया सह अन्वयानुपपत्तेः मुख्यार्थबाधे साहचर्यात् कुन्तवन्तः पुरुषाः लक्ष्यन्ते प्रयोजनं तु रौद्रत्वादीनां सातिशयानां प्रतिपादनम् । कार्यकारणभावाद्यथा—आयुर्घृतम् । आयुरेवेदम् । अत्र घृतस्य स्नेहसमवायिकारणस्य द्रवद्रव्यस्य दीर्घकाल-जीवनरूपक्रियास्वरूपत्वाभावात् मुख्यार्थबाधे योऽयं जन्यजनकभावः सम्बन्धस्तदाश्र-येण आयुर्जनकत्वेन घृतं लक्ष्यते प्रयोजनं चैकत्र इतरवैलक्षण्येन अपरत्र अव्यभिचारेण आयुष्कारित्वप्रतिपादनम् । वैपरीत्याद्यथा=अभद्रमुखे भद्रमुखः । अत्र भद्रमुख-शब्दस्य अभद्रमुखे प्रयोगात् स्वार्थबाधः । अतोऽसौ भद्रमुखशब्दः स्ववाच्यभूतस्य भद्रमुखत्वस्य विपरीतत्वादभद्रमुखत्वं विपरीतनिबन्धनया लक्षणया प्रत्याययति । प्रयोजनं च गुप्तासभ्यार्थप्रतीतिः । यत एवंविधो ह्यर्थः तत्तदभिप्रायवशेन प्रयोक्तृभिः प्रायेण प्रतिपाद्यते । क्रियायोगाद्यथा—महति समरे शत्रुघ्नस्त्वम् । अत्र अशत्रुघ्ने शत्रुघ्नपदप्रयोगान्मुख्यार्थबाधः । शत्रुघ्नशब्दश्च शत्रुघ्नभिन्ने राज्ञि शत्रुहननक्रि-याकर्तृत्वयोगाल्लक्षणयोक्तः । प्रयोजनं च वर्ण्यमानस्य शत्रुघ्नपदाभिधेयदशरथापत्यरूपं-नृपतितादूप्यप्रतिपादनम् । अलङ्कारिकधियेदं व्याख्यानम् । अयं तु सर्वत्र अनुमेयत्व-मिच्छति ।

तस्य च तैरिति । तस्य तत्वारोपस्य च तैः साम्यादिभिः सह अविनाभा-वनियमः व्याप्त्याख्यसम्बन्धनिश्चयः लोकतः लौकिकवाक्यत एव अवसितः ज्ञातः । लोके हि प्रायशः तत्तदभिप्रायवशेन अन्यधर्मप्रतिपत्तये अन्यत्र अन्यशब्दः प्रयुज्यते । निश्चितसम्बन्धमन्तरा च कथं तैः तादृशेऽर्थे तादृशाः शब्दाः प्रयुज्येरन्नित्यवश्यं सम्बन्धोऽवसेयो भवति । इति भावः । इति हेतोः तत्र सम्बन्धनियमे प्रमाणान्तरा-पेक्षागवेषणप्रयासो न कर्त्तव्य इति शेषः ।

ननु कथं लोकतः सम्बन्धनिश्चय इत्याह—लोको हीति । गौर्वाहीक इत्यत्र । तत्सम्बद्धम् अर्थम् । तत्वेन एकत्र गोत्वेन अपरत्र गङ्गात्वेन । तद्यथेत्यनेन क्रमशः सदृशार्थः सम्बद्धार्थश्च उदाह्रियते ।

संकेताविषयीभूतार्थप्रकाशनतया किञ्चेत्यनेन गुणवृत्तेरनुमित्यन्तर्भावमुपसंहरति ।

त्तमनुसर्तव्यम् । अन्यथान्यत्र प्रसिद्धसम्बन्धः कथमसमितमेवार्थान्तरं प्रत्याययेत् । यच्च तन्निमित्तं तदेवास्माभिरिह लिङ्गमित्याख्यातम् । युक्तश्चैतत् । शब्दस्य तत्र व्यापाराभावात । व्यापाराभावश्च सम्बन्धाभावात् । लिङ्गाच्च लिङ्गिनः प्रतीतिरनुमानमेवेति न गुणवृत्तावर्थान्तरप्रतीतिः शाब्दीति तस्या वाचकाश्रयत्वमसिद्धमेव ।

यः स तत्त्वसमारोपस्तत्सम्बन्धनिबन्धनः ।
मुख्यार्थबाधे सोऽप्यार्थं सम्बन्धमनुमापयेत् ॥ ४६ ॥

तत्साम्यतत्सम्बन्धौ हि तत्त्वारोपैककारणम् ।
गुणवृत्तेर्द्विरूपायास्तत्प्रतीतिरतोऽनुमा ॥ ४७ ॥

---

मधुसूदनीविवृतिः ।

उपचारवृत्तौ गौणीलक्षणायां शब्दस्य अतिप्रसङ्गः अतिव्याप्तिः मा भूदिति । अन्यथा कस्यचिन्निमित्तस्यानुसरणाभावे । अन्यत्र भिन्ने अर्थे प्रसिद्धसम्बन्धः गृहीतसंकेतः शब्दः कथमसमितमेव असंकेतितमेव अर्थान्तरं भिन्नमर्थं प्रत्याययेत् बोधयेत् । यच्च अर्थान्तरप्रकाशने तस्य शब्दस्य निमित्तं हेतुः तदेव निमित्तम् इह व्यक्तिविवेकग्रन्थ अस्माभिः लिंङ्गमिति साधनमिति आख्यातम् । एतत् लिङ्गत्वाख्यानम् युक्तञ्च समीचीनमपि । तत्र अर्थान्तरे अर्थात् शब्दस्य अर्थान्तरं प्रकाशयितुं व्यापाराभावात् ।

ननु कुतो व्यापाराभाव इत्याह—व्यापाराभावश्चेति । सम्बन्धाभावात् । अर्थान्तरे शब्दस्य संकेताभावः, ततश्च तयोः शब्दार्थयोः सम्बन्धाभावः, तस्माच्च व्यापाराभावः, इति तमर्थं बोधयितुं शक्तिर्न प्रवर्तते इत्यर्थः । प्रकृतमनुयोजयति—लिङ्गाच्चेति । इति हेतोः गुणवृत्तौ लक्षणायाम् अर्थान्तरप्रतीतिः न शाब्दी न शब्दनिष्ठव्यापारप्रयोज्याऽतस्तस्याः प्रतीतेः वाचकाश्रयत्वं शब्दाधीनत्वमसिद्धमेव अयुक्तमेवेति ।

उक्तमर्थं कारिकाभिः संगृह्णाति—यः स तत्त्वसमारोपः इति । मुख्यार्थबाधे सति यः अतस्मिन् तत्वसमारोपः । ( यथा बाहीके गोत्वारोपः ) स समारोपः तत्सम्बन्धनिबन्धनः । तस्य गोः सम्बन्धः जाड्यादिसदृशजाड्यादिमत्वमेव निबन्धनं यत्र स तथाभूतः । सोऽपि समारोपोऽपि आर्थं वाच्यार्थनिष्ठं सम्बन्धमनुमापयेदिति । न शाब्दं सम्बन्धमनुमापयेदित्यर्थः ।

तत्साम्यतत्सम्बन्धाविति । बाहीकादिषु गवादिसाम्यमिति बाहीके गोत्वारोपः, तटादिषु गङ्गादीनां सामीप्यसम्बन्ध इति तटे गङ्गात्वमारोप्यते इत्येवं तत्साम्यम् तत्सम्बन्धश्च एकस्य तत्वारोपस्य कारणम् । अतः कार्यकारणभावात् हेतोः द्विरूपायाः शुद्धायाः उपचारमिश्रायाश्च । मध्ये तत्प्रतीतिः प्रयोजनप्रतीतिः अनुमा अनुमानम् ।

किञ्च—

मुख्यवृत्तिपरित्यागो न शब्दस्योपपद्यते ।
विहितोऽर्थान्तरे ह्यर्थः स्वसाम्यमनुमापयेत् ॥ ४८ ॥
तुल्यादिषु हि लोकोऽर्थेष्वर्थं तद्दर्शनस्मृतम् ।
आरोपयेन्न शब्दस्तु स्वार्थमात्रानुयायिनम् ॥ ४९ ॥
इत्थमर्थान्तरे शब्दवृत्तेरनुपपत्तितः ।
फले लिङ्गैकगम्ये स्यात् कुतः शब्दः स्खलद्गतिः ॥ ५० ॥
व्यापारोऽर्थे ध्वनेः साक्षान्मुख्या वृत्तिरुदाहृता ।
अर्थारोपानुगस्त्वेष गौणी तद्व्यवधानतः ॥ ५१ ॥
आशुभावादनालक्ष्यं किन्त्वर्थारोपमन्तरा ।

मधुसूदनीविवृतिः ।

किञ्चेति । अनुमानसाधकान्तरं दर्शयति—मुख्यवृत्तिपरित्याग इति । मुख्यवृत्तेरभिधाया परित्यागः शब्दस्य न उपपद्यते सङ्गच्छते । ननु मुख्यवृत्त्यपरित्यागे अन्यवृत्त्यभावात् साम्यादिप्रतीतिर्न स्यादित्याह—विहितोऽर्थान्तर इति । हि यस्मात् अर्थान्तरे विहितः अर्थः वाहीकादिरूपार्थान्तरे आरोपितः गवादिः । स्वसाम्यं गवादिसादृश्यम् । अन्यत्र लक्ष्यान्तरे तीरादिरूपार्थान्तरे आरोपितः गङ्गादिः स्वसम्बन्धं गङ्गादिसम्बन्धमनुमापयेत् अनुमित्या प्रतिपादयेत् ।

स्वोक्तिं प्रमाणयति—

तुल्यादिष्विति । हि यस्माद्धेतोः लोकः तुल्यादिषु अर्थेषु तद्दर्शनस्मृतं तुल्यार्थदर्शनोद्बुद्धसंस्कारम् अर्थमारोपयेत् । अरोपयतीत्यर्थः । न तु स्वार्थमात्रानुयायिनम् केवलं वाच्यार्थानुगतं शब्दं आरोपयति ।

उपसंहरति—इत्थमर्थान्तर इति । इत्थम् अर्थस्यैव आरोपात् शब्दस्यानारोपाच्च अर्थान्तरे शब्दवृत्तेः शब्दव्यापारस्य अभिधाया अनुपपत्तिः । अनुपपत्तेश्च लिङ्गमात्रगम्ये लिङ्गमन्तरा प्रतीतिविषयमनापन्ने फले प्रयोजने स्खलन्ती बाधकव्यापारेण विधुरीक्रियमाणा गतिरवगमनशक्तिर्यस्य स सामर्थ्यशून्य इति यावत् शब्दः कुतः स्यात् । अभिधातिरिक्तव्यापाररहितः शब्दः लिङ्गैकगम्यं फलं कथं प्रत्याययेदित्यर्थः ।

व्यापारोऽर्थे ध्वनेरिति । ध्वनेः शब्दस्य । ध्वनिः शब्दः प्रतीतिपदार्थको लोके ध्वनिः शब्द इति भाष्यम् । अर्थे अर्थविषये साक्षाद् व्यापारः मुख्यावृत्तिरुदाहृता अभिधेति स्वीकृतेत्यर्थः । तु किन्तु अर्थानुगः अर्थानुसारो एष व्यापारः तद्व्यवधानतः अर्थव्यवधानतः गौणी वृत्तिरुदाहृता ।

ननु लोको हि दीर्घग्रीवं विकटकायं कञ्चित्पुरुषं दृष्ट्वा तत्र करभ इति शब्द एव प्रयुनक्ति न तु तत्वेन तं गृह्णाति ततश्च शब्दावसेयतया शब्दानुगत्वमिति नार्था-

लोको गौश्चैत्र इत्यादौ शब्दारोपमवस्यति ॥ ५२ ॥
प्रधानेतरभावेनावस्थानादर्थशब्दयोः ।
समशीर्षिकयारोपो न तयोरुपपद्यते ॥ ५३ ॥
आरोपविषये यत्र विशेषः सम्प्रतीयते ।
अर्थादारोपितात् तत्र गुणवृत्तिरुदाहृता ॥ ५४ ॥
गुणवृत्तौ गिरां यावत् सामग्रीष्टा निबन्धनम् ।
सैव लिङ्गतयास्माभिरिष्यतेऽर्थान्तरं प्रति ॥ ५५ ॥
न हि तत् समयाभावाद्वाच्यं शब्दस्य कल्प्यते ।
प्रतीयमानतायां च व्यक्तमस्यानुमेयता ॥ ५६ ॥

मधुसूदनीविवृतिः ।

त्तुगत्वमित्याह—आशुभावादिति । किन्तु लोकः गौश्चैत्रः गौर्वाहीकः । इत्यादौ स्थले प्रतीतेराशुभावात् अनालक्ष्यं ज्ञातुं किञ्चिदुष्करम् अर्थारोपमन्तरागोत्वारोपं विना । शब्दारोपं केवलम् अवस्यति जानाति । अयं भावः । गौणी लक्षणायां मूलं उपमानोपमेयभावः । ततश्च उपमानोपमेयभावं समाश्रित्य उपमानगतगुणसदृशगुणारोपं पुरः सरीकृत्य उपमेये उपमानशब्दः उपमानार्थश्च अध्यारोप्यते । यथा गौर्वाहीक इत्यादिषु गोगतजाड्यमान्द्यादिगुणसदृशजाड्यमान्द्यादिगुणयोगतो वाहीके गोशब्दगोत्वयोरारोपः । इति सिद्धान्तः । केचित्पुनः केवलं शब्दारोपमेव मन्यन्ते नार्थारोपं तान् प्रत्येष स्वीकारयितुमुद्यमः । इति ।

अर्थारोपं विना शब्दारोपोऽनुपपन्न इति उपपादयति—प्रधानेतरभावेनेति । अर्थशब्दयोः । यद्यपि शाब्दस्थले प्रथमोपस्थितत्वेनाभ्यर्हितत्वात् शब्दस्यैव पूर्वनिपात उचितः परं शब्दस्य उपादानमर्थायैव भवति यो यमर्थमुपादीयते स तस्य गुणीभवति यथा जलार्थमुपात्तो घटः इति न्यायात् अर्थः प्रधानम् शब्दः अप्रधानम् । ततश्च अर्थस्यैव प्रयोगः पूर्वम् बोध्यम् । तयोः शब्दार्थयोः समं शिरः ययोस्तौ समशीर्षाणौ । तयोर्भावः समशीर्षिकः समानमूर्धत्वम् तेन आरोपः समानरूपेण तयोरारोपः नोपपद्यते अयं भावः । प्रधानानुपाती हि गुणः अतः प्रधानं विना स्वसत्तयाऽवस्थातुं न शक्नोतीति अर्थारोपं विना शब्दारोपस्य दुष्करत्वमेव अन्यच्च शब्दारोपस्य अर्थारोपाविनाभावावसेयत्वात् केवलार्थारोपेणापि कार्यसिद्धिरिति न शब्दरोप आवश्यक इति ।

उपसंहरन्नाह—आरोपविषय इति । यत्र आरोपविषये वाहीकादौ आरोपितात् अर्थात् गोत्वरूपात् विशेषः तद्धर्मः सम्प्रतीयते विज्ञायते तत्र गुणवृत्तिरुदाहृता प्रयुक्ता ।

गुणवृत्ताविति । निगदव्याख्यातः । गिरां शब्दानां मध्ये ।

न हि तत्समयाभावादिति । समयः संकेतः । स्पष्टम् । शब्दस्य मुख्यार्थे सम्बन्धनिश्चयात्प्रतिपादकत्वं सम्बन्धश्च संकेताश्रयः स च लाक्षणिकेऽर्थान्तरे नास्तीत्युक्तं संकेताभावादिति ।

तस्मात् स्वार्थातिरेकेण गतिनार्थान्तरे गिराम् ।
वाचकत्वाश्रयेणातो गुणवृत्तेरसम्भवः ।। ५७ ।।

ततश्च—

भक्त्या बिभर्ति चैकत्वं रूपाभेदादयं ध्वनिः ।
न च नाव्याप्त्यतिव्याप्त्योरभावाल्लक्ष्यते तथा ।। ५८ ।।
सुवर्णपुष्पामित्यादौ न चाव्याप्तिः प्रसज्यते ।
यतः पदार्थवाक्यार्थभेदात् भक्तिर्द्विधोदिता ।। ५९ ।।
अतस्मिंस्तत्समारोपो भक्तेर्लक्षणमिष्यते ।
अर्थान्तरप्रतीत्यर्थः प्रकारः सोऽपि शस्यते ।। ६० ।।

ततश्च—

रूढा ये विषयेऽन्यत्र शब्दाः स्वविषयादपि ।
लावण्याद्याः प्रसक्तास्ते न भवन्ति पदं ध्वनेः ।। ६१ ।।

---

मधुसूदनीविवृतिः ।

तस्मात् स्वार्थातिरेकेणेति । वाचकत्वमभिधा । अभिधैव मुख्येऽर्थे प्रविविक्षुः बाधकेन निरुध्यमाना सती अचरितार्थत्वादन्यत्र प्रसरति इति गुणवृत्तेः वाचकत्वाश्रयत्वमेवेति तेषामाशयः । स चानेन अन्यथाकृतः ।

ततश्चेति । ततश्चेत्यस्य "भक्त्या बिभर्ति" इति कारिकया सम्बन्धः । ततश्च गुणवृत्तेः वाचकत्वाश्रयेण अभावात् या च अर्थान्तरप्रतीतिः सा भक्तिरिति समानैवेति सारः । अतिव्याप्त्यतिव्याप्त्योरभावात्तया भक्त्या ध्वनिर्न लक्ष्यते ज्ञायते इति न अपि तु लक्ष्यत एवेत्यर्थः ।

ननु यमर्थं हि अभिधा बोधयितुं प्रवृत्ताऽपि बाधान्निरुद्धा तमेवार्थं लक्षणा बोधयति इति अभिधाबाधोन्मीलिता लक्षणा । अभिधा च पदनिष्ठा । इति तवापि सम्मता एवं हि अभिधापुच्छभूता लक्षणाऽपि पदनिष्ठा । ततश्च सुवर्णपुष्पामित्यादौ वाक्ये कथं सा प्रसरेत्। ध्वनिश्चात्रास्त्येवेत्यव्याप्तिरेवेत्याह—सुवर्णपुष्पामित्यादाविति। लक्षणा वाक्येऽपि भवतीति नाव्याप्तिरिति सारः । अयं परमार्थः । यदि वाक्ये लक्षणा नास्ति तर्हि लक्षणामूलो ध्वनिरपि कथं स्यात् । अतो वाक्ये लक्षणा एष्यैवेति ।

भक्तिलक्षणं समन्वेत्योक्तं साधयति । अतस्मिन्निति । सोऽपि वाक्यनिष्ठोऽपि प्रकारो भेदः शस्यते । आवश्यक इति परमार्थः ।

रूढा ये विषय इति । रूढाः प्रसिद्धाः । ये लावण्याद्याः । आदिपदात् आनुलोम्यप्रातिकूल्यप्रभृतयो गृह्यन्ते । शब्दाः स्वविषयादन्यत्र स्वाभिधेयाद्भिन्नस्थले ह्यद्यत्वादौ प्रसक्ताः प्रसङ्गवशात्प्रयुक्ताः । अत्र "रूढा" इत्यस्य स्थाने "रूढ्या" इति पाठस्तु नितरां समीचीनः । यतो हि लावण्यादि शब्दानाम् । अन्यार्थप्रसक्तेः

भवन्त्येवेत्यर्थः । यतः—

मुख्यां वृत्तिं परित्यज्य गुणवृत्त्यार्थदर्शनम् ।
यदुद्दिश्य फलं तत्र शब्दो नैव स्खलद्गतिः ॥ ६२ ॥
वाचकत्वाश्रयेणैव गुणवृत्तिरसङ्गता ।
गमकत्वैकमूलस्य ध्वनेः स्याद्विषयो न किम् ॥ ६३ ॥
व्यञ्जकत्वैकमूलत्वमसिद्धञ्च ध्वनेर्यतः ।
गमकत्वाश्रयापीष्टा गुणवृत्तिस्तदाश्रयः ॥ ६४ ॥
समिदिध्मादयः शब्दाः प्रसिद्धा गुणवृत्तयः ।
ध्वनेः पदादिव्यङ्गयस्य येनोदाहरणीकृताः ॥ ६५ ॥

---

मधुसूदनीविवृतिः ।

कारणं रूढिः । अतः तया प्रसक्ता इति सम्यगन्वयः स्यात् । ते शब्दाः ध्वनेः पदं स्थानम् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इति कोषोक्तेः । न भवन्ति इति न अपि तु भवन्त्येवेत्यर्थः । अत्र नञि अभ्युपगमकाक्वा ग्रन्थकृता स्वानुकूलोऽर्थः प्रतिपादितः । वस्तुतस्तु ध्वनिकारस्य नेदृशः आशयः । तन्मते नञ् प्रसज्यप्रतिषेधार्थः । यथा तदुक्तिः—तेषु च उपचरितशब्दवृत्तिरस्ति । इति तथाविध विषये क्वचित्सम्भवन्नपि ध्वनिव्यवहारः प्रकारान्तरेण प्रवर्तते न तथाविधशब्दमुखेनेति ।

मुख्यां वृत्तिमिति । मुख्यां वृत्तिम् अभिधाख्यव्यापारं परित्यज्य परिसमाप्य गुणवृत्त्या भक्त्या तद्द्वारा इत्यर्थः अर्थदर्शनम् अर्थप्रत्यायनम् ( कर्तृ ) यत्फलमुद्दिश्य क्रियते इतिशेषः । तत्र फले अर्थान्तरे इति यावत् शब्दः स्खलद्गतिः क्षीणसामर्थ्यः नैव । अपि तु स्खलितगतिरेवेत्यर्थः । अत्रापि सैव काकुः शब्दस्य व्यापारान्तराभावात् ।

वाचकत्वाश्रयेणैवेति । वाचकत्वमभिधा । तदाश्रयेणैव स्वीकृता गुणवृत्तिरसङ्गता स्वार्थातिरेकेण अर्थान्तरप्रतिपादने शब्दानां शक्त्यभावादनुपपन्ना । अन्यच्च सा गुणवृत्तिः गमकत्वैकमूलस्य गम्यगमकमूलस्य ध्वनेः विषयः किं न वर्त्तते अपितु विषयो वर्त्तत एव ।

ननु अस्माभिर्व्यञ्जकत्वमूलत्वं ध्वनेः प्रतिपाद्यते त्वया च गमकत्वैकमूलत्वमिति भिन्नमिवोच्यते इत्यत आह—व्यञ्जकत्वैकेति । यतो वाच्यप्रत्येययोः घटप्रदीपवत् साहित्येन अप्रकाशनात् हेतोः ध्वनेः व्यञ्जकत्वमूलत्वमसिद्धम् । अतो ध्वनिः तदाश्रयः गमकत्वैकमूलः गुणवृत्तिरपि गमकत्वैकमूला इष्टा । एवं हि "गमकत्वैकमूलस्य ध्वनेः स्याद्विषयोः न किमि"ति सिद्धम् ।

समिदिध्मादय इति । समिच्छब्दः, इध्मशब्दः । आदिपदात् अन्येषां सन्नद्धमधुरादीनां परिग्रहः । एते शब्दाः गुणवृत्तयः प्रसिद्धाः गुणवृत्तिमाश्रित्य प्रयुज्यन्ते इति प्रतीताः । येन हेतुना पदादिव्यङ्ग्यस्य ध्वनेः उदाहरणीकृताः दृष्टान्तत्वेन निवेशिताः ।

तस्माद् व्युत्पत्तिशक्तिभ्यां निबन्धो यः स्खलद्गतेः ।
शब्दस्य सोऽपि विज्ञेयोऽनुमानविषयोऽन्यवत् ॥ ६६ ॥

इति सङ्ग्रहश्लोकाः ।

'विषं भक्षय मा चास्य गृहे भुङ्क्था' इत्यादावपि यदेतद्विषभक्षणानुज्ञानं तदर्थप्रकरणादिसहायमेतद्गृहे भोजनस्य ततोऽपि दारुणतरपरि-

मधुसूदनीविवृतिः ।

तद्यथा—

धृतिः क्षमा दया शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ।

इत्यत्र धृत्यादिषु समिच्छब्दार्थस्य सर्वथाऽसम्भवात्तिरस्कारः । ततश्च अनन्यापेक्षव्यञ्जकत्वं सप्तानाम् ध्वन्यते । एवमेव इध्मादिपदेऽपि बोध्यम् ।

उपसंहरन्नाह—तस्मादिति । व्युत्पत्तिः लोकशास्त्रकाव्यादिपर्यालोचनजन्या निपुणता । शक्तिः कवित्वबीजं संस्कारः । सोऽपीति । येनाभिप्रायेण तादृशशब्दस्योपनिबन्धः सोऽभिप्रायोऽपि अन्यवत् प्रतीयमानवत् । द्विविधो हि दोषः कवेरुपलभ्यते । तदव्युत्पत्तिकृतः तदशक्तिकृतः । एवं हि आभ्यां यत्स्खलद्गतेः प्रयोगः स न ध्वनिविषयः । यथोक्तम् ।

अव्युत्पत्तेरशक्तेर्वा निबन्धो यः स्खलद्गतेः ।
शब्दस्य स च न ज्ञेयः सूरिभिर्विषयो ध्वनेरिति ॥

परन्तु ग्रन्थकृन्मते यत्र ज्ञानपूर्वं व्युत्पत्या शक्त्या वा अन्यार्थे अन्यार्थकशब्दः प्रयुज्यते स सप्रयोजनः स्खलद्गतिरिति व्यवह्रियते एवं हि ताभ्यां स्खलद्गतेः शब्दस्योपनिबन्धे न लक्षणयार्थज्ञानमपि तु अनुमानेन अन्यानुमेयवदिति तत्वम् ।

ननु शब्दे अर्थान्तरप्रत्याययितुं व्यापारान्तरं नास्तीत्येतदनुपपन्नम् । अस्ति हि यत्तात्पर्यकतया शब्दः प्रयुज्यते स सर्वः शब्दार्थः इत्याशयानुसारी "यत्परः शब्दः स शब्दार्थः" इतिन्यायः । तद्बलाच्च "विषं भक्षयेत्यादिवाक्यानां "मा चास्य गृहे भुङ्क्थाः" इत्यादिवाक्येषु तात्पर्यमवधार्यते । तत्र मा चास्य गृहेभुङ्क्थाः" अर्थात् एतद्गृहे भोजनं न कर्त्तव्यमित्यस्य वाक्यस्य अर्थो हि न विषं भक्षयेति वाक्यान्तर्वर्त्तिपदजन्यप्रतीतिविषयः अर्थात् न तद्वाक्यार्थः किन्तु तात्पर्यापरपर्यायम् अर्थान्तरमेव । तस्य च प्रत्ययः शब्दादेव तत्प्रयोजकव्यापारसहायात् । संकेताभावेन अभिधाया अप्रवृत्तेरिति तात्पर्यशक्ति स्वीकार्यैव भविष्यति । एवं हि अर्थान्तरं प्रत्याययितुं व्यापारान्तरमस्तीति सिद्धमित्याह—विषं भक्षय मा चास्य गृहे भुङ्क्था इति । इत्यादौ अपि उदाहरणेषु यदेतत विषभक्षणे अनुज्ञानम् नियोजनम् तदनुज्ञानम् अर्थप्रकरणादिसहायम् प्रयोजनं, वक्तृश्रोतृबुद्धिस्थत्वरूपप्रकरणादिश्च सहायो यस्य तत्तादृशम् । कस्मिन् समये केन हेतुना केन वक्त्रा एतदीदृशं वाक्यं प्रयुक्तमिति गवेषणहेतुकमिति

णामत्वमनुमापयति। न ह्यनुन्मत्तः सुहृदादौ हितकामः सन्नस्य क्वचिद् भोजननिषेधं विदधानः अकस्माद्विषभक्षणमनुजानातीत्यवगतवक्तृप्रकरणादिस्वरूपः प्रतिपत्ता विषभक्षणानुज्ञानादेव तद्गृहभोजनस्यात्यन्तमकरणीयत्वमनुमातुमर्हति। विषभक्षणानुज्ञानादेर्वाक्यार्थस्याप्रस्तुतस्यैवोपन्यासो हि पूर्वोक्तेन नयेन प्रस्तुतातिरिक्तार्थान्तरप्रतिपादनपरत्वात् तत्र हेतुतयावगन्तव्य इति न शब्दस्य तत्र व्यापारः परिकल्पनीयः।

विषभक्षणादपि परामेतद्गृहभोजनस्य दारुणताम्।
वाच्यादतोऽनुमिमते प्रकरणवक्तृस्वरूपज्ञाः ॥ ६७ ॥
विषभक्षणमनुमनुते न हि कश्चिदकाण्ड एव सुहृदि सुधीः।
तेनात्रार्थान्तरगतिरार्थी तात्पर्यशक्तिजा न पुनः ॥ ६८ ॥

इति सङ्ग्रहार्थे।

यदप्यन्ये मन्यन्ते—वाच्यावगमोपक्रमः प्रतीयमानार्थान्तरावसायप-

---

मधुसूदनीविवृतिः।

भावः। तच्च एतस्य पुरुषस्य गृहे भोजनं ततोपि विषादपि दारुणतरपरिणामवत् इत्यनुमापयति। अनुमानं च एतत्पुरुषगृहे, न भोक्तव्यम्, सुहृत्कर्तृकविषभक्षणानुज्ञानात्।

ननु कुतोऽनुमापयति तदाह—नह्यनुन्मत्तः सुहृदादाविति। अकस्मात् अर्थं प्रयोजनं विना। अनुजानाति अनुज्ञां ददाति विषभक्षणार्थं प्रेरयतीत्यर्थः। अवगतो बुद्धः वक्तुः प्रकरणादेः स्वरूपो येन सः। ननु विषभक्षणानुज्ञानस्य अनुमानहेतुत्वं कुत इत्याह—विषभक्षणेति। विषभक्षणानुज्ञानादिरूपवाक्यार्थस्य अप्रस्तुतस्य अप्रासङ्गिकस्य उपन्यासः। पूर्वोक्तेन न ह्यनुमत्त इत्यादिना अनुजानातीत्यन्तेन प्राक्कथितेन नयेन विधिना प्रस्तुतादतिरिक्तस्य भिन्नस्य विरुद्धस्येत्यर्थः अर्थान्तरस्य प्रतिपादने बोधने परः परायणः अतः तत्र भोजननिषेधे हेतुरिति अवगन्तव्यो बोध्यः। एवं हि अनुमयैव गतार्थत्वान्न शब्दे व्यापारान्तरं परिकल्पनीयम् समालोचनीयम्।

एतदेव द्वाभ्यामार्याभ्यां प्रतिपादयति—"विषभक्षणादपि" इति। अतः वक्तुः प्रकरणस्य च स्वरूपयोरभिज्ञाः विद्वांसः वाच्यात् विषभक्षणानुज्ञानरूपवाक्यार्थात् विषभक्षणादपि किमुत सामान्यभोजनात् परां दुष्टामिति भावः एतद्गृहभोजनस्य दारुणतां भयङ्करताम् अनुमिमते अनुमां कुर्वन्ति।

अनुमानोद्भावनप्रकारं प्रस्तौति—विषभक्षणमिति। कश्चिदपि सुधीः विद्वान् अकाण्ड एव प्रयोजनं विनैव सुहृदि मित्रविषये विषभक्षणं नानुमनुते। नानुमोदयति नानुजानातीति वा। तेन हेतुना अत्र वाक्ये अर्थान्तरगतिः अर्थान्तरप्रतीतिः आर्थी अर्थबललभ्या न पुनः न तु तात्पर्यशक्तिजा अस्ति।

इदानीम् अभिधाव्यापारस्य दीर्घदीर्घतरत्ववादिनां मतमनूद्य खण्डयितुमुद्यम्यते। यदप्यन्ये मन्यन्ते इति। अन्ये भट्टमतोपजीवका भट्टलोल्लटादयः। एषामयमाश-

र्यन्तोऽयमेक एव दीर्घदीर्घःशब्दस्येषोरिव व्यापारः; न पुनरर्थान्तरस्य कश्चित् संवेद्यते । यथा ह्येक एवेषुर्बलवता धनुष्मता मुक्तः शत्रोरुरश्छदमुरश्च भित्त्वा जीवितमपहरति, न च तस्य वृत्तिभेदः, तथा शब्दोऽपि सत्कविना सकृत् प्रयुक्त एव क्रमेण स्वार्थाभिधानमर्थान्तरप्रतीतिं चैकयैव प्रवृत्त्या वितनोति । न च तस्य व्यापारभेदः कश्चित् ।

किञ्च यत्परः शब्दः स शब्दार्थ इति शब्दस्यैवासौ व्यापारो न्याय्यो नार्थस्येति ।

तदयुक्तम् । साक्षाच्छब्दस्यार्थप्रतीतिहेतुत्वासिद्धेः । पारम्पर्येण तु तस्य हेतुत्वोपगमे वस्तूनां हेतुफलभावव्यवहारनियमो न व्यवतिष्ठते । ततश्च कुलालोऽपि सेकसलिलोपकरणभूतकुम्भं कुर्वन् माधुमास इव कुसुमविकासहेतुरिति मुख्यतया ख्यायेत । इत्यर्थस्यैव व्यापारोऽभ्युपगन्तुं युक्तो न शब्दस्य । न हि यः पुत्रस्य व्यापारः स पितुरेवेति मुख्यतया शक्यते वक्तुम्, तयोरन्योन्यव्यापारसाङ्कर्यदोषप्रसङ्गात् ।

किञ्चायं विषमः शरदृष्टान्तोपन्यासः । न हि यथा सायकः स्वभावत एव छेद्यभेद्याद्यर्थविषयमेकयैव वृत्त्या तत्तत्कार्यं करोति, तथा शब्दः ।

मधुसूदनीविवृतिः ।

यः । शब्दोच्चारणानन्तरं यावानर्थराशिः प्रतीतिपथमवतरति तस्य कारणं शब्द एव नान्यत् तदुत्तरभावित्वात्तस्य कार्यनियतपूर्ववर्त्तित्वस्य कारणलक्षणत्वात् । शब्दस्य चैकोऽभिधैव व्यापारः । यावत्तैलं तावद्व्याख्यानमिति आभाणकानुसारि यावत्कार्यं तावत्कारणं ह्रस्वे ह्रस्वं दीर्घे दीर्घमिति अभिधयैव पदार्थस्य अर्थान्तरस्य च प्रतीतिर्भवतु किमन्यैः व्यञ्जनानुमितिभोजकत्वरूपैः व्यापारैरिति । अन्यच्च आरब्धस्यान्तगमनं बुद्धेर्लक्षणमिति ज्ञानरूपाभिधा वाच्यार्थमवगमयितुं बोधयितुं प्रवृत्ता प्रतीयमानार्थान्तरं यावत् पर्यवस्यतीति निर्गलितार्थः ।

अक्षरार्थस्तु—कश्चिद् व्यापारः सम्वेद्यते ज्ञायते । उरश्छदं कवचम् । वृत्तिभेदः व्यापारविशेषः । प्रवृत्त्या व्यापारेणेत्यर्थः । वितनोति प्रकाशयति ।

तदयुक्तमिति दूषयति—साक्षादव्यवधानेन । अर्थप्रतीतौ अर्थान्तरबोधने । हेतुत्वासिद्धेः क्षीणशक्तिकत्वादिति भावः । तस्य शब्दस्य । हेतुफलभावः कार्यकारणभावः ।

ननु शब्दस्य पारम्पर्येण कारणतायां को दोष इत्याह—ततश्च कुलाल इति । अन्यार्थप्रतिपादनवेलायामपि यदि शब्दस्य मुख्यत्वमेव ततश्च मुख्यामुख्यप्रतीतिर्व्याहनिष्यतीति भावः । ननु शब्दस्यैव स व्यापारोऽस्तु शब्दोत्तरप्रतीतत्वादित्याह—न हि पुत्रस्येति । अन्योन्यसाङ्कर्य दोषः यः पुत्रस्य स पितुः यः पितुः स पुत्रस्यापि भविष्यति इत्येवं पृथक्त्वेन अज्ञानात् संमिश्रता दोषः स्यात् ।

स हि सङ्केतसापेक्षः स्वव्यापारमारभते न स्वभावत एवेति यत्रैवास्य सङ्केतस्तत्रैव व्याप्रियते। ततश्चाभिधेयार्थविषय एवास्य व्यापारो युक्तो नार्थान्तरविषयः, तत्र सङ्केताभावात्। तदभावेऽपि तत्र तत्परिकल्पने सर्वः कुतश्चिदभिधेयार्थवदर्थान्तरमपि प्रतीयात्। तस्माद्यत्र सङ्केतापेक्षा तत्रैवास्य व्यापार इत्यवगन्तुं युक्तं, नार्थान्तरे, तत्र वक्ष्यमाणनयेनार्थस्यैव तदुपपत्तिसमर्थनादिति।

यत् पुनः—

"शब्दार्थौ सहितौ वक्रकविव्यापारसशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि॥"

इत्यादिना शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकि यद्वैचित्र्यं त-

मधुसूदनीविवृतिः।

किञ्चायमित्यादिना इषुदृष्टान्तस्य विरुद्धधर्मत्वं प्रतिपादयति। स्वभावतः निसर्गतः एव न तु सहायमपेक्षमाणः। तत्तत्कार्यं भेदनाहरणादिकम्। संकेतसापेक्षः समयसहायः स्वव्यापारं स्वार्थप्रतिपादनम्। न स्वभावतः निरपेक्ष इत्यर्थः। अस्य शब्दस्य तत्रैव अर्थे व्याप्रियते प्रवर्त्तते। तत्र अर्थान्तरे। तदभावेऽपि संकेताभावेऽपि। तत्र अर्थान्तरे तस्य शब्दस्य परिकल्पने स्वीकारे। सर्वो जनः कुतश्चिच्छब्दात् न तु स्वार्थनियताच्छब्दात्। प्रतीयात् जानीयात्। नचैवं कश्चित्प्रत्येति-तस्मात् प्रत्ययाभावात्। तत्र अर्थान्तरे। तदुपपत्तिभिः तादृशयुक्तिभिः समर्थनात् साधनात्।

अथेदानीं प्रसङ्गात् राजानककुन्तकस्य वक्रोक्तिजीवितकारस्य मतं दूषयति—यत् पुनरिति। यच्चेत्यर्थः। शब्दार्थौ सहिताविति। कवीनां व्यापारः काव्यक्रियालक्षणः। कविव्यापारः वक्रः प्रसिद्धप्रस्थानात् (प्रस्थीयते गम्यतेऽस्मिन् तत्प्रस्थानं मार्गः) व्यतिरेकितया विचित्रः। येनाध्वना पदवाक्यप्रमाणविशेषज्ञः प्रस्थीयते तदपेक्षया भिन्नत्वेन विलक्षणः। यः कविव्यापारः। तेन शालते श्लाघते यस्तस्मिन्। तद्विदाह्लादकारिणि वाच्यस्य वाचकस्य अलङ्कारस्य च उत्तरोत्तरमतिशयतया सहृदयहृदयानन्दविधायिनि। बन्धे प्रतिभासरम्भफलभूतसचेतनचमत्कारित्वरूपार्थगतसौभाग्यस्य, सन्निवेशसौन्दर्यरूपपदगतलावण्यस्य पोषयितरि वाक्यविन्यासे व्यवस्थितौ यथायथं स्वानुरूपयोजनान्वितौ। शब्दार्थौ शब्दश्च अन्येषां तदर्थवाचकानां बहूनां सत्त्वेऽपि काव्यार्थोचितसमस्तसामग्रीकतया विवक्षितार्थैकवाचकः अर्थात् प्रकृतप्रस्तावसमुचितोत्कर्षाच्छादितस्वभावार्थबोधकत्वेन तथाविधविशेषप्रतिपादनसमर्थः। अर्थश्च सहृदयहृदयाह्लादकारिस्वस्पन्दसुन्दरः। सहितौ साहित्यवन्तौ। साहित्यञ्च सहृदयहृदयानन्दोद्भावकतया परस्परस्पर्धित्वेन उभयानुगतसाम्यसुभगमवस्थानम्।

न्मात्रलक्षणं वक्रत्वं नाम काव्यस्य जीवितमिति सहृदयमानिनः केचिदाचक्षते तदप्यसमीचिनम् ।

यतः प्रसिद्धोपनिबन्धनव्यतिरेकित्वमिदं शब्दार्थयोरौचित्यमात्रपर्यवसायि स्यात्, प्रसिद्धाभिधेयार्थव्यतिरेकि प्रतीयमानाभिव्यक्तिपरं वा स्यात्। प्रसिद्धप्रस्थानातिरेकिणः शब्दार्थोपनिबन्धनवैचित्र्यस्य प्रकारान्तरासम्भवात् ।

---

मधुसूदनीविवृतिः ।

समसर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा ॥

तौ द्वौ सम्मिलितौ काव्यम् ।

इत्यादिना काव्यलक्षणेन शास्त्रादिषु प्रसिद्धात् शब्दार्थोपनिबन्धात् । शब्दार्थरचनातः । व्यतिरेकि भिन्नम् तन्मात्रलक्षणं केवलविलक्षणतारूपम् । जीवितं प्राणम् । काव्यत्वव्यवहारप्रयोजकतया सारभूतम् । सहृदयमानिनः चिरन्तनालङ्कारप्रजापतीनां सद्भावेऽपि मया कोप्यपूर्वः तद्व्यतिरिक्तार्थाभिधायी ग्रन्थो निर्मास्मत इत्यादिस्वापूर्वत्वप्रकाशकोक्तेः । तदुक्तं तेन ।

लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये ।
काव्यस्यायमलङ्कारः कोप्यपूर्वो विधीयते । इति ॥
यदपि सन्ति शतशः काव्यालङ्कारास्तथापि ।
न कुतश्चिदप्येवंविधवैचित्र्यसिद्धिरिति च ॥

केचित् वक्रोक्तिजीवितकाराः राजानककुन्तकाचार्याः । शब्दार्थयोरौचित्येति । प्रतीयमानाभिव्यक्तिपरमिति । यथाचोक्तं तैरेव—

( धर्मादिसाधनोपायः सुकुमारक्रमोदितः ।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः ॥ )
व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः ।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते ॥
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम् ।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते । इति ॥

"यद्यपि पदार्थस्य नानाविधधर्मखचितत्वं सम्भवति तथापि तथाविधेन धर्मेण सम्बन्धः । समाख्यायते यः सहृदयहृदयाह्लादमाधातुं क्षमते । तस्य च तदाह्लादसामर्थ्यं सम्भाव्यते । तदुक्तम्—

"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा" इति ।

तत्राद्यस्तावत् पक्षो न शङ्कनीय एव, तस्य काव्यस्वरूपनिरूपणसामर्थ्यसिद्धस्य पृथगुपादानवैयर्थ्यात्। विभावाद्युपनिबन्ध एव हि कविव्यापारो नापरः। ते च यथाशास्त्रमुपनिबध्यमाना रसाभिव्यक्तेर्निबन्धनभावं भजन्ते, नान्यथा। रसात्मकं च काव्यमिति कुतस्तत्रानौचित्यसंस्पर्शः सम्भाव्यते, यन्निरासार्थमित्थं काव्यलक्षणमाचक्षीरन् विचक्षणम्मन्याः।

द्वितीयपक्षपरिग्रहे पुनर्ध्वनेरेवेदं लक्षणमनया भङ्ग्याभिहितं भवति, अभिन्नत्वाद्वस्तुनः। अत एव चास्य त एव प्रभेदास्तान्येवोदाहरणानि तैरुपदर्शितानि। तच्चायुक्तमित्युक्तं, वक्ष्यते च।

प्रसिद्धं मार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये।
अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता ॥ ६९ ॥
पदवाक्यादिगम्यत्वात् स चार्थो बहुधा मतः।
तेन तद्वक्रतापीष्टा बहुधैवेति तद्विदः ॥ ७० ॥

मधुसूदनीविवृतिः।

येन काचिदेव। स्वभावमहत्ता रसपरिपोषाङ्गत्वं वा व्यक्तिमासादयति। इति च।

काव्यस्वरूपनिरूपणे सामर्थ्येन सिद्धस्य बलादायातस्य। औचित्यं विना काव्यत्वमेवाऽसम्भवीति भावः। अयमिह परमरहस्यार्थः। काव्यत्वव्यवहारबीजम् रसः। स च औचित्याभावे अर्थात् अनौचित्ये भग्नः। एवं काव्यत्वमेव तं विना शब्दार्थयोरसम्भवीति। तेचेति विभावादयश्च यथाशास्त्रम्। दिव्यादिव्यप्रकृतिगतौचित्यम्। प्रकृतप्रकरणरसौचित्यं चानुरुध्य। उपनिबध्यमानाः संयोज्यमानाः। निबन्धनभावं कारणत्वम्। अन्यथा यथाशास्त्रानिबन्धने। यन्निरासार्थम्। अनौचित्यदूरीकरणार्थम्।

भङ्ग्या प्रकारान्तरेण। वस्तुनः वैचित्र्यापरपर्यायस्य वक्रत्वस्य अभिन्नत्वात् एकरूपत्वात् अर्थात् वक्रोक्तिः ध्वनिरेवेति। अत एव अभिन्नत्वादेव अस्य वक्रोक्तिवस्तुनः। त एव प्रभेदाः ये ध्वनेः सन्ति। तान्येव यानि ध्वनेः। तैः कुन्तकाचार्यैः। तच्च वक्रोक्तिवस्तु अयुक्तम्। उपपत्तिरहितम्। इत्युक्तमिदानीम्। वक्ष्यते च द्वितीयविमर्शे।

उक्तार्थं संगृह्णाति। प्रसिद्धं मार्गमिति। यत्र स्थलविशेषे वैचित्र्यसिद्धये वक्रत्वलाभाय प्रसिद्धं मार्गमुत्सृज्य प्राचीनाचार्यपरिक्षुण्णं पन्थानं परित्यज्य अन्यथैव स्वाभिलषितेन स्वाविर्भावितेन केनापि विलक्षणेन अश्रुतादृष्टचरेण मार्गेण योऽन्यैः प्रसिद्धमार्गेण प्रतिपाद्यते स एवार्थः उच्यते। सा वक्रोक्तिरुदाहृता दर्शिता।

पदवाक्यादीति। स च अर्थः अन्यैः प्रतिपादितश्चार्थः पदवाक्यादिभिः आ-

अत्रोच्यतेऽभिधासंज्ञः शब्दस्यार्थप्रकाशने ।
व्यापार एक एवेष्टो यस्त्वन्योऽर्थस्य सोऽखिलः ॥ ७१ ॥

ततश्च—

वाच्यादर्थान्तरं भिन्नं यदि तल्लिङ्गमस्य सः ।
तन्नान्तरीयकतया निबन्धो ह्यस्य लक्षणम् ॥ ७२ ॥
अभेदे बहुता न स्यादुक्तेर्मार्गान्तराग्रहात् ।
तेन ध्वनिवदेषापि वक्रोक्तिरनुमा न किम् ॥ ७३ ॥

इत्यन्तरश्लोकाः

नापि शब्दस्याभिधाव्यतिरेकेण व्यञ्जकत्वं व्यापारान्तरमुपपद्यते, येनार्थान्तरं प्रत्याययेद् , व्यक्तेरनुपपत्तेः सम्बन्धान्तरस्य चासिद्धेः ।

---

मधुसूदनीविवृतिः ।

दिपदात् पदपूर्वार्धोत्तरार्धः । अर्थात् पदैकदेशः । अत्र पूर्वार्धपदेन प्रकृतिर्गृह्यते उत्तरार्धेन च प्रत्ययः । प्रबन्धश्च संग्राह्यः । गम्यत्वात् एकत्र व्यङ्ग्यत्वात् ग्रन्थकारमते च अनुमेयत्वात् । बहुधा बहुप्रकारो मतः । तेन हेतुना तेषां सा वक्रताऽपि बहुधैवेति तद्विदः वक्रोक्तिविदः ।

अत्रोच्यत इति । अत्र विषये उच्यते समाधीयते । अर्थप्रकाशनविषये शब्दस्य अभिधासंज्ञः एतन्नामकः एक एव व्यापार इष्टः । यस्तु अन्यो भक्त्यादिः सर्वः अखिलः अर्थस्य व्यापारः इष्टः ।

ततश्च—वाच्यादिति । ततश्च अर्थात् शब्दस्य एक एव व्यापारः तस्माच्च यदि वाच्यापेक्षया अर्थान्तरं द्वितीयोऽर्थः भिन्नः तर्हि स वाच्यः अस्यार्थान्तरस्य लिङ्गम् ज्ञापको हेतुः । हि यस्मात् तत् अस्य ध्वनेः लक्षणम् नान्तरीयकतया बलादिव निबन्धः रचितः ।

अभेदे बहुतेति । मार्गान्तरविषयकमाग्रहं विहाय उक्तेर्वक्रोक्तेरभेदे सति बहुता बहुप्रकारता न स्यात् । तेन हेतुना एषा वक्रोक्तिरपि ध्वनिवत् अनुमा अनुमानं किं नास्तीति ।

नापी शब्दस्येति । शब्दस्य अभिधातिरिक्तं व्यञ्जकत्वं व्यञ्जनाख्यं व्यापारान्तरम् । येन व्यापारेण । ननु व्यञ्जना कुतो नास्तीत्याह—व्यक्तेः व्यञ्जनाया अनुपपत्तेः व्यक्तिस्वीकारे युक्तिर्नास्ति । सम्बन्धान्तरं च सिद्ध्यति न हीति भावः । तदभावेऽपि व्यक्तेरभावेऽपि तदभ्युपगमे अर्थप्रतीतेः स्वीकारे तस्य शब्दस्य अर्थनियमः अर्थेन सह नियतः सम्बन्धो न स्यात् । निबन्धनाभावात् कारणाभावात् । शब्दादर्थप्रतीतिः। तत्र शब्दः कारणम् अर्थः कार्यम् । एवं हि अस्य शब्दस्य तेनार्थेन सह सम्बन्ध इति निश्चयमन्तरा अस्माच्छब्दादयमर्थो बोद्धव्य इत्येतादृशो विशिष्टः कार्यकारणभावो न स्यादिति तात्पर्यम् ।

तदभावेऽपि तदभ्युपगमे तस्यार्थनियमो न स्याद् निबन्धनाभावात्। न ह्यस्य गेयस्येव रत्यादिभिर्भावैः स्वाभाविक एव सम्बन्धः, सर्वस्यैव तत्प्रतीतिप्रसङ्गात्।

नापि समयकृतः व्यञ्जकत्वस्यौपाधिकत्वाद् उपाधीनां चार्थप्रकरणादिसामग्रीरूपाणामानन्त्यादनियतत्वाच्च प्रतिपदमिव शब्दानुशासनस्य समयस्य कर्तुमशक्यत्वात्।

एक एव हि शब्दः सामग्रीवैचित्र्याद्भिन्नानर्थानवगमयति, यथा 'रामोऽस्मि सर्वं सहे' इति, 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम्' इति, 'रामस्य पाणिरसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते' इति, 'रामे तटान्तवसतौ कुशतल्पशायिन्यद्यापि नास्ति भगवन्! भवतो व्यपेक्षा' इत्यादावेक एव रामशब्दः।

---

मधुसूदनाविवृतिः।

ननु मा भवतु विशिष्टः कार्यकारणभावः। शब्दार्थयोः नित्यः सम्बन्धः इति सामान्यः अर्थात् स्वभावप्राप्तः कार्यकारणभावोऽस्त्वित्याह —न ह्यस्येति। गेयस्य गातुं योग्यस्य वस्तुनो यथा षड्जादिभिः रागैः सह स्वाभाविकः सम्बन्धोऽस्ति तेन आपामरम् आतिर्यक् च रसाभिज्ञानं भवति तथा अस्य शब्दस्य रत्यादिभिर्भावैः सह स्वाभाविकः सम्बन्धो नास्ति। ननु तथास्तु का हानिरित्याह—सर्वस्यैवेति। स्वाभाविकसम्बन्धस्वीकारे च सर्वस्यापि व्युत्पन्नाव्युत्पन्नसाधारणस्य तस्य अर्थस्य प्रतीतेः प्रसङ्गः स्यात्। एवं हि न स्वाभाविकः शब्दार्थयोः सम्बन्धः स्वीकर्त्तुमर्हः।

ननु मास्तु व्यक्तिः, अनुपपत्तेः। सम्बन्धान्तरमस्तु तत्र मुख्यार्थबाधाद्यभावेन लक्षणाया अप्रवृत्तेरभिधैवेत्यत आह—नापि समयकृत इति। सा च समयसहाया। समयः संकेतः। तेन नभिधेति भावः। औपाधिकत्वात्। उपाधिः प्रकरणादिः व्यञ्जकत्वैलक्षण्यप्रयोजकः। ततः प्राप्तः औपाधिकः संकेतनियताभिधाव्यापारविचित्र इति यावत्। अनियतत्वाच्च देशकालपात्रावस्थानां प्रतिनियततन्त्रणाभावात्। यथा सैन्धवमानयेत्यत्र भोजनप्रकरणे सैन्धवं लवणं, यात्रायां सैन्धवः अश्वः इति प्रकरणादेरनिश्चतता। प्रतिपदं शब्दस्य अनुशासनमिव। बृहस्पतिरध्यापयिता इन्द्रश्चाध्येता तथापि महतः शब्दराशेः नान्तं जगामेति महाभाष्योल्लेखोऽत्रानुसन्धेयः।

एक एव हि शब्द इति। "रामोऽस्मि सर्वं सहे' इतिपद्यांशः स्निग्धश्यामलकान्तिलिप्तवियतेत्यस्य पद्यस्यांशः। रामेण प्रियजीवितेनेत्यस्य पूर्वं चरणत्रयमित्थम्—

> प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा।
> सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः॥
> व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा। इति।

यथाह ध्वनिकारः—शब्दार्थयोर्हि प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव गमकत्वलक्षणो व्यापारसामग्र्यन्तरसद्भावादौपाधिकः प्रवर्तते । अत एव च वाचकत्वात् तस्य विशेषः । वाचकत्वं हि शब्दविशेषस्य नियत आत्मा, सङ्केतव्युत्पत्तिकालादारभ्य तदविनाभावेन तस्य प्रसिद्धत्वात् । स त्वनियत औपाधिकत्वात् प्रकरणाद्यवच्छेदेन तस्य प्रतीतेरि ( तरथा त्वप्रतीतेरिति ) ।

न चानयोरन्यः सम्बन्धः सम्भवतीति तस्याः सामग्र्या एव सम्बन्धबलात् तद्गमकत्वमुपपन्नं न शब्दस्येति, नार्थपक्षादस्य कश्चिद्विशेष इति व्यर्थस्तत्पक्षोपन्यासः ।

ननु यदि शब्दस्यार्थनिरपेक्षस्य व्यञ्जकत्वं नेष्यते, तत् कथं प्राप्तमित्यादौ प्रादीनां द्योतकत्वमुक्तं न वाचकत्वम् । वाचकत्वे हि हलादित्वाद्धातोर्यङादिप्रसङ्गः स्यात् । द्योतकत्वं प्रकाशकत्वं व्यञ्जकत्वं चेत्येक एवार्थ इति । सत्यम् । उक्तमुपचारतो न परमार्थत इति तस्य प्रदीपादिनिष्ठस्य वास्तवस्य शब्दार्थविषयत्वस्य प्रतिक्षेपात् ।

---

मधुसूदनीविवृतिः ।

रामस्य बाहुरसि इत्यस्य पूर्वार्धो यथा—हे हस्त ! दक्षिण ? मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् । इति । रामोऽसौ भुवनेषु विक्रमगुणः प्राप्तः प्रसिद्धिं परामित्यादयोऽन्येऽपि अनुसन्धेयाः ।

यथाह ध्वनिकार इति तदुक्तिं प्रमाणयति । अनुरुन्धानः अनुशीलयन् । अत एव सामग्र्यन्तररूपसम्बन्धानुरोधादेव । वाचकत्वात् अभिधापेक्षयेत्यर्थः तस्य व्यञ्जकत्वस्य । विशेषो भेदः । अयमस्यार्थस्य बोधक इतीयं संकेतग्राहिका व्युत्पत्तिर्ज्ञानं यस्मिन् काले जाता स कालः संकेतव्युत्पत्तिकालः । तेन सह अविनाभावो व्याप्तिस्तेन । तस्य वाचकत्वस्य । स तु व्यञ्जकत्वलक्षणो धर्मस्तु । किन्नामौपाधिकत्वमिति स्पष्टयति—प्रकरणाद्यवच्छेदेन प्रकरणादेरवच्छेदो निश्चयस्तेन । तस्य व्यञ्जकत्वस्य । इतरथा तु प्रकरणादिनिश्चयाभावे तु ।

न चानयोरिति । अनयो वाच्यप्रत्येययोः । तस्या अर्थप्रकरणादिरूपायाः सामग्र्या उपायस्य । तस्य प्रत्येयस्य गमकः अर्थ इत्यर्थः । नार्थपक्षादिति । न अर्थकृतः कश्चिद्विशेष इति भावः ।

नन्वेवं शब्दस्य व्यञ्जकत्वमेव नास्तीति सिद्धम् । अथ किम् । तर्हि प्रादिषु का गतिरित्याशंक्य समाधत्ते—प्राप्तमित्यादाविति । "प्राप्तम्" इत्याद्युदाहरणेषु । वाचकत्वस्वीकारे दोषं स्पष्टयति—वाचकत्वे हीति ।

उक्तमिति । प्रादीनां द्योतकत्वमुपचारत उक्तमित्यन्वयः । प्रदीपादीति । एतद्रहस्यम् । पूर्वसिद्धवस्तुव्यञ्जकत्वं द्योतकत्वम् । तच्च वस्तुतः प्रदीपादिषु वर्तते ।

अथोच्यते—पचत्यादयः क्रियासामान्यवचनाः । सामान्यानि चाशेषविशेषान्तर्भावभाञ्जि भवन्तीति तत्प्रतीतिनान्तरीयकतयैव विशेषसद्भावः सिद्ध एव । यदाहुः—'निर्विशेषं न सामान्यं भवेच्छशविषाणवद्' इति । केवलमर्थसामर्थ्यसिद्धोऽपि विशेषो द्योतनमपेक्षत इति तन्मात्रव्यापाराः प्रादयो द्योतका एव भवितुमर्हन्ति न वाचका इति ।

सत्यं । किन्तु यद्प्रतीतौ सामान्यप्रतीतिरेव न पर्यवस्यति तद्विशेषमात्रं तेभ्यः प्रतीयतां नाम । न तु तावता व्यवहारसिद्धिः काचित् । तस्याः प्रतिनियतविशेषावसायनिवन्धनत्वात् । स त्वपूर्वतया प्रादिभ्य एवोद्भवन्नवधार्यते । न पचत्यादिभ्यः । नार्थादपि तत्सद्भावसिद्धिः काचित् । अस्याः प्रतिनियतविशेषावसायनिवन्धनत्वात् ।

तस्माद्यत्प्रयोगान्वयव्यतिरेकानुविधायिनी यस्य प्रतीतिस्तयोर्वाच्यवाचकभावव्यवहारविषयत्वमेवोपगन्तुं युक्तं नाभिव्यक्तिविषयत्वम् । यथा घटशब्दतदर्थयोः ।

प्रादिप्रयोगानुविधायिनी तत्र पचतीत्यादौ प्रकर्षादिप्रतीतिरिति तेऽपि

---

मधुसूदनीविवृतिः ।

प्रदीप एव पूर्वसिद्धान् सन्तमसि तिरोहितान् पदार्थान् द्योतयति । शब्दार्थयोश्च कुलालवदर्थजनकत्वाभावोऽसंभवात्, अज्ञातस्य ज्ञापकतया च द्योतकत्वमपि नास्ति किन्तु जनकद्योतकाभ्य मन्यो हेतुर्न भवतीति उपचारेण तत्र द्योतकत्वं शब्दरूपेषु प्रादिष्विति । प्रदीपादिनिष्ठस्य वर्त्तमानस्य वास्तवस्य वस्तुबललब्धस्य तस्य द्योतकत्वस्य शब्दार्थविषयत्वेन शब्दार्थगतत्वेन प्रतिक्षेपात् निराकरणात् । अस्वीकारादित्यर्थः ।

वस्तुस्थित्या प्रादेर्द्योतकत्वमितिवादिनामतमाशंक्य समाधत्ते—

अथोच्यते-पचत्यादयः इति । अशेषाणां विशेषाणामन्तर्भाव भजन्तीति तानि । तस्य विशेषस्य प्रतीतेर्नान्तरीयकतया अविनाभावतया ।

सत्यमिति । यद्प्रतीतौ यस्य विशेषस्य अप्रतीतौ । तेभ्यः पचत्यादिभ्यः । तावता विशेषेण। तस्याः व्यवहारसिद्धेः । प्रतिनियतस्य प्रबन्धानुगतस्य प्रकरणानुगतस्य वा विशेषस्य अवसाये ज्ञाने निवन्धनत्वात् कारणत्वात् । स तु प्रतिनियतविशेषस्तु अपूर्वतया पचत्यादिभ्यः अप्राप्ततया उद्भवन् जायमानोऽवधार्यते । अवधारणं निश्चयः । अर्थादपि अर्थापत्यापीति भावः । तत्सद्भावसिद्धिः व्यवहारसत्तासिद्धिः । अस्याः व्यवहारसिद्धेः ।

उपसंहरन्नाह—तस्मादिति। यस्य धातोः प्रादेर्वा प्रयोगेण सह अन्वयव्यतिरेकौ अनुविधत्तुं शीलमस्याः सा तथोक्ता । यस्य अर्थस्य । तयोः धात्वर्थप्राद्यर्थयोः ।

तेऽपि प्रादयोऽपि तथा वाचकाः । अन्यथा अन्वयव्यतिरेकाभ्यां तादृशव्य-

ला

तथा भवितुमर्हन्त्येव । अन्यथा नीलोत्पलादौ सर्वस्यैव विशेषणाभिमतस्य नीलादिशब्दस्य विशेष्यवाचिनश्चोत्पलादेर्विशेषणविशेष्यभावव्यवहारोऽस्तमुपगच्छेत् । तत्रापि ह्येतच्छक्यं वक्तुम् । उत्पलादयः शब्दाः सामान्यवचनाः । सामान्यानि च गर्भीकृतविशेषाणि भवन्तीति तेषां तत्र सद्भावसिद्धौ सत्यां नीलादिशब्दा अपि तत्तद्द्योतनमात्रव्यापाराः प्रादिवद् द्योतका भवितुमर्हन्ति नाभिधायका इति ।

एवञ्चान्तर्मात्रविपरिवर्तितया सिद्धसद्भावानां घटादीनां घटादिशब्दा अपि द्योतका एव स्युर्न वाचका इति वाच्यवाचकव्यवहारोऽस्तमियात् । तस्मात् भाक्तमेव द्योतकत्वमुपगन्तव्यं न मुख्यम् भक्तेश्च प्रयोजनं वाच्यस्यार्थस्य स्फुटत्वप्रतिपत्तिः । निमित्तं च विशेषणविशेष्यप्रतीत्योराशुभावितया क्रमानुपलक्षणात् सहभावप्रतीतिः ।

द्विविधं हि विशेषणमिष्टम् अन्तरङ्गं बहिरङ्गं चेति । तत्राद्यमव्यवहितमेवार्थकारि लाक्षादिवत् स्फटिकादेः । द्वितीयमुभयरूपमयस्कान्तमिव लोहस्य । तद्धि व्यवहितमपि लोहे स्वां शक्तिमुपदधात्येव । तदपि द्विविधम् समानाधिकरणं भिन्नाधिकरणं चेति । विशेष्योऽपि द्विविधो धात्वर्थो नामार्थश्चेति । तत्रोपसर्गाणां प्रायो धात्वर्थो विषयो न नामार्थः । चादीनां तु निपातानामुभयमपि । केवलं तेषां विशेष्यात् पूर्वं पश्चाच्च क्रमेण प्रयोगो नियोगतोऽवगन्तव्यः । नान्येषां विशेषणानाम् ।

मधुसूदनीविवृतिः ।

वस्थाया अस्वीकारे । सर्वस्य वादिप्रतिवादिनः । तत्रापि नीलोत्पलादावपि । एतद् द्योतकत्वम् । नीलोत्पलादौ द्योतकत्वं संगमय्य दर्शयति—उत्पलादयः शब्दा इति । तेषां विशेषाणां नीलत्वादीनां तत्र सामान्ये उत्पलादौ ।

नचायमेव दोषः दोषान्तरमपीत्याह—एवञ्चेति । अन्तरेव विपरिवर्त्तितुं शीलमेषां तेषां भावस्तत्ता तया । प्रकृतं प्रादेर्द्योतकत्वमुपसंहरति—तस्मादिति । प्रादेर्द्योतकत्वं भाक्तमेव । क्रमस्य पूर्वापरीभावस्य अनुपलक्षणात् अज्ञानात् सहभावेन यौगपद्येन प्रतीतिः ।

विशेषणविशेष्यभावविषये किमपि प्रासङ्गिकं निरूपयति—द्विविधं हि विशेषणमिष्टमिति । तत्र अन्तरङ्गबहिरङ्गयोर्मध्ये आद्यमन्तरङ्गम् । अव्यवहितमेव विशेष्यस्य पूर्वं वा पश्चाद्वा सन्निहितमेव सद् अर्थकारि विशेषाधायकम् यथा स्फटिकस्य लाक्षा सन्निहिता रक्तत्वरूपस्य विशेषस्य आधायिकेति । उभयरूपं व्यवहितमव्यवहितं च अर्थकारि । तदपि अन्तरङ्गबहिरङ्गभावेन द्विविधमपि । नामार्थः प्रातिपदिकार्थः। तत्र विशेष्याणां मध्ये । उभयमपि धात्वर्थो नामार्थश्च । तेषामुपसर्गाणां पूर्वम् , चादीनां पश्चात् प्रयोगः ।

तदेवं विशेषणविशेष्यस्वरूपेऽवसिते यदेतदन्तरङ्गं विशेषणमुक्तं तद् गवादौ गोत्वादिवद्विशेष्यस्वरूपान्तर्भूतमिवेति तत्प्रतीत्योराशुभावितया क्रमानुपलक्षणात् सहभावावगमो द्योत्यद्योतकभावभ्रमहेतुः। अत एव केचिदेषां धात्वन्तर्भावमिव मन्यमानाः—

"अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम्।
धातूपसर्गयोः शास्त्रे धातुरेव च तादृशः॥"

इत्याद्यवोचन्।

चादीनां चोपाधीनां विशेष्येभ्यो निर्मलेभ्यः स्फटिकोपलेभ्य इव लाक्षादीनामव्यवधानमेव। तेन ते यदनन्तरमुपाधीयन्ते, तेष्वेव विशेषमाधातुमलं नान्यत्रेति यत्तेषां भिन्नक्रमतया क्वचिदुपादानं तदनुपपन्नमेव अयथास्थानविनिवेशिनो हि तेऽर्थान्तरमनभिमतमेव स्वोपरागेणो-

मधुसूदनीविवृतिः।

उपसंहरन् प्रकृतं स्मारयति—तदेवं विशेषणेति। अयं निष्कर्षः। यथा गोत्वं न गोः पृथग् तदन्तर्भूतमिव प्रतीयते। तथा प्रतिष्ठते इत्यादावपि गमनं न गतिनिवृत्त्यर्थकस्यापि स्थाधातोः पृथग् तदन्तर्भूतमेव। तदुक्तम्—"स्थादिभिः केवलैर्यच्च गमनादि तु गम्यते" इति। तत्र प्रादिभिः सोर्थः प्रसिद्धिव्याहतः उत्कृष्यते। अथ च धातूपसर्गौ सम्भूयार्थमाहतुरिति धातुपसर्गार्थप्रतीत्योराशुभावितया क्रमाज्ञानात् सहभावेन प्रतीयेते ताविति। अत एव धातूपर्गार्थप्रतीत्योः सहभावावगमत्वादेव। एषामुपसर्गाणां प्रादीनाम्।

अडादीनामिति। अडादीनाम् आदिपदेन द्विर्वचनादयो गृह्यन्ते व्यवस्थार्थम्। कार्यसंचालनार्थम्। शास्त्रे व्याकरणे धातूपसर्गयोः पृथक्त्वेन विकल्पनं कृतम्। वस्तुतस्तु धातुरेव तादृशः सोपसर्गस्यैव धातुत्वं विशिष्टक्रियावाचित्वमिति भावः। यथोक्तम्।

तथा हि सङ्ग्रामयतेः सोपसर्गाद्विधिः स्मृतः।
क्रियाविशेषाः संघातैः प्रक्रम्यन्ते तथाविधाः॥

असङ्ग्रामयत, सिसंग्रामयिषते इत्यादौ सोपसर्गस्यैव अड् द्विर्वचनं च दृश्यते अतः सोपसर्गस्यैव धातुत्वमिति। संघातैः धातूपसर्गसमुदायः तथाविधाः भिन्नाः अभिन्नाः वा क्रियाविशेषाः। अतः विशिष्टैव धातुवाच्या क्रियेति च। अवोचन् महावैयाकरणाः श्रीभर्तृहरिपादाः। ( द्विधाकैश्चिदिति साकांक्षावयवे भेदे इति अनिराकरणात्कर्तुरिति श्रुतिमात्रेण यत्रास्येति जातिशब्दोऽन्तरेणापीति याः कारिकाः पूर्वं प्रमाणत्वेनोपन्यस्ताः ताः सर्वा अपि भर्तृहरिपादानां बोध्याः।)

चादिषु विशेषं नियमं प्रस्तौति—चादीनां चोपाधीनामिति। उपाधीनां विशेषणानाम्। तेन अव्यवधानोपादानेन हेतुना ते चादयः। यदनन्तरं यस्य विशे-

परञ्जयेयुः । ततश्च प्रस्तुतार्थस्यासामञ्जस्यप्रसङ्गः। कथञ्चिद्वा भिन्नक्रमतयाप्यभिमतार्थसम्बन्धोपकल्पने प्रस्तुतार्थप्रतीतेर्विघ्नितत्वात् तन्निबन्धने रसास्वादोऽपि विघ्नितः स्यात् शब्ददोषाणामनौचित्योपगमात् तस्य च रसभङ्गहेतुत्वात् । यथाहुः—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥" इति ।

स्वाभाविकं ध्वनेर्युक्तं व्यञ्जकत्वं न दीपवत् ।
धूमवत् किन्तु कृतकं सम्बन्धादेरपेक्षणात् ॥ ७४ ॥
प्रादीनां द्योतकत्वं यत् कैश्चिदभ्युपगम्यते ।
तद् भाक्तमेव तत्रेष्टं न मुख्यं तदसम्भवात् ॥ ७५ ॥

---

मधुसूदनीविवृतिः ।

षस्य अनन्तरं पश्चात् उपाधीयन्ते सन्निवेश्यन्ते । तेष्वेव विशेष्येषु । अयथास्थाननिवेशिता हि विरुद्धस्थानसंयोजिता हि ते चादयः । अनभिमतमेव प्रकरणविरुद्धमेव अर्थान्तरं स्वोपरागेण स्वसामर्थ्येन उपरञ्जयेयुः प्रकाशयेयुरिति भावः । ततश्च अर्थान्तरप्रकाशनाच्च प्रस्तुतार्थस्य प्रकरणसमायातस्य अर्थस्य वस्तुनः असामञ्जस्यस्य अनन्वयस्य प्रसङ्गः प्राप्तिः ।

ननु अयथास्थानविनिवेशिनो हि महाकवीनां प्रयोगाः दरीदृश्यन्त इत्यभ्युपगम्योच्यते--कथञ्चिद्वा भिन्नक्रमतयापीति । भिन्नक्रमतया विनिवेशितानां चादीनां क्लेशेन स्वाभिमतार्थसम्बन्धस्य उपकल्पने प्रस्तुतार्थविषयिण्याः प्रतीतेः विघ्नितत्वात् अननुभूयमानत्वात् तन्निबन्धनो वाच्यार्थप्रतीत्यनुभवहेतुको रसास्वादोऽपि विघ्नितः स्यात् न स्यादिति भावः । शब्ददोषाणाम् अनौचित्यहेतुकत्वेन स्वीकारात् । तस्य अनौचित्यस्य रसभङ्गहेतुत्वात् रसविनाशकारणत्वादित्यन्वयः ।

अनौचित्यादृते नान्यदिति । अनौचित्यं यत्र आस्वादयितुः चमत्कारविघातः तत् । रसस्योपनिषत् रससर्वस्वम् । प्रसिद्धानामौचित्यानां बन्धो रचना । औचित्यस्वरूपं निरूपयन् ध्वनिकारः स्वग्रन्थे बहुविधमौचित्यं जग्रन्थ तच्च जिज्ञासुभिस्तत एव ध्वन्यालोकतृतीयोद्योतादेव अवगन्तव्यम् । अस्माभिस्तु बहुत्वात्प्रदर्शनाद्विरम्यते ।

उक्तमर्थं कारिकाभिः विवृणोति । स्वाभाविकमिति । ध्वनेः स्वाभाविकं स्वभावप्राप्तं व्यञ्जकत्वं न युक्तम् । दीपवत् यथा दीपे स्वाभाविकं पदार्थानां व्यञ्जकत्वं तथा ध्वनौ नास्तीति तर्हि कीदृशं ध्वनित्वमित्याह—धूमवदिति । किन्तु सम्बन्धादेः व्याप्त्यादेरपेक्षणात् गवेषणात् धूमवत् कृतकं व्यञ्जकत्वम् । धूमो यथा वह्निप्रकाशने व्याप्तिमपेक्षते । तथा ध्वनावपि वाच्यप्रत्येययोः सम्बन्धोऽस्त्येवेति भावः।

प्रादीनां द्योतकत्वमिति । कैश्चिद् वैयाकरणैः नैयायिकैश्च । तत्र प्रादिषु ।

तथा हि यस्य शब्दस्य भावाभावानुसारिणी ।
यदर्थबुद्धिस्तस्यासौ वाच्योऽर्थ इति कथ्यते ॥ ६ ॥
गोशब्दस्येव गौरर्थः सान्यथा त्वव्यवस्थिता ।
वाच्यत्वव्यवहारश्च न स्यादर्थस्य कस्यचित् ॥ ७७ ॥
प्रादिप्रयोगानुगमव्यतिरेकानुसारिणी ।
प्रकर्षादौ मतिस्तेन तस्य तद्वाच्यता न किम् ॥ ७८ ॥
विशेषावगमस्याशुभावादनुपलक्षणात् ।
क्रमस्य सहभावित्वं भ्रमो भक्तेर्निबन्धनम् ॥ ७६ ॥
विशेषणं तु द्विविधमान्तरं बाह्यमेव च ।
तत्राव्यवहितं सद्यदर्थकारि तदान्तरम् ॥ ८० ॥
स्फटिकस्येव लाक्षादि द्वितीयमुभयात्मकम् ।
आयसस्येव तत्कान्तं तदपि द्विविधं मतम् ॥ ८१ ॥
असमानसमानाधिकरणत्वविभेदतः ।
विशेष्योऽपि द्विधा ज्ञेयो धातुनामार्थभेदतः ॥ ८२ ॥
शब्दत्वार्थत्वभेदेन नामार्थोऽपि द्विधा मतः ।
तत्रोपसर्गाणां प्रायो धात्वर्थो विषयो मतः ॥ ८३ ॥
चादीनां तु निपातानामुभयं परिकीर्त्तितम् ।
केवलं तु विशेष्यात् स्युः पूर्वं पश्चाच्च ते क्रमात् ॥ ८४ ॥

---

मधुसूदनीविवृतिः ।

तद् द्योतकत्वम् । भाक्तम् उपचरितम् । तदसम्भवात् मुख्यासम्भवात् ।

द्योतकत्वस्य मुख्यासंभवत्वं व्युत्पादयति—तथाहि यस्य शब्दस्येति । भावाभावानुसारिणी अन्वयव्यतिरेकानुविधायिनी ।

सान्यथेति । अन्यथा अन्वयव्यतिरेकाभावे सा अर्थबुद्धिरव्यवस्थिता मर्यादा रहिता स्यात् ।

प्रादिप्रयोगानुगमेति । अनुगमः अन्वय । तेन हेतुना तस्य प्रकर्षस्य तद्वाच्यता प्रादिवाच्यता ।

विशेषावगमस्येति । क्रमस्य अनुपलक्षणात् सहभावित्वं प्रतीत्योरिति भावः । तेन च भ्रमः द्योत्यद्योतकताभ्रमः । स च भक्तेरुपचारस्य निबन्धनं कारणमित्यन्वयः ।

स्फटिकस्येवेति । द्वितीयं बाह्यं विशेषणम् उभयात्मकम् व्यवहिताव्यवहितोभयस्वरूपम् । आयसो लोहस्तस्य तत्कान्तमिव अयस्कान्तमिव । तदपि द्विविधमपि ।

विशेषणानामन्येषां पौर्वापर्यमयन्त्रितम् ।
इत्थं स्थिते स्वरूपेऽस्मिन् विशेषणविशेष्ययोः ॥ ८५ ॥
यदन्तरङ्गमुद्दिष्टमुभयात्माविशेषणम् ।
विशेष्ये मग्नमिव तत् गवि गोत्वमिव स्थितम् ॥ ८६ ॥
अत एवाशुभवित्वात् तत्प्रीत्योः क्रमाग्रहः ।
यन्मूलश्चायमनयोर्द्योत्यद्योतकताभ्रमः ॥ ८७ ॥
प्रादीनां धातुगर्भत्वोपगमाच्च यदुक्तवान् ।
अडादीनां व्यवस्थार्थमित्यादि विदुषां वरः ॥ ८८ ॥
अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः ।
सम्बन्धं ते हि शक्तिं स्वामुपदध्युरनन्तरे ॥ ८९ ॥
सान्तरत्वे तु तां शक्तिमन्यत्रैवादधत्यमी ।
ततश्चार्थासामञ्जस्यादनौचित्यं प्रसज्यते ॥९० ॥
बहिरङ्गान्तरङ्गत्वभेदात् तद् द्विविधं मतम् ।
तत्र शब्दैकविषयं बहिरङ्गं प्रचक्षते ॥ ९१ ॥
द्वितीयमर्थविषयं तत् त्वाद्यैरेव दर्शितम् ।
तत्स्वरूपमतोऽस्माभिरिह नातिप्रतन्यते ॥ ९२ ॥
पारम्पर्येण साक्षाच्च तदेतत् प्रतिपद्यते ।
कवेरजागरूकस्य रसभङ्गनिमित्तताम् ॥ ९३ ॥
यत् त्वेतच्छब्दविषयं बहुधा परिदृश्यते ।
तस्य प्रक्रमभेदाद्या दोषाः पञ्चैव योनयः ॥ ९४ ॥

---

मधुसूदनीविवृतिः ।

विशेषणानामिति । अन्येषां नीलादीनाम् । अनियन्त्रितं पूर्वं पश्चाद्वेति नियोगरहितम् ।

यदन्तरङ्गमुद्दिष्टमिति । उभयात्माऽविशेषणम् इति अकारप्रश्लिष्टः पाठः । यदन्तरङ्गम् विशेषणम् उभयात्मम् नास्ति इत्यर्थो बोध्यो योजनया । बाह्यस्य विशेषणस्य उभयात्मकत्वस्वीकारात् ।

सान्तरत्वे तु तामिति । सान्तरत्वे व्यवहितत्वे अर्थासामञ्जस्यात् प्रस्तुतार्थासङ्गतेः । बहिरङ्गेति । तत् अनौचित्यम् ।

द्वितीयमिति । द्वितीयमर्थविषयमनौचित्यं–विभावानुभावव्यभिचारियामयथायथं रसेषु यो विनीयोगस्तन्मात्रलक्षणम् आद्यैरेव प्राचीनाचार्यैरेव । पारम्पर्येणेति । पारम्पर्येण रसभङ्गनिमित्तं बहिरङ्गत् । साक्षात् रसभङ्गनिमित्तनिमित्तयन्तरङ्गम् तदेतद् । नौचित्यम् अजारूकस्य निरूपयितव्यविषये असावधानस्य ।

पञ्चैवेति । प्रक्रमभेदः क्रमभेदः पौनरुक्त्यं वाच्यावचनं विधेयाविमर्शश्चेति पञ्च

तेषां संक्षेपतोऽस्माभिः स्वरूपमभिधास्यते ।
यस्तु प्रपञ्चः पञ्चानां स्वयं तमवधारयेत् ।। ६५ ।।
इति सङ्ग्रहश्लोकाः ।

किञ्च काव्यस्य स्वरूपं व्युत्पादयितुकामेन मतिमता तल्लक्षणमेव सामान्येनाख्यातव्यम् , यत्र वाच्यप्रतीयमानयोर्गम्यगमकभावसंस्पर्शस्तत् काव्यमिति, तावतैव व्युत्पत्तिसिद्धेः । यत्तु तदनाख्यायैव तयोः प्रधानेतरभावकल्पनेन प्रकारद्वयमुक्तं तदप्रयोजकमेव । यो हि यद्विशेषप्रतीतौ निमित्तभावेन निश्चितः स एव तदर्थिनः प्रतिपाद्यो भवति नान्यः; अतिप्रसङ्गात् । यथा दण्डिप्रतीतौ दण्डः । अनुमेयार्थसंस्पर्शमात्रं चान्वयव्यतिरेकाभ्यां काव्यस्य चारुत्वहेतुर्निश्चितम् । अतस्तदेव वक्तव्यं भवति न त्वस्य प्राधान्याप्राधान्यकृतो विशेषः । न हि तयोः सामान्यविशेषयोस्त्रिष्वपि वस्तुमात्रादिष्वनुमेयेषु चेतनचमत्कारकारी कश्चिद्विशेषोऽवगम्यते

मधुसूदनीविवृतिः ।

एव । सरलम् । अभिधास्यते द्वितीयविमर्शे इति शेषः ।

किञ्चेति व्याघुट्य ध्वनिलक्षणे दोषमाकिरति--काव्यस्वरूपमिति । यत्र वाच्यप्रतीयमानयोः गम्यगमकभावसंस्पर्शः ( संस्पर्शः सम्बन्धः ) तत्काव्यमिति सामान्येन आख्यातव्यं कथनीयमित्यन्वयः । तावतैव सामान्याभिधानेनैव व्युत्पत्तिसिद्धेः काव्यस्वरूपज्ञानसिद्धेः । तदनाख्याय सामान्येन अकथयित्वा । प्रकारद्वयं ध्वनिगुणीभूताभ्यां द्वौ भेदौ । तदप्रयोजकमेव तत् अनावश्यकमेव । यो वाच्यो हि यद्विशेषप्रतीतौ प्रतीयमानरूपविशेषप्रतिपत्तौ निमित्तभावेन साधनतया निश्चितः स प्रतीयमानरूपविशेष एव । स प्रतीयमान एव अर्थः प्रयोजनं यस्य स तदर्थी तस्य तदर्थिनः प्रतीयमानार्थिनो वाच्यस्य । नान्यः न प्रतीयमानव्यतिरेकी । प्रतीपाद्यत्वे हि अतिप्रसङ्गः अतिव्याप्तिः स्यात् यथा दण्डिप्रतीतौ दण्डो न प्रतिपाद्यः । अयं भावः । यथा दण्डिनं भोजय दण्डिनं देहीत्यादौ भोजनं दानं च दण्डवत्वेन ज्ञाते पुंस्येव न दण्डे तथाऽत्रापि वाच्यनिमित्तकत्वेन प्रतीतस्य प्रतीयमानस्यैव प्रतिपाद्यत्वं नान्यस्येति ।

ननु यः ललनालावण्यप्रतिमोऽर्थः सहृदयहृदये चमत्कुर्वन् समुद्भवति तत्र प्राधान्ये ध्वनिः तस्य अप्राधान्ये वाच्यस्य च चारुत्वप्रकर्षे गुणीभूतव्यङ्ग्यकाव्यमिति काव्ययोः परस्परं विशेष उपलभ्यते ततश्च सामान्येन काव्यलक्षणविधानमनुचितमित्याशङ्कायामाह—अनुमेयार्थसंस्पर्शेति । सामान्येन अनुमेयार्थसंस्पर्शः चारुत्वहेतुर्निश्चितः न तु तत्र प्रधानेतरभावोऽनुरोधी । अतः तदेव सामान्यमेव । अस्य ।

न हि तयोः सामान्यविशेषयोरिति । सामान्यविशेषयोः काव्ययोर्मध्ये

तत्र वस्तुमात्रस्य प्राधान्ये यथा—

'वच्च मह व्विअ एक्काए होन्तु णीसासरोइअव्वाइम् ।
मा तुज्झ वि तीए विण दक्खिण्णहअस्स जाअन्दु ॥'

इत्यत्र । तस्यैवाप्राधान्ये यथा—

"लावण्यसिन्धुरपरैव हि केयमत्र
यत्रोत्पलानि शशिना सह सम्प्लवन्ते ।
उन्मज्जति द्विरदकुम्भतटी च यत्र
यत्रापरे कदलिकाण्डमृणालदण्डाः ॥"

मधुसूदनीविवृतिः ।

अनुमेयेषु अनुमितिविषयेषु त्रिषु वस्तुमात्रालङ्कारसेषु चेतनचमत्कारी सहृदयाह्लादजनकः कश्चिद्विशेषः न अवगम्यते प्रतीयते । त्रिषु समानं चारुत्वमनुभूयत इति भावः ।

तत्र त्रिरूपानुमेयेषु वस्तुमात्रस्य अनुमेयस्य प्राधान्ये ध्वनित्वे यथा—"वच्च मह व्विअ" इति । व्रज ममैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा तवापि तया विना दाक्षिण्यहतस्य जनिषत । इति संस्कृतम् । अत्र काचित् खण्डिता नायिका दत्तवचनतया शरीरमात्रेण स्थितं वाङ्मनः कायिकव्यापारेण अन्यासक्तमिवोपलक्ष्यमाणं कञ्चन नायकमुपलभते । हे शठ ? व्रज गच्छ मात्र स्थितया विलम्बं कुरु । एतया स्नेहहीनोक्त्या नायिकाया प्रगाढमन्युः द्योत्यते । ममैव एकस्या न मदतिरिक्ताया अन्यस्याः कस्याश्चित् । अहमेव एकाकिनी न द्वितीया अस्मिञ्जगति वर्त्तते या एतादृशान् गुरुतरान् अपराधान् जानन्ती अपि त्वयि अनुरज्येदिति भावः । तस्यानुरागस्य एतानि फलानि निःश्वासरोदितव्यानि भवन्तु । यादृशानि मयि तवानुरागफलानि निःश्वासादीनि सन्ति तथा मा तवापि दाक्षिण्यहतस्य । तथा या स्त्रीभूत्वाऽपि सजातीयादुःखं नानुभवति स्वार्थपरायणा केवलम् । तया विना जनिषत । त्वं तस्यामेव निसर्गतोऽनुरक्तः मयि तु धूर्त ? कृतकवचांस्यातनुषे इति दिशा नायकस्यान्यस्यामनुरागातिशयो वस्तु ध्वन्यते । तदेवात्र प्रधानम् ।

तस्य वस्तुमात्रस्य अप्राधान्ये गुणीभूतत्वं यथा—लावण्यसिन्धुरपरैवेति । नवयौवनपरिस्फुल्लावण्यवतीं काञ्चन कामिनीं सञ्जाताभिलाषुकः कश्चित्कामुकः प्रस्तौति । लावण्यसिन्धुरिति । अत्र स्पष्टोऽन्वयः । अपरे उन्मज्जन्ति । अत्र नायिकायाः तनूवदननयनस्तनोरूभुजाः लावण्यसिन्धुशशिप्रभृतितादात्म्येन अध्यवसितानि इत्येवमभेदाध्यवसायात्मिकेयमतिशयोक्तिः । सिन्ध्वादिपदार्थस्यानुपपत्तेरत्यन्ततिरस्कृतत्वम् । तथा च लावण्ये प्रवहमानादि लक्ष्यते । नायिकाङ्गानां परिपूर्णता ध्वन्यते । एवमयं प्रतीयमानोऽर्थः "इयं पुरोवर्तिनी का" इति वाक्योपस्थिताऽर्थे चारुत्वमाधत्ते इति गुणीभूतत्वमिति ध्वनिकाराशयः ।

यथा च—

"अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः" ॥

अलङ्कारस्य प्राधान्ये यथा—

"वीराण रमइ घुसृणारुणम्मि ण तहा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दूरे ॥"

यथा च

"तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥"

मधुसूदनीविवृतिः ।

अनुरागवतीति । स्पष्टार्थः । अत्र समासोक्त्यनुप्राणिता अनुक्तनिमित्ता विशेषोक्तिः । अत्र अनुरक्तयोरपि कामिनोः गुरुपारतन्त्र्येणाऽसमागमो व्यङ्ग्यः । स च कारणे सति कार्याभावरूपविशेषोक्तिस्वरूपः । एतेन अलंकाररूपेण व्यङ्ग्येन च संध्यादिवसासमागमरूपं वाच्यमेव उत्कृष्यते इति गुणीभूतव्यङ्ग्यत्वमिति ध्वनिकाराशयः ।

"वीराण रमइ" इति । वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे । दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे । इति संस्कृतम् । घुसृणेन चन्दनेन अरुणे प्रियायाः स्तनोत्सङ्गे स्तनाभोगे वीराणां दृष्टिस्तथा न रमते । यथा बहलं सिन्दूरं यस्मिन् तस्मिन् रिपोर्गजस्य कुम्भस्थले रमते । इत्यन्वयः । अत्र प्रियास्तनोत्सङ्गस्य रिपुगजकुम्भस्थलस्य च दर्शनमाकर्षकम् । किन्तु वीरत्वात्तेषां रिपुगजकुम्भस्थलदर्शने आकर्षाधिक्यमिति वाच्यो व्यतिरेकः । अस्माच्च वीराणां कृते यथा प्रियास्तनाभोगः तथैव रिपुगजकुम्भस्थलमित्यनयोः समानादरविषयता प्रतीयते । आदरे समानत्वम् अर्थात् सादृश्यं च कुचगजकुम्भयोरारुण्यावसेयमित्युपमाध्वनिः । इति ध्वनिकाराशयः।

तस्याऽलङ्कारस्याप्रधान्ये यथा—"तं ताण सिरि" । तत् तेषां श्रीसहोदररत्नाहरणे हृदयमेकरसम् । बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन । इत्यनुवादः । इयमार्या आनन्दवर्द्धनपादानां विषमबाणलीलायां कामदेवस्य त्रैलोक्यविजयव्यसनितया असुरेषु पराक्रमो वर्ण्यति । यद् हृदयम् श्रियाः सहोदराणि समानोदरभावीनि यानि रत्नानि तेषामासमन्ताद्, हरण एकरसम् तन्मयम् । तेषाम् यैः पुनः पुनरिन्द्रपुरावमर्दनादि किं किं न कृतम् तेषाम् असुराणाम् । तत् हृदयम् । कुसुमबाणेन अतिशयसुकुमारसम्भारेण कामेन प्रियाया बिम्बाधरे विनिवेशितम् ।

अत्र यद्यर्थोक्तौ च कल्पनमिति तृतीया काव्यप्रकाशानुमता अतिशयोक्तिः वाच्या। तथाहि-यद् हृदयं रत्नाहरणतत्परं तद्बिम्बाधरसङ्गतं कृतमिति यत्तद्भ्यां रत्नापेक्षया अधरेऽतिशयः उच्यते इत्यतिशयोक्तिः। तया च रत्नाधरयोः साम्यं प्रतीयते इत्युपमाध्वनिः ।

इति । तस्यैवाप्राधान्ये यथा—

"चन्दमऊएहि णिसा णलिणी कमलेहि कुसुमगुच्छेहि लआ ।
हंसेहि सरअसोहा कव्वकहा सज्जणेहि करइ गुरुई ॥"

रसादीनां प्राधान्ये यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णने मनोभवशरसन्धानपर्यन्ते, शम्भोश्च विवृत्तधैर्यस्य चेष्टाविशेषवर्णनादौ । तेषामप्राधान्यं शुद्धसङ्कीर्णतादिभेदाद् द्विविधम् । तत्र शुद्धं यथा—

"किं ? हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण ! प्रवासरुचिता केनासि दूरीकृतः ? ।
स्वप्नान्तेष्विति ते वदन् प्रियतमव्यासक्तकण्ठग्रहो
बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः ॥"

मधुसूदनीविवृतिः ।

"चन्दमऊएहिं" इति । चन्द्रमयूखैर्निशा नालिनी कमलैः कुसुमगुच्छैर्लता । हंसैः शारदशोभा काव्यकथा क्रियते गुर्वी । इति च्छाया । अत्र गुरुकरणरूपसमानो धर्मः चन्द्रमयूखप्रभृतिषु निशादिषु चेति उपमानकोटिपदार्थेषु तथा सज्जने काव्यकथायाम् इत्युपमेयकोटिपदार्थयोश्च परस्परऽमन्वेति । तद्यथा—निशादिभिर्विना चन्द्रमयूखप्रभृतीनां न कोपि परभागलाभः उत्कर्षातिशयप्राप्तिरित्यर्थः । सज्जनानामपि काव्यकथां विना कीदृशी सज्जनता । एवं चन्द्रमयूखैः निशायाः भास्वरत्वसेव्यत्वादि, कमलैर्नलिन्याः शोभापरिमललक्ष्म्यादि, कुसुमगुच्छैर्लतायाः अभिगम्यत्वमनोहरत्वादि, हंसैः शारदशोभायाः श्रुतिसुखकरत्वमनोहरत्वादि यद् गुरुत्वं क्रियते तत् काव्यकथायाः सज्जनैः क्रियते । इत्येवं गुरुः क्रियते इति पदस्य कोटिद्वयघटितपदार्थयोरन्वयः देहलीस्थदीपकवदित्यत्र दीपकालङ्कारः । एवं यथा निशादेः चन्द्रमयूखादीनां काव्यकथया च सज्जनानां गुरूकरणं तथैव चन्द्रमयूखादिभिः निशादेः सज्जनैश्च काव्यकथाया गुरूकरणमिति उपमा ध्वन्यते । परं यादृग् चारुत्वं वाच्यदीपकबलादनुभूयते न तादृक् उपमयेति न तन्मुखेन व्यपदेशः । किन्तु दीपकमुखेनैव स ज्यायानिति ध्वनिकाराशयः ।

विवृत्तधैर्यस्येति विचलितधैर्यस्य । चेष्टादिविशेषस्य "उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि" इत्यादिवर्णनादौ । तेषां रसादीनाम् । आदिपदात् भावतदाभासादीनां ग्रहणम् । शुद्धः रसान्तरेणाङ्गभूतेनालङ्कारान्तरेण न मिश्रः । तत्र शुद्धसङ्कीर्णतानिरूपिताप्राधान्ये शुद्धमप्राधान्यं यथा—

किं हास्येन न मे इति । अत्र स्वाप्नरिपुस्त्रीकृतविलापेन कस्यचिन्नरपतेः प्रभावातिशयो वर्ण्यते । जागृतौ हि यादृग्वस्तु अनुभूयते तादृगेव वस्तु स्वप्नेऽनुभूयत इति दार्शनिकाः । अत्र नायिकयाऽपि हसन्नेव अवलोकित इति तादृगेवानुभूयते ।

इत्यत्र करुणस्य शुद्धस्यैवाङ्गभावः। सङ्कीर्णरसादावङ्गभूते यथा—

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः॥"

अत्र हि त्रिपुररिपुप्रभावातिशयस्य वाक्यार्थत्वे ईर्ष्याविप्रलम्भस्य श्लेषसहितस्यैवाङ्गभावः। तदेवं प्रकारत्रयेऽप्यनुमेयार्थसंस्पर्श एव काव्य-

मधुसूदनीविवृतिः।

हास्येन स्वात्मगोपनरूपेण हसितेन किम्? व्यर्थमेव तवात्मगोपनप्रयास इति भावः। मे मत्सकाशात् पुनर्न प्रयास्यसि इदानीं त्वां विदितशठभावं बाहुपाशबन्धान्न मोक्ष्यामीति भावः। चिराद्धेतोः कालादर्शनं दृष्टिविषयं प्राप्तः। उपालभते प्राप्तं तम्—"केयं निष्करुण!" इति। हे निष्करुण! हे निर्दय!। मयि इत्थं संतप्तायां मनागपि स्नेहं नातनुषे। अतो हे निर्दय! का अपूर्वा इयं प्रवासरुचिता। ननु त्वयैव औदासीन्यमनुशील्यते इत्याह—"केनासि दूरीकृतः" इति। केन दूरीकृतः? मिथ्या वदसि कदाचिद्गोत्रस्खलनादावपि न मया खेदितोऽसि। इत्येवं स्वप्नान्तेषु बहुषु स्वप्नायितेषु वदन् ते तव रिपुस्त्रीजनः। प्रियतमे विशेषेण आसक्तः कण्ठग्रहो येन स तथोक्तः सन् बुद्ध्वा जागरणमनुभूय रिक्तबाहुवलयः तारं मुक्तकण्ठं यथा स्यात्तथा रोदिति। अत्र शोकस्थायिभावेन स्वप्ने पत्युः सन्दर्शनाद्युद्दीपितेन करुणरसेन आस्वाद्यमानेन सरसीकृतो नरपतिप्रभावो भातीति करुणस्य शुद्धस्य नरपतिप्रभावे अङ्गत्वम्।

यत्र संकीर्णो रसादिः अङ्गतामापद्यते तदुदाहरणं यथा—क्षिप्तो हस्तावलग्नः। इति। इदममरुशतके पद्यम्। सः त्रिपुरदाहसामयिकः शांभवः शंभुप्रेरितः बाणरूपोऽग्निः वो युस्माकं श्रोतॄणां व्याख्यातॄणां च दुरितं पापं दहतु भस्मीकरोतु। स कः, यः आर्द्रापराधः/ तत्कालकृतापराधः कामीव प्रणयीव हस्तावलग्नः हस्तस्पर्शं कुर्वन् सन् साश्रुणी ईर्ष्यया अनाशया च अश्रुसहिते नेत्रोत्पले यासां तथाभूताभिः त्रिपुरासुरयुवतिभिः क्षिप्तः तिरस्कृतः। प्रसभम् बलात् अंशुकान्तमाददानः अभिहतः ताडितः। केशेषु गृह्णन् अपास्तः दूरीकृतः। चरणयोर्निपतितः सन् संभ्रमेण नेक्षितः। आलिङ्गन् अवधूतः अनादृतः निराकृतः। अत्र भगवतो महादेवस्य आशुतोषस्य प्रभावातिशयस्य वाक्यार्थत्वे श्लेषोपमासहितस्य न केवलस्य ईर्ष्याविप्रलम्भस्य (कामीवेत्यनेन श्लेषानुप्राणितेन उपमानेन आकृष्टो यो विप्रलम्भस्तस्य) अङ्गभावः पोषकत्वम्।

अवान्तरोपसंहारदिशा आह—तदेवं प्रकारत्रयेऽपीति। अयं भावः। यानि प्रतीयमानस्य प्राधान्याप्राधान्यमभ्युपेत्य भवता "वच्च मह व्विअ" इत्याद्युदाहरणानि दत्तानि तेषु कोपि प्रतीयमानप्राधान्याप्राधान्यानुगतः चारुत्वविशेषः प्रतीतिपथमव-

स्य चारुत्वहेतुरित्यवगन्तव्यम् । यदाह ध्वनिकारः-'सर्वथा नास्त्येव हृदयहारिणः काव्यस्य स प्रकारः, यत्र प्रतीयमानार्थसंस्पर्शेन न सौभाग्यम् । तदिदं काव्यरहस्यं परममिति सूरिभिर्विभावनीयम् ।

"मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम् ॥"

इति । पुनः स एव यथा—

"प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते ।
यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात् प्रकर्षवत् ॥"

सम्भवापेक्षया चास्य ध्वनेः स्वरूपमात्रप्रतिपादनार्थत्वोपगमेऽन्येषामपि तद्वाक्यवर्त्तिनां पदवर्णसंख्यादीनां तदुपदर्शनप्रसङ्गो विशेषाभावादिति संज्ञासंज्ञिसम्बन्धव्युत्पत्तिमात्रफलमेतत् पर्यवस्यतीति न काव्यविशेषव्युत्पत्तिफलम् । न चायं प्रधानेतरभावेनोपनिबद्धस्तेषामनुमेयतां प्रतिबध्नाति ।

---

मधुसूदनी विवृतिः ।

तरति । यच्च चारुत्वं तेष्वनुभूयते सहृदयैः तच्च प्रतीयमानसंस्पर्शकृतमेव । उदाहरणं समालोचयतां पुरतः नचैतदप्रत्यक्षम् । अथ च न केवलं मया दुराग्रहेणैतदुच्यते भवतापि काव्यरहस्यमध्यक्षीकारयता अभ्यासदिशा अभ्यनूक्तम्—"सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारः, यत्र प्रतीयमानार्थसंस्पर्शेन न सौभाग्यमि"ति । "प्रतीयमानच्छायैषा भूषेति" "यत्र व्यङ्ग्यान्वये वाच्यचारुत्वं स्यात्प्रकर्षवदि"ति । न चात्र कुत्रापि भवता प्राधान्याप्राधान्यगन्धोऽप्याघ्रातः । इति ।

मुख्या महाकवीति । अलंकृतिभृतां सालंकारणामपि । अपिशब्दादलंकारशून्यानामपि । महाकविगिरां काव्यानां एषा प्रतीयमानच्छाया प्रतीयमानार्थकृता छाया विच्छित्तिः मुख्या भूषा प्रधानमलंकारः । यथा योषिताम् अलंकारधारिणीनामपि प्रतीयमानच्छाया अन्तर्मदनोद्भेदोन्मिषद् हृदयसौन्दर्या लज्जा मुख्या भूषा । लज्जा हि अन्तरुद्भिन्नमान्मथविकारजुगोपयिषारूपा मदनविजृम्भैव ।

अहो अनुभवमपलपन् धाष्टर्यमाचरसि । ननु सहृदयहृदयं पृच्छ उक्तोदाहरणेषु-ध्वनेः प्राधान्याप्राधान्यजनितचारुत्वप्रकर्षापकर्षौ अनुभूयेते न वेत्याक्षेपे अन्वाह— सम्भवापेक्षयेति । अत्रेदं हृदयम् । सम्भवतः काव्येषु ध्वनेः प्राधान्याप्राधान्ये इत्यभ्युपेयते च । परमेतत् ध्वनेः स्वरूपप्रतिपादनफलम् । नैतेन चारुत्वविषये कोप्यूहः । अन्यच्च स्वरूपप्रतिपादनफलत्वेन स्वीकारेऽपि समानन्यायात् ध्वनिवाक्यगतानां ध्वनिप्रतीतिहेतूनां पदानां वर्णानां संख्यानां च स्वरूपप्रतिपादनमपि कर्त्तव्यताकोटौ आपत्स्यते । इयन्ति पदानि इयन्तो वर्णा इयत्यः संख्याः अस्मिन् ध्वनौ

तदेवञ्च नार्थशब्दयोरुपसर्जनीकृतस्वार्थत्वमव्यभिचारासम्भवदोषदुष्टत्वात्। न वाच्यप्रतीयमानयोर्व्यङ्ग्यव्यञ्जकभावस्तल्लक्षणाभावात्। न च काव्यविशेषस्य लक्षणकरणं प्रयोजनाभावात्। नापि ध्वनिव्यपदेशः व्यङ्ग्यव्यञ्जकभावाभावादुपपद्यत इति सर्वमसमञ्जसमिव तल्लक्षणमुपलक्ष्यते।

यदि काव्ये गुणीभूतव्यङ्ग्येऽपीष्टैव चारुता।
प्रकर्षशालिनी तर्हि व्यर्थ एवादरो ध्वनौ ॥ ९६ ॥
न हि काव्यात्मभूतस्य ध्वनेस्तत्रास्ति सम्भवः।
तेन निर्जीवतैवास्य स्यात् प्रकर्षे कथैव का ॥ ९७ ॥
अतोऽतदात्मभूतस्य येऽभावं जगदुर्ध्वनेः।
ते मुधैव प्रतिक्षिप्ताः स्वोक्तिभावमपश्यता ॥ ९८ ॥

---

मधुसूदनीविवृतिः।

इयन्ति चास्मिन् इत्यपि उपदर्शनं कर्त्तव्यं स्यादिति तत्वम्। किन्तु परमफलं चास्य प्राधान्यप्राधान्यनिरूपणस्य इयं संज्ञा अयं संज्ञी इति संज्ञासंज्ञिनोः सम्बन्धविषयिका व्युत्पत्तिरेव। काव्यविशेषविषयिणी तु काचिदपि व्युत्पत्तिर्नास्ति। अन्यच्च अस्तु प्रधानेतरभावो ध्वनिषु परं नैतावता अनुमेयत्वावरोधः। इति।

एवं ध्वनिलक्षणदूषणं निर्वाह्य उपसंहरति। तदेवमिति। अर्थः प्रतीयमानापेक्षया स्वं गुणीकरोत्येव न व्यभिचरति। यत्राप्यस्ति प्राधान्यं न तत् प्रकृतानुगुणमिति अर्थे उपसर्जनीकृतस्वत्वविशेषणदाने अव्यभिचारो दोषः। शब्दः स्वप्रतिपाद्यमर्थं न गुणीकरोति किन्तु स्वयमेव गुणीभवति यथोदकं प्रति घटस्य गुणत्वम्। यत्रापि वा अनुकरणेऽस्ति न तत् प्रस्तावौपयिकमिति शब्दे उपसर्जनीकृतार्थत्वविशेषणप्रदाने असंभवो दोषः। असमञ्जसमिव असङ्गतमिव।

"यदि काव्ये" इति। यदि गुणीभूतव्यङ्ग्येऽपि काव्ये प्रकर्षशालिनी चारुता इष्टैव तर्हि ध्वनौ आदरः प्राधान्यप्रयुक्तं गौरवम् व्यर्थ एव निष्फलमेव।

नहीति। अथोच्यते तत्र गुणीभूतव्यङ्ग्ये काव्यात्मभूतस्य ध्वनेः संभवो नास्ति इति। तर्हि आत्मनोऽभावे अस्य काव्यस्य निर्जीवता एव निःसारत्वेमेव व्यर्थप्रायत्वमेवेति तात्पर्यम्। स्यात्। प्रकर्षे कथैव का प्रकर्षकथा दूरोपेता। वृद्धिमिष्टवतस्ते हा मूलमपि नष्टं कष्टतरं वत महती विनष्टिरिति भावः।

अतोऽतदात्मभूतस्येति। अतः चारुतायाः अनुमेयार्थान्वयव्यतिरेकनुविधायितया सर्वत्र स्वीकारात् अतदात्मभूतस्य ध्वनेः अनुमेयात्मतामप्राप्तस्य ध्वनेः अभावं ध्वनिर्नास्तीति ये पूर्वे आचार्याः जगदुः। ते अचार्याः। सर्वथा नास्त्येव सहृदयहृदयहारिणः काव्यस्य स प्रकारः, यत्र प्रतीयमानार्थसंस्पर्शेन न सौभाग्यमि"त्येवं रूपायाः स्वोक्तेः भावम् अपश्यता अस्मरता ध्वनिकृता मुधैव

अथेष्यते स तत्रापि रसादिव्यक्त्यपेक्षया ।
काव्यमेवान्यथा न स्याद्रसात्मकमिदं यतः ॥ ९९ ॥
इत्थञ्च गम्यमानार्थस्पर्शमात्रमलङ्कृतिः ।
वाच्यस्येत्येतदुक्तं स्यान्मता सैवानुमा ततः ॥ १०० ॥
इति सङ्ग्रहश्लोकाः ।

किञ्च यदविवक्षितवाच्यो विवक्षितान्यपरवाच्यश्चेति ध्वनेः प्रकारद्वयमुक्तं, तत्र किमिदमविवक्षितत्वं नामेति तात्पर्यतोऽस्यार्थो वक्तव्यः । किमविवक्षितत्वमनुपादेयत्वमुतान्यपरत्वम् । अनुपादेयत्वं च किं सर्वात्मना अंशेन वा । सर्वात्मनानुपादेयत्वे व्यञ्जकत्वमप्यस्यानुपादेयं तस्य तदाश्रितत्वात् । ततश्च प्रयोग एवास्य दुष्टः स्याद् यथान्यस्य पुनरुक्तादेः ।

अथांशेनेत्युच्यते । वक्तव्यस्तर्ह्यसावंशः । स च निरूप्यमाणः

मधुसूदनीविवृतिः ।

प्रतिक्षिप्ताः मिथ्यैव आक्षिप्ताः ।

अथेष्यते स तत्रापीति । अथ स्वीकारार्थः । रसादीनां प्रधानीभूतानां व्यक्तेरपेक्षया तत्रापि गुणीभूतव्यङ्ग्येऽपि स ध्वनेरभावः इष्यते । अर्थात् गुणीभूतव्यङ्ग्ये रसादयो न प्रधानम् किन्तु वाच्य एव । इति ध्वन्यभावस्तत्र इष्यते इति चेत्तर्हि अन्यथा रसाद्यभावे तद्गुणीभूतव्यङ्ग्यं काव्यमेव न स्यात् । यतः काव्यस्य लक्षणं रसात्मकम् ।

इत्थं च गम्यमानार्थेति । इत्थमुपदर्शितप्रकारेण गम्यमानार्थस्य संस्पर्शमात्रेण वाच्यस्य अलंकृतिः शोभेत्येतदुक्तं भवति । ततश्च सा अस्मदुक्ता अनुमा एव मता स्यात् स्वीकृता भवेत् ।

अथेदानीं ध्वनिलक्षणदूषणोद्भावनानन्तरं रसादित्रिरूपं समालोच्य काव्यमाहुस्तमन्ये इति परिदर्शितानां भक्तिवादिनामन्येषां मतमनुसरन् । अविवक्षितवाच्यविवक्षितान्यपरवाच्येतिध्वनिव्यपदेशौ समालोचयितुमुद्यतते—किञ्च यदविवक्षितवाच्य इति । अनुपादेयत्वम् अग्राह्यत्वम् । अन्यपरत्वम् अन्याधीनसत्ताकम् । व्यञ्जकत्वमप्यस्येति । अस्य वाच्यस्य व्यञ्जकत्वमपि व्यक्तिरपि । तस्य व्यञ्जकत्वमपि व्यक्तिरपि । तस्य व्यञ्जकत्वस्य तदाश्रितत्वात् वाच्याश्रितत्वात् । ततश्च व्यञ्जकत्वस्य वाच्याश्रितत्वाच्च । अस्य व्यञ्जकत्वस्य प्रयोग एव दुष्टः वाक्ये उपादानमेव दूषितं स्यात् । पुनरुक्तादेरिति । वाच्यमेव यदा अविवक्षितं तदा तदधीनं तु सुतरामविवक्षितं तत्रापि कण्ठेन कथनं विवक्षितत्वस्येति पुनरुक्तिप्रकारत्वमेव स्यादिति भावः ।

ननु अर्थस्य द्वे रूपे एकम् वाच्यात्मकम् अन्यद् व्यञ्जकत्वम् । तत्र वाच्यात्मकत्वमर्थस्य अविवक्षितमित्यंशेनोच्यत अविवक्षितत्वमित्यत्र आह—"अथांशेनेति" इति । तर्हि

स्वाप्राधान्य एव पर्यवस्यति। ततश्चाविवक्षितत्वमन्यपरत्वमुपसर्जनीकृतात्मत्वं चेत्येक एवार्थ इत्यनया भङ्ग्या स्वरूपमेव ध्वनेरुक्तं भवति न तु तस्य प्रकारभेदः।

यस्य हि यल्लक्षणानुगमे सत्यवान्तरविशेषसंस्पर्शः, स तस्य प्रकार इत्युच्यते यथा गोत्वस्य शाबलेयादि न तु तस्यैव स एव प्रकारो भवितुमर्हति तदनवस्थाप्रसङ्गात्। न चात्र विशेषसंस्पर्शः कश्चिदिति कथमस्य ध्वनिप्रकारत्वोक्तिर्युक्तिमती।

किञ्चेदं विवक्षितान्यपरवाच्यत्वन्नाम न बुध्यामहे। यदि हि विवक्षितत्वं नाम प्राधान्यमुच्यते तत् कथं तस्यान्यपरत्वं घटते। अन्यपरत्वं ह्यन्यस्याङ्गभावो भण्यते। यस्य चाङ्गभावः स कथं तदैव विवक्षितत्वात् प्राधान्यमनुभवेदिति यद्वाच्यस्य विवक्षितत्वमन्यपरत्वञ्चोपगतं तद्विप्रतिषिद्धं विवक्षितान्यपरत्वयोर्विरोधात्।

---

मधुसूदनीविवृतिः।

असौ अवशिष्टोंशः वक्तव्यः। अर्थात् यदि वाच्यरूपोंशः अविवक्षितः तर्हि विवक्षयैव वाक्यस्य प्रयुज्यमानत्वात् अवशिष्टांशः व्यञ्जकत्वरूपो वक्तव्य एवेति भावः। एवं च विवक्षितोऽसौ प्रधानतां गाहते स अविवक्षितश्च निरूप्यमाणः आलोच्यमानः स्वनिष्ठाप्राधान्य एव पर्यवस्यति। फलितार्थमाह—ततश्चेति। अनया उक्तया भङ्ग्या शैल्या ध्वनेः स्वरूपमेव उक्तम्। न तु तस्य ध्वनेः प्रकारो भेदः। भेदो विशेषः। अविवक्षितवाच्यविवक्षितान्यपरवाच्याभ्यां ध्वनेः द्विप्रकारत्वमनुपपन्नमेवेति भावः।

न तु तस्य प्रकारभेदः इति स्वोक्तमुपपत्या साधयति—यस्य हि यल्लक्षणानुगम इति। यथा यस्य गोः यल्लक्षणानुगमे गोत्वरूपधर्मानुगमे सति अवान्तरस्य विशेषस्य शाबलेयादेः संस्पर्शः स शाबलेयादिः तस्य गोः प्रकारः भेदः। तस्य लक्षणस्यैव अर्थात् गोत्वस्यैव स एव शाबलेयत्वादिरेव। तदनवस्थायाः तस्मिन् लक्षणे विशेषस्वीकारेण मूलक्षतिकारिण्या अनवस्थायाः प्रसङ्गः। अत्र ध्वनौ अविवक्षितवाच्यनामकरणेन कश्चिदपि एकोऽपि विशेषसंस्पर्शः नास्ति इति हेतोरस्य अविवक्षितवाच्यस्य ध्वनिप्रकारत्वोक्तिः ध्वनिभेदकथनम् कथं युक्तिमती।

एवमविवक्षितवाच्येति ध्वनिनामकरणं विदूष्य इदानीं तस्य विवक्षितान्यपरवाच्येति नामकरणं दूषयति—किञ्चेदं विवक्षितान्यपरवाच्येति। यद्धि वक्तुमिष्टं तस्य प्राधान्यं भवति। एवं च तस्य प्राधान्यमनुभवतो वाच्यस्य कथम् अन्यपरत्वम् अप्रधानत्वम् अङ्गत्वमिति यावत्। प्रधानमपि अप्रधानमपि इति वदतो व्याघात इति भावः। यस्य वाच्यस्य। स वाच्यः। तदैव तस्मिनेव काले। इति हेतोः। विवक्षितत्वं नाम प्रधानत्वम् अन्यपरत्वं नाम अप्रधानत्वम् इत्येवमस्य वाच्यस्य विवक्षितत्वान्यपरत्वाभावेन विरोध इति भावः।

एकाश्रयत्वेन हि प्राधान्येतरयोगित्वं विशेषणाभिमतार्थविषयमेव सङ्गच्छते नान्यविषयम् । तदेव हि विशेष्यस्योत्कर्षाधाननिबन्धनभावेन विवक्षितत्वात् प्राधान्यम् उपाधिभावाच्च वास्तवादप्राधान्यमनुभवितुमलं यथा 'रामस्य पाणिरसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते' इत्युक्तम् ।

किञ्चास्य विवक्षितान्यपरवाच्यस्य ध्वनिप्रभेदत्वेऽभ्युपगम्यमाने वाच्यस्यान्यपरत्वमनुपादेयमेव तस्य तत्प्रभेदत्वादेव सिद्धेः। अन्यपरत्वं ह्युपसर्जनीकृतात्मत्वम् । तच्च ध्वनेः सामान्यं रूपमुक्तमेव।

मधुसूदनीविवृतिः ।

ननु योऽपि प्रधानभूतः सोऽपि कदाचित्परार्थे वर्तते यथोपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्त्तत इत्यत्राह—एकाश्रयत्वेन हीति । एकाश्रयत्वेन प्राधान्येतरयोगित्वं प्राधान्याप्राधान्यभावसम्बन्धवत्ता विशेषणत्वेन अभिमत अर्थ एव सङ्गच्छते । अन्यविषयं न विशेष्यत्वेन अभिमते अर्थे न सङ्गच्छते इत्यर्थः । तदेव एकं वस्तु प्रधानमप्रधानं च भवति यद् विशेषणं भवेत् । विशेष्यं च वस्तु सर्वथा प्रधानमेवेति सारः ।

तदेव विशेषणमेव यदा विशेष्ये उत्कर्षमाधत्ते तदा विशेष्यगतोत्कर्षाधानहेतुकत्वेन विवक्षितत्वात् वक्तुमिष्टत्वात् प्राधान्यमनुभवति । वास्तवात् स्वाभाविकात् उपाधिभावात् विशेषणत्वाच्च अप्राधान्यमनुभवति । विशेषणे उभयी गतिः यदा विशेष्ये उत्कर्षमाधत्ते तदा प्रधानम् अन्यथा स्वभावतोऽप्रधानमेवेत्यभिप्रायः । यथा "रामस्य पाणिरसि" इत्यत्र रामपदेन पाणौ उत्कर्षमाधीयते । तस्य रामस्य पाणिरसि येन रामेण निर्व्यूढगर्भा अपराधलेशशून्या स्वैकान्ततत्परा पतिव्रता महावंशप्रसूता सीता विवासिता काचिदपि दयाकणिकाऽपि नोद्गता यस्य मनसि, तस्य कठोरस्य पाणिरसि अर्थात् कठोरोऽसि । इत्येवं पाणौ कठोरत्वरूपोत्कर्षाधानहेतुकं रामस्य प्राधान्यं भवति अन्यथा तु तद्रामपदं पाणेः विशेषणमेव । "भेद्यं विशेष्यमित्याहुः भेदकं तु विशेषणम्" "षष्ठ्युत्पत्तिस्तु भेदकात्" इत्युक्तेः ।

ननु विवक्षितान्यपरवाच्यो ध्वनिभेदः स च उपेय एवेति तदुपायत्वाद्वाच्योऽर्थो वराकः सुतरामन्यपर इति प्राप्तस्योपादाने पुनरुक्तिर्दूषणमित्याह—किञ्चास्य विवक्षितान्यपरवाच्यस्येति । अनुपादेयमेवेति विवक्षितान्यपरवाच्यस्य ध्वनिभेदत्वे हि प्रधानत्वमपि स्यात् । प्रधानत्वं च किमपेक्ष्येति गवेषणया बौद्धमन्यपरत्वं वाच्यस्य स्वयमायातम् । अत एवोच्यते । "तस्य तत्प्रभेदत्वादेव सिद्धेरि"ति । तस्य वाच्यगतान्यपरत्वस्य अप्रधानत्वस्य तत्प्रभेदत्वादेव ध्वनिप्रकारत्वादेव सिद्धेः ।

अन्यपरत्वं स्पष्टयति—अन्यपरत्वं हीति । अन्यसत्तातिरिक्तसत्ताशून्यत्वमपि

अथात्र तदुपादीयते पूर्वत्रापि तदुपादीयताम् उभयत्रापि वा मोपादायि उभयोरपि तत्प्रकारत्वाविशेषात् ।

किञ्चार्थान्तरसङ्क्रमितवाच्यस्य यदुदाहरणं तदग्निर्माणवक इतिवद् गुणवृत्तेरेव सङ्गच्छते तस्य गुणवृत्तिप्रकारत्वसमर्थनात् । तथा हि प्रसिद्धान्यूनानतिरिक्तभावस्यान्यस्य साधर्म्यप्रतिपत्त्यर्थमन्यत्रारोप उपचारः । स चायमारोप्यारोपकभावात्मकतया उभयार्थविषयो वेदितव्यः ।

ततश्च यदैक एवार्थ एकशब्दाभिधेयः सामान्यविशेषांशपरिकल्पने-

मधुसूदनीविवृतिः ।

अन्यपरत्वपदार्थः सोऽत्र न विवक्षित इति किन्तु यस्यात्मा गुणीभूतः सोऽर्थोऽत्र विवक्षित इति सारः । तच्च अन्यपरत्वं च ध्वनेः सामान्यं रूपम् । प्रधानस्य वस्तुनो ध्वनित्वे हि अप्रधानेन केनाऽपि भाव्यमेवेति तात्पर्यम् ।

विवक्षितान्यपरत्वाच्येति नाम्नि यदि अन्यपरत्वं न स्यात् विवक्षितमित्येव च स्यात्तर्हि यत्र वाच्यं विवक्षितम् अर्थात् प्रधानं भविष्यति तत्र ध्वनित्वं स्यात् । एवं हि गुणीभूतव्यङ्ग्यस्यैव ध्वनित्वं तत्रैव वाच्यस्य प्रधानत्वादित्यभ्युपेत्याह— "अथात्र तदुपादीयते" इति । गुणीभूतव्यङ्ग्यस्य ध्वनित्ववारणाय अथ यदि तत् अन्यपरत्वमुपादीयते तर्हि पूर्वत्रापि अविवक्षितवाच्येऽपि तत् अन्यपरत्वमुपादीयताम् स्फुटत्वायेत्यर्थः । अनुमेयार्थसंस्पर्शे हि अन्वयव्यतिरेकाभ्यां काव्यस्य चारुत्वम् , प्राधान्यचर्चा च न कामपि विच्छित्तिमाधत्ते तस्येत्यत उक्तम्–उभयत्रापि वा मोपादायि इति । उभत्रापि वा अविवक्षितवाच्यविवक्षितान्यवाच्ययोः द्वयोरपि वा मोपादायि न देयम् । तत्प्रकारत्वाविशेषात् ध्वनिप्रभेदत्वसामान्यात् ।

ध्वनेर्नामकरणं विदूष्य तदवान्तरभेदान् दूषयति–किञ्चार्थान्तरसंक्रमितवाच्यस्येति । तस्य अर्थान्तरसंक्रमितवाच्योदाहरणस्य । गुणवृत्तिप्रकारत्वस्य गौणीलक्षणाभेदत्वस्य समर्थनात् । तथाहीति उदाहरणस्य गुणवृत्तिप्रकारत्वं समर्थयति । प्रसिद्धः सर्वजनवेद्यः अन्यूनः अहीनः अनतिरिक्तः अनधिको भावो धर्मः, यथा अग्नित्वधर्मः यत्राग्निस्तत्र सर्वत्र वर्तते इत्यहीनः । तथा यत्राग्निर्नास्ति तत्र सोऽपि नास्ति इत्यनधिकः । यस्य तस्य तथोक्तस्य अन्यस्य अग्न्यादेः समानेन धर्मेण तेजस्त्वादिना सम्बन्धप्रतिपत्त्यर्थं सम्बन्धज्ञानार्थः अन्यत्र माणवकादौ आरोपः बौद्धव्यवहारः अतस्मिन् तद् बुद्धिं कृत्वा तत्त्वव्यपदेशः उपचारः गौणी लक्षणा । स चायमुपचारः । आरोप्यम् आरोपणीयम् वस्तु । आरोपयितुं योग्यम् आरोप्यम् । आरोपकम् आरोप्यस्थलम् । आरोपयति स्वस्मिन् स्थापयति धारयतीति व्युत्पत्तेः । तयोर्भाव आत्मा स्वरूपं यस्य तस्य भावस्तत्ता तया तथोक्तया । उभयार्थविषयः आरोप्यविषयः आरोपकविषयश्च ।

ततश्च उपचारस्य उभयार्थविषयत्वाच्च यदा एकशब्देन अभिधातुं योग्यः एक एव अर्थः सामान्यरूपांशस्य विशेषरूपांशस्य परिकल्पनेन संकलनेन उभयरूपः सन्

नोभयरूपोऽस्यविषयभावं भजते, तदार्थप्रकरणाद्यध्यवसितोत्कर्षापकर्षौ विशेषांश एव समारोपितस्तत्र साधर्म्यावगतिहेतुर्भवति यथा 'तदमृतममृतं स इन्दुरिन्दुः' इति । न तु सामान्यांशः विशेषस्य सामान्याव्यभिचारात् ।

अर्थान्तरसंक्रमितवाच्योऽप्यनुमान एवान्तर्भवति । रामादिशब्दा हि प्रकरणाद्यवसितोत्कर्षापकर्षलक्षणधर्मविशिष्टं संज्ञिनं प्रत्याययन्ति, न संज्ञिमात्रम् । अर्थान्तरं यदनुमितं धर्मरूपं तत्र संक्रमितमाश्रयभावेन परिणतं वाच्यमस्येति कृत्वा ।

द्विविधो ह्यनुमेयोऽर्थो धर्मरूपो धर्मिरूपश्चेति । तत्राद्योऽस्य विषयः । तस्यैव वाच्यार्थनिष्ठतया प्रतीतेः । अन्यस्त्वन्यस्य यथा अग्निरत्र धूमादिति । ततो धर्मविशेषप्रतिपत्तौ प्रकरणादिरेव हेतुतयावगन्तव्यः, न रामादिशब्दा इति ।

अत्यन्ततिरस्कृतवाच्यस्तु पदार्थोपचार एव यथा गौर्वाहीक इति । तस्याप्यनुमानान्तर्भावः समर्थित एव ।

शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्तु न सम्भवत्येव । शब्दस्याभिधाशक्तिव्यतिरेकेण शक्त्यन्तरानभ्युपगमादित्येतदुक्तं, वक्ष्यते च ।

---

मधुसूदनीविवृतिः ।

सामान्यविशेषाभ्यां द्विभेदः सन् अस्य शब्दस्य विषयभावं भजते गोचरत्वं गच्छति । यथा "नयने तस्यैव नयने" इति प्रथमनयनपदस्य नेत्ररूपोऽर्थः, द्वितीयनयनपदस्य भाग्यवत्वादिगुणविशिष्टरूपोऽर्थः । तदा । अर्थः प्रयोजनम् । प्रकरणं वक्तृश्रोतृबुद्धिस्थत्वम् । अर्थादिभिरध्यवसितौ ज्ञातौ उत्कर्षापकर्षौ यस्य स विशेषांशः एव समारोपितः व्यपदिष्टः तत्र साधर्म्यावगतेः समानेन धर्मेण सम्बन्धज्ञानस्य हेतुर्भवति ।

तत् अमृतम् अमृतम् यत्परान् रुज्जीवयेदिति परसञ्जीवनाधायकत्वविशिष्टत्वं द्वितीयामृतपदार्थः । स इन्दुः इन्दुः यः संतप्तानां तापं निवर्त्तयेदिति संतप्ततापनिवर्त्तकत्वविशिष्टत्वं द्वितीयेन्दुपदार्थः। न तु सामान्यांशः आरोपितस्तथा । विशेषस्य सामान्येन सह अभिव्यभिचारात् । अयं सारः । सामान्यं विशेषान्नातिरिच्यते निर्विशेषं न सामान्यम् । इति न्यायात् । अर्थात् विशेषकुक्षावेव सामान्यस्य पातस्तस्मात् स्वस्मिन् स्वस्यारोपः असम्भव इति ।

**प्रकरणादीति।** प्रकरणादिभिरवसितो य उत्कर्षापकर्षलक्षणो धर्मः तद्विशिष्टम् । अनुमितम् अनुमाविषयीभूतं धर्मरूपम् ( दुःखसहिष्णुत्वादिरूपम् ) अर्थान्तरम् । तत्र अर्थान्तरे । इति कृत्वा इति व्युत्पत्तिद्वारा । तत्र द्वयोर्मध्ये आद्यो धर्मरूपः अस्य अर्थान्तरसंक्रमितस्य विषयः । तस्यैव धर्मस्यैव वाच्यार्थनिष्ठत्वेन वाच्यार्थगतत्वेन प्रतीतेः । अन्यस्तु धर्मिरूपस्तु अन्यस्य शास्त्रीयानुमानस्य विषय इति शेषः ।

नाविवक्षितवाच्यस्य ध्वनेर्युक्ता प्रकारता ।
न हि प्रकारस्तस्यैव स एवेत्युपपद्यते ॥ १०१ ॥
भक्तिः पदार्थवाक्यार्थरूपत्वाद् द्विविधा मता ।
तद्बुद्धिश्चानुमानान्तर्भूता यदुपपादिता ॥ १०२ ॥
तत् तिरस्कृतवाच्यस्य ध्वनेर्भक्तेश्च का भिदा ।
द्वितीयोऽपि प्रकारो यः सोऽपि सङ्गच्छते कथम् ॥ १०३ ॥
परस्परविरुद्धत्वाद् विवक्षातत्परत्वयोः ।
यः शब्दशक्तिमूलोऽन्यः प्रभेदो वर्णितो ध्वनेः ॥ १०४ ॥
सोऽयुक्तोऽन्यत एवासौ तत्रेष्टार्थान्तरे मतिः ।
शब्दे शक्त्यन्तराभावस्यासकृत् प्रतिपादनात् ॥ १०५ ॥

इतिसङ्ग्रह श्लोकाः ॥

इति श्रीराजानकमहिमभट्टविरचिते व्यक्तिविवेकाख्ये काव्याऽलङ्कारे ध्वनिलक्षणाक्षेपो नाम प्रथमो विमर्शः ।

---

मधुसूदनीविवृतिः ।

नाविवक्षितवाच्यस्येति । प्रकारता न युक्तेत्यन्वयः । तस्यैव स एव प्रकारो नोपपद्यते । स्वस्य स्वनिरूपितभेदो न भवतीति भावः ।

भक्तिरिति । तदिति च । परस्परेति । सोऽयुक्त इति च । अत्र चतसृणां कारिकाणां अर्द्धान्तरैकवाक्यतया निर्मितिः । यद् यस्मात् तद्बुद्धिः भाक्तार्थविषयिणी बुद्धिः अनुमानान्तर्भूता उपपादिता तत् तस्मात् । तिरस्कृतवाच्यस्य ध्वनेः भक्तेश्च का भिदा अर्थात् नास्ति भेदः । योऽपि ध्वनेः द्वितीयः प्रकारः अर्थान्तरसंक्रमितवाच्यः । सोऽपि विवक्षातत्परत्वयोः परस्परविरुद्धत्वात् । कथं सङ्गच्छते । यः शब्दशक्तिमूलः अन्यः ध्वनेर्भेदो वर्णितः । स अयुक्तः । अन्यत एव अन्यस्मादेव कारणादेव तत्र शब्दशक्तिमूले असौ अर्थान्तरविषयिणी मतिरिष्टा ।

प्रासूत रामो विदुषां वरेण्यो यं पार्वती दानदयाप्रतीता ।
महात्मनस्तस्य कृतौ विमर्श आद्यो ययौ व्यक्तिविवेकवृत्तौ ॥

इति मरुमण्डलधराधीशचक्रचर्चितपदपाथोज—सर्वतन्त्रस्वतन्त्र—महामहोपाध्याय पण्डितप्रकाण्ड–श्रीरामजीलालशास्त्रिणां तनूजन्मना साहित्यार्णवकर्णधारेण राजस्थानकेशरिणा अभिनवमधुसूदनसरस्वतीपदभाजा साहित्याचार्येण आहिताग्निना श्रीमधुसूदनशास्त्रिणा विरचितायां मधुसूदनीविवृतौ प्रथमो विमर्शः ।

# अथ द्वितीयो विमर्शः ।

इह खलु द्विविधमनौचित्यमुक्तम् अर्थविषयं शब्दविषयं चेति । तत्र विभावानुभावव्यभिचारिणामयथायथं रसेषु यो विनियोगस्तन्मात्रलक्षणमेकमन्तरङ्गमाद्यैरेवोक्तमिति नेह प्रतन्यते ।

---

### व्यक्तिविवेकव्याख्यानम् ।

एवं तावत् प्रथमे विमर्शे ध्वनिलक्षणं दूषयित्वा ध्वनिशास्त्रगतं ग्रन्थान्तरं दूषयितुं सामान्येन तावत् काव्यगतमनौचित्योल्लासरूपं दूषणप्रपञ्चमुपपादयितुमाह—इह खल्वित्यादिना । उक्तमिति सहृदयैः । अन्तरङ्गमिति साक्षाद् रसविषयत्वात् । आद्यैरिति ध्वनिकारप्रभृतिभिः । तदुक्तम्—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥ "इत्यादिना ।

### मधुसूदनीविवृतिः ।

शेमुषी दोषमोषा न युक्तिमुक्ता न धारिता ।
आगमस्याऽपि विगमः कस्मादस्माकमास्तता ॥
तथाऽपि तु द्वितीयेऽस्मिन् संचिन्त्य महतां पदम् ।
विवृतिः क्रियते नूत्ना भावार्थेत्यादिभिः स्फुटा ॥

प्रथमे विमर्शे महता संरम्भेण ध्वनेर्लक्षणमवयवशः तद्भेदांश्च समालोच्य तत्प्रसङ्गे एव ।

"यत्त्वेतच्छब्दविषयं बहुधा परिदृश्यते ।
तस्य प्रक्रमभेदाद्याः दोषाः पञ्चैव योनयः ॥
तेषां संक्षेपतोऽस्माभिः स्वरूपमभिधास्यते" ॥

इत्यादिना शब्दगतानौचित्यनिरूपणीयत्वनिर्देशः कृतः । तदेव शब्दानौचित्यं निर्दिष्टोपपादकत्वरूपोपोद्घातसङ्गत्या उपपादयितुं द्वितीयं विमर्शमारभते—इह खलु द्विविधमिति ।

इदमवधार्यम् । अयं महिमभट्टाचार्यः परमाहंकारी स्वसमक्षमन्यान् तृणाय मन्वानः उद्दण्डतया क्वापि समादरमलभन् तत्कृते आनन्दवर्द्धनकुन्तकादीनां लब्धयशोविसराणामुपरि बलवत्पराक्रान्तिमातेने । अनयोरेव ग्रन्थयोः समालोचनमपि विमर्शत्रयेण कृतमिति ।

इह व्यक्तिविवेकग्रन्थे। उक्तं प्रथमविमर्शान्ते नामतोऽभिहितम्। तत्र शब्दार्थविषयानौचित्ययोर्मध्ये । तन्मात्रलक्षणं रसविषयकविभावाद्ययथायथविनियोगमात्रस्वरूपम् । आद्यैराचार्यैरानन्दवर्द्धनतदनुसारिभिरुक्तं लक्षणोदाहरणाभ्यां निरूपितम् । साऽयमिह सङ्ग्रहः—

अपरं पुनर्बहिरङ्गं बहुप्रकारं सम्भवति। तद्यथा—विधेयाविमर्शः,

व्यक्तिविवेकव्याख्यानम्।

बहिरङ्गमिति वाच्यमुखेन रसे पर्यवसानाद्। विधेयः प्राधान्येन प्रतिपिपादयिषितो योऽर्थस्तस्य अविमर्शोऽननुसन्धानम् उपसर्जनीकरणात्। प्रक्रमः कस्यचिद्वस्तुनो निर्वाहायारम्भस्तस्य भेदो मध्येऽन्यथीकरणम् अन्यथानिर्वाहश्च। क्रमस्य परिपाट्या भेद उल्लंघनं व्युत्क्रम इति यावत्। पौनरुक्त्यं पुनःप्रतिपादनम्। वाच्यस्य वक्तव्यस्य अवचनमनुक्तिः।

मधुसूदनीविवृतिः।

व्यभिचारिरसस्थायिभावानां शब्दवाच्यता।
कष्टकल्पनया व्यक्तिरनुभावविभावयोः॥
प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः।
अकाण्डे प्रथनच्छेदौ अङ्गस्याप्यतिविस्तृतिः॥
अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः।
अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः॥
"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा" इति॥

विधेयाविमर्शः। विधेयस्य प्राधान्येन प्रतिपादयितुमिष्टस्य अर्थस्याप्राधान्येन अनिर्देशे च अविमर्शः अविचारः अप्राधान्येन निर्देश इति यावत्। तथा च प्रधानस्य अप्रधानतया निर्देशे विधेयाविमर्श इति प्रधानाविमर्श इति च फलति। तत्र पूर्वश्च विधेयस्य समासादिना उपसर्जनीकरणात्, अनुचितानुवादकरणात्, अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेदित्यनुशासनोल्लंघनात्, अनुपस्थितेश्चेति चतुर्धैव, प्रधानाप्रधानयोः समशीर्षिकया निर्देशादन्त्य एकधा उदाहरणपर्यालोचकानामध्यक्षं भवति।

अयमिह परमार्थः—यत्र द्वयोरर्थयोरुद्देश्यविधेयभावः। तत्रायं विधेयविमर्शदोषः। तत्र उद्देश्यं नाम अनुवाद्यम् प्राप्तत्वेनावगतमित्यर्थः। प्राप्तस्य धर्मान्तरप्राप्तये कथनस्यैव उद्देशपदार्थत्वात्। तच्च पूर्वमुपस्थाप्यम्, तथात्वे हि प्राप्तत्वस्य सिद्धत्वाख्यस्य प्रतीतिः स्यात्। विधेयं साध्यम् अप्राप्तत्वेनावगतमित्यर्थः। अप्राप्तस्य धर्मान्तरप्राप्तये कथनस्यैव विधानपदार्थत्वात्। एतच्च उत्तरमुपस्थाप्यम्। उक्तं च तन्त्रवार्तिके भट्टैः-

यच्छब्दयोगः प्राथम्यं ( पूर्वत्वं ) सिद्धत्वञ्चाप्यनूद्यता।
तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयतेति॥

तत्र उद्देश्यं च विधेयं च पौर्वापर्यक्रमेण विशेष्यविशेषणभावानापन्नं पदाभ्यां पृथगुपतिष्ठेत तदा प्राप्तमुद्दिश्य अप्राप्तं विधीयेत। समासे तु एकार्थीभावाङ्गीकारेण इतरपदार्थान्विततयैव स्वार्थोपस्थितेः पदान्न पृथगुपस्थितिः। एकस्मात्पदादनेकरूपेणोपस्थितौ च विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरताभङ्गदोषः स्यात्। व्युत्क्रमे तु

प्रक्रमभेदः, क्रमभेदः, पौनरुक्त्यं, वाच्यावचनं चेति ।

व्याक्तविवेकव्याख्यानम् ।

एता अवान्तरभेदभिन्नाः पञ्चदूषणजातयः । यदेतदिह ग्रन्थकृता विचारसरणिमाश्रित्य विधेयाविमर्शादिदोषपञ्चकमुद्भावितं, न तत्राद्यतनपुरुषमात्रबुद्धिप्रणयनासूययानादरःकरणीयः । पूर्वैरेवंविधदोषोद्भावनरूपस्य विचारस्य प्रणीतत्वात् । तथा हि । 'दास्याः पुत्र' इत्यादावाक्रोशे षष्ठ्या अलुकं प्रतिपादयता सूत्रकृता विधेयाविमर्शः सूचित एव । तथा 'स्वामीश्वराधिपतिदायादे' (२-३-३९)त्यत्र सूत्रे "नहि भवति 'गवां स्वामी अश्वेषु चे'ति वदता (१)भाष्यकृता स्पष्टमेव प्रक्रमभेदः प्रतिपादितः । तथा 'कृञ्चानुप्रयुज्यते लिटि' (३-१-४०) इत्यत्रानुप्रयोगस्यानुशब्दपर्यालोचनया व्यवहितपूर्वं प्रयोगं 'तं पातयां प्रथममास' इत्यादौ निषेधता चादीनां च नहि भवति 'च वृक्षः' इत्यादिना प्रयोगनियमख्यापनेन द्योतकत्वं कथयता अस्थानप्रयोगलक्षणः क्रमभेदः कटाक्षित एव । तथा 'कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् स्यादि' ति वृत्तिलाघवं चिन्तयता कात्यायनेन पौनरुक्त्यमपि प्रकाशितमेव । तथा ईषदसमाप्तौ (५-३-६७) इत्यत्र प्रतिज्ञानसमधिगम्यं सूत्रकारोक्तं रूपकलक्षणमर्थं दूषयता प्रकृत्यर्थसदृशे कल्पबादिविधानमि' ति प्रतिज्ञानसमधिगम्यार्थभूतामुपमां(२) व्यवस्थापयतोपमाश्रयेण वाच्यावचनमपि द्योतितमेव ।

मधुसूदनीविवृतिः ।

साध्यस्यापि सिद्धत्वेन प्रतीतिर्दोषश्च क्रमेण पृथगुपस्थितौ च नायं दोषः इति नित्योऽयं दोषः प्रतिप्रसवपराहतेरभावात्सर्वथा हेयः । इति ।

**प्रक्रमभेदः** । प्रक्रमः कस्यचिद्वस्तुनो निर्वाहाय प्रथमारम्भः तस्य आरम्भानुकूलं निर्वाहमकृत्वा मध्ये भेदः अन्यथीकरणम् अन्यथानिर्वाहश्च । तथाचात्र एकरसप्रसृतायाः प्रतीतेः स्खलनं सर्वथाभावः, अपकर्षश्च भवति । तथाचोक्तम् ।

यश्च यथा प्रक्रान्तोऽभिधातुमर्थस्तथैव तस्य न चेत् ।
निर्वाहः स प्रक्रमभेदो न प्रकरणावसितः ।
प्रक्रमस्यान्यथात्वेन प्रतीतौ प्रस्खलद्गतौ ॥
ह्लादः स्फुरन्ननास्वादी यत्र म्लानत्वमश्नुते ।
दोषः प्रक्रमभेदाख्यः शब्दानौचित्यभूश्च सः । इति ॥

**क्रमभेदः** । क्रमस्य परिपाट्याः भेदः उल्लंघः । यत्पदानन्तरं यत्पदोपादानमुचितं ततोऽन्यत्र तदुपादानं यत्र भवेत्स क्रमभेदः ।

**पौनरुक्त्यम्** पुनः कथनम् । **वाच्यावचनम्** वाच्यस्य अवश्यं वक्तव्यस्य

---

( १ ) भाष्यकृता एतत्सूत्रमेव न व्याख्यातमिति भाष्यकृता प्रतिपादित इति चिन्त्यम् ।

( २ ) यद्यप्यत्र नोपमा कण्ठत उक्ता तथापि सामर्थ्यादुपलभ्यते । तद्यथा—पटुकल्प इत्यत्र यस्य परिपूर्णपाटवं लोके स पटुरिति प्रसिद्धः । तेन पटुना ईषदसमाप्तः अर्थान्तुल्यो देवदत्तः पटुकल्प इति व्यवह्रियते । एवं चात्र पटुदेवदत्तयोरूपमानोपमेयभाव उपलब्धो भवति इत्युक्तमुपमां व्यवस्थापयतेति ।

दुःश्रवत्वमपि वृत्तस्य शब्दानौचित्यमेव, तस्याप्यनुप्रासादेरिव रसानुगुण्येन प्रवृत्तेरिष्टत्वात् । केवलं वाचकत्वाश्रयमेतन्न भवतीति न तत्तुल्यकक्ष्यतयोपात्तम् ।

एतस्य च विवक्षितरसादिप्रतीतिविघ्नविधायित्वं नाम सामान्यलक्षणम् । अन्तरङ्गबहिरङ्गभावश्चानयोः साक्षात् पारम्पर्येण च रसभङ्गहेतुत्वादिष्टः ।

त एते विधेयाविमर्शादयो दोषा इत्युच्यन्ते । तानिदानीमखिलान् खला इव व्याख्यास्यामः ।

मुग्धः किं किमसभ्य एष भजते मात्सर्यमौनं नु किं
पृष्टो न प्रतिवक्ति यः किल जनस्तत्रेति सम्भावयेत् ।
छात्राभ्यर्थनया ततोऽद्य सहसैवोत्सृज्य मार्गं सतां
पौरोभाग्यमभाग्यभाजनजनासेव्यं मयाङ्गीकृतम् ॥ १ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

एतेन रूपकाश्रयेणावाच्यवचनमपि द्योतितमेव । तदेवं महाविदुषां मार्गमनुसृत्य सहृदयशिक्षादराय विचारय (न्दरं ?) तोऽस्य महामतेर्न कश्चित् पर्यनुयोगलेशस्याप्यवसर इत्यलमतिप्रसङ्गेन ।

एतस्य चेति । सामान्येनानौचित्यस्य । दोष इति काव्यस्य विकृतत्वापादनाव दूषणाद् दोषा इति ।

मुग्ध इति । पृष्टस्याप्रतिवक्तृत्वे त्रीणि कारणानि । प्रतिवचनाप्रतिभानलक्षणं मौग्ध्यं प्रतिभानेऽप्यप्रौढरूपत्वमसह्यत्वम् । प्रौढत्वेऽपि गुणासहिष्णुत्वलक्षणं मात्सर्यम् । तान्यत्र सन्दिह्यमानतया क्रमेणोक्तानि । यः किलेत्यत्रैव च्छेदः । छात्राभ्यर्थनयेति प्रष्टृत्वस्य अङ्गीकृतमिति प्रतिवक्तृत्वस्य च निर्देशः । पौरोभाग्यं दोषैक-

मधुसूदनीविवृतिः ।

अवचनम् । अर्थात् अन्यथाकथनीयस्यान्यथा कथनम् । सर्वनामपरामर्शयोग्यस्यार्थस्य या पुनः । स्वशब्देनाभिधा स वाच्यवचनाभिधो दोषः । अनेन वाच्यावचनेन सामर्थ्यात् यत्र एकस्यैवार्थस्य यः पर्यायमात्रेण भेदमुपकल्प्योपमानोपमेयभावो निबद्धयते तदवाच्यवचनमपि संगृहीतं भवति । तल्लक्षणं च-पर्यायमात्रभिन्नस्य यदेकस्यैव वस्तुनः । उपमानोमेयत्वमवाच्यवचनं च तत् । इति ।।

केवलं वचकत्वेति । एतद् दुःश्रवत्वं केवलं वाचकत्वाश्रयं न अर्थात् यथैते विधेयाविमर्शादयो दोषाः केवलं वाचकत्वाश्रयाः तथैतत् न, अस्य रसाश्रयेण प्रवृत्तेरित्यतः तत्तुल्यकक्ष्यतया विधेयाविमर्शसमश्रेणितया न उपात्तम् । अत्र प्रकरणे न संगृहीतम् । एतस्य अनौचित्यस्य । दूषकत्वात् विवक्षितरसप्रतीतिविघातकत्वात् दोषाः ।

मुग्धः किमिति । यः पृष्टः सन् न प्रतिवक्ति नोत्तरं ददाति तत्र अप्रतिवक्तृत्वे इतीत्थमर्थात्कारणत्रयं सम्भवयेदन्यो जनः । किं तदित्याह-मुग्ध इति । अयं मुग्धः

स्वकृतिष्वयन्त्रितः कथमनुशिष्यादन्यमयमिति न वाच्यम् ।
वारयति भिषगपथ्यादितरान् स्वयमाचरन्नपि तत् ॥ २ ॥

इति । तत्र विधेयाविमर्शो यथा—

'संरम्भः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।

---

## व्यक्तिविवेकव्याख्यानम् ।

कष्टाहित्वम् ।

ननु यदि परकीये काव्ये परिहाराय दोषाणां विचारः क्रियते, तत् किं निजकाव्ये न तेषां परिहारः । तथा च 'भजते मात्सर्यमौनं नु किम्' इत्यतोऽनन्तरम् 'इति पृष्ट' इत्येवं क्रमेणेतिशब्दो निर्देश्यः क्रमान्तरेण निर्देशात् क्रमभेदो न युज्यते । एवमन्यत् ( शोकापदानादौ ? ) ज्ञेयम् । तदर्थमाह—स्वकृतिष्विति कृतिः काव्यम् ।

संरम्भ इति । कुत्सिताः करिणः करिकीटाः 'कुत्सितानि कुत्सनैः' (२-१-५३) इति समासः । करिकीटानामाशाद्विरदैः प्रतिनिर्देशः । मेघशकलानां तु कल्पान्ततोयदः । य इत्यत्रैव च्छेदः । अयं श्लोको वक्रोक्तिजीविते वितत्य व्याख्यात इति तत एवावधार्यः ।

## मधुसूदनीविवृतिः ।

किम् , किमिहोत्तरेयमिति नास्य प्रतिभाति किम् । अथवा अयम् असभ्यः किम् उत्तरं जानन्नपि सदाचारपराङ्मुखः किम्।अथवा अतथात्वेऽपि परगुणसहिष्णुत्वरूपमात्सर्यहेतुकं मौनं तूष्णींभावं भजते किम् । ततः मा कश्चिदेवं सम्भावयत्विति हेतोः छात्राणामभ्यर्थनया अद्य सहसैव अकस्मादेव सतां मार्गं महद्भिरनुक्षुण्णं पन्थानमुत्सृज्य निन्दास्तुत्यादिकमनालोच्यैव अभाग्यस्य भाजनानि ये जनास्तैः सेव्यं क्षुण्णं पौरोभाग्यं दोषैकदृक्त्वम् । दोषैकदृक् पुरोभागी इत्यमरः । पुरोभागिनो भावः पौरोभाग्यम् । मया अङ्गीकृतम् । नारोपयतु कश्चिद् दूषणमिति छात्रैः पृष्टः प्रतिवच्मीति भावः ।

ननु परोपदेशे पाण्डित्यं यत्र कुत्रापि विद्यते । यस्तु शुद्धसमाचारः स हि सर्वत्र दुर्लभः इति परकाव्यानि दूषणपरिदर्शनेन कुत्सयितुं प्रवृत्तः स्वकाव्यानि कथं न मार्जयति इत्यत्र आह—स्वकृतिष्विति । स्वकृतिषु स्वरचितेषु काव्येषु अयन्त्रितः उच्छृङ्खलः अयं पुमान् कथमन्यं जनमनुशिष्यात् इति न वाच्यम् इति न वक्तव्यम् । भिषग् गदविद् तद् अपथ्यं स्वयमाचरन्नपि अपथ्यात् प्रतिकूलाचरणात् इतरान् रोगिणो वारयति ।

तत्र दोषेषु । संरम्भः करिकीटेति । करिण एव कीटाः मेघा एव शकलाः । भित्तं शकलखण्डे वेत्यत्र शकलखण्डे वेति वानिर्देशेन शकलस्य पुंस्त्वमपि । करिणां कीटव्यपदेशेन तोयदानां शकलशब्दाभिधानेन अनादरः सूच्यते तेषामुद्देशेन तान् प्रति यः सिंहस्य संरम्भो वेगः आटोपो वा । स हेवाकलेशः आटोपः । अत्र हेवाकस्य लेश-

इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽप्यसंरब्धवान्
योऽसौ कुत्र चमत्कृतेरतिशयं यात्वम्बिकाकेसरी ॥'

अत्र ह्यसंरब्धवानिति नञ्समासस्तावदनुपपन्नः। तस्य हि पर्युदास एव विषयः, तत्रैव विशेषणत्वान्नञः सुबन्तेनोत्तरपदेन सम्बन्धोपपत्तेः। तदुक्तम्—

व्यक्तिविवेकव्याख्यानम्।

तावच्छब्दो विधेयाविमर्शत्रयस्यैतच्छ्लोकगतस्योपक्रमद्योतकः। सम्बन्धोपपत्तेरिति। अयं भावः—'समर्थः पदविधिः, (२-१-१) इति वचनात् समासः सामर्थ्यनिमित्तकः। सामर्थ्यं च सङ्गतार्थत्वं, सङ्गतत्वं च सम्बन्धः स चात्र विशेषणविशेष्यभावः। पर्युदासस्यैव विशेषणं नञा(?) अब्राह्मण इति यथा। न चात्र वक्ष्यमाणन्यायेन पर्युदासो घटत इति। नन्वब्राह्मण इत्यादौ नञ् कथं विशेषणम्। विशेषणं हि विशेष्यस्योपरञ्जकं भवति। न च नञ्शब्दो विरुद्धत्वाद्विधिमुपरञ्जयति। तत् कथमस्य विशेषणत्वम्। नैतत्। अब्राह्मण इत्यादौ ब्राह्मणशब्दो ब्राह्मणसदृशे क्षत्रियादौ वर्त्तते। सा चाक्षत्रियादौ ब्राह्मणशब्दस्य वृत्तिर्नञा द्योत्यते। तदुक्तम्—'नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थं' इति। तत्र च शब्दशक्तिस्वाभाव्यं कारणम्। यथा चैतत् तथा नञ्सूत्रभाष्यादवसेयम्।

मधुसूदनीविवृतिः।

शब्देन कथनादल्पता ध्वन्यते सर्वस्यैव प्राणिमात्रस्यैव यस्य कस्यचित् तुच्छतरप्रायस्यापीत्यर्थः। अनेन अवहेला प्रकाशिता भवति। जातिमात्रे नियता विहितः। अत्रापि जातेः मात्रपदविशिष्टत्वेन कथनादवलेपः प्रतीयते। इत्येवं सत्यपि आशाद्विरदा दिशागजाः। क्षयः प्रलयः तत्कालीनाः येऽम्बुदास्तेषां घटाबन्धेऽपि यः असंरब्धवान् संरम्भशून्यः। असौ अम्बिकायाः भगवत्याः पार्वत्याः केशरी सिंहः कुत्र स्थले चमत्कृतेः स्वगतवैलक्षण्यस्य अतिशयं आधिक्यं यातु प्राप्नोतु। अत्र घटाबन्धशब्देन आशाद्विरदक्षयाम्बुदयोः महत्त्वमाविष्क्रियते। इदं पद्यं वक्रोक्तिजीवितकारस्य कुन्तकस्य प्रस्तावसमुचितपदोपन्यासेन चेतनचमत्कारित्वमाविर्भवतीत्याशयवद्वर्त्तते। तत्रानेन ग्रन्थकृता असंरब्धवानिति नञ् समासे, योऽसावित्यत्र केवलस्य यदः प्रयोगे, अम्बिकाकेसरीत्यत्र षष्ठीसमासे च विधेयाविमर्शो दोषः त्रिविध उद्भावितः तं दर्शयितुमुतते।

अत्र हि असंरब्धवानिति। तावच्छब्दः दर्शितदोषत्रयस्यारम्भसूचकः। अनुपपन्नः निषेधस्याऽप्राधान्यादयुक्तः। तस्य समासस्य पर्युदासः पर्युदासाख्य एव नञ् विषयः स्थलम्। तत्रैव पर्युदासस्थल एव नञः विशेषणत्वात् उत्तरपदेन सुबन्तेन सह सम्बन्धोपपत्तेः। उत्तरपदार्थप्रधानो नञ्समासो भवति। तत्रोत्तरपदार्थस्य प्रधानत्वे भवितव्यं केनापि अप्रधानेनेति पूर्वसन्निहितस्य नञोऽप्रधानत्वं विशेषणत्वम्। तथा च तयोः विशेष्यविशेषणभावः सम्बन्ध उपपन्नः। इति भावः।

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥"

इति । यथा—

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥"

न प्रसज्यप्रतिषेधः तस्य तद्विपरीतत्वात् । तदुक्तम्—

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।

---

व्यक्तिविवेकव्याख्यानम् ।

प्रधानत्वमिति । यत्र विधेः प्राधान्यं प्रतिषेधस्याप्राधान्यं नञ उत्तरपदेन सम्बन्धः समर्थसमास एकवाक्यत्वं च तत्र पर्युदासः 'किञ्चिद्वर्जयित्वा कस्यचिदुपदेशो निरास' इति निगमनात् । तत्र कारिकायां त्रयं निर्दिष्टं द्वयं चाक्षिप्यते ।

जुगोपेति । अत्र नञर्थविशिष्टस्योत्तरपदार्थस्य विधिः, न त्रस्तत्वादिनिषेधः । तत्राप्यत्रस्तत्वादेः सिद्धत्वात् तदनुवादेन गोपनादि विधीयते इति पर्युदासत्वम् ।

अप्राधान्यमिति । प्रतिषेधस्य प्राधान्यं विधेरप्राधान्यं नञः क्रियापदेन सम्ब-

मधुसूदनीविवृतिः ।

तदुक्तमिति वृद्धकारिकया समस्तनञः पर्युदासत्वमिति लक्षयति—प्रधानत्वं विधेरिति । यत्र विधेः नञर्थभेदप्रतियोगिनः उत्तरपदार्थस्य प्राधान्यं विशेष्यत्वम् । प्रतिषेधे नञर्थे अप्रधानता । स च क्व भवतीत्याह—यत्र उत्तरपदेन युतो अर्थात् समस्तः नञ् । पर्युदासेत्यत्र परि उत् आस इति त्रिस्कन्धपदादयं कारिकार्थो लभ्यते । परिर्वर्जने । उत् उत्तरस्मिन् आसो विधानम् । तत्र प्रतिषेधं वर्जयित्वा अर्थात् गुणीकृत्य प्रतिषेधप्रतियोगिनो विधानम् । गुणस्य च प्रधानेन उत्तरपदेन सम्बन्ध इति त्र्यंशो अर्थः लभ्यते । उदाहरणे संगमयति ।

जुगोपात्मानमिति । स दिलीपः अत्रस्तः सन् निर्भीकः सन् आत्मानं शरीरं जुगोप । अनातुरः अरोगी सन् धर्मं भेजे सिषेवे अगृध्नुः अलुब्धः सन् अर्थम् आददे स्वीकृतवान् । असक्तः सङ्गरहितः सन् सुखम् अन्वभूत् । अत्रस्तोऽपि त्रस्तवत्सम्यक्तया सदैव आत्मानं जुगोपेति द्योत्यते तेन च नञोउत्कर्षः प्रतीयते । अत्र न त्रस्तत्वादिर्निषिध्यते किन्तु तान् सिद्धत्वादनूद्य गोपनादिर्विधीयते । अथ उत्तरपदेन त्रस्तादिना नञः समासः ।

ननु अत्रस्तः त्रासरहितः । तथा राहित्यञ्चभाव एव । एवं त्रासनिषेधे तात्पर्यतया प्रसज्यप्रतिषेध एव न पर्युदास इत्यत आह—न प्रसज्यप्रतिषेध इति । त्रासराहित्यविशिष्ट इत्येतदर्थः । इति निषेधेऽप्रधानतैवेति भावः । तस्य प्रसज्यप्रतिषेधस्य ततः पर्युदासाद्विपरीतत्वात् भिन्नत्वात् ।

प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥"

इति । यथा—

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी" ॥

इह च पर्युदासाश्रयणमसङ्गतम् अर्थस्यायुक्तत्वप्रसङ्गात् । संरब्धवत्प्रतिषेधो ह्यत्राभिमतः नासंरब्धवद्विधिः तत्रैव क्रियांशप्रतिषेधावगतौ

---

व्यक्तिविवेकव्याख्यानम् ।

न्धोऽसमर्थसमासः वाक्यभेदश्च, तत्र प्रसज्य प्रापय्य प्रतिषेध इति प्रसज्यप्रतिषेधः । अत्र कारिकायां त्रये निर्दिष्टेऽन्यद् द्वयमाक्षिप्तम् ।

नवेति । अत्र दृप्तनिशाचरं प्रति निषेधः प्रतीयते न तु अदृप्तनिशाचरविधिरिति प्रसज्यप्रतिषेधता ।

संरब्धवत्प्रतिषेधो ह्यत्रेति । संरब्धवान् यः पुरुषस्तद्गता येयं संरब्धता संरम्भणक्रिया तस्य वक्ष्यमाणन्यायेन प्रतिषेध इत्यर्थः । असंरब्धवद्विधिरिति संरब्धवत्सदृशस्य संरम्भसदृशक्रियाकर्तुरुदासीनप्रायस्य विधिरित्यर्थः ।

मधुसूदनीविवृतिः ।

तदुक्तमिति प्रसज्यप्रतिषेधं लक्षयति—अप्राधान्यमिति । यत्र विधेः भेदप्रतियोगिनः अप्राधान्यम् प्रतिषेधे नञर्थे क्रियान्वयितया प्राधान्यम् । तथा यत्र क्रियया सह अर्थात् क्रियान्वयितया धात्वर्थरूपक्रियाभावबोधको भवेत्तत्र नञ् प्रसज्यप्रतिषेधः प्रसज्यप्रतिषेधपदाभिधेयः । प्रसज्य प्रापय्य प्रतिषेधो निषेध इत्यर्थेन प्राप्तस्य विधेरप्राधान्यमर्थादागतं निषेधे च प्राधान्यम् समासाभावाश्च सोऽपि चेदसमर्थः ।

प्रसज्यप्रतिषेधोदाहरणं यथा—नवजलधर इति । सन्नद्धः वर्मवान् हन्तुमुद्यतो वा अयं नवजलधरः नूतनमेघः । दृप्तनिशाचरो नास्ति । दूरत आकृष्टम् इदं सुरधनुः इन्द्रधनुः, तस्य निशाचरस्य शरासनं धनुर्न भवति । पटुस्तीव्रोऽयं धारासारः धारावर्षः, तस्य बाणपरम्परा न । कनकनिकषस्येव स्निग्धा दीप्तिमती इयमपि विद्युत मम पुरूरवसः प्रिया उर्वशी एतन्नामाप्सरसो न । अत्र निशाचरसत्ता निषिध्यते । असामर्थ्याच्च समासोऽपि न तथा नञाभावमनूद्य न किञ्चिद्विधीयते इति प्रसज्यप्रतिषेधस्थलमीदृक् ।

प्रकृतं स्मरति—इह च पर्युदासेति । इह असंरब्धवानिति पदे । ननु कुतोऽसङ्गतं पर्युदासाश्रयणमित्याह—अर्थस्येति । अर्थस्यायुक्तत्वं समासात्संरम्भक्रियाया निषेधस्याप्रतीतिः संरम्भसदृशक्रियाकर्तुर्विधेः प्रतीतिरिति असङ्गतत्वम् तस्य प्रसङ्गात् । अर्थस्यायुक्तत्वं स्फोरयति—संरब्धवदिति । अत्र वाक्ये संरब्धवत्प्रति-

नञः क्रियाभिसम्बन्धोपपत्तेः । न चासौ प्रतीयते गुणीभूतसंरम्भनिषेधस्यार्थान्तरस्यैव संरब्धवत्सदृशस्य विधौ प्रतीतेः । न च तत्प्रतीतौ विवक्षितार्थसिद्धिः काचित् । तत्सिद्धिपक्षे च समासानुपपत्तिः । नञर्थस्य विधीयमानतया प्राधान्यादुत्तरपदार्थस्य चानूद्यमानतया तद्विपर्ययात् । समासे च सति अस्य विध्यनुवादभावस्यास्तमयप्रसङ्गात् । यत्र तु विपर्ययस्तत्र समासो भवत्येव । यथा—

"काव्यार्थतत्त्वावगमो न वृद्धाराधनं विना ।
अनिष्टवान् राजसूयं कः स्वर्गं मुख्यमश्नुते" ॥

इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

यदुक्तं 'नञिवयुक्तमि' त्यादि । तत्रेति सरब्धवत्प्रतिषेधे । न चासाविति प्रतिषेधति । तत्सिद्धिपक्ष इति विवक्षितो यः प्रधानभूतनिषेधलक्षणोऽर्थस्तस्य सिद्धिपक्ष इत्यर्थः । अस्य विध्यनुवादभावस्येति नञर्थस्य विधिरुत्तरपदार्थस्यानुवाद इत्यस्य । समासे हि नञर्थोपसर्जन उत्तरपदार्थः प्राधान्येन प्रतीयते । काव्यार्थेति । अत्र व्यवच्छेद्यं प्रसज्यप्रतिषेधं प्रदर्श्य परिच्छेद्यं पर्युदासमुदाहरति ।

मधुसूदनाविवृतिः ।

षेधः । नञः क्रियान्वयितया लक्षणया संरब्धवत्पुरुषनिष्ठक्रियायाः संरम्भस्य निषेधोऽभिमतः । असंरब्धवतः संरब्धवत्सदृशस्य अर्थात्संरम्भसदृशक्रियाकर्त्तुरुदासीनप्रायस्य विधिः नाभिमतः । तथा च वक्ष्यति—क्रियाकर्त्रंशभागर्थौ वाक्येऽपोह्यो नञा यदि । क्रियांश एवापोह्यः स्यादिति । अत्रैवकारयावर्त्यो न कर्त्रंशविधिरिति । तत्रैवेत्येवकारः क्रियांशप्रतिषेधावगतावित्यस्योत्तरं योज्यम् । तथा च तत्र संरब्धवत्प्रतिषेधे संरम्भक्रियारूपांशस्य प्रतिषेधावगतावेव नञः क्रियया सहाभिसम्बन्धस्य उपपत्तेः ।

एवमावश्यकोऽप्यसौ प्रसज्यप्रतिषेधः संरम्भरूपक्रियानिषेधस्य समासेन गुणीभूतत्वात्प्रधानतया न प्रतीयते किन्तु विधौ प्राधान्यात् तदपेक्षया अर्थान्तरस्य संरब्धवत्सदृशस्य संरम्भसदृशक्रियाकर्त्तुरुदासीनस्य प्रतीतिर्भवति । तत्प्रतीतौ संरब्धवत्सदृशप्रतीतौ विवक्षितस्य प्रधानीभूतनिषेधलक्षणस्य अर्थस्य सिद्धिः काचिदपि नास्ति । तत्सिद्धिपक्षे च विवक्षितार्थसिद्धिपक्षे च समासानुपपत्तिः । समासानुपपत्तौ हेतुमाकलयति—नञर्थस्येत्यादि । तद्विपर्ययात् अप्राधान्यात् । सति च समासे अस्य नञर्थस्य विधिः उत्तरपदार्थस्यानुवादः । इत्येवंरूपस्य विध्यनुवादभावस्य अस्तमपेति विशिष्टार्थोपस्थितेरिति भावः । यत्र तु लक्ष्ये विपर्ययः नञर्थो गुणः उत्तरपदार्थः प्रधानं तत्र लक्ष्ये ।

यथा—काव्यार्थतत्त्वावगम इति । वृद्धानामाराधनं विना काव्यार्थतत्त्वस्या-

क्रियाकर्त्रंशभागर्थो वाक्येऽपोह्यो नञा यदि ।
क्रियांश एवापोह्य स्यान्नेष्टवानितिवत् तदा ॥ ३ ॥
अकुम्भकार इतिवद् वृत्तौ तु स्याद्विपर्ययः ।
इत्येष नियमोऽर्थस्य शब्दशक्तिस्वभावतः ॥ ४ ॥

---

## व्यक्तिविवेकव्याख्यानम् ।

ननु प्रसज्यप्रतिषेधे नञः क्रियान्वयेऽसंरब्धवानित्यत्र संरम्भक्रियानिषेधो भविष्यति । तत् कोऽत्र दोष इत्याह—क्रियाकर्त्रंशभागिति । अयं भावः—असंरब्धवानित्यत्र द्वावंशौ क्रियांशः कारकांशश्च । तत्रोभयांशभागर्थनिषेधे शब्दशक्तिस्वाभाव्याद्वाक्ये क्रियांशनिषेधस्तस्य प्राधान्येन विवक्षितस्यापरामर्शो ( ...मनुक्ताद् ? ) विधेयाविमर्शः ।

## मधुसूदनीविवृतिः ।

वगमो न भवति । राजसूयमनिष्टवान् राजसूयाख्ययज्ञाकर्त्ता कः पुरुषः मुख्यं स्वर्गमश्नुते तं प्राप्नोति । अत्र राजसूयं यजन्नेव स्वर्गं लभते अयजन्नेति तात्पर्यकेऽस्मिन् वाक्ये साध्यः स्वर्गस्तत्र राजसूय एव हेतुः स च प्रधानम् नञर्थः अप्रधानम् इति विध्यनुवादभावविपर्यये उत्तरपदार्थे राजसूययज्ञरूपे प्रधाने अनिष्टवानित्यत्र समासः ।

ननु असंरब्धवानित्यत्राप्येवमनिष्टवानितिवदन्वयो भवतु नञः कोऽत्र दोष इत्याह—क्रियाकर्त्रंशभागिति । यदि वाक्ये क्रियारूपांशभाक् कर्तृरूपांशभाक् च अर्थो नञा अपोह्यः निषेधयितुमिष्यो भवेत् तदा कतम अपोह्य इत्याकांक्षायामाह—क्रियांश एव अपोह्यः निषेध्यः । यथा इष्टवान् न इत्यत्र प्रतीयमानसत्ताक्रियांश अपोहितः । एवं हि असरंब्धवानित्यत्रापि संरम्भरूपा क्रिया संरम्भसहशक्तियायाः कर्त्ता चेति द्वावंशौ तत्रोभयार्थनिषेधे प्रसक्ते शब्दशक्तिस्वाभाव्याद्वाक्ये क्रियांशस्यैव निषेधः । तस्यैव प्राधान्येन विवक्षितत्वात्तस्य च अपरामर्शो विधेयाविमर्शदोषः प्रतिफलति ।

ननु क्रियाकर्त्रंशयोर्मध्ये क्रियांशस्यैव अपोह्यत्वं किं तर्हि कर्त्रंशस्य अपोह्यत्वं नास्ति इत्याकांक्षायां कर्त्रंशस्यापि निषेध्यत्वमिति दर्शयितुमाह—अकुम्भकार इतिवदिति । वृत्तौ समासादौ तु विपर्ययः अर्थात् क्रियांशापेक्षया कर्त्रंशस्यैव अपोहः । यथा अकुम्भकार इत्यत्र कुम्भं करोतीति कर्मण्यणिति कृदणा निष्पन्नकुम्भकारपदाभिधेयस्य कुलालस्य नञा निषेधः । न तु करोतेः क्रियायाः । ननु क्वचित् क्रियायाः क्वचिच्च कर्त्तुरिति को हेतुरित्याह—इत्येष नियम इति । अर्थस्य नञर्थसम्बन्धी एष नियमः क्वचित् क्रियायाः कुहचिच्च कर्त्तुरपोहात्मिका व्यवस्था शब्दशक्तिस्वभावतः ।

तत्राऽपि शक्तिस्वभावात् अर्थसम्बन्धिनियमस्य सद्भावेऽपि । अर्थात् यत्र नञर्थो गुणः सन् प्रतीयते तत्र समासः यत्र च तदर्थः प्रधानीभूतः सन् प्रत्येति तत्र समासो न

इत्यन्तरश्लोकौ । तत्रापि केचिद्व्यामोहान्न समासमाद्रियन्ते । यथा—

ननु साधु कृतं प्रजासृजा शशिकान्तेषु मनो न कुर्वता ।
न हि चेतनतामवाप्य ते विरमेयुर्गलितेन केवलम् ॥'

यथा वा-'गृहीतं येनासीः परिभवभयान्नोचितमपि इति ।

नन्वश्राद्धभोजीत्यत्र प्रसज्यप्रतिषेधेऽपि यथा समास इष्यते तद्वदिहापि भविष्यति । संरब्धवन्निषेधश्च प्रतिपत्स्यते नासंरब्धवद्विधिरिति प्रसज्यप्रतिषेध एवायमस्तु किं पर्युदासाश्रयणेन । नैवं शंक्यं, यतो न तावदत्र नञः श्राद्धेनोत्तरपदार्थेनाभिसम्बन्धः कश्चित् प्रतीयते, अपि तु

व्यक्तिविवेकव्याख्यानम् ।

यथा च प्रसज्यप्रतिषेधे समासो नेष्टस्तथोक्तनयेन पर्युदासेऽप्यसमासो नेष्यत इत्याह—ननु साध्विति। अत्र 'न कुर्वते'ति करणक्रियाकर्तृत्वदशेन क्रियां प्रत्युदासीनप्रायेणेत्यर्थः । अकुर्वतेति वाच्ये न कुर्वतेति क्रियांशनिषेधः ।प्रतीतेर्वैपरीत्यकारी । एवं नोचितमपीत्युचितत्वमात्रनिषेधः प्रतीतेर्वैपरीत्यकृदेव ।

मधुसूदनीविवृतिः ।

कर्त्तव्यः इत्यस्य नियमस्य जागरूकत्वेऽपि केचित् व्यामोहादज्ञानात् समासं पर्युदासस्येति शेषः । न समाद्रियन्ते न कुर्वन्ति । कर्तुमुचितोऽतोऽकरणे प्रत्युत दोषः । इति भावः।

यथेत्यनेन अकृतसमासं पर्युदासमुदाहरति—ननु साधु कृतमिति । शशिकान्तोपलेषु मनो न कुर्वता । प्रजासृजा ब्रह्मणा ननु साधु समीचीनं कृतम् । मनोऽकरणे एव रात्रिं यावत् गलन्ति विरहःदुखस्यासह्यत्वप्रकाशनायेति भावः । यदि कदाचिन्मनः स्यात्तदा तु चेतनतामवाप्य गलितेन केवलम् प्रस्रवणादेव न विरमेयुः भाविविरहदुःखस्य परमासह्यत्वद्योतनायेति सारः । अत्र अकुर्वतेति समासे कर्त्तव्ये न कुर्वतेति असमासः कृतः तेन करोतिक्रियायाः निषेधः प्रतिभाति स च अननुगुण एव।

यथात्रेति द्वितीयोदाहरणमुपन्यस्यति — गृहीतमिति । येन द्रोणाचार्येण मत्पित्रा परिभवस्य भयात् कदाचित्कश्चिद्दस्युप्रभृतिर्नं पराभवेदिति हेतोः नोचितमपि स्वब्राह्मण्यविरुद्धत्वादग्राह्यमपि त्वं हे शस्त्र ? गृहीतमसीः । अत्र उचितत्वं नाम ग्राह्यत्वम् । तथा च उचितत्वमात्रस्य ग्रहणरूपक्रियामात्रस्य निषेधः प्रतीतेर्वैपरीत्यं करोति ।

ननु नायं नियमो यत्पर्युदासो नञेव समस्यते यावत्प्रसज्यप्रतिषेधोपीत्याशङ्कते— नन्वश्राद्धभोजीति । इहापि असंरब्धवदित्यत्राऽपि । अयं भावः । संभाव्य दूषयति । न श्राद्धं भुङ्क्ते इत्यश्राद्धभोजी इत्यत्र यथा समासेनोपसर्जनीभूतस्याऽपि नञः अभावबोधनात् । प्रसज्यप्रतिषेधत्वं तथा असंरब्धवानित्यत्रापि समासेनोपसर्जनीकृतस्यापि तस्य प्रसज्यप्रतिषेधत्वमस्तु ततो नायं दोष इति ।

समाधत्ते—नैवं शंक्यमिति । अत्र अश्राद्धभोजीत्यत्र अव्यवहितोत्तरभूतेन श्राद्धपदार्थेन सह नञः अभिसम्बन्धः निषेध्यनिषेधकभावरूपः कश्चित् न प्रतीयते

विशेष्यतया प्राधान्येन तद्भोज्यर्थेनैव । तत्रापि कर्त्रंश एव प्रधानं न क्रियांशः। श्राद्धभोजनशीलो ह्यतः कर्ता प्रतीयते न तद्भोजनमात्रं कर्त्तरि णिनेर्विधानात् ।

ततस्तदभिसम्बन्ध एव शाब्दो न क्रियाभिसम्बन्धः। स हि सामर्थ्यादवसीयते, तदुपादानमन्तरेण कर्तृत्वानुपपत्तेः। तच्छ्रवणमात्रविप्रलम्भकृतश्चायं प्रसज्यप्रतिषेधभ्रमः, न पुनराञ्जस्येन तत्र तद्रूपता नाम काचित् सम्भवति। सा हि वाक्यादेवावसीयते न वृत्तेः, तयोः सिद्धसाध्यार्थनिष्ठतया भिन्नार्थत्वादिति भवितव्यमेव तत्र समासेन। एवमसूर्यंपश्यादिष्वपि द्रष्टव्यम्। इह तु प्रतिषेधस्य प्राधान्यविवक्षा, न विधेः। तत् कोऽवकाशः समासस्य। यथा—

व्यक्तिविवेकव्याख्यानम्।

तच्छ्रवणं क्रियाश्रवणम्। तयोरिति सिद्धार्था वृत्तिः। साध्यार्थं वाक्यम्। असूर्यंपश्यादिष्विति। अत्रापि नञः सूर्येणोत्तरपदार्थेन नाभिसम्बन्धः, अपितु तद्द्रष्ट्रर्थेनैव। तत्रापि कर्त्रंशः प्रधानं न क्रियांशः कर्त्तरि खशो विधानादिति पूर्ववदसेयम्।

मधुसूदनीविवृतिः

असम्भवादिति शेषः। तर्हि केन सम्बन्ध इत्याह—अपि त्विति। तद्भोज्यर्थेनेति श्राद्धभोज्यर्थेन कर्त्रा सहैव सम्बन्धः। तत्रापि कर्त्रंश एव प्रधानं क्रियांशो न प्रधानं स तु कर्त्तरि विशेषणत्वादप्रधानम्।

एष सारः। श्राद्धं भोक्तुं शीलमस्येति श्राद्धभोजी न श्राद्धभोजी अश्राद्धभोजी कश्चित्पुरुषः। तत्रात्र अंशद्वयम्। एकः भुजिक्रियारूपः अन्य इनर्थः कर्त्ता। तत्र इन्प्रत्ययार्थे कर्त्तरि क्रियायाः विशेषणत्वादप्रधानत्वम् कर्त्तुश्च स्वतन्त्रत्वात् प्रधानत्वम्। तथा च कुत्र नञोऽन्वय इति सन्देहे सन्दिग्धं राज्ञ इति नयात् नञः प्रधाने कर्त्तरि अन्वयः नाप्रधाने क्रियायामिति क्रियया सहान्वयाभावात् न प्रसज्यप्रतिषेधत्वमपि तु पर्युदासत्वमेवेति।

ननु कुतः कर्त्तर्येवान्वय इत्याह—श्राद्धभोजनशीलो हीति। हिरत्रावधारणार्थः न हेत्वर्थः। हेत्वर्थस्य यत इति पदस्य वर्त्तमानत्वात्। तस्य च कर्त्तेति पदेनान्वयः। कर्त्तरि णिनेर्विधानात् "व्रते" इति सूत्रेण व्रते गम्यमाने कर्त्तरि प्रत्ययस्य णिनेर्विहितत्वात्। श्राद्धभोजनशीलः कर्त्तैव प्रतीयते तद्भोजनमात्रं श्राद्धभोजनं केवलं न प्रतीयते। "यः प्रत्ययो यत्र जातः तस्य तत्रान्वयः स्मृतः। विपरीतान्वये तावदर्थव्याकोपता भवेदिति नयात्। अतस्तेन कर्त्रैव सह नञः शाब्दः शब्दप्राप्तोऽभिसम्बन्धोऽन्वयः भवतीति शेषः क्रियया सह अभिसम्बन्धो न।

ननु अश्राद्धभोजीत्यत्र अयं द्विजः श्राद्धे न भुङ्क्ते इति रीत्या द्विजस्य श्राद्ध-

भुङ्क्ते सदा श्राद्धमयं परांश्चोपतापयेदित्ययथार्थमेव ।
सम्यक् स्वभावोऽवगतोऽस्य यावन्न श्राद्धभोजी न परोपतापी' ॥

### व्यक्तिविवेकव्याख्यानम् ।

भुङ्क्ते इति । अत्र हि वाक्यस्य क्रियाप्राधान्यं प्रतीयमानभवत्यादिक्रियापेक्षे नञः समन्वये श्राद्धभोजी न भवतीति वाक्यार्थः । अश्राद्धभोजीत्यत्र तु नञा भोक्तुस्समन्वये श्राद्धभोक्तृव्यतिरिक्तोऽपि विघसाश्यादिः प्रतीयते । यतश्चात्र अश्राद्धभोजीत्यादौ समासे प्रतिषेधो नेष्टः, तत एव समर्थसमासस्तद्विपर्ययेणासमर्थसमासश्च कारिकाद्वयेनोक्तः । वाक्यभेदाभेदयोस्तु सामर्थ्यात् प्रतीतिरित्यवचनम् ।

### मधुसूदनीविवृतिः ।

कर्मकभोजनक्रियाया एव अभावः प्रतीयते ततश्च नञः क्रियाभिसम्बन्धेन प्रसज्यप्रतिषेधत्वमेवेत्यत आह—स हीति । स हि नञः क्रियया सह अभिसम्बन्धो हि सामर्थ्यात् अर्थबलतोऽवसीयते प्रतीयते । तदुपादानमन्तरेण क्रियाभिसम्बन्धस्वीकरणं विना कर्तृत्वस्यानुपपत्तेः । क्रियायाः कृते कर्तृत्वमावश्यकमित्यभिमानः । तच्छ्रवणमात्रविप्रलम्भकृतः केवलं क्रियायाः श्रवणवञ्चनकृतः अयं प्रसज्यप्रतिषेधभ्रमः । आञ्जस्येन स्फुटतया पुनः तत्र अश्राद्धभोजीत्यत्र तद्रूपता प्रसज्यप्रतिषेधरूपता न सम्भवति ।

अत्रेदं हृदयम् । अश्राद्धभोजीति पदात् श्राद्धभोजिभिन्नस्य विघसाशिरूपवाच्यार्थस्य (अश्राद्धभोजी अर्थादयं विघसाशी इति) प्रतीतिर्जायते । किन्तु पर्युदासेन नञा श्राद्धभोजनाभावः आक्षिप्यते । पूर्वमेव व्रते गम्ये णिनेर्विधानात् पश्चात् णिन्यन्तेन नञः समासे हि भोजनाभावस्य आक्षेप एव उचितः न तु शाब्दो बोधः । इति।

सा हि प्रसज्यप्रतिषेधरूपता हि वाक्यादेव अवसीयते ज्ञायते न वृत्तेः समासात् । वाक्ये हि क्रियाप्रधानम् , प्रधानानुपातिनो हि गुणा इति नञः साक्षादेव क्रियायासन्वयो भवति वृत्तौ च क्रिया गुणीभूता इति न तत्र तस्याऽन्वयः, गुणानां च पदार्थत्वादसम्बन्धः समत्वादित्युक्तेः। क्रियान्वयाऽभावाच्च न प्रसज्यप्रतिषेधः । इति भावः । रा
तयोः वाक्यवृत्त्योर्मध्ये । सिद्धसाध्यनिष्ठतयेति। वृत्तौ नञः सिद्धार्थान्विततया वाक्ये च तस्य साध्यार्थान्विततया भिन्नार्थत्वात् भिन्नाभिधेयत्वात् इति हेतोः। तत्र अश्राद्धभोजीत्यत्र समासेन भवितव्यम् । एवम् अश्राद्धभोजीतिवत् असूर्यंपश्येत्यादिष्वपि नञो वृत्तिर्बोध्या । आदिपदात् अपुनर्गेयाः श्लोका इत्याद्युदाहर्त्तव्यम् ।

अत्राऽपि नञः सूर्येण उत्तरपदार्थेन न सम्बन्धः किन्तु सूर्यकर्मकदर्शनकर्त्र्यां एवान्वयः कर्त्तरि खशो विधानात् कर्त्रंशः प्रधानम् न क्रियांशः । इति ज्ञेयम् । इह तु असंरब्धवानित्यत्र तु ।

प्रसज्यप्रतिषेधता वाक्यादेवावसीयते न वृत्तेरिति उदाहरणमुखेन स्पष्टयितुमाह—भुङ्क्ते सदा श्राद्धमयमिति । स्पष्टार्थम्। वाक्यं क्रियाप्रधानं भवतीति अयं श्राद्धभो-

इत्यत्र। अत्र हि प्रतीयमानसत्तादिक्रियासमन्वयो नञर्थस्य प्राधान्येन प्रतीयते। न तु तद्विशिष्टस्योत्तरपदार्थस्य विधिरित्येष एव प्रसज्यप्रतिषेधविषयो युक्तो नान्यः अन्यथात्रापि समासवैशसोपगमप्रसङ्गः पूर्ववद् दुर्निवारः स्याद् विशेषाभावात्।

तस्मादस्य नञो विधेयार्थनिष्ठतया प्रधानस्यानूद्यमानार्थपरतया तद्विपरीतवृत्तिना संरब्धवत्पदेन सदाचारनिरतस्येव पतितेन वृत्तिर्विद्वद्भिर्नेष्यत एवेति स्थितम्।

नञर्थस्य विधेयत्वे निषेध्यस्य विपर्यये।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः॥ ५॥

इति सङ्ग्रहश्लोकः।

मधुसूदनाविवृतिः।

जी नास्तीति विद्यमानार्थकक्रियया नञोऽन्वयः। वृत्तौ तु अश्राद्धभोजीत्यत्र श्राद्धभोजिभिन्नः श्राद्धभोजिसदृशः विघसाशी (अमृताशी) प्रतीयते इति न तत्र भुजिक्रियया नञोऽन्वयः अपि तु कर्त्राऽन्वयः।

ननु नास्ति इह पद्ये काचित् क्रिया अतः भुजिक्रिययैव सह अन्वयो भवत्वित्यत आह—अत्र हि प्रतीयमानेति। यद्यपि इह अस्त्यादिः क्रिया नास्ति तथापि सा आक्षेप्येति भावः। प्रतीयमानया आक्षिप्तया सत्तादिक्रियया सह प्राधान्येन नञर्थस्य समन्वयः प्रतीयते। तु किन्तु तद्विशिष्टस्य नञर्थविशिष्टस्य उत्तरपदार्थस्य श्राद्धभोजनस्य। एष एव एतादृश एव। अन्य एतद्विसदृशो न।

अन्यथा एतादृशस्य प्रसज्यप्रतिषेधविषयत्वाऽस्वीकारे अत्रापि भुङ्क्ते इति पद्येऽपि समासविषयकस्य वैशसोपगमस्य विश्रृंखलत्वज्ञानस्य प्रसङ्गः आपत्तिः पूर्ववत् अश्राद्धभोजीतिवत् दुर्निवारः दुष्परिहरः स्यात् विशेषाभावात् समानन्यायात्।

नञः शास्त्रार्थमुपसंहरन्नाह-तस्मादस्य नञः। अनूद्यमानार्थपरतया अनूद्यमानार्थाधीनतया तद्विपरीतवृत्तिना अप्रधानेनेत्यर्थः संरब्धवत्पदेन सह वृत्तिः समासः न इष्यत एव विद्वद्भिः। यथा सदाचारनिरतस्य महापुरुषस्य पतितेन सह आचारभ्रष्टेन सह वृत्तिर्व्यवहारः सङ्गतिरिति यावत् न इष्यत एवं नञः संरब्धवत्पदेन वृत्तिर्नेष्यत इति स्थितम्।

**नञर्थस्य विधेयत्व इति**। अत्र निषेध्यस्य इति पाठः। नञर्थस्य विधेयत्वे प्रधानत्वे निषेध्यस्य विपर्यय अप्रधानत्वम्। निषेधस्येति पाठे क्लिष्टयोजना सा चेत्थम्—विधेयत्वे विधेयत्वविषये अर्थात् विधिविषये विपर्यये अप्राधान्ये नञर्थस्य निषेधस्य चार्थात्प्राधान्ये सति समासो न इष्यते। ननु कुतो नेष्यते इत्याह—अर्थस्य विपर्यासप्रसङ्गतः अर्थस्य गुणस्य प्रधानत्वम्। प्रधानस्य गुणत्वमित्येवंरूपोऽर्थस्य विपर्यासः विरुद्धत्वम् तस्य प्रसङ्गः आपत्तिः स्यात्।

किञ्च योऽसावित्यत्र यदः केवलस्यैव प्रयोगोऽनुपपन्नः । यत्र यत्तदोरेकतरनिर्देशेनोपक्रमस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः तयोरप्यनुवाद्यविधेयार्थत्वेनेष्टत्वात् तयोश्च परस्परापेक्षया नित्यत्वात् । अत एवाहुः-'यत्तदोर्नित्यमभिसम्बन्ध' इति । स चायमनयोरुपक्रमोपसंहारो द्विविधः शाब्दश्चार्थश्चेति । तत्रोभयोरुपादाने सति शाब्द यथा-

'यदुवाच न तन्मिथ्या यद् ददौ न जहार तत्' ।

---

व्यक्तिविवेकव्याख्यानम् ।

एवमेकं विधेयाविमर्शं विचार्य द्वितीयमुदाहरति—योऽसावित्यत्रेति तच्छब्दं प्रत्याकाङ्क्षायाः केनाप्यनिवर्तनात् । एकतरेति क्वचिद्यच्छब्देनोपक्रमे तच्छब्देनोपसंहारः । क्वचित्तच्छब्देनोपक्रमे यच्छब्देनोपसंहारः प्रसज्येत । एतच्च द्वयं शाब्दोपक्रमोपसंहारक्रमेणोदाहरिष्यति । तयोरपीति । अपिशब्दो नञर्थं समुच्चिनोति । प्रसज्यप्रतिषेधे हि नञर्थो विधेयो निषेध्योऽर्थोऽनुवाद्यः । पर्युदासे तु विपर्यय इत्युक्तं प्राग् । अनुवाद्यविधेयेति । यत्तदोर्नित्याभिसम्बन्धेऽपि शब्दशक्तिस्वाभाव्याद्यदोऽनुवाद्यविषयत्वं तदो विधेयविषयत्वम् । नित्यत्वादिति । अपेक्षाप्राणतयावस्थानात् । शाब्द इति शब्देनोभयोः संस्पर्शात् । उभयोः संस्पर्शाभाव आर्थत्वम् । तत्र द्वयी गतिः अन्यतरानुपादनं द्वयोरनुपादानमपि यत्तदाश्रयभावेन द्विधा । क्रमेण चैतदुदाहरिष्यति ।

मधुसूदनीविवृतिः ।

एवमेकविधं विधेयाविमर्शं निरूप्य अन्यविधं पर्यालोचयितुं प्रक्रमते—किञ्च योऽसावित्यत्रेति । योऽसौ कुत्र चमत्कृतेरित्यत्र ।

केवलस्यैव एकस्यैव यदः प्रयोगोऽनुपपन्नः । विधेयत्वप्रतीतिकारितत्पदाभावे निराकाङ्क्षत्वप्रतिपत्तिशून्यत्वात् अनुवाद्यत्वमात्रप्रतीतिकारित्वेन विधेयविषयकाकाङ्क्षाया जागरूकत्वात् । केनाप्यनिवर्त्तनादित्यर्थः । अयुक्तः ।

कुतोऽयुक्तः केवलस्य यदः प्रयोग इति कारणमुपक्षिपति—यत्र यत्तदोरिति । यत्र यस्मिन् स्थले यत्तदोर्मध्यादेकतरस्य यदोः तदोर्वा निर्देशेन प्रयोगेण उपक्रम आरम्भः तत्र तत्प्रत्यवमर्शिना उपक्रान्तसमालोचकेन तदितरेण उपक्रान्तभिन्नेन उपसंहारः समापनम् क्वचित्तच्छब्देनोपक्रमे यच्छब्देनोपसंहारः यच्छब्देनोपक्रमे तच्छब्देनोपसंहारः । न्याय्य उचितः । तयोरपि यत्तदोरपि । तयोश्च अनुवाद्यविधेयार्थयोश्च । अत एव परस्परापेक्षयेत्याद्युक्तकारणादेव । नित्यत्वात् अपेक्षाप्राणत्वेन व्यवस्थानात् । अनयोः यत्तदोः । उभयोः यत्तदोः ।

यदुवाचेति । स दुर्मतिरिति च । उभयत्र शाब्दो यत्तदोरुपक्रमोपसंहारः । तयोः पूर्वोत्तरवाक्यगतत्वेन उपादानात् ।

यथा च—

'स दुर्मतिः श्रेयसि यस्य नादरः स पूज्यकर्मा सुहृदां शृणोति यः'।

इति। एकतरस्योपादाने सत्यार्थः तदितरस्यार्थसमार्थ्येनाक्षेपात्। तत्र तदः केवलस्योपादाने सत्यार्थस्त्रिविधः प्रसिद्धानुभूतप्रक्रान्तवस्तुविषयतयोपकल्पितसन्निधिना यदा तस्याभिसम्बन्धात्। तत्र प्रसिद्धार्थविषयो यथा—

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी'॥

---

व्याक्तविवेकव्याख्यानम्।

उपकल्पितो नित्यसापेक्षत्वादुपस्थापितः। अत्र च प्रसिद्धादिविषयत्वं यदा निर्दिष्टम्। सा कला या प्रसिद्धेति स्फुटत्वेन प्रतीतेः। क्वचित् तदोऽपि व्यपदिश्यते तस्य यच्छब्देनैकविषयत्वात्। ते इति ये मयैवानुभूते इत्यर्थः। अन्वियेष स इति। अत्र स इति यः प्रकान्त इत्यर्थः।

मधुसूदनीविवृतिः।

आर्थावुपक्रमोपसंहारौ दर्शयितुमाह—एकतरस्येति। एकतरस्य यदो वा तदो वा उपादाने शब्दतो ग्रहणे सति। ननु कथमाकाङ्क्षानिवृत्तिरित्याह—तदितरस्येति। उपात्तातिरिक्तस्य यदस्तदो वा अर्थसामर्थ्येन अर्थशक्त्या आक्षेपात्। ततो निराकाङ्क्षत्वप्रतिपत्तिः सुलभैवेति भावः।

यत्तदोरार्थः उपक्रमोपसंहारोऽपि परिगणितविषय एवेत्याह—तत्र तदः केवलस्येति। उपकल्पितसन्निधिना रचितसामीप्येन। तस्य तदः।

द्वयं गतमिति। अन्वयस्य तु सरलः पन्थाः। सेत्यनेन प्रसिद्धा चन्द्रमसः कला गृह्यते। नैतस्यां का चन्द्रकलेति कस्यचित्पर्यनुयोगः। अत्र सचेतनचमत्कारी कोऽप्यपूर्वः शब्दविन्यासः प्रकृतानुगुणो विद्यते येन अर्थपरिपोषमहत्वमनुभूयते कवेर्लोकोत्तरपाण्डिती चानुपदमिति उट्टीकयामः। कपालिन इति पदस्य भगवत्शिवार्थबोधकानन्तपर्यायपदानां सद्भावेप्युपादानं प्रकृतार्थं परिपोषयति। यो हि स्वयं कपाली इतस्ततो भिक्षातः कणान् संयाच्य स्वोदरं पिपर्त्ति। भिक्षाऽपि सा नान्यपात्रेऽपि तु (नरशिरः) कपाले इति परमबीभत्सावहमिति तस्य परिग्रहत्वस्वीकारे कियान् लाभः। तत्राऽपि समागमे प्रार्थना। अत्र तु शब्दयोर्मेदृशं लोकोत्तरत्वं पर्यायेणाऽपि तदर्थस्योपस्थापयितुं शक्यत्वादतः पदार्थयोरेव। तस्य पूर्वोक्तस्य समागमे सहवासे प्रार्थना याञ्चा। यदि कदाचित् तेन सह काकतालीयवत् अथवा दुर्दैववशतो वा गमः प्राप्तिर्भवेत् तदाऽपि कथञ्चित्सह्यः परं त्वया पार्वत्या तु तेन कपालिना सम्यक् प्रकारेण आ सर्वथा गमः प्रकर्षेण अर्थ्यते इति महान् शोचिताविषयः। "सम्प्रति द्वयम्" इत्यत्रा

अनुभूतविषयो यथा–'ते लोचने प्रतिदिशं विधुरे क्षिपन्तीऽति । यथा–

'तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा
सा दृष्टिर्यदि हारितं कुवलयैस्ताश्चेद्गिरो धिङ् मधु ।
सा चेत् कान्तिरतन्त्रमेव कनकं किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः' ॥

प्रक्रान्तविषयो यथा—

'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् ।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः' ॥

केचित् पुनरुपात्तवस्तुविषयतयोपकल्पितयोर्द्वयोरप्याक्षेपादस्य च-

---

व्यक्तिविवेकव्याख्यानम् ।

उपात्तवस्त्विवति वक्ष्यमाणश्लोके कोऽपीति यदुपात्तं वस्तु तद्विषयत्वेनेत्यर्थः ।

मधुसूदनीविवृतिः

ऽपि अर्थ एव । इदानीमेव न पूर्वस्मिन् समये । द्वयमिति पूर्वमेका चन्द्रकला आसीत् शोचनीया दुर्व्यसनदूषितत्वेन । सम्प्रति तु त्वया तस्याः चन्द्रकलायाः कपालिसङ्गमार्थनारूपदुरध्यवसायसहायकत्वमिवारब्धम् । कलावतः इति । यदि कदाचिद्दरिद्रस्य कस्यचित्कन्या भवेत्तथाऽपि धनाद्याशया तथा कर्तुं पार्येताऽपि किन्तु नैवम् । कला अतिशयेन विद्यन्ते यस्य तस्य प्रशंसार्थे मतुप् । प्रशस्तकलावतो महाधनिन इत्यर्थः । तत्रापि कान्तिमती । पितुर्महाधनित्वेपि किम् चेत्कन्या काणा कुब्जा बधिरा एडमूका भवेत् किन्तु नैवं कन्याऽपि कान्तिमती लावण्याढ्या । अत्रापि प्राशस्त्ये मतुप् । ननु तादृशपुरुषसमागमार्थनया चन्द्रकला यदि शोचनीया तर्हि अस्तु, न हि सर्वः समानोऽस्ति इतिन्यायात् चन्द्रकलासाम्याभावात् पार्वती पर्वतस्य जडस्य पुत्रीति न शोचनीयेति चेन्न–नेत्रकौमुदी सा चन्द्रकला तु कुमदस्य चन्द्रस्य सम्बन्धात् कौमुदीतिव्यपदेश्या भवेत् त्वं तु निसर्गेण नेत्रयोः कौमुदी कौमुदीव आनन्दप्रदा । तत्राऽपि न एकस्य द्वयोर्बहूनां वाऽपितु लोकस्य यो लोकयति तस्य सर्वस्य विरुद्धाविरुद्धस्य ।

ते लोचने इति । उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती । क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि । इति पूर्णं पद्यम् । ते ये पूर्वं बहुशः अनुभूते । अनेकविधोच्चावचात्रस्थासु ।

तद्वक्त्रमिति सरसा सरणिः। मुद्रिता पिहिता । का निन्दिता । हारितं परास्तम् अतन्त्रम् अर्थसाधकं न । वेधसो ब्रह्मणः । सर्गक्रमः सृष्टिरचनम् । पुनरुक्तवस्तुविमुखः द्विरुक्तं जातमिति विचारपराङ्मुखः । अत्राऽपि तच्छब्दाः अनुभूतार्थबोधकयदर्थपरामर्शकाः ।

कातर्यं केवलेति । रघुवंशकाव्यगतोऽयं श्लोकः । सः प्रक्रान्तः अग्निवर्णो नाम राजा । अन्वियेष गवेषितवान् ।

यत्तदोरभावेऽपि तयोराक्षेपणैव सम्बन्धबोध इति दर्शयितुमाह-केचित्पुनरु-

तुर्थमपि प्रकारमिच्छन्ति । यथा—

'ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी' ॥

अत्र स कोऽप्युत्पत्स्यते यं प्रति यत्नो मे सफलीभविष्यतीत्युभयोरपि तयोरर्थादाक्षेपः ।

यश्चैकवाक्ये कर्तृत्वेनोक्तो यश्चेदमादिभिः ।
तच्छब्देन परामर्शो न तयोरुपपद्यते ॥ ९ ॥

---

### व्यक्तिविवेकव्याख्यानम् ।

अस्य उपक्रमोपसंहारस्य प्रकान्तवस्तुविषयस्य ।

तच्छब्दात् प्रयोगातिप्रसङ्गनियमं प्रकाशयन् परिहार्यं विषयं प्रदर्शयति । यस्त्वेकवाक्य इति । एकवाक्यग्रहणेन परामृश्यस्य प्रत्यक्षायमाणतोक्ता । ततश्च वाक्यभेदे न दोषः । कर्तृत्वेनेति प्राधान्यं सूचयति अप्राधान्यस्य परामर्शो न दुष्यतीति ख्यापनार्थम् ।

### मधुसूदनीविवृतिः ।

पात्तेति । उपात्तं श्लोकसमुपस्थापितं यद्वस्तु यथा—"ये नाम केचिदिहेत्यादौ कोपीत्यादि" एतद्विषयतया उपकल्पितयोरुपस्थापितयोः द्वयोरपि यत्तदोराक्षेपात आक्षेपेण बोधात् । अस्य उपक्रमोपसंहारस्य प्रक्रान्तवस्तुविषयस्य । प्रकारं भेदम् । प्रकारो भेदसादृश्ये इत्यमरः ।

ये नाम केचिदिहेति । नोऽस्माकं । अवज्ञां तिरस्कारम् । तान् अवज्ञाप्रथयितॄन् प्रति । एष काव्यविधानप्रयत्नः । मम समानधर्मा यादृशोऽहम् मन्दतीक्ष्णादिप्रज्ञः तादृशः । अत्र स कोऽपि मम समानधर्मा उत्पत्स्यते उद्भविष्यति यमुत्पन्नं प्रति मे यत्नः सफलतामेष्यतीति उभयोरपि तयोस्तद्यदोरर्थात् अर्थबलादाक्षेपः अन्यथाक्षेपाभावे यथाश्रुते पूर्वार्धेन सह अन्वयो न स्यात् ।

यदोर्विषये नियमाकारं कारिकाभ्यां विवृणोति यश्चैकवाक्ये कर्तृत्वेनेति । यश्चार्थः यद्वस्तु एकस्मिन् वाक्ये कर्तृत्वेन उक्तस्तस्य तच्छब्देन परामर्शो न उपपद्यते । अयं भावः । कर्ता स्वतन्त्रो अर्थात् प्रधानं भवति । तदादयश्च प्रतिनिधिशब्दाः सन्ति । यदा कर्ता स्वावस्थः सन् स्वयमेवोपादीयते प्रतिनिधिशब्दानां तर्हि नावश्यकतेति । वाक्यभेदे च स्वावस्थाप्रच्युतोऽर्थात् अप्राधान्येन उच्यते ततस्तस्य तच्छब्देन परामर्श उपपद्यते । यश्चार्थं इदमादिभिः । आदिपदात् एतददसादयो गृह्यन्ते । उक्तस्तस्य तच्छब्देन परामर्शः उपादानं नोपपद्यते ।

यतोऽध्यक्षायमाणोऽर्थः स तेभ्यः प्रतिपद्यते ।
न चासौ तत्परामर्शसहिष्णुरसमन्वयात् ॥ ७ ॥

तद्यथा—

"स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम् ।"
"द्वैतबुद्धिमपास्येमां सा हि सर्वापदां पदम् ॥"

अत्रैवेमामित्यत्रैतददसोः प्रयोगे तयोरप्येतदेवोदाहरणं द्रष्टव्यम् । अत्र चैकात्म्यायेति एषा हि विपदां पदमिति च पाठौ पठितव्यौ ।

यदः पुनरार्थो द्विप्रकारः सम्भवति प्रक्रान्तवस्तुकल्पिततत्कर्मादि-विषयेण तदा तस्याभिसम्बन्धात् । यथा 'यं सर्वशैला' इत्यादौ 'स हिमा-

व्यक्तिविवेकव्याख्यानम् ।

स इत्यर्थः परामृष्टः । तेभ्य इति कर्तृत्ववाचकादिदमादिभ्यश्च । असौ तच्छब्दः । असमन्वयादिति तच्छब्दस्य परोक्षार्थप्रतिपादकत्वे सम्बन्धविरोधादित्यर्थः । तादात्म्यायेति । शशिकलामौलिस्वरूपत्वायेत्यर्थः ।

आर्थ इति उपक्रमोपसंहारक्रमो निर्दिष्टः । कल्पितत्कर्मादीति । कल्पितं यद् यच्छब्दनिर्दिष्टं कर्मादि विषयोऽस्येति यच्छब्दार्थः कर्मकरणादितया विषयत्वेनास्य

मधुसूदनीविवृतिः ।

ननु कुतो नोपपद्यते-यतोऽध्यक्षायमाणोऽर्थ इति । यतो हेतोः तेभ्यः कर्तृ-वाचकात् इदमादिभ्यश्च स अर्थः अध्यक्षायमाणः सन् प्रत्यक्षतामुपगतः सन् प्रतिपद्यते ज्ञायते । तेन किमित्याह—न-चासाविति । असौ तच्छब्दः तस्य कर्तृत्वेन इदमा-दिभिश्चोक्तस्य परामर्शसहिष्णुर्नास्ति । तत्कुतः असमन्वयात् असंङ्गतेः ।

उदाहरणदिशा एतद्विशदयति—तद्यथा स व इति । सः शशिकलामौलिः शिवः वो युष्माकं तादात्म्याय शशिकलामौलिस्वरूपत्वाय उपकल्पताम् जायताम् । उप-कल्पनक्रियाकर्तृत्वेन उक्तस्य शशिकलामौलेः तादात्म्यायेतिपदांशभूतेन तदा परा-मर्शो नोचितः प्रत्यक्षायमाणस्यार्थस्य परोक्षवाचकेन तदा परामर्शो दुष्करः । हठात्कृ-तोऽप्यनुचितः । इदं भिन्नं वाक्यद्वयम् ।

द्वैतबुद्धिमिति । इमां व्यवहाराकलितां द्वैतबुद्धिं स्वपरबुद्धिमपास्य विहाय। सा हि द्वैतबुद्धिर्हि सर्वासामापदां पदम् स्थानम् । अत्राऽपि इमामिति इदमोक्तस्य सेति तदा परामर्शोऽनुचित उक्तादेव हेतोः । इदमस्तु सन्निकृष्टे तदः परोक्षे विजानी-यादित्युक्तेः । इदन्तदोः षष्ठ्यन्तयोः पदयोरग्रे "प्रयोगः" इति पदं योज्यमध्याहार्यं । अत्रै-वपद्ये इमामिति पदस्थानेऽत्र एतददसोः प्रयोगे कृते का गतिरित्याह–तयोरपि प्रयोगे एतदेवोदाहरणम् । तर्हि कीदृशः पाठः शुद्ध इत्याह-अत्र चेति ।

एवं तदो विषये आर्थमुपक्रमोपसंहारं प्रदर्श्य यदो विषये तं निरूपयितुं प्रक्रमते— यदः पुनरार्थ इति । यदः सम्बन्धी आर्थ उपक्रमोपसंहारः प्रक्रान्तवस्तुविषयेण

लयोऽस्ती'ति। यथा च 'आत्मा जानाति यत् पापं माता जानाति यत् पिता' इत्यादौ तदात्मा जानातीत्यर्थावगतेः।

"यत् तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः।
दीव्यताक्षैस्तदानेन नूनं तदपि हारितम्॥"

इत्यादौ च यद्यपि तदो द्विरुपादानं सकृच्च यदस्तथापि तत्र यथोक्तसम्बन्धद्वैविध्यानतिवृत्तिः। तथा हि यदः प्रक्रंस्यमानविषयेण तदपीत्यनेन तदाभिसम्बन्धाच्छाब्दः। यत्तदित्यस्य तु प्रसिद्धतेजोनिष्ठ-

## व्यक्तिविवेकव्याख्यानम्।

कल्पित इत्यर्थः। सम्बन्धद्वैविध्येति शब्दार्थभेदेन द्वैविध्यम्। यत्तदिति। यच्छब्द-

## मधुसूदनीविवृतिः।

प्रक्रान्तवस्तुकल्पिततत्कर्मादिविषयेण च तदा तच्छब्देन तस्य यच्छब्दार्थस्य अभिसम्बन्धात्। यथा यं सर्वशैला इत्यस्मिन् पद्ये "अस्त्युत्तरस्यां दिशि" इत्यनेन स हिमालयोऽस्तीति उपक्रान्तमारब्धं वस्तु हिमालयरूपं तदेव विषयो यस्य तेन तदा सह "यं सर्वशैला" इतिपद्योपात्तस्य यदोऽभिसम्बन्धः। यथा चेत्यनेन द्वितीयं प्रकारं दर्शयति—आत्मा जानातीति। अत्र जानातीत्यनेन प्रक्रान्ते ज्ञानरूपे वस्तुनि कल्पितं तत्कर्मादि यच्छब्दनिर्दिष्टं कर्मादि तदेव विषयो यस्य तेन तदा सह यदस्तीत्युपात्तस्य यदोऽभिसम्बन्धः। तदात्मा जानातीत्यत्र तदिति पदं यच्छब्दनिर्दिष्टं कर्म परामृशति।

ननु चेत्सामानाधिकरण्येन निर्देशेऽपि यत्तदोः, उपक्रमोपसंहारो दृश्यते यथा—यत्तदूर्जितमत्युग्रमिति। पद्ये तर्हि योऽसावित्यत्राऽपि (सामानाधिकरण्येन निर्देशे) स भवतु का हानिरिति उदाहरणं संगमय्य समाधातुमुद्धरति—

**यत्तदूर्जितमत्युग्रमिति।** वेण्यां भीमवाक्यम्। अस्य भूपतेः युधिष्ठिरस्य तत्प्रसिद्धं यदूर्जितमुद्धतम् अत्युग्रं क्षात्रं तेजः प्रतापरूपमासीदिति शेषः। तदा द्यूतसमये अक्षैः पाशैः दीव्यता क्रीडताऽनेन राज्ञा नूनमवश्यं तदपि तेजो हारितम् शत्रुभिर्गृहीतमित्यर्थः। राज्यं हारितमेव तेजोऽपि हारितमित्यपि शब्दार्थः।

**सङ्गमयति-इत्यादौ पद्ये यद्यपि सत्यमेतत्।** यथोक्तसम्बन्धद्वैविध्यानतिवृत्तिः। यथोक्तस्य सचायमनयोरुपक्रमोपसंहारो द्विविध शाब्दश्चार्थश्चेति प्रोक्तस्य सम्बन्धस्य यत्तदोर्विध्यनुवादभावरूपस्य यद् द्वैविध्यम् शाब्दार्थत्वेन द्विप्रकारत्वम् तस्य अनतिवृत्तिः अनतिक्रमणीयत्वम्। ननु केमिहातिवृत्तिरिति निरूपयति-तथाहीति। प्रक्रंस्यमानविषयेण प्रक्रंस्यमानो यच्छब्दार्थ एव विषयो यस्य तेन "तदपि" इत्यनेन निर्दिष्टेन तदा सह यदः यच्छब्दस्य अभिसम्बन्धः शाब्दः। यत्तदिति। यच्छब्दार्थानुवादेन तच्छब्दार्थो विधीयते किन्तु यत्तदित्यस्य यत्समानाधिकरणत्वेन उपात्तस्य तदः प्रसिद्धतेजोनिष्ठतया लोकविदितप्रतापरूपार्थप्रतिपादकतया य उपकल्पितेन यदा सह अभिसम्बन्धः स आर्थः।

तयोपकल्पितेन यदाभिसम्बन्धादार्थः ।

एवञ्च योऽयमिह 'योऽसावि' त्यत्र यदः केवलस्यैव प्रयोगः स केना-भिसम्बध्यताम्, न ह्यत्र मुक्तके तदभिसम्बन्धसहः प्रक्रान्तः कश्चि-दर्थः सम्भवति यदभिसम्बन्धोऽस्य परिकल्प्येत । न च प्रक्रंस्यमाना-म्बिकाकेसरिविषयोपकल्पितेन तदास्याभिसम्बन्धः सम्भवी, तदुपादान एव तत्सम्बन्धप्रतीतिदर्शनात् । इतरथा 'यत्कोपाग्नौ शलभतां लेभे कामः शिवोऽवता'दित्यत्रापि शिवविषयतयोपकल्पितेन तदा तत्सम्बन्ध-प्रतीतौ सङ्गतार्थतैव स्याद् इत्ययुक्त एवायं यदः प्रयोगः ।

व्यक्तिविवेकव्याख्यानम् ।

समीपे समानाधिकरणस्तच्छब्द उपादीयमानः शब्दशक्तिस्वाभाव्यात प्रसिद्धवस्तु-विषयं यच्छब्दमाकाङ्क्षति । वैयधिकरण्येन व्यवधानेन च निर्देशे तु निर्दिष्टेनैव यदा समन्वयं भजते । न केवलं यो महतोऽपभाषते श्रृणोति तस्मादपि यः स पाप-भागि'त्यत्र यद्यपि यः स इति यत्तदोर्नैरन्तर्येण सामानाधिकरण्येन च निर्देशः तथापि न 'यत्तदूर्जितमि'ति न्यायेन इह यदि तच्छब्दो निरन्तरोपात्तयच्छब्दापेक्षयैव प्रयुज्यते तदा स्यादेष दोषः, यावता 'न केवलं य' इत्यत्र यच्छब्दापेक्षया व्यवधानेन प्राधान्यात् प्रयुक्तस्तच्छब्दान्तरानाकाङ्क्षः प्रसङ्गेन निरन्तरनिर्दिष्टयच्छब्दान्वयं भजमानः पूर्वसंस्कारेण न तच्छब्दान्तरमाकाङ्क्षतीत्यनवद्यमेतत् ।

तदित्थं यत्तदोरुपक्रमोपसंहारक्रमो द्विविधः परिघटितः । स चात्र श्लोके न युज्यत इत्याह—एवञ्चेति । तदुपादान इति । यदि तच्छब्दानन्तरं प्रत्यपेक्षायाम् यच्छब्देनात्र तदितिप्रक्रान्तस्तच्छब्दः परामृश्यते तत्सम्बन्धप्रतीताविव्यर्थः ।

मधुसूदनीविवृतिः ।

तदित्थमुक्तो द्विविधेऽपि यत्तदोरुपक्रमोपसंहारक्रमः प्रकृते न संघटते इति दर्शयति—एवञ्चेति । एवं यत्तदोः कथितप्रकारव्यवस्थासद्भावात् । केन अभिसम्बध्यतां अनुयोगिनोऽभावान्न केनाऽपीत्यर्थः । मुक्तके पूर्वापरविषयकप्रकरणरहिते पद्ये तदभिसम्बन्धसहः यच्छब्दार्थसम्बन्धसहिष्णुः प्रक्रान्तः आरब्धः कश्चिदर्थो न सम्भवी सम्भावनयाऽपि न गोचरीभवतीत्यर्थः । ननु प्रक्रंस्यमानो यः अम्बिकाकेसरी तद्विषये उपकल्पितेन कल्पनयोपस्थापितेन तदा तच्छब्देन अस्य यच्छब्दस्य अभिसम्बन्धः सम्भवी इति न च वाच्यम् । तदुपादान एव तच्छब्दोपादान एव तत्सम्बन्धस्य तेन यदा सह सम्बन्धस्य प्रतीतेः दर्शनात् अनुभूतत्वात् । इतरथा उपात्तयोरेव सम्बन्ध इति नियमाऽस्वीकारे "यत्कोपाग्नौ" इत्यत्र आवश्यकत्वेऽपि अनुपात्ततदःस्थले पद्येऽपि शिव-विषयतया शिवार्थत्वेन उपकल्पितेन कल्पनया उपस्थापितेन तदा तच्छब्देन सह तत्सम्बन्धप्रतीतौ सङ्गतार्थता एव स्यात् न असाङ्गत्यम् अस्ति तु असाङ्गत्यमिति अयुक्त एव अयं योसावित्यत्र यदः केवलस्येति शेषः प्रयोग इति ।

"मीलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृतम् ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥"

इत्यत्र तु पादयोः प्रमादजः पौर्वापर्यविपर्यय एवायुक्तो द्रष्टव्यः, न यदो यथोक्तविषयातिक्रमः ।

ननु केनेदमुक्तं यदः केवलस्यैवात्र प्रयोगो न तद् इति यावता तद्भिन्नार्थोऽत्रादश्शब्दः प्रयुक्त एवासाविति । अतश्च तदपेक्षया वाक्यार्थविश्रान्तेर्न कश्चिदुक्तदोषावकाशः । साधो ! दुराशैषा । तस्य तदभि-

---

व्यक्तिविवेकव्याख्यानम् ।

ननु प्रयोगदर्शनमेवात्र समर्थकं भविष्यतीत्याशङ्क्य प्रयोगस्य प्रामादिकपाठविपर्यासहेतुकत्वमाह—मीलितमिति । तदभिन्नार्थः तच्छब्दाभिन्नार्थः । तस्य अदश्शब्दस्य । तच्छब्दाभिन्नार्थत्वेऽदश्शब्दस्य दूषणद्वयमुक्तम् । केवलादश्शब्दप्रयोगे 'असौ मरुद्'त्यादौ यच्छब्दाकाङ्क्षा स्यादित्येकं यच्छब्दसहायस्यादश्शब्दस्य प्रयोगे 'योऽसौ जगत्त्रये'त्यादौ प्रयुक्ततच्छब्दाकाङ्क्षा न स्यादिति द्वितीयम् । अत्र यस्य प्रकोपेत्यदश्शब्दरहितयच्छब्दप्रयोगो दृष्टान्तत्वेनोक्तो यथास्य केवलस्य तच्छब्दाकाङ्क्षा तथादश्शब्दयुक्तस्यापीत्यर्थः ।

मधुसूदनीविवृतिः ।

ननु यच्छब्दनिराकाङ्क्षत्वप्रतिपत्तये तच्छब्दोपादानं न सार्वत्रिकम्, मीलितं यदभिरामतेतिप्रभृतिपद्येषु एकतरविहिताः प्रयोगाः समुपलभ्यन्त इत्यत आह—मीलितमित्यत्र तु पादयोरिति । मीलितमित्यत्र पद्ये तु पादयोः प्रथमद्वितीययोः पौर्वापर्यविपर्यय पौर्वापर्यक्रमभेद प्रमादज एव इत्ययुक्तो द्रष्टव्यः । कुत इत्याह—यद इति । यदो यथोक्तविषयात् "यत्तदोरेकतरनिर्देशेन उपक्रमस्तत्र तत्प्रत्यवमर्शिना तदितरेणोपसंहारो न्याय्यः इत्युक्तप्रकाशात् अतिक्रमः क्रमविपर्ययो नास्तीति केवलाः प्रयुक्ताः प्रयोगा प्रामादिका एवेति भावः ।

मीलितमिति । पुष्करैः पद्मैः तत् साधु उचितं कृतम् । यदभिरामतया सौन्दर्येण अधिके चन्द्रमसि सति मीलितं मुकुलितम् । पुनः किन्तु जयिनि सोत्कर्षे कामिनीमुखे सति उद्यता उदयं प्राप्तवता तेन चन्द्रेण साहसं धाष्टर्यमनुष्ठितम् सम्पादितम् ।

ननु अदसादीनां तत्समानार्थकत्वात् प्रत्यपेक्षया प्रयोगे निराकांक्षतैवेत्याशंकते—ननु केनेदमुक्तमिति । अत्र योसाविति स्थले केवलस्य यदः प्रयोग इति इदं भवते केन उक्तम्, यावता येन कारणेन अत्र स्थले तदभिन्नार्थः तच्छब्दसमानार्थः असाविति अदश्शब्दः प्रयुक्त एव । अतश्च प्रयोगादेव तदपेक्षया अदःशब्दापेक्षया वाक्यार्थपरिसमाप्तेः उक्तदोषस्य विधेयाविमर्शस्य कश्चिदपि अवकाशो न भवतीति । समाधत्ते—साधो ? इति सम्बोधनं श्रोतुः विशेषानभिज्ञ-

न्नार्थत्वासिद्धेः । तत्सिद्धौ हि प्रतीतेर्निराकाङ्क्षतैव स्यात् न तु विवादः यथा—'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाग्' इत्यत्र ।

किञ्च तदभिन्नार्थत्वेऽस्योपगम्यमाने

"असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः ॥"

इत्यत्र मुक्तके यच्छब्दपरामर्शापेक्षा प्रसज्येत तस्य यथोक्तवस्तुविषयत्वासम्भावात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

तस्य यथोक्तवस्त्विति यथा अविगानेन शिष्टप्रसिद्धिपारम्पर्येणोक्तं वस्तु तच्छब्दार्थविविक्तो विषयस्तस्य तन्मते असम्भवः । त्वया ह्यदश्शब्दस्य तच्छब्दार्थत्व-

मधुसूदनीविवृतिः ।

त्वख्यापनायोक्तम् । तस्य अदश्शब्दस्य तदभिन्नार्थत्वासिद्धेः तच्छब्दसमानार्थत्वाऽसिद्धेः । तत्सिद्धौ हि समानार्थत्वसिद्धौ हि प्रतीतेः विध्यनुवादभावरूपज्ञानस्य निराकांक्षतैव स्यात् कुतो विवादः अर्थात् विवादो न स्यादेव । यथा न केवलं यो महतोऽपभाषते इत्यत्र विवादरहिता निराकाङ्क्षा प्रतीतिर्वर्तते । तथा योसावित्यत्र निराकाङ्क्षा प्रतीतिर्नास्ति अपि तु विवादग्रस्ता साकाङ्क्षा एवेति भावः ।

किञ्चेत्यभ्युपगम्य समाधत्ते । अस्य अदःशब्दस्य तदभिन्नार्थत्वे तच्छब्दसमानार्थत्वे उपगम्यमाने स्वीक्रियमाणे—असौ मरुदिति मुक्तके पद्ये असाविति अदश्शब्दस्य तच्छब्दार्थाभिधायित्वे यच्छब्दपरामर्शस्य यच्छब्दस्वीकारस्य अपेक्षता आवश्यकता प्रसज्येत प्राप्येत परन्तु न असावित्यत्र यच्छब्दपरामर्शापेक्षा । तत्कुत इत्याह—तस्येति । तस्य अदश्शब्दस्य यथोक्तवस्तुविषयत्वस्य पूर्वोक्तविध्यनुवादभाववस्तुस्थलत्वस्य असम्भवात् अदसो विध्यनुवादभावस्थलत्वे यच्छब्दपरामर्शापेक्षा स्यादिति भावः ।

असौ मरुदिति असौ दृश्यमानचिह्नो वसन्तकालो लङ्कात हनुमानिव आगतः । विशेषणान्यत्र हनुमद्वसन्तयोः श्लिष्टानि । कीदृशः सः । मरुता वायुना चुम्बिता संस्पृष्टाः केसरा बकुला अथवा नागकेसरा यस्मिन् सः । हनुमतो वायुपुत्रत्वात् मरुता अर्थात् मरुदधिष्ठातृदेवतारूपेण पित्रा चुम्बिताः केसराः सटा यस्य । प्रसन्नं स्वच्छं यत्ताराधिपस्य उडुपतेश्चन्द्रस्य मण्डलं तत अग्रणीरग्रेसरो यस्य । पक्षे तारायाः पूर्वं वालीस्त्रीत्वेऽपि तद्धननोत्तरं सुग्रीवस्यैव आधिपत्यमभूदतः तदधिपः सुग्रीवः तस्य मण्डलं सैन्यं तस्याग्रणीर्मुख्यः । वियुक्ताभिः रमणीभिरातुरया विरहोद्दीपकत्वात् कातरया दृष्ट्या वीक्षितः । पक्षे वियुक्तेन रामेण आतुरया उत्सुकया दृष्ट्या वीक्षितः अवलोकितः । अत्रासावित्यस्मात्तच्छब्दार्थाप्रतीतेर्नादसस्तदर्थकत्वम् । स्वीकारे च यच्छब्दार्थापेक्षा स्यात् सा चात्र नास्तीति बोध्यम् ।

"यस्य प्रकोपशिखिना परिदीपितोऽभू-
दुत्फुल्लकिंशुकतरुप्रतिमो मनोभूः ।
योऽसौ जगत्त्रयलयस्थितिसर्गहेतुः
पायात् स वः शशिकलाकलितावतंसः ॥"

इत्यत्र च तच्छब्दपरामर्शस्य पौनरुक्त्यं स्यात् ।

कथं तर्हि यत्तदोर्विषये कविभिरिदमेतददःप्रभृतयः शब्दाः प्रयुक्ताः, प्रयुज्यन्ते च । न च ह्यसति पर्यायत्वे तस्मिन्नेवार्थे पदान्तरप्रयोगमाद्रियन्ते स्वस्थचेतस इति प्रयोगप्रवाहप्रामाण्यादेषां तदभिन्नार्थता परिकल्प्यते । न हि तमन्तरेण शब्दानां तदतदर्थनिश्चयनिबन्धनमन्यत् किञ्चिदुत्पश्यामः ।

व्यक्तिविवेकव्याख्यानम् ।

भुच्यते तत्र यच्छब्दपरामर्शापेक्षाप्रसङ्गः इत्यर्थः । परिकल्प्यत इति प्रयोगप्रवाहप्रामाण्यान्यथानुपपत्त्या यातयार्थापत्त्येत्यर्थः । तमन्तरेणेति । तच्छब्देन प्रयोगप्रवाहः परामृष्टः । तदतदर्थत्वनिश्चयो विवक्षिताविवक्षितार्थत्वनिश्चयः ।

मधुसूदनीविवृतिः

ननु यथा प्रक्रान्तार्थकतच्छब्दे नास्ति यच्छब्दप्रयोगापेक्षा तथैव क्वचिददः पदेऽपि नास्ति तदपेक्षेति नेदमुदाहरणं प्रकृतोपपादकमिति चेत्, यत्र यच्छब्दसमानाधिकरणत्वेन अदश्शब्दः प्रयुज्यते तत्र का गतिरर्थात् पौनरुक्त्यं स्यादतः तदभिन्नार्थत्वमस्य नोपपद्यते इति निरूपयितुं तादृशमुदाहरणमाचिनोति—यस्य प्रकोपेति । यस्य भगवतो रुद्रस्य, प्रकोपशिखिना क्षुद्रस्य महति साहसानुष्ठानरूपानौचित्यसम्भावनया समुद्भूतो यः प्रकोपः तज्जो यः शिखी तृतीयनेत्ररूपोऽग्निस्तेन परिदीपितः प्रज्ज्वालितो मनोभूः अनङ्गः । उत्फुल्लो विकसितो यो (सः) किंशुकतरुः तत्प्रतिमस्तत्तुल्यः अरुण इत्यर्थः अभूत् । योऽसौ जगत्त्रयस्य भूर्भुवः स्वरिति त्रिलोकस्य मायागुणानां सत्वरजस्तमसामभिसम्बन्धात् लयस्य स्थितेः सर्गस्य हेतुः कारणम् । सः एवं गुणविशिष्टः शशिकलया कलितोऽवतंसः शिरोभूषणं येन सः शिवः वो युष्मान् पायात् अव्यात् । अदसस्तदभिन्नार्थत्वेऽत्र पद्ये असावित्युक्त्वा पुनः "स" इति तच्छब्दपरामर्शस्य सद्भावे पौनरुक्त्यं स्यात् । अतः प्रयोगवाहेण तच्छब्दसमाना(र्थ)त्वं अदःशब्दस्य निश्चेतुं न शक्यते ।

ननु द्वित्राणां कवीनां यत्तदोः सामानाधिकरण्येन इदमेतददसां प्रयोगा भ्रान्तिविलासा अपि स्वीक्रियेरन् परमेष प्रवाहो दृश्यते इति प्रयोगप्रवाहप्रामाण्यान्यथानुपपत्त्या अर्थापत्त्या इदमेतदसां तच्छब्दसमानार्थत्वमेषेत्याशंकते—कथं तर्हि यत्तदोर्विषय इति । स्वस्थचेतस इति । सावहिताः प्रयोगाः न प्रामादिका इति भावः । तमन्तरेण प्रयोगप्रवाहं विना । अन्यत् भिन्नं प्रयोगप्रवाहादिति शेषः । तदतदर्थत्वनिश्चयनिबन्धनम् तस्य शब्दस्य सोऽर्थो वर्तते सोऽर्थो नास्तीत्यादिनिश्चये निबन्धनं कारणम् ।

अत्रोच्यते । उक्तनयेन तावत् तेषां तदभिन्नार्थतानुपपत्तिरुपपादितैव । यदि तु तामपह्नुत्य गतानुगतिकतया—

"योऽविकल्पमिदमर्थमण्डलं पश्यतीश ! निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥"

इति 'स्मृतिभूस्मृतिभूर्विहितो येनासौ रक्षतात् क्षताद्युष्मान्' इत्यादिप्रयोगदर्शनमात्रानुरोधेन तेषां सा परिकल्प्यते तर्हि यथादर्शनं

व्यक्तिविवेकव्याख्यानम् ।

यदि तु तामिति तदभिन्नार्थतानुपपत्तिः परामृष्टा । गतेऽनुगतं यस्य स गतानुगतिकः । मत्वर्थीयोऽत्र ठन्प्रत्ययः । येनैव पथा एको गच्छति तनैवाविचारितेनैव यो गच्छति स इत्यर्थः । ततो भावप्रत्ययः ।

अविकल्पमित्यकारप्रश्लेषः । निश्शङ्कमित्यर्थः । यद्वा न विकल्पमात्रेण, अपि तु साक्षादित्यर्थः । स्मृतिभूः कामः । द्वितीयः स्मृतिभूशब्दः स्मरणविषये प्रयुक्तः । दग्धत्वात् स्मृतिमात्रशेष इत्यर्थः । क्षतात् वधात् ।

मधुसूदनीविवृतिः ।

समाधातुमाह—अत्रोच्यते । उक्तनयेन असौ मरुदिति यस्य प्रकोपशिखिनेतिचोक्तनयेन । तेषाम् इदमेतददसाम् तदभिन्नार्थतायास्तच्छब्दार्थसमानार्थताया अनुपपत्तिः असङ्गतिः उपपादितैव निरूपितैव । यदि तु तामुक्तां तदभिन्नार्थतानुपपत्तिमपन्हुत्य अनादृत्य गतानुगतिकतया गड्डुलिकाप्रवाहेण । गतेऽनुगतं यस्य स गतानुगतिकः । येन मार्गेण एकः प्रयाति योऽन्योऽपि तमनुगतेनैव मार्गेण गच्छति सः इत्यर्थः। मत्वर्थीयठन् प्रत्ययो बोध्यः । तस्य भावस्तत्ता तया ।

यो विकल्पमिति । भक्तः परमेश्वरं प्रसादयति । हे ईश ? यः पुमान इदं पुरोदृश्यमानं निखिलमशेषमर्थमण्डलम् । प्रपञ्चजातम् । अविकल्पम् विकल्पः संशयस्तद्रहितं यथा स्यात्तथा भवद्वपुः भवत्स्वरूपं पश्यति जानाति । ज्ञानेन सामानाधिकरण्यात । वस्तुतस्तु असत्यस्याऽपि जगतः भवद्रूपत्वेन बोधेन भवन्तमेव पश्यतीत्यर्थः । यथाश्रुते असत्यस्य जगतः परब्रह्मस्वरूपत्वाभावादसङ्गतेः । अथवा बाधकालिक सामानाधिकरण्यात्पश्यति । अतो जगद्बाधेन जगदस्तीत्यस्य भ्रमस्य ; उत्तरकाले बाधेन भवन्तमेव पश्यतीत्यर्थः । अस्य ब्रह्मात्मैक्यदर्शिनः नित्यसुखिनः प्रकाशमानानन्दस्य आत्मपक्षेण आत्मरूपेण परिपूरिते जगति कुतो भयम् न कस्मादमित्यर्थः । द्वितीयाद्वै भयं भवतीति श्रुतेः ।

स्मृतिभूस्मृतिभूरिति । येन स्मृतिभूः कामः स्मृतेः भूः स्थानं विहितोऽसौ शिवः क्षतान्नाशात युष्मान् रक्षतात् अवतात् । तेषामिति । तेषाम् इदमेतददसां शब्दानां सा अभिन्नार्थता परिकल्प्यते तर्हि यथादर्शनं यथाप्रयोगानुभवम् व्यवहितानामेव पृथगवस्थितानामेव, यथा योऽविकल्पमित्यत्र । अव्यवहितत्वे वा सामाधिकर-

व्यवहितानामेव, अव्यवहितत्वे वा भिन्नविभक्तिकानामेव सा परिकल्प्यताम्। इतरथा तु तेषां तत्परिकल्पनमन्याय्यमेव।

तत्र हि प्रत्युत सा तयोस्तदितरपरामर्शव्यपेक्षा सुतरामुन्मज्जति यथा 'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः' इति 'सोऽयं पटः श्याम इति प्रकाशस्त्वया पुरस्तादुपयाचितो य' इत्यादौ च।

न चासाविहावश्यं प्रयोक्तव्यः सन् प्रयुक्त इति तदवस्थ एव दोषावकाशः।

व्यक्तिविवेकव्याख्यानम्।

व्यवहितानामेवेति यथा 'योऽविकल्प'मित्यादौ। अव्यवहितत्वे वेति। यथा 'स्मृतिभूरि'त्यादौ। एतदर्थमेवोदाहरणद्वयमुक्तम्।

तत्र हीति इदमादिसहितप्रयोगे। तयोरिति यत्तदोः। तदितरेति यदृच्छयैकतरप्रयोगे अन्यतरापेक्षेत्यर्थः। सुतरामिति इदमादिसाहित्येन प्रयुक्तो यच्छब्दः स्वभावतो विकासितास्य एव तच्छब्दं प्रतीक्षते, एवं तच्छब्दोऽपि यच्छब्दमिति ज्ञेयम्। एतच्च क्रमेणोदाहृतं यदेतदिति, सोऽयमिति च। यथान्यस्मिन् ग्रन्थे न प्रदर्शनमुपयुज्यते तद्वदस्य यच्छब्दस्य न प्रकान्तपरामर्शे सम्बन्धो, नापि प्रक्रंस्यमानवस्तुसमन्वयमार्गोपदेशे तच्छब्दाध्याहारः शरणम्। स च सत्काव्यकलङ्कायमानो हेय एव।

मधुसूदनीविवृतिः।

व्येन निरन्तरनिर्देशे वा यथा स्मृतिभूस्मृतीत्यत्र भिन्नविभक्तिकानामेव सा एकार्थता परिकल्प्यताम्। इतरथा तु उक्तविरुद्धप्रकारेण तु तेषां शब्दानामदसादीनां तत्परिकल्पनम् ऐकार्थ्यचिन्तनम् अन्याय्यमेव मर्यादोल्लङ्घनमेव।

तत्र हीति इदमादिसहितप्रयोगे हि। तयोः यत्तदोः। सेत्यनेन व्यपेक्षेत्यन्वीयते। तदितरस्य परामर्शे व्यपेक्षा यदृच्छया एकतरस्य प्रयोगे अन्यतरस्याकांक्षा सुतराम् अवश्यमुन्मज्जति जागरूका भवति। इदमादिसाहित्येन प्रयुक्तो यच्छब्दः स्वभावतो विकासितास्य एव तच्छब्दं प्रतीक्षते एवं तच्छब्दोऽपि यच्छब्दं प्रतीक्षते। यथेत्यनेन यच्छब्देन एतच्छब्दसहितेनाऽपि तच्छब्दगवेषा क्रियत इति उदाहरति।

"यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः" इत्यत्र पद्ये।

शश इति नचास्मान् प्रति तथा।
अहं चैवं मन्ये त्वदरिविरहोत्क्रान्ततरुणीकटाक्षोल्का-
पातव्रणकिणकलङ्काङ्कितनुम्" इति पूर्णः श्लोकः।

यथा तादृशतच्छब्दकृता यच्छब्दविषयिणी प्रतीक्षा उदाह्रियते—सोऽयं पटः श्याम इति।

नचासौ इहेति। प्रकृतं स्मरति। इह योसाविति पद्ये असौ असाविति अदः शब्दः अवश्यं प्रयोक्तव्यः सन् न प्रयुक्तः किन्तु अशक्त्या प्रयुक्त इति तदवस्थ एव दोषावकाशः विधेयाविमर्शप्रसरः।

तस्मादपेतप्रक्रान्तसम्बन्धसहायस्यास्य यदोऽनुपपन्नप्रक्रंस्यमानवस्तुसमन्वयस्यैकाकिनः सार्थभ्रष्टस्येव तपस्विनः पथिकस्य सन्मार्गोपदेशिकं तच्छब्दाध्याहारमेवैकं शरणमन्तरेण नापरोऽभिमतार्थसङ्गमोपायः सम्भवति ।

स चैवंविधेषु सूक्तिरत्नेषु कलङ्कायमानो मनागपि न काव्यमाणिक्यवैकटिकानां सचेतसां मनांस्यावर्जयितुमलमिति ।

अनुक्त्वैव परामृश्यं प्रयोगो यत्र यत्तदोः ।
निरन्तरः पुनस्तत्र तयोरुक्तिर्न दुष्यति ॥ ८ ॥
तयोर्निरन्तरोपात्तेष्विदमेतददस्सु च ।

---

व्यक्तिविवेकव्याख्यानम् ।

अनुक्त्वैवेति यत्तदोर्मध्ये परामृश्यमनुक्त्वा यत्र निरन्तरः प्रयोगः यथा 'यत्तदूर्जितमि'त्यादौ तत्र तयोर्यत्तदोर्यथायोगं पुनः प्रयोगो न दुष्यति यथा 'नूनं तदपि हारितमि'त्यादौ ।

तथा तयोर्यत्तदोः निरन्तरनिर्दिष्टेष्विदमादिषु सत्सु तयोर्यत्तदोः तेषामिदमा-

मधुसूदनीविवृतिः ।

तस्मादिति । यच्छब्दार्थविषयं शास्त्रार्थमुपसंहरति । प्रक्रान्तेन सम्बन्धः प्रक्रान्तसम्बन्धः । अपेतः विगलितः प्रक्रान्तसम्बन्धो यस्य स अपेतप्रक्रान्तसम्बन्धस्तच्छब्दः तस्य सहायः उपबृंहकस्तस्य यदः । अनुपपन्नः सङ्गतिमनासदयन् प्रक्रंस्यमानेन वस्तुना सह समन्वयो यस्य तस्य तथोक्तस्य अत एव एकाकिनः सन्मार्गोपदेशे प्रक्रंस्यमानवस्तुसम्बन्धग्रहणे देशिकं समर्थं तच्छब्दस्य अध्याहारमेव आक्षेपमेव एकं शरणं रक्षकमन्तरेण विना अभिमतार्थेन सङ्गमस्योपायः हेतुरपरो द्वितीयो न सम्भवति । यथा सार्थभ्रष्टस्य समूहाद्रहितस्य तपस्विनः ऊहापोहादिकर्त्तुमसमर्थस्य पथिकस्य कृते सन्मार्गविषयकोपदेशे देशिकमाचार्यं तच्छब्दस्य अनेन पथा गम्यतामिति मार्गबोधकशब्दस्य अध्याहारमुच्चारणं विना शरणं गम्यस्थानप्राप्त्युपायोऽपरो नास्ति तथाऽत्राऽपि बोध्यम् । काव्यमाणिक्येति रूपकम् । वैकटिको लोके जौहरीति इति प्रसिद्धः । आवर्जयितुं प्रसादयितुं नालमित्यन्वयः ।

अनुक्त्वेति । परामृश्यं यत्तदोर्मध्ये परामर्शयोग्यम् यद्वा तद्वा पदम् अनुक्त्वैव अनुच्चार्यैव यत्र यत्तदोः निरन्तरः समानाधिकरणः प्रयोगः यथा यत्तदूर्जितमित्यादौ । तत्र स्थले तयोः यत्तदोः पुनरुक्तिर्यथा नूनं तदपि हारितमिति न दुष्यति ।

तयोरिति । पूर्वं तयोरिति पदं सप्तम्यन्तं द्वितीयं तयोरितिपदं षष्ठ्यन्तं बोध्यम् तयोर्यत्तदोः निरन्तरं समीपमुपात्तेषु निर्दिष्टेषु इदमेतददःसु च तयोर्यत्तदोः । तेषामिदमेतददसादीनां च अपेक्षा नास्ति । तेषु इदमादिषु असत्स्विव शाम्यति । अयं भावः ।

तयोस्तेषां च नापेक्षा तेष्वसत्स्विव शाम्यति ॥ ९ ॥
उदाहरणजातं यत् तत्साङ्कर्यसमुद्भवम् ।
तस्य दिङ्मात्रमस्माभिरुक्तं विस्तरभीरुभिः ॥ १० ॥

इति सङ्ग्रहश्लोकाः

---

व्यक्तिविवेकव्याख्यानम् ।

दीनां च सङ्घटितत्वेन स्थितानां यथायोगं यत्तदोः प्रत्यपेक्षा न निवर्त्तते यथा अप्रयुक्तेष्विदमादिषु केवलयोः पृथगवस्थितयोरपेक्षा न निवर्त्तते तद्वत् प्रयुक्तेष्वपीत्यर्थः यथा 'यदेतच्चन्द्रान्तरि'ति, सोऽयं पट' इति च । एवं प्रकृतेऽपि 'योऽसावि'ति ।

तत्साङ्कर्येति । यच्छब्दस्य पृथगिदमादिसाहित्ये तच्छब्दस्य च पृथगिदमादिसाहित्ये यत्तदोः परस्परसाहित्ये च बहवो भेदाः, तेषामुदाहरणेषु दिङ्मात्रं दर्शितम् ।

सम्प्रति प्रायेण वाक्यार्थसमन्वयव्यापिनोर्यत्तदोर्योऽयं नित्याभिसम्बन्धत्वेनोपक्रमोपसंहारक्रमः, स प्रसङ्गाद् विचार्यते । स च पुष्टापुष्टदुष्टभेदेन त्रिविधः । पुष्टोऽपि प्रथमं शाब्दत्वार्थत्वभेदेन द्विविधः । शाब्दोऽपि यच्छब्दोपक्रमस्तच्छब्दोपक्रमश्चेति द्विविधः । आर्थोऽपि यच्छब्दमात्रानुपादाने तच्छब्दस्योपात्तस्य प्रसिद्धानुभूतप्रक्रान्तविषयेण यदाभिसम्बन्धात् त्रिविधः । यच्छब्दस्य च तच्छब्दानुपादाने केवलमुपात्तस्य प्रक्रान्तविषयेण कल्पिततत्कर्मादिविषयेण च तदाभिसम्बन्धाद् द्विविधः । उभयानुपादाने तु द्वयोरुपात्तवस्तुविषयताकल्पन एव भेदः । एवं शब्दो द्विविध आर्थः षड्भेद इत्यष्टविधो यत्तदोरुपक्रमोपसंहारक्रमः पुष्टः । तच्चेतच्चेह ग्रन्थकृतोदाहृतम् । यत्तदूर्जितमित्यादौ तु शाब्दस्यार्थस्य चोपसंहारक्रमस्य सङ्कीर्णत्वमिति नास्य पृथग्भावः । पुष्टस्य दुष्टमध्ये प्रसङ्गेन वर्णयिष्यमाणत्वादिदानीं दुष्टो व्याक्रियते । तत्र यत्तदोः स्थाने तच्छब्दयच्छब्दनैरन्तर्येण सामानाधिकरण्येन चेदमादीनां दुष्टत्वैव तेषामतदर्थत्वात् तन्निकटे च प्रयुज्यमानानां प्रसिद्धिमात्रपरामर्शकत्वाद्, यथा 'योऽसौ कुत्र चमत्कृतेरि'ति । एवं तच्छब्दसान्निध्येनेदमादीनामुदाहरणमूह्यम् । विप्रकृष्टत्वेन सन्निकृष्टत्वेऽपि वैयधिकरण्येन वा तेषां प्रयोगे न दुष्टं नादुष्टमित्यपुष्टत्वमेव यथा 'योऽविकल्पमि'ति 'स्मृतिभूः स्मृतिभूरि'ति च । एवं च तच्छब्दोपक्रम उदाहर्त्तव्यम् । तथा तच्छब्दस्य परोक्षायमाणार्थप्रत्यवमर्शित्वादेकवाक्यस्थप्रत्यक्षायमाणप्रधानभूतार्थप्रत्यवमर्शे दुष्टत्वं 'यथा स वः शशिकलामौलिरि'त्यादौ । प्रधानग्रहणेन न कर्तृमात्रं निर्दिष्टम् अपि तु

मधुसूदनीविवृतिः ।

यथा यत्तच्छब्दनिरन्तरत्वेनानुपात्तेषु अप्रयुक्तेषु इदमादिषु यथा असौ मरुदित्यादौ न यत्तदोः इदमादीनां वापेक्षा । तथा यत्तच्छब्दनिरन्तरत्वेनापि प्रयुक्तेषु तेषु यथा योऽसौ जगत्त्रयेत्यादौ न तयोः तेषां वाऽपेक्षेति ।

उदाहरणजातमिति । तत्साङ्कर्यसमुद्भवम् यत्तदिदमादिसंकीर्णतावत् उदाहरण जातम् । जातपदं समूहवाचि । तस्य उदाहरणजातस्य । दिगित्यल्पार्थोऽव्ययः ।

## व्यक्तिविवेकव्याख्यानम् ।

कारकान्तरमपि प्राधान्येन विवक्षितत्वात् प्रत्यक्षायमाणम् । तेन

"स मेदिनीं विनिर्जित्य चतुर्जलधिमेखलाम् ।
सचिवार्पिततद्भारस्तस्यामास्ते यथासुखम्" ॥

इति मेदिन्यास्तच्छब्दपरामर्शो न सुन्दर इत्याहुः । यथा यत्तदोः पदार्थवाक्यार्थगतत्वेन द्विविधावस्थाने यदेकस्य पदार्थनिष्ठत्वादन्यस्य वाक्यार्थविषयत्वं तद् भिन्नविषयत्वेन नित्याभिसम्बन्धपरिपन्थि दुष्टमेव । यथा—

"हेम्नां भारशतानि वा मदमुचां वृन्दानि वा दन्तिनां
श्रीहर्षेण तदर्पितानि गुणिने बाणाय कुत्राद्य तत् ।
या बाणेन तु तस्य सूक्तिविसरैरुट्टङ्किताः कीर्तय-
स्तत् कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानताम् ॥"

इति । या इति पदार्थविषयत्वमभिमतस्य यच्छब्दस्य । तदिति तु वाक्यार्थविषयस्तच्छब्दः । पदार्थविषये वा इति स्यात । अत्रैव यद्बाणेन तु तस्ये'ति 'ताः कल्पप्रलयेऽपि' इति च पाठे यदोर्वाक्यार्थविषयत्वे तदः पदार्थनिष्ठत्व उदाहरणं देयम् । तस्माद्या बाणेन त्विति ताः कल्पप्रलयेऽपीति च पठनीयम् । इह तु

"इन्दीवरं यदतसीकुसुमस्य वृत्त्या यत् केतकं जरठभूर्जदलानुवृत्त्या ।
यन्मन्यसे च बकुलं करवीरवृत्त्या सा साम्प्रतं मधुप ! हन्त तवैव हानिः ॥

इति न केवलं यच्छब्दो वाक्यार्थविषये, यावत्तच्छब्दोऽपि । यदि परं स वाक्यार्थो हानिपदेन पिण्डीकृत्य प्रकाशितस्तच्छब्देन परामृष्टः । अत एवात्र तच्छब्दस्य विधेयपदार्थाभिप्रायेण स्त्रीलिङ्गत्वम् । अनुवाद्याभिप्रायेण तु तत् साम्प्रतमिति । उभयथापि लिङ्गपरिग्रहः शिष्टप्रवाहे स्थितः ।

किञ्च यत्तदोर्नित्याभिसम्बन्धाद् गुणप्रधानयोश्च सम्बन्धार्हत्वात् परामृश्य एकत्र यच्छब्दवाक्ये तच्छब्दवाक्ये वा निर्दिष्ट इतरवाक्ये तदा यदा वा प्रत्यवमृश्यते । यच्छब्दवाक्ये तु निर्दिष्टेन यच्छब्दान्तरेण गुणानां प्रधानानां च परस्परमभिसम्बन्धात् । एवञ्च तथाऽपरामर्शे द्वौ दुष्टताभेदौ । यथा-

"येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनतरुच्छायासु यैः कल्पिताः ।
येषां हुङ्कृतयः कृतामरपुरक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित् प्रवादोचितम् ॥"

इति । क्षपाचारिणामिति षष्ठ्यन्तं यच्छब्देन सम्बद्धं यच्छब्दान्तरेण प्रत्यवमृष्टम् । क्षपाचारिभिरिति पाठो न्याय्यः । एवं तच्छब्दवाक्ये निर्दिष्टं यच्छब्दैः परामृ-

व्यक्तिविवेकव्याख्यानम्।

श्यमानं न दुष्यति। यथा च—

"पुण्ड्रेक्षोः परिपाकपाण्डुनिविडे यो मध्यमे पर्वणि
ख्यातः किञ्च रसः कषायमधुरो यो राजजम्बूफले।
तस्यास्वाददशाविलुण्ठनपटुर्येषां वचोविभ्रमः
सर्वत्रैव जयन्ति चिन्नमतयस्ते भर्तृमेण्ठादयः॥"

इति। अत्र द्वितीये यच्छब्दवाक्ये रसः परामृश्यो निर्दिष्टस्तच्छब्देन परामृश्यते। प्रथमे यच्छब्दवाक्ये तु यच्छब्दपरामर्शो न युज्यते द्वयोरसम्बन्धाद् यथा—

"नमोऽस्तु ताभ्यो भुवने जयन्ति ताः सुधामुचस्ताश्च कवीन्द्रसूक्तयः।
भवैकविच्छेदि कथाशरीरतामुपैति यासां चरितं पिनाकिनः॥"

इति कवीन्द्रसूक्तीनां तच्छब्दवति वाक्ये निर्दिष्टानां तच्छब्दान्तरेण परामर्शो न युक्तः।

किञ्च यत्तच्छब्दयोः स्वभावेन वाक्यभेदोत्थापकत्वेन यदेकतरवाक्येऽन्यतरदेव प्रयुज्यते तदपि दुष्टमेव। यथा—

"अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेयमाहात्म्यसारसमुदायमयः पदार्थः॥"

इत्यत्र यद्यपीत्यपेक्षितम्। न च तदेकवाक्यानां सम्बन्धुं योग्यम्।

एकत्रापि वाक्ये गुणक्रियादिगतं कल्पितं भेदमाश्रित्य प्रक्रान्तवस्तुविषयतच्छब्दप्रयोगे प्रधानक्रियायां परामृश्यस्य प्रधानत्वादेव स्वरूपेण निर्देशे गुणक्रियादिविषये तु तच्छब्देन परामर्शे न्याय्ये यद्विपर्ययकरणं तद् दुष्टमेव। यथा—

"प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत्।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः॥"

इति। 'बलिं प्रजाभ्यो जग्राह स तासामेव भूतये' इति युक्तः पाठः। तथैकविषयत्वे यत्तदोरेकस्य द्रव्यादिविषयत्वेऽन्यस्य कालादिगोचरत्वे दुष्टमेव। यथा—

"त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः।
अयि! द्वन्द्वं दिष्ट्या तदिति सुभगे! संवदति वा-
मतः शेषं यत् स्याजितमिह तदानीं गुणितया॥"

अत्र 'अतः शेषं चेत् स्यादि' ति पठनीयं चेच्छब्दस्य यदिशब्दार्थत्वात्। तथा प्रकान्तविषयत्वे तच्छब्दस्य व्यवस्थिते तद्विषये प्रकम्यमाणवस्तुगोचरत्वं दोष एव। यथा—

"ये सन्तोषसुखप्रबुद्धमनसस्तेषां न भिन्नो मदो
येऽप्येते धनलोभसङ्कुलधियस्तेषां तु दूरे नृणाम्।

व्यक्तिविवेकव्याख्याने

इत्थं कस्य कृते कृतः स विधिना तादृक् पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ "

अत्र मेरुः प्रक्रम्यमाणः स इत्यनेन परामृष्टः । एतद् वाक्यभेद उदाहरणम् । एकवाक्ये तु

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् । "

इति देयम् । तथा निर्वीप्सेनैकेनोपक्रमे सवीप्सेनान्येन परामर्शो दुष्ट एव । यथा—

"यः कल्याणबहिर्भूतः स स दुर्गतिमश्नुते । "

सवीप्सेन त्वेकेन प्रक्रमे निर्वीप्सेनान्येनोपसंहारः सवीप्सस्य प्रत्यवमृष्टत्वाद्-दुष्टोऽन्वयः किन्त्वपुष्ट एव यथा—

"कल्याणानां त्वमसि महसामीशिषे त्वं विधत्से
पुण्यां लक्ष्मीमिह मयि चिरं धेहि देव ! प्रसीद ।
यद्यत् पापं प्रतिजहि जगन्नाथ ! नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् ! भूयसे मङ्गलाय ॥ "

इति । अत्र यद्यदिति निर्दिष्टं केवलेन तच्छब्देन परामृष्टम् । एतद् यच्छब्दस्य सवीप्सस्योदाहरणम् । तच्छब्दस्य तु सवीप्सस्य निर्वीप्सेन परामर्श उदाहरणं यथा—

"क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढो दुस्सहशीतवाततपनक्लेशो न तप्तं तपः ।
ध्यातं नित्यमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत् कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः ॥ "

इति । यत्र तु सवीप्सस्य प्रक्रमे सवीप्सेन प्रत्यवमर्शस्तत्र पुष्टत्वमेव यथा—

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ "

इति । यत्र चानेकस्य सवीप्सस्य चानेकेन प्रत्यवमर्शस्तत्रापि पुष्टत्वमेव । यथा—

"यो यो यं यमवाप्नुयादवयवोद्देशं स्पृशन् पाणिना
तत्तन्मात्रकमेव यत्र स स ते रूपं परं मन्यते ।
तज्जात्यन्धपुरं हहा करिपते ! नीतोऽसि दुर्वेधसा
को नामात्र भवेद् बताखिलभवन्माहात्म्यवेदी जनः ॥ "

इति । यदि परं यं यम् इति प्रक्रमे तत्तन्मात्रकमेवेति प्रत्यवमर्शे विधेयाविमर्शः सवीप्सस्य तदर्थस्य समासे गुणीभावात् । नैतत् । मात्रग्रहणेनावधारणमुच्यते यथा—

### व्यक्तिविवेकव्याख्यानम् ।

'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे' इति । तच्चावधार्यमाणपरतन्त्रमित्यवधार्यमाणस्यैव सवीप्सस्य तदर्थस्योद्रेकाद् प्राधान्यमखण्डितमेव । पूर्वपदार्थप्राधान्येन क्वचित् सुप्सुपेति समासो दृश्यते यथा—

"निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥ "

इति । अत्र हि भूयिष्ठं निर्वाणं निर्वाणभूयिष्ठमिति समासे निर्वाणार्थस्यैव प्राधान्यं तस्य वीर्यविशेषणत्वेनावस्थितत्वाद् । न तद्वदिह तत्तन्मात्रकमिति तदर्थस्य प्राधान्यं भविष्यति । केवलं कृतेऽवधारणार्थे मात्रशब्दे किमर्थः कप्रत्ययः । तस्मिन्नपि वा कृते एवशब्दः किमर्थः । एवशब्द एव वा किं न क्रियते । नैतत् । कप्रत्ययस्य तावदत्र कुत्साप्रतिपादकत्वात् । न पौनरुक्त्यं तन्तमेवेति केवलैवशब्दप्रयोगे विक्षिप्त इव तदर्थः प्रतीयते । मात्रग्रहणे तु पिण्डितस्यैव तदर्थस्य प्रतीतिरित्यस्ति विशेषः । यदि परं द्वयोरुपादानं लोकप्रतीत्यनुसरणेन दृढीकृतावधारणप्रतीत्यर्थम् । दृश्यते हीदृशेषु द्वयोरवधारणप्रतिपादकयोः प्रयोगः । यथा—'बाला केवलमेव रोदिति गलल्लोलोदकैरश्रुभिः' । अत्रैव तदिति निर्वीप्सेन तदा निर्दिष्टं जात्यन्धपुरं निर्वीप्सेनैव यदा प्रत्यवमृश्यते । ततश्चात्रानुगुणपरामर्शान्न दोषः कश्चित् ।

तथा यत्र पूर्ववाक्ये यच्छब्दो निर्दिष्ट उत्तरवाक्ये तु न तच्छब्दो निर्दिष्टः, तत्र साकाङ्क्षत्वाद् दुष्टतैव यथा—

"मीलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृतम् । "

इति । उत्तरवाक्यगतत्वेन तु यच्छब्दप्रयोगे पूर्ववाक्ये तच्छब्दाप्रयोगे न दुष्टत्वम्, अपि तु प्राक्प्रतिपादितं पुष्टत्वमेव सामान्येनोपक्रमात् पश्चाद्विशेषस्योत्थापनात् । एतदभिप्रायेण कल्पिततत्कर्मादिविषयत्वमुक्तम् । उदाहरणं तु 'साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके' इति पूर्वश्लोकार्धपाठविपर्यये यथा । यत्तच्छब्दयोरविशिष्टेऽपि परामर्शकत्वे उत्तरवाक्ये निर्दिष्टो यच्छब्दः स्वभावत आविदूर्येण पूर्ववाक्यार्थश्लिष्टतया वस्तु परामृशति, तच्छब्दस्तु परोक्षायमाणार्थनिष्ठत्वात् वैदूर्येण । आविदूर्यं च प्रकृतार्थं प्रकृष्टतां नयद्वाक्यार्थं श्लेषयति । ततश्च तथाभूते विषये यच्छब्दस्य प्रयोगार्हत्वे तच्छब्दस्य प्रयोगोऽपुष्ट एव ।

"तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरानतरेखयोर्या ।
तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥"

यत्र 'सा वीक्ष्ये'ति यत्तदौ विपर्ययेण पठनीयौ । यथा च—

"दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न किं
नार्द्रार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि च ।

व्यक्तिविवेकव्याख्यानम् ।

कस्मिन् लब्धपदेन ते कृतमिदं क्रूरेण दग्धाग्निना
नूनं वज्रमयोऽन्य एव दहनस्तस्येदमाचेष्टितम् ॥"

अत्र अस्येति पठनीयम् । यथा च ।

"आचार्यो मे स खलु भगवानस्मदग्राह्यनामा
तस्मादेषा धनुरुपनिषत् तत्प्रसादात् क्षमोऽपि ।
अध्यासीनः कथमहमहो वर्त्म वैखानसानां
सीतापाणिग्रहणपणितं चापमारोपयामि ॥"

अत्र च 'यस्मादेषा धनुरुपनिषदि'ति पठनीयम् । एवञ्च प्रागुक्ते 'हेम्नो भारशतानी' त्यादौ 'ता बाणेन तु तस्य सूक्तिविसरैरुट्टङ्किताः कीर्तयो याः कल्पप्रलयेऽपि यान्ति न मनाङ् मन्ये परिम्लानतामि'ति पठनीयम् । अपि च परामृश्यमनुक्त्वा यच्छब्देन च वाक्यार्थोपक्रमे तच्छब्दवति परामृश्यनिर्देशे पूर्ववाक्यार्थं परामृश्यमस्पृशन्ती उपप्लवमाना प्रतीतिरिति वाक्यार्थप्रतिपत्तिविप्रकर्षादपुष्टत्वम् । यथा—

"पादाहतं यदुत्थाय मूर्धानमधिरोहति ।
स्वस्थादेवावमानेन देहिनस्तद्वरं रजः ॥"

अत एवात्र श्लोकार्धयोर्विपर्ययपाठे पुष्टत्वमेव । तथा पूर्ववाक्यार्थे निर्दिष्टस्यार्थस्योत्तरवाक्यार्थे सर्वनाममात्रेण परामर्शे न्याय्ये यः स्वशब्दसहितस्य सर्वनाम्नो निर्देशः स दुष्ट एव । यथा—

"उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावः स्फुरदवधिमुद्रामुकुलितः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥"

इति । अत्र स च निधिरपामि'ति सस्वशब्दः सर्वनाम्नो निर्देशः । एवं 'रामगिर्याश्रमेष्वि'ति प्रकृते 'तस्मिन्नद्रौ कतिचिदि' त्यत्र ज्ञेयम् । अत्र तु केचित् समर्थयन्ते—'रामगिर्याश्रमेष्वि'ति रामगिरिः समास उपसर्जनीभूतो बुद्धावुद्रेकेणानवभासात् कथं सर्वनाम्ना परामृश्यते "सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्ये"ति प्रधानभूतरामृश्याभिप्रायेण स्थितं यथा "सम्यग्ज्ञानपूर्विका सर्वपुरुषार्थसिद्धिरिति सद्व्युत्पाद्यते" इति । अत्राद्राविति निर्दिश्यमानेमद्रिमात्रप्रतीतेर्नं प्रकृतमद्रिं गमयेत् । तस्मादुभयमत्रोपादेयं यथा 'अथ शब्दानुशासनम् । केषां शब्दानाम्' इति । गिरिशब्देन गिरौ प्रक्रान्त अद्रिशब्देन पर्यायान्तरेण त्वागतमासमञ्जस्यं दुष्परिहरमेवेति । उदन्वच्छिन्ना भूरित्यत्र तु उदन्वतः परमृश्यस्य नैकट्याद्योग्यत्वाच्च भुवः स्त्रीत्वेन स इति परामर्शानर्हत्वाच्च सर्वनामपरामर्श एव युक्तो न पुनः स्वशब्दगोचरत्वमित्यत्र दुष्टतैव ।

व्यक्तिविवेकव्याख्यानम् ।

किञ्च समुदायस्य कस्यचित् केनचिद्वाक्येन निर्देशे वाक्यान्तरे तदवयवस्य निर्धारणे तस्य समुदायस्य निर्धारणविषयप्रतीतये यच्छब्देन निर्देशे कर्त्तव्ये निर्धार्यमाणस्यावयवस्य निर्देशो दुष्ट एव । यथा--

"तस्मादजायत मनुर्नवराजबीजं यस्यान्वये स सगरः स भगीरथश्च ।
एकेन येन जलधिः परिखानितोऽयमन्येन सिद्धसरिता परिपूरितश्च ॥"

अत्र स सगरः स भगीरथश्चेति यन्निर्दिष्टं तस्यैकेत्यादिना निर्धारणं विहितम् । निर्धारणं च जातिगुणक्रियाभिः समुदायादेकेदेशस्य पृथक्करणम् । नचात्र समुदायः केनचित्पदेन निर्दिष्टः । यच्चैकेनेति निर्दिष्टं तन्न समुदायः, अपि त्वेकदेशः । ततश्च निर्देश्यानिर्देशादनिर्देश्यनिर्देशाच्चात्र दुष्टत्वम् । एवञ्च समुदायस्यैव निर्धारणविषयस्य यच्छब्देन निर्देशे कर्त्तव्ये 'एको ययोर्जलनिधीन् निचखान सप्त गाङ्गैः पयोभिरभितर्पितवान् द्वितीयः' इति पाठः श्रेयान् ।

क्वचिद्यत्तच्छब्दावग्रहणेन विध्यनुवादभावेन वाक्यार्थप्रस्तावे यदन्तरान्यथाकरणं तत्र दुष्टत्वं यथा--

'यत् त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरम्'

इति । अत्र प्रथमतृतीययोः पादयोर्यत्तच्छब्दपरिग्रहेण विध्यनुवादभावेनोपनिबन्धः । द्वितीयपादगतत्वेन तदुल्लङ्घनं दोषः । इन्दीवराणां राजहंसानां च बहुत्वात् सीतासम्बन्धिवस्तूपमितयोरिन्दीवरराजहंसयोर्व्यावृत्त्यर्थं विध्यनुवादभावपरिग्रहः । चन्द्रस्य त्वेकत्वात् तदकारणमिति केचित् । तदसत् । चन्द्रस्यापि द्वितीयाचन्द्रादिभेदेन बहुत्वसम्भवात् तत्रापि विध्यनुवादभावो युक्तः । इन्दीवराणां व्यक्तिभेदेन मुख्यो भेदः । चन्द्रस्य पुनरेकव्यक्तिरूपस्य कालभेदादवस्थाभेदाच्च भिन्नत्वममुख्यमिति चेन्न । भिन्ना एव चन्द्रव्यक्तयः । अन्यो हि द्वितीयाचन्द्रोऽन्यश्च पूर्णचन्द्रः । अतश्चैवं द्वितीयाचन्द्रादिव्यावृत्त्या पूर्णचन्द्रप्रतीत्यर्थं मुखच्छायानुकारीति विशेषणं दत्तम् । नहि शशिशब्दः पूर्णचन्द्राभिधायी तस्य चन्द्रमात्रवाचकत्वात् । सङ्ख्याव्यवहारेषु चन्द्रस्यैकत्वप्रतीतिरिति चेत् । क्वचिज्जातिव्यवहारेष्वपीन्दीवरादीनामेकत्वं सिद्धम् । तस्मात् कविव्यवहारे चन्द्रगतत्वेनानेकत्वस्य व्यवहारात् तदाश्रयेणेह विध्यनुवादभावः श्रेयान् ।

किञ्चास्थानविनिवेशनं तच्छब्दस्य प्रतीतिविप्रकर्षायैव । यथा—

"मसृणचरणपातं गम्यतां भूः सदर्भा विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः"

इति । अत्र 'विरचय सिचयान्तमि'त्यत्र तच्छब्दो हेत्वर्थो विनिवेशयितव्यस्तृतीयपादादौ निवेशितः । नच तत्र तस्योपयोगः । कुतस्तत्र प्रतीतिकुण्ठत्वमुत्पादयतीति । क्वचित् प्रधानक्रियायास्तदादिसर्वनाम्ना परामृष्टस्य गुणक्रियायां स्वशब्देनोपादानं दुष्टमेव । यथा 'प्रणयसत्ने नमसी'ति । अत्र तस्मै इति सर्वनाम्ना पूर्वप्रका-

अपि च अम्बिकाकेसरीत्यत्र षष्ठीसमासो नोपपद्यते यतः सर्वेषामेव समासानां तावत् प्रायेण विशेषणविशेष्याभिधायिपदोपरचितशरीरत्वं नाम सामान्यं लक्षणमाचचक्षिरे विचक्षणाः[१] । इतरथा तेषां समर्थतानुपपत्तेः।

स च विशेषणविशेष्यभावो द्विधैव सम्भवति । समानाधिकरणो व्यधिकरणश्चेति । तत्राद्यः कर्मधारयस्य विषयः । यत्र तु द्वे बहूनि वा पदान्यन्यस्य पदस्यार्थे विशेषणभावं भजन्ते सा बहुव्रीहेः सरणिः । तत्रैव यदा सङ्ख्यायाः प्रतिषेधस्य च विशेषणभावो भवेत् तदा स द्विगोर्नञ्स-

व्यक्तिविवेकव्याख्यानम् ।

न्तो मेघः परामृश्यत उतैतच्छ्लोकगतो जीमूतः । तत्राद्ये पक्षे जीमूतग्रहणमनर्थकं प्रधानक्रियायां तदा परामृष्टस्य पूर्वप्रक्रान्तस्यैव मेघस्यार्थतः सम्बन्धयोग्यत्वात् । न हि यावतां येन सम्बन्धस्तावतां प्रत्येकं निर्देशः क्रियते । एकत्र कृतोऽन्यत्राकाङ्क्षादिनोपजीव्यते । तस्माज्जीमूतग्रहणं न कर्त्तव्यं, कृतं प्रत्युत वस्त्वन्तरप्रतीतिं जनयद्वैरस्यमावहति । अथ तच्छब्देनैतच्छ्लोकगतो जीमूतः प्रत्यवमृश्यते । तदसत् । सर्वत्रात्र प्रकरणे पूर्वप्रक्रान्तस्यैव मेघस्य परामर्शः स्थित इतीहापि तथैव परामर्शो न्याय्य इति पुनरपि जीमूतग्रहणमनर्थकमेव ।

इत्थं द्वितीयं विधेयाविमर्शं विविच्य तृतीयमप्यत्रैव श्लोके प्रपञ्चयितुमुपक्रमते अपि चेत्यादिना । प्रायेणेति द्वन्द्वं वर्जयित्वा तत्र युगपदधिकरणवचनतया सामर्थ्यं प्रकारान्तरेण समर्थितम् ।

तत्राद्य इति 'तत्पुरुषः समानाधिकरणः कर्मधारय' इति (१-१-४२) वचनात् । 'बहुव्रीहिः समानाधिकरणानाम्' इति वचनात् प्रायेण बहुव्रीहिः समानाधिकरणविषय एव । सुसूक्ष्मजटकेशादौ तु व्यधिकरणानामपीष्यते । तत्रैव समानाधिकरणे पदार्थे । यदा सङ्ख्याया इति 'सङ्ख्यापूर्वो द्विगुः' (२-१-५२) इति वचनात् । प्रतिषेधस्येति 'नञ्' (२-२-६) इति नञ्सूत्रारम्भात् ।

मधुसूदनीविवृतिः ।

एवं यत्तच्छब्दविषयं विधेयस्य स्वस्वरूपतोऽनुपस्थित्याख्यं विधेयाविमर्शमुदाहृत्य पुनर्व्याधुट्य समासेन विधेयस्योपसर्जनीकरणात्मकः स उदाह्रियते–अपि च अम्बिकाकेसरीत्यत्रेति। प्रायेणेति द्वन्द्वं विहाय । तत्र द्वन्द्वे "धवखदिरौ छिन्धि" इत्यत्र छेदनक्रियायाः युगपत् धवखदिररूपाधिकरणवचनतया सामर्थ्यं प्रकारान्तरेण समर्थितं भवति । विशेष्यविशेषणभावस्तत्र नास्तीति भावः । विशेषणविशेष्ययोरभिधायिभिः पदैरुपचितं स्थितिमासं शरीरं यस्य तस्य भावस्तत्वम् सर्वेषामेव समासानां सामान्यं निर्विशेषं लक्षणम् विचक्षणा आचचक्षिरे इत्यन्वयः। इतरथा विशेषणविशेष्याभिधायिपदोपरचितशरीरत्वाऽस्वीकारे तेषां समासानां समर्थतायाः संगतार्थताया अनुपपत्तेः ।

तत्र द्वयोर्मध्ये आद्यः समानाधिकरणः विशेषणविशेष्यभावः कर्मधारयस्य विषयः

मासस्य च विषयः ।

द्वितीयः प्रकारः कारकाणां सम्बन्धस्य च विशेषणत्वाद् बहुविधः । स तत्पुरुषस्य पन्थाः । तत्रापि यदाऽव्ययार्थस्य विशेष्यता स्यात् तदाऽसावव्ययीभावस्य मार्गः ।

तदेवमेषां समासानां विशेषणविशेष्योभयांशसंस्पर्शित्वेऽपि यदा विशेषणांशः स्वाश्रयोत्कर्षाधानमुखेन वाक्यार्थचमत्कारकारणतया प्राधान्येन विवक्षितो विधेयधुरामधिरोहेद् इतरस्त्वनूद्यमानकल्पतया न्यग्भावमेव भजेत् तदासौ न वृत्तेर्विषयो भवितुमर्हति । तस्यां हि स प्रधानेतरभावस्तयोरस्तमियादित्युक्तम् । तच्चैतद्विशेषणमेकमनेकं वास्तु न तयोर्विशेषः कश्चित् ।

---

## व्यक्तिविवेकव्याख्यानम् ।

द्वितीय इति व्यधिकरणः । कारकाणामिति 'कर्तृकरणे कृता बहुलम्' इत्यादिना । सम्बन्धस्येति षष्ठी इत्यादिना तत्रापि कारकसम्बन्धयोगे अधिस्त्रि उपकुम्भमित्यादौ । स्वाश्रयो विशेष्यम् । विधेयधुरामिति शब्दवृत्ते यो विधेयः तस्य कक्ष्यां वास्तवीं विधेयतामित्यर्थः । अनूद्यमानकल्पतयेति । शाब्दं प्राधान्यमनपेक्ष्य वास्तवेन प्राधान्येनेत्यर्थः । अस्तमियादिति एकार्थीभावात् विभक्तत्वेनाप्रतीतेरित्यर्थः ।

## मधुसूदनीविवृतिः ।

तत्पुरुषः समानाधिकरणः कर्मधारयः, इत्युक्तेः । बहुव्रीहेः सरणिः अर्थात् बहुव्रीहिरपि समानाधिकरणः "अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामिति च फलितमित्युक्तेः । यद्यपि कण्ठेकाल इत्यादिव्यधिकरणानामपि स दृश्यते तथापि स काचित्क इत्यनुसन्धेयम् । तत्रैव समानाधिकरण एव संख्याया विशेषणभावो द्विगोविषयः । संख्यापूर्वो द्विगोरित्युक्तेः । यः प्रतिषेधस्य स नञ्समासविषयः "नञ्" इति पृथक्सूत्रणात् । द्वितीयो व्यधिकरणः ।

कारकाणामिति कर्तृकरणे कृता बहुलमिति समसनात् । सम्बन्धस्य षष्ठीत्यादिनोक्तत्वात् । तत्राऽपि कारकसम्बन्धयोगेपि । यथा अधिस्त्रि उपकुम्भमित्यादौ ।

विशेष्यविशेषणरूपमुभयाशं संस्प्रष्टुं शीलमस्येति स विशेष्यविशेषणोभयांशसंस्पर्शी तस्य भावस्तत्त्वेऽपि । स्वाश्रयो विशेष्यम् तत्र उत्कर्षाधानं मुखं द्वारं यस्य तेन प्राधान्येन विधेयधुराम् विधेयस्य वास्तवीं श्रेणीम् विधेयतामित्यर्थः । इतरस्तु विशेष्यांशस्तु शब्दबललभ्यं प्राधान्यमनाकांक्ष्य वस्तुगतेनाप्राधान्येन हेतुना अनूद्यमानकल्पतया न्यग्भावम् गुणत्वम् । असौ विशेषणांशः । वृत्तेः समासस्य । तस्यां वृत्तौ हि तयोः विशेष्यविशेषणयोः स वैवक्षिकः प्रधानेतरभावः अस्तमियात् पार्थक्येन न प्रतीयात् । एकार्थीभावो हि समासलक्षणमिति सिद्धान्तात् ।

प्रतीयेत

ननु च विशेषणत्वमवच्छेदकत्वाद् गुणभावः विधेयत्वं च विवक्षितत्वात् प्राधान्यं तत्कथमनयोर्भावाभावयोरिवान्योन्यं विरोधादेकत्र समावेश उपपद्यते येनैकत्र नियमेन समासो निषिध्येत अन्यत्र चोपकल्प्येत ।

नैष दोषः । विरोधस्योभयवस्तुनिष्ठत्वात् शीतोष्णादिवत् । न चेह वस्तुत्वमुभयोः सम्भवति एकस्यैव वास्तवत्वाद् । अन्यस्य च वैवक्षिकत्वेन विपर्ययात् । न च वस्त्ववस्तुनोर्विरोधः । न हि सत्यहस्तिनः कल्पनाकेसरिणश्च कश्चिदन्योन्यं विरोधमवगच्छति । फलभेदस्त्वनयोर्निर्विवाद एव ।

एकस्य हि सकलजगद्गम्यः शाब्दिकैकविषयः पदार्थसम्बन्धमात्रम् । अपरस्य पुनः कतिपयसहृदयसंवेदनीयः सन् कवीनामेव गोचरो वाक्यार्थचमत्कारातिशय इति ।

व्यक्तिविवेकव्याख्यानम् ।

एकत्रेति विधेयानुवाद्यगर्भत्वे । अन्यत्रेति सम्बन्धमात्रप्रतिपादने । उपकल्प्येतेति महाविभाषया व्यवस्थितविभाषात्वादिति भावः ।

एकस्यैवेति विशेषणगतस्य प्राधान्यस्य अन्यस्य तद्गतस्यैवाप्राधान्यस्य । एकस्य हीति, अपरस्य पुनरिति च । अत्र फलभेद इत्यत्र प्रक्रान्तं फलं सम्बन्धनीयम् । अत्र चोदयति विरोधस्योभयवस्तुनिष्ठत्वासिद्धेरत्राभाव उक्तः । तदसत् । न हि सहानवस्थानलक्षणो वस्तुगत एक एव विरोधभेदो, यः शीतोष्णादौ लब्धवृत्तिः । किन्तर्हि परस्परपरिहारस्थितितालक्षणो वस्त्ववस्तुत्वाश्रयो द्वितीयोऽप्यस्ति विरोधप्रकारः । तदा हि यदि वस्त्वाश्रयो न सम्भवति विरोधो वस्त्ववस्तुत्वाश्रयस्तु कथं न स्याद् । अतश्च स्यात् पूर्वपक्षवेलायां 'भावाभावयोरिव'

मधुसूदनीविवृतिः ।

अवच्छेदकत्वात् परिचायकत्वात् व्यावर्त्तकत्वादित्यर्थः अन्यप्रयोजनकत्वादितिपरमार्थः।अनयोः प्राधान्याप्राधान्ययोः । एकत्र विशेषणरूपे विशेष्यरूपे वस्तुनि । एकत्र वैवक्षिकप्राधान्याप्राधान्ये समासो नियमेन निषिध्येत । अन्यत्र वास्तविकप्राधान्यप्राधान्ये समास उपकल्प्येत ।

इह एकस्मिन् विशेष्ये विशेषणे वा उभयोः प्राधान्याप्राधान्ययोः । एकस्य विशेष्यनिष्ठप्राधान्यस्य विशेषणगताप्राधान्यस्य च वास्तवत्वात् । अन्यस्य विशेष्यनिष्ठस्याप्राधान्यस्य विशेशणनिष्ठस्य प्राधान्यस्य वैवक्षिकत्वेन विवक्षाधीनत्वेन विपर्ययात विपर्यासात् ।

एकस्य वास्तविकस्य प्राधान्याप्राधान्यस्य । अपरस्य वैवक्षिकस्य ।वास्तवस्य प्राधान्याप्राधान्यस्य ।

अत्र क्रमेणोदाहरणानि तत्र कर्मधारये यथा—

"उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥"

इत्यत्र विगलितकबरीभारत्वमलसलसद्बाहुत्वं चांसवपुषोर्विशेषणे रतेरुद्दीपनविभावतापादनेन वाक्यार्थस्य कामपि कमनीयतामावहत इति प्राधान्येन विवक्षितत्वाद् न ताभ्यां सह समासे कविना न्यग्भावं गमिते। यथा चात्रैव तत्कालकान्तिद्विगुणितसुरतप्रीतित्वं हेतुभावगर्भं विशेषणं शौरेरुचिताचरणलक्षणमतिशयमादधद्विधेयतया प्राधान्येन विवक्षितमिति न तेन सह समासे निमीलितम्।

---

व्यक्तिविवेकव्याख्यानम्।

त्युक्तम्। नैष दोषः। वस्त्ववस्त्वाश्रयस्य विरोधस्य तादात्म्यनिषेधे व्यापारात्। यदि नाम प्राधान्यं, तस्यामेव कक्ष्यायां स्वयमप्राधान्यं न स्याद् अप्राधान्ये वा प्राधान्यम्। प्राधान्यविधेये पुनरपेक्षान्तरेणाप्राधान्यं कथं न स्यात्। न स्याद्, यदि शीतोष्णवद् द्वयोर्वस्तुत्वं स्यात्। न चात्रैतदस्ति वैवक्षिकस्यावस्तुत्वात्। यथा राजपुरुष इत्यत्र राज्ञो वैवक्षिकमेव प्राधान्यं वास्तवं पुनरप्राधान्यमेव तद्वदत्रापि द्रष्टव्यम्। तदयमत्र पिण्डार्थः संसर्गनिषेधोऽत्र कर्तव्यः। स च वस्तुद्वयनिष्ठ इति द्वयोरत्राभावान्नैकेनापरत्र प्रतिषेध इति।

मधुसूदनीविवृतिः।

उत्तिष्ठन्त्या इति। रतान्ते सुरतावसाने एकेन पाणिना हस्तेन उरगपतौ शेषे भरं कृत्वा अन्येन पाणिना वासः परिधानवस्त्रं धृत्वा उत्तिष्ठन्त्याः, विगलितं सुरतक्रीडनात् विशृंखलितं कबरीभारम् केशपाशम् अंसे स्कन्धयोरित्यर्थः वहन्त्याः धारयन्त्या लक्ष्म्या अलसेन लसञ्छोभमानो बाहुर्यस्मिंस्तद्वपुः। भूयः पुनः तत्कालस्य लक्ष्मीकर्तृकोत्थानवहनदर्शनकालस्य कांत्या द्विगुणिता वृद्धिंगता सुरतप्रीतिर्यस्य तेन शौरिणा कृष्णेन आलिङ्ग्य शय्यां नीतं सत् वो युष्मान् पुनातु पापात्पातु। इत्यन्वयः।

विशेषणे क्रमशः इति शेषः। कमनीयतां सहृदयस्पृहणीयत्वम्। इतिहेतौ। इति वाक्यार्थसुन्दरीकरणरूपात्। एषः प्राधान्यविवक्षायां विशेषणयोर्हेतुः। ताभ्याम् अंसवपुर्भ्यां सह। समासे वृत्तौ न्यग्भावं गुणीकृतार्थत्वं न गमिते न प्रापिते। हेतुभावगर्भं हेतुत्वमभ्यगं शौरेः कृष्णस्य विशेषणम्। उचिताचरणलक्षणम् आलिङ्गनेन शय्यानयनरूपोचिताचरणस्वरूपम्। अतिशयं चमत्कारम्। आदधत् कुर्वत्। तेन शौरिणा सह समासे वृत्तौ न निमीलितं न्यक्कृतम्।

पदमेकमनेकं वा यद्विधेयार्थतां गतम् ।
न तत्समासमन्येन न चाप्यन्योन्यमर्हति ॥ ११ ॥

तत्रैकमुदाहृतमेव । अनेकं यथा—

"अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥" साधुरिव पाठः ।

इति । यथा च—

"विद्वान् दारसखः परं परिणतो नीवारमुष्टिंपचः
सत्यज्ञाननिधिर्दधत् प्रहरणं होमार्जुनीहेतुतः ।

---

व्यक्तिविवेकव्याख्यानम् ।

अन्येनेति विशेष्याभिधायिनेत्यर्थः । अन्योन्यमिति । परस्परविशेषणानां यद्यपि 'विशेषणं विशेष्येण' (२-१-५७) इति विशेष्येणैव समास उक्तः, तथापि 'काणखञ्जादिषु सिद्धं विशेषणविशेष्ययोर्यथेष्टत्वाद्' इति वचनेनैकस्य विशेष्यत्वविवक्षामाश्रित्य परस्परं विशेषणानां समासः समर्थितः । तदभिप्रायेणान्योन्यमिति सम्भावना

दारसख इति दाराणां सखेति तत्पुरुषः कर्तव्यः । बहुव्रीहौ 'राजाहस्सखिभ्य' (५-४-९१)इति टच् न स्यात् ।

मधुसूदनीविवृतिः ।

पदमिति । यत् एकम् पदम् विधेयतां गतम् वैवक्षिकप्राधान्येन विधेयस्वरूपत्वमासन्नत् भवेत् तत्पदम् अन्येन वास्तविकप्राधान्यविशेष्यवाचकपदेन सह समासं नार्हति । अनेकं च तादृशं पदं अन्योन्यं परस्परं समासं नार्हति । अत्र यद्यपि विशेषणं विशेष्येण बहुलमिति पाणिन्याचार्यानुशासनात् विशेष्येणैव सह विशेषणस्य समासः न परस्परं विशेषणानां तथाऽपि तत्र आपेक्षिकविशेष्यविशेषणभावः वर्त्तते इत्यभिप्रायेण अन्योन्यसमाससम्भावना कृतेति बोध्यम् ।

अवन्तिनाथोऽयमिति । उदग्रबाहुः पीनदीर्घभुजः । विशालवक्षाः विस्तृतवक्षःस्थलः । तनुवृत्तमध्यः सूक्ष्मवर्तुलमध्यदेशः । इदं विशेषणम् उष्णतेजसः साम्याय वर्तुलत्वे परं क्षीणमेव मध्यदेहस्य वर्णनचिमुतम् । अयं पुरस्तादुपविष्टः अवन्तीश्वरः विभाति । क इव त्वष्ट्रा प्रजापतिना देवस्थपतिना विश्वकर्मणा चक्रभ्रममारोप्य यत्नेन उल्लिखितः दर्शनस्पर्शनयोग्यीकृतः उष्णतेजा इव सूर्य इव । विभाति शोभते । अत्र उदग्रबाहुप्रभृति राज्ञोऽवन्तिनाथस्य अनेकं विशेषणं तस्य प्रतापशालित्वप्रतिपादकतया प्राधान्येन विवक्षितमिति न तेन सह समासे गुणीकृतम् । एवमुत्तरस्मिन्नुदाहरणजाते बोध्यम् ।

विद्वानिति । रे दुः क्षत्रिय ? शान्तं पापम् प्रतिहतममङ्गलम् । त्वया मम न अन्यतपस्विनोऽकार्ण्यस्य किन्तु सर्वलोकानुपसंहर्तुं समर्थस्य अनेन तत्र नाशोऽवश्यं

रे दुःक्षत्रिय ! किं त्वया मम पिता शान्तं मया पुत्रवान्
नीतः कीर्त्यर्थवशेषतां तदिह ते धिग् धिग् सहस्रं भुजान् ॥"

इति । यथा वा—

"राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च ।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग् वक्षसः ॥"

मधुसूदनीविवृतिः ।

भावीति भावः । पिता कीर्त्यर्थवशेषतां नीतः मारितोऽर्थात् । तत्तस्मात् ते सहस्रं भुजान् धिग् धिग् कीदृशः पिता विद्वान् न मूर्खः पृथिव्या भारभूतः । दाराणां सखा अतश्च तस्य नैकाकिनो मारणं पतिव्रतायाः पत्युः सहानुगमनविधेः न केवलं ब्रह्महत्या स्त्रीहत्या अपि अकाले दुर्मरत्वात् । परं परिणतः अत्यन्तं वृद्धः कर्मणा त्वां वारयितुमसमर्थः । दीन इत्यर्थः । नीवारमुष्टिपचः अल्पभोजनेन शरीरशोषकस्य तपस्यत इत्यर्थः । एतेन तपोव्ययमकुर्वता न सामर्थ्येऽपि प्रतिषेधितः । सत्यज्ञाननिधिः ब्रह्मज्ञः । होमार्थाया अर्जुन्या गोः रक्षाहेतोः प्रहरणमायुधं दधत् । ब्रह्मज्ञस्य तपसि स्थितस्य आयुधधारणं निषिद्धमपि गवार्थं अदोषः । पुनश्च मया पुत्रवान् मयि पुत्रे जीवति इदं हननम् । फलमेतस्यावाप्स्यसि इतः परं न भविष्यसि त्वम् । विद्वान् दारसखेत्यादीनि भृगोर्विशेषणानि ईदृशस्य तपस्विनो हननं नितरामनुचितमिति वाक्यार्थस्य कामपि चमत्कृतिमापादयन्ति इति न तेन समासे गुणीकृतानि तथा प्राप्तप्राधान्यानि एव ।

**राज्ञो मानधनस्येति** । राज्ञः राजा प्रकृतिरञ्जनादिति विशेषणेन प्रकृतिसहायत्वं अनेकाकित्वं द्योत्यते । मानधनस्य मानसर्वस्वस्य । मानस्यैव एतत्सर्वोपद्रवमूलत्वमिति गम्यते । कार्मुकभृतः धनुर्धारिणः । एतेन समर्थत्वं कर्मक्षमत्वरूपं सूच्यते । दुर्योधनस्याग्रतः स्थितस्य साक्षात् वर्त्तमानस्येत्यर्थः । षष्ठीचानादरेऽत्र बोध्या । अतः तद्विशिष्टं तमनादृत्येत्यर्थः । कुरुबान्धवस्य अस्मत्सहोदरत्वेऽपि विहायाऽस्मान् कुरुपक्षमास्थितस्य । कर्णस्य प्रत्यक्षं मिषतः दर्शकस्य । कुरुबान्धवेति शल्यस्याऽपि विशेषणम् । अर्थात् अस्मन्मातुलत्वेऽपि तत्पक्षाश्रितस्य । शल्यस्य मद्रराजस्य मिषतः तमप्यनादृत्येत्यर्थः । पाण्डवानां वध्वाः केशानाम् अम्बरस्य च आकर्षिणः तस्य दुःशासनस्य जीवत एव न मृतस्य जीवन्तं गृहीत्वाऽनादृत्येत्यर्थः । एतेन दुःशासनोऽपि न स्वमरक्षयदित्यर्थः । तीक्ष्णैः करजैः नखैः क्षुण्णात् भेदितात् वक्षसः उरस्तः कोष्णमीषदुष्णमासृक् मया अद्य पीतम् ।

अत्राऽपि दुर्योधनादीनां विशेषणानि प्रकृतार्थपरिपोषकतया आहितविच्छित्तीनि न तैः सह समासे न्यग्भावितानि ।

यथा च—

"हे हस्त ! दक्षिण ! मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य पाणिरसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥"

"एवमङ्गराज ! सेनापते ! राजवल्लभ द्रोणापहासिन ! रक्ष भीमाद् दुश्शासनम्" इत्यादौ द्रष्टव्यम् ।

विध्यनुवादभावोऽपि वक्ष्यमाणनयेन विशेषणविशेष्यभावतुल्यफल इति तत्रापि तद्वदेव समासाभावोऽवगन्तव्यः । यथा—

"चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

हे हस्तेति । 'मृतस्य शिशोर्द्विजस्ये' त्यत्र समासः शङ्कितः । 'रामस्य पाणिरसी' ति तु षष्ठीसमास उदाहरणम् । अत्र क्वचित् कर्तॄणां कर्मणाञ्च प्रथमान्तानां क्वापि सम्बन्धिनां कर्मणाञ्च षष्ठ्यन्तानां कुत्राप्यामन्त्रणानां समासः शङ्कितः ।

वक्ष्यमाणनयेनेति । 'व्यासः पाराशर्यः' इत्यादिविचारेषु । चापाचार्य इति । अत्र हि त्रिपुरविजयित्वाद्यनुवादेन चापाचार्यत्वादिविधिः । अनूद्यमानश्चार्थो विधेयस्योत्कर्षमावहन् प्रतीयते ।

मधुसूदनीविवृतिः

हे हस्त ? दक्षिण ? इति । हे दक्षिण ? हस्त ? मृतस्य द्विजस्य शिशोः जीवातवे शूद्रमुनौ कृपाणं विसृज यतो निर्भरगर्भभिन्नसोताविवासनपटो रामस्य पाणिरसि ते करुणा कुतः ।

अत्र मृतस्य शिशोर्द्विजस्येत्यत्र समासकरणे वाच्यार्थचमत्कारो व्याहतः स्यात । रामस्य पाणिरिति तु समासाभाव एव उचित इति बोध्यम् ।

अङ्गराजेति । कर्णं प्रत्यश्वत्थाम्नः सोत्प्रासमुक्तिः वेण्याम् । अत्र त्रिभिर्विशेषणैः कर्णगतासम्भाव्यमानदुःशासनकर्मकपरित्राणपात्रत्वलक्षणमकिञ्चित्करत्वं गर्भीकृत्य उपहस्यते अश्वत्थाम्ना कर्णः । एतादृशशक्तिविशिष्टस्त्वमेनं दुःशासनं भीमाद्रक्ष । प्रकृतार्थपुष्टिसमर्पकत्वात्त्रयाणां न समासः ।

तत्राऽपि विध्यनुवादभावेऽपि । तद्वदेव विशेष्यविशेषणभाववत् ।

चापाचार्य इति । हे राम ? त्रिपुरविजयी महादेवः चापाचार्यः । कार्तिकेयः स्कन्दः विजेयः विजितः । शस्त्रेण व्यस्तः दूरमुत्सारितः उदधिः जलधिः सदनम् ।

  

इति । प्रत्युदाहरणं यथा—

"तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।
स्वञ्च संहितममोघसायकं व्याजहार हरसूनुसन्निभः ॥"

इति । तत्राप्यमोघमाशुगमिति युक्तः पाठः । यथा वा—

"स्रस्तां नितम्बादवलम्बमाना पुनः पुनः केसरपुष्पकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ॥"

इति । अत्र मौर्वीं द्वितीयामिति युक्तः पाठः । न चैवं वृत्तभङ्गाशङ्का

---

मधुसूदनीविवृतिः ।

पृथिव्यां हन्तकारे दत्तायां स्वनिवासभूम्य समुद्रः शरेणोत्सारित इति पुराणगाथा । इयं भूः हन्तकारः षोडशग्रासपरिमिता अतिथये देया भिक्षा । यथा हन्तकारः—ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् । अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः इति लक्षितः अतिथये दीयते तथैव कश्यपाय दत्ता एतत्सर्वं प्राशस्त्यमस्ति । किमु किन्तु रेणुकाकण्ठबाधां कृतवता तव परशुना बद्धस्पर्धः ममायं चन्द्रहासः लज्जते । बालरामायणे रावणस्योक्तिः परशुरामं प्रति। अत्र त्रिपुरविजयिचापाचार्यकः विजितकार्तिकेयः इत्येवं समासः कर्त्तुं पार्यते । परन्तु पृथग्विशेषणैरसमस्तः यथास्य देवासुरमनुष्यजेतृत्वेन समुद्भासते चमत्कृतिः, न तैस्तदवस्थैरित्यसमास एव ज्यायान् । त्रिपुरविजयी यस्य गुरुरर्थात् महतः शिष्योऽसि इत्येवं रीत्या त्रिपुरविजयित्वाद्यनूद्य चापाचार्यादीनां विधिः प्रतीयते कृते च समासे नैवम् ।

अत्र प्रत्युदाहरणं यथेत्यादिः उपगतमस्माभिरित्यन्तः पाठः इत्यन्तश्लोकावित्यतोऽग्रे नियोजितः समीचीनत्वमाप्नुयात् । एवं चाग्रे विसंस्थुले पाठे सावहितैर्भाव्यम् ।

प्रत्युदाहरणं कृतसमासस्य विध्यनुवादभावस्येति शेषः । तं कृपामृदुरिति । कृपाहेतुको मृदुः ब्राह्मण इति कृपाकारणम् । आत्मनि स्वविषये रामे स्खलितवीर्यम् अर्थात् मत्तोऽयं पराजित इति रामो वीक्ष्य । हरसूनुः स्कन्दः तत्तुल्यः । संहितं कृतसन्धानम् । स्वं स्वीयम् । सायकम् अमोघं अनिष्फलं व्याजहार उक्तवानिति । अत्र सायके अमोघत्वं विहितं तच्च समासे न्यक्कृतमिति अनुचितमेव ।

स्रस्तां नितम्बामिति । कुमारे हरं प्रत्यभियोगे सहायभूता पार्वती अदृश्यत कामेनेति समन्वयः । कीदृशी नितम्बात्स्रस्तां विगलिताम् । केसरो वकुलस्तत्सम्बन्धिपुष्पमालारूपां काञ्चीं पुनः पुनर्वारं वारमवलम्बमाना नितम्बे निवेशयन्ती । अत्रोत्प्रेक्षते । स्थानविदा अर्थात् प्रकर्षमाधारवशं गुणानामिति जानता स्मरेण न्यासीकृतां निक्षेपीकृतां कार्मुकसम्बन्धिनीं द्वितीयमौर्वीमिव । अत्र मौर्व्यामुत्प्रेक्ष्यं द्वितीयत्वं विधेयम् किन्तु तत् कर्मधारयसमासे परपदार्थप्राधान्याद्गुणीभूतम् ।

नचैवमिति। एवं मौर्वीं द्वितीयामिवेति पाठकरणे वृत्तभङ्गस्य उपेन्द्रवज्रावृत्तस्य स्थाने इन्द्रवज्रावृत्तस्य करणात् प्रक्रान्तछन्दोभङ्गस्य आशङ्का न कार्या ।

कार्या । तस्य श्रव्यतामात्रलक्षणत्वात् । तदपेक्षयैव वसन्ततिलकादाविव गुर्वन्ततानियमस्य सकर्णकैरप्यनादृतत्वात् । अत एव यमकानुप्रासयोरिव वृत्तस्यापि शब्दालङ्कारत्वमुपगतमस्माभिः । यथा च—

"कारणगुणानुवृत्त्या द्वौ ज्ञाने तपसि चातिशयमाप्तौ ।
व्यासः पाराशर्यः स च रामो जामदग्न्य इह ॥"

इति । ननु यदा विशेषणविशेष्ययोर्विध्यनुवादभावो नाभिमतस्तदा स्वरूपमात्रविवक्षायां नीलोत्पलादिवदत्रापि समासः प्रसज्येत न चेष्यत इत्यत्र हेतुर्वाच्यः । उच्यते । पाराशर्यत्वाद्यसाधारणविशेषणसामर्थ्यावसिता व्यासादय इति तेषां पर्यायरूपत्वात् प्रयोग एव तावदनुपपन्नः किं पुनः समास इति पर्यायत्वमात्रं तदभावे हेतुर्नान्यः । तद्यथा—

व्यक्तिविवेकव्याख्यानम् ।

नचैवमिति उपेन्द्रवज्रास्थाने इन्द्रवज्राप्रयोगात् । उपगतमस्माभिरिति । 'दुःश्रवत्वमपि वृत्तस्य शब्दानौचित्यमेव । तस्याप्यनुप्रासादेरिवे' त्यादि वदद्भिः ।

अत्र 'यथा च कारकगुणे' त्यादिग्रन्थः अन्तरश्लोकपर्यन्तः 'प्रत्युदाहरणं यथा तं कृपामृदुरि' त्यतः पूर्वं पठितः सामञ्जस्यं भजते, प्रत्युदाहरणं चेति उदाहरणग्रन्थः समञ्जस एव स्यात । दृश्यते च पुस्तकेष्वेवं पाठः । तस्मादत्र जागरणीयम् ।

कारणमत्र पराशरो जमदग्निश्च ।

तदभावे हेतुरिति तच्छब्देन समासः परामृष्टः । ततश्चात्र पाराशर्यादिपदं व्यासादावुत्कर्षमर्पयत् पुनरुक्तम् ।

मधुसूदनीविवृतिः ।

तस्य वृत्तस्य । तदपेक्षयैव श्रव्यतापेक्षयैव । गुर्वन्ततानियमस्य अन्त्यवर्णनिष्ठगुरुत्वव्यवस्थायाः सकर्णकैरपि वृत्तविशषज्ञैरपि अनादृतत्वात् अस्वीकृतत्वात् ।

तस्यापीति । दुःश्रवत्वस्य शब्दानौचित्यकथकनप्रस्तावे तस्यापि वृत्तस्यापि अनुप्रासादेरिवेतिवदद्भिरस्माभिरुपगतम् ।

यथा चेति पुनर्मुख्योदाहरणं समासाभावस्य प्रस्तौति । कारणगुणानुवृत्त्येति कारणगुणाः कार्यगुणानारभन्ते इति नयेन कारणस्य हेतोः पराशरस्य जमदग्नेश्च गुणानामनुवृत्या द्वौ ज्ञाने तपसि च अतिशयमुत्कर्षमाप्तौ गतौ । कौ द्वौ तावित्याह—व्यास इति । स पाराशर्यो व्यासः । इह जामदग्न्यो रामः । अत्र व्यासपाराशर्यपदयोः रामजादग्न्यपदयोश्च समासाभावः समुचितमुत्कर्षमादधत्प्रकृतेऽनुभूयते ।

नन्वित्यादिना समासाभावविषये शङ्कते—अत्राऽपि व्यासपाराशर्यादिपदेष्वपि । अत्र समासाभावे । पाराशर्यत्वादीनाम् असाधारणविशेषणानां सामर्थ्यात् अवसिता ज्ञाताः । तेषां व्यासपाराशर्यादीनाम् ।

तदभावे समासाभावे । अन्यः समासातिरिक्तः ।

"शशाङ्कशेखरः शम्भुः पद्मजन्मा पितामहः" इत्यत्र।
एवं तक्षकसर्प इत्यादावधगन्तव्यम्।

लोहितस्तक्षक इति समासोऽत्रापि नेष्यते।
लौहित्यस्य विधावुक्तन्यायात्तस्याप्रवृत्तितः॥ १२॥
स्वरूपमात्रस्योक्तौ तु लौहित्याव्यभिचारतः।
उष्णोऽग्निरितिवत् पक्षो न चास्त्यन्यस्तदत्यये॥ १३॥

इत्यन्तरश्लोकौ।

---

व्यक्तिविवेकव्याख्यानम्।

तक्षकसर्प इति तक्षकशब्दादेव सर्पपदमुत्कर्पसमर्पणप्रवणमेवेति तदर्थस्य विधेयत्वम्।

लोहितस्तक्षक इति यथा तक्षकशब्दादेव सर्पत्वजातिः प्रतीता तद्वल्लोहितलक्षणो गुणोऽपि तत एवाव्यभिचारात् प्रतीतः। ततस्तौ जातिगुणौ विधेयताभिप्रायेणोक्तौ न समासे न्यग्भावनीयौ। उक्तन्यायादिति विधेयत्वान्न समासः प्रवर्तत इत्यर्थः।

पक्षो न चास्त्यन्यस्तदत्यये इति। इह द्वौ पक्षावुल्लिखितौ तक्षकस्य स्वरूपमात्रप्रतिपादनं वा लोहिताख्यगुणविधिर्वा। उभयत्रापि कृता चर्चा। तदत्यये च कथितपक्षद्वयातिक्रमे चान्यस्तृतीयपक्षो नास्तीत्यर्थः।

मधुसूदनीविवृतिः।

तद्यथेति पर्यायेषु समासाभावं प्राचीनोदाहरणैः साधयति–शशाङ्कशेखर इति। यथा—शशांकेत्यत्र पर्यायवाचकशब्दस्थले समासाभावः। एवमुक्तप्रकारवत् तक्षकः सर्पः इत्यादौ समासाकरणमवगन्तव्यम्। यथा–भोः? अयं तक्षकः सर्पः—अर्थात् सामान्यसर्पो नास्तीति दिशा तक्षकपदेन सर्पविशेषत्वेन सर्पत्वे प्रतीतेऽपि सर्पपदमुत्कर्पसमर्पणप्रवणमेवेति सर्पार्थस्य विधेयत्वम्।

लोहितस्तक्षक इति। लोहितः तक्षक इत्यत्राऽपि समासो नेष्यते। लौहित्यस्य विधौ उक्तन्यायात् उपरिपरिदर्शितव्याख्यानात् तस्य समासस्य अप्रवृत्तितः। अयं भावः। यथा तक्षकपदात् सर्पविशेषतया सर्पत्वजातिः प्रतीयते तथैव तस्मात् लोहिताख्यो गुणोऽपि अवसितो भवति तथाऽपि लोहितपदोक्तिः लौहित्यस्य विधेयत्वं सूचयति ततश्चात्र समासो नेष्टः।

स्वरूपमात्रस्येति। स्वरूपमात्रस्य स्वरूपबोधकपदमात्रस्य तक्षकेत्यस्य उक्तौ। तुरप्यर्थे। अपि लौहित्यरूपस्य गुणस्य अव्यभिचारतः नित्यसहचारात्। यथा अग्नौ उष्णत्वं नित्यसहचरम्। तथा लौहित्यं तक्षके। अयं पक्षः स्वरूपमात्रप्रतिपादनपरः। पूर्वः विध्यनुवादभावप्रतिपादनपरः। इत्येवं पक्षद्वयमस्ति। तदत्यये उक्तद्वयास्वीकारे अन्यस्तृतीयः पक्षो नास्ति।

इत्यन्तरश्लोकौ। अन्तरशब्दोऽत्र तदर्थवाचकः। "अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये" इतिकोषात्। ततश्च अन्तरश्लोकौ तदर्थश्लोकौ।

बहुव्रीहौ यथा—

"येन स्थलीकृतो विन्ध्यो येनाचान्तः पयोनिधिः ।
वातापिस्तापितो येन स मुनिः श्रेयसेऽस्तु वः ॥"

इति । अत्र विन्ध्यादिविषयत्वेन स्थलीकरणादि यद्विशेषणतयोपात्तं तत्तत्कर्मकर्तुर्मुनेरतिदुष्करकारितया कमपि प्रभावप्रकर्षमवद्योतयति विन्ध्यस्य प्रतिदिवससमुच्छ्रायाच्छादितार्कप्रकाशस्य जगदान्ध्यविधायित्वात्, पयोनिधेरगाधत्वादपारत्वाच्च, वातापेः स्वमायापरिग्रहग्रस्तसमस्तलोकत्वात् । ततस्तत् प्राधान्येन विवक्षितमिति न तैः सह समासे निर्जीवीकृतम् । प्रत्युदाहरणं यथा—

"यः स्थलीकृतविन्ध्याद्रिराचान्तापारवारिधिः ।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः ॥"

इति । केचित् पुनरनयोरुदाहरणप्रत्युदाहरणयोरर्थस्योत्कर्षापकर्षप्रतीतिभेदो न कश्चिदुपलक्ष्यत इति मन्यन्ते । त इदं प्रष्टव्याः । किं सर्वेष्वेव समासेष्वियं तदप्रतीतिः उत बहुव्रीहावेवायं शाप इति । तत्र यदि सर्वेष्वेवेत्यभ्युपगमस्तर्हि सहृदयाः साक्षिणः पृच्छ्यन्तां वयं तावन्महदन्तरमेतयोः प्रतीत्योः पश्यामः ।

अथ बहुव्रीहावेवेत्युच्यते । तदयुक्तम् । न हि प्रतीतिभेदहेतौ प्रतीति-

---

व्यक्तिविवेकव्याख्यानम् ।

एवमियता कर्मधारयं विचार्य बहुव्रीहिनिरूपणायाह बहुव्रीहौ यथेति । ततस्तदिति स्थलीकरणादि यद् विशेषणतयोपात्तं तत् परामृश्यते । तैर्विन्ध्यादिभिः ।

तदप्रतीतिः उत्कर्षापकर्षप्रतीतिः ।

प्रतीतिभेदहेतौ समासासमासयोगे । प्रतीतिसामर्थ्ये कर्मधारयादिविषये ।

मधुसूदनीविवृतिः ।

एवमियता प्रबन्धेन कर्मधारयसमासं समालोच्य बहुव्रीहिसमासनिरूपणायाह— बहुव्रीहौ यथेति । येन स्थलीकृत इति । स्पष्टोऽर्थः । स्थलीकरणादि । आदिपदात् आचमनतापने गृह्येते । यत् स्थलीकरणादि विशेषणतया विन्ध्यविशेषणतया उपात्तं गृहीतं तत् विशेषणम् तत्कर्मकर्तुः विन्ध्यस्थलीकरणकर्तुः । प्रभावोत्कर्षं द्योतयति । इत्यन्वयः । ततो मुनेः प्राशस्त्यबोधनात् तत् स्थलीकरणादि । तैः विन्ध्यादिभिः सह । निर्जीवत्वं न्यग्भावः ।

प्रत्युदाहरणं कृतबहुव्रीहिसमासोदाहरणं यथा । यः स्थलीति । तदप्रतीतिः उत्कर्षापकर्षप्रतीतिः । अयं उत्कर्षाद्यप्रत्ययरूपः शापोऽभिध्यानम् । एतयोरुत्कर्षापकर्षविषयिण्योः प्रतीत्योः ।

अथ बहुव्रीहाविति । अयं भावः । "रामस्य पाणिरि"ति "रामपाणि" रिति च

सामर्थ्ये सति अकस्मात् तदसम्भवो भणितुं न्याय्यः। एवं हि क्षित्यादिसामग्र्यामविकलायामङ्कुरादिकार्योत्पादाभावाभ्युपगमोऽपि प्रसज्येतेति सर्वत्रैवायं प्रतीतिभेदोऽभ्युपगन्तव्यः। नैव वा कुत्रचित्। न पुनरिदमर्धजरतीयं लभ्यते।

इह वा प्रतीतिवैचित्र्यं स्पष्टतरमवधारयतु मतिमान्। यत्र विध्यनुवादभावाभिधित्सयैव पदार्थानामुपनिबन्धस्तत्रापि हि प्रधानेतरभावविवक्षानिबन्धनौ समासस्य भावाभावावुपगतावेव। यथा—

---

व्यक्तिविवेकव्याख्यानम्।

तदसम्भवः प्रतीतिभेदासम्भवः। अन्त्यावस्थाप्राप्तकारणेषु युक्तैव कार्योत्पत्तिरित्यर्थः।

एतदभ्युपगमे दृष्टविरोधमाह। एवं हीति। नैव वेति न्यायविशेषात्। अर्धजरतीयमिति अर्धं जरत्या इति 'समासाच्च तद्विषयात्' (५-३-१०६) इति च्छप्रत्ययः। यथा जरत्या वराङ्गं कामयते मुखं न कामयते तद्वदेवेत्यर्थः।

मधुसूदनीविवृतिः

तत्पुरुषस्य कृताकृतस्थले श्रुताश्रुतयोः श्रुतसम्बन्धो बलवानिति न्यायात् लुप्तविभक्त्यपेक्षया श्रुतविभक्तिजनितसम्बन्धेन अभिमन्यतां नाम उत्कर्ष्योः प्रतीतिः परं बहुव्रीहौ तु सम्भाविते वा कृते वाऽन्यपदार्थस्यैव प्राधान्यम् यथा—येन स्थलीति यः स्थलीति च यत्तद्भ्यामाकलितपरामृष्टस्य मुनेः। ततश्च समासघटकीभूतपदोपस्थापितार्थप्राधान्यचिन्तयाऽलमेवेति न कश्चित्प्रतीतिभेद इति। उत्कर्षापकर्षयोः प्रतीतेः समासासमासयोगेन भेदस्य हेतौ। उत्कर्षादिप्रतीतेः सामर्थ्ये सति अकस्मात् कारणं विना। तदसम्भवः प्रतीतिभेदासंभवः। न न्याय्यः न उचितः।

दृष्टविरोधं दर्शयितुमाह—एवं हीति। सति हेतौ तदसम्भवभणितौ हि अविकलायां पूर्णायाम्। अयमुक्तः प्रतीतिभेदः। अभ्युपगन्तव्यः स्वीकार्यः। अयं भावः। यथा प्रतिनायकगतोद्दण्डताधिक्यवर्णनेन तदुपमर्दयितुर्नायकस्य प्रकर्षः प्रतीयते तदर्थं च प्रतिनायकस्य पृथग्वर्णनमावश्यकं तद्वदन्यत्रापि सम्बन्धिगौरवाय तदितरसम्बन्धिनः प्राधान्ययावश्यकं ततश्च समासघटकपदार्थप्राधान्यचिन्ता भूषायैव कृते च समासे तत्प्राधान्यं निर्जीवीभवति अतः समासो नास्थेय इति सिद्धमिति। नैव वा कुत्रचिदिति। न पुनरर्धजरतीयमिति। यदि अयं प्रतीतिभेदः। स्वीक्रियते तर्हि सर्वत्र समासे वा अथ वा नो चेत्तर्हि कुत्रचिदपि नैव। कर्मधारयादिषु स्वीक्रियते बहुव्रीहौ न स्वीक्रियते इतीदं अर्धजरतीयं न लभ्यते। "अर्धं जरत्याः" समासाच्च तद्विषयादिति छप्रत्ययः। यथा जरत्या वराङ्गमीहते मुखं नेहते तद्वदेवेत्यर्थः।

इत्थमुक्तव्याख्यानदिशा समाहितमपि पुनरुदाहरणान्तरसमालोचनपथिकं प्रतिवादिनं चिकीर्षुराह—इह वेति। इह अनुपदं वक्ष्यमाणे उदाहरणे वा प्रतीतिवैचित्र्यम् उत्कर्षापकर्षप्रतीतिभेदम्।

"सूर्याचन्द्रमसौ यस्य मातामहपितामहौ ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥"

इति । अत्र हि त्रैलोक्यैकालङ्कारभूतौ चराचरस्य जगतो जीवितायमानौ भगवन्तौ सूर्याचन्द्रमसौ प्रसिद्धावनूद्य यन्मातामहपितामहभावो विहितस्ततोऽस्य पुरूरवसस्तौ लोकोत्तराभिजनजनितं महिमानं कामपि काष्ठामधिरोपयतः यतो विशेषणविशेष्यभावाभिहितेनैव न्यायेनात्राप्यनूद्यमानगतोऽतिशयो विधीयमानाकारसङ्क्रमणक्रमेण तत्सम्बन्धिनः पर्यवस्यति । तयोर्हि स्वरूपमात्रं भिन्नं फलं पुनः पारम्पर्येण वाक्यार्थोत्कर्षलक्षणमविलक्षणमिति प्राधान्येन विवक्षितत्वात् न तौ ताभ्यां सह समासे म्लानिमानीतौ ।

इह च—

"जनको जनको यस्या या तातस्योचिता वधूः ।
आर्यस्य गृहिणी या च स्तुतिस्तस्यास्त्रपास्पदम्" ॥ इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

तत्तस्य इति तदिति तस्मात् । तौ सूर्याचन्द्रमसौ । तयोरिति अनुवाद्ययोस्सूर्याचन्द्रमसोः । पारम्पर्येणेति विधेयमातामहपितामहत्वद्वारेण । अत एव सूर्याचन्द्रमसाविति द्वन्द्वनिर्देशो द्वयोः स्पर्धितां प्रकाशयति । उर्वश्या च भुवा चेति समासाभावो वरणस्य मुख्यामुख्यत्वप्रदर्शनार्थम् एकस्य वास्तवत्वादपरस्य कविप्रौढोक्तिनिष्पादितत्वात् ।

इह चेति प्रतीतिवैचित्र्यं स्पष्टतरमवधारयतु मतिमानिति पाश्चात्यं सन्बन्धनीयम् । जनक इति । अत्र जनकाकाख्यराजर्षिप्रभृतयः पितृत्वादेरुत्कर्षमर्पयन्ति ।

मधुसूदनीविवृतिः ।

सूर्यो मातामहः । चन्द्रः पितामहः ।

ततो मातामहपितामहत्वविधानात् कारणात् । तौ सूर्याचन्द्रमसौ । अत्राऽपि विध्यनुवादभावस्थलेऽपि । तत्सम्बन्धिनः विधेयसम्बन्धिनः अर्थात् ( अत्र स्थले ) पुरूरवसः तयोरनुवाद्ययोः सूर्याचन्द्रमसोः केवलं स्वरूपं भिन्नम् । फलं पुनः । पुनस्त्वर्थे । फलन्तु पारम्पर्येण विधेयमातामहपितामहमार्गेण । अविलक्षणं समानम् अनुवाद्ययोः । इति हेतोः वाक्यार्थगतोत्कर्षसमानत्वरूपात् । तौ सूर्याचन्द्रमसौ ताभ्याम् मातामहपितामहाभ्याम् । नानीतौ इत्यन्वयः ।

इह चेति । चोऽप्यर्थे । इहापि मतिमान् प्रतीतिवैचित्र्यमवधारयतु इति सम्बन्धः।

जनक इति । तातस्य पितुर्दशरथस्य । वधूः स्नुषा । आर्यस्य ज्येष्ठभ्रातुः । रामस्य । चाऽन्या गुणप्रकर्षोक्तिः । अत्र जनकमनूद्य जनको विहितः । तथा जनक ( पित्रादि ) द्वारा तत्सम्बन्धिन्यां सीतायामुत्कर्षः लोकोत्तराभिजनजनितत्वम् ।

द्विगौ यथा ।

"उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिकर्ता त्वमापदाम् ॥"

इति । अत्र हि संख्यायाः संख्येयेष्वङ्गेषु निरवशेषताप्रतिपत्तिफलमतिशयमादधानायाः प्राधान्येन विवक्षा । तत एव हि तेषु द्विविधापत्प्रतीकारेण राज्ञः शिवोपपत्तिं परिपुष्यतीति तस्यास्तैःसह समासो न विहितः । यथा च—

"निग्रहात् स्वसुराप्तानां वधाच्च धनदानुजः ।
हि रामेण निर्हितं मेने पदं दशसु मूर्धसु ॥"

इति । प्रत्युदारणमेतदेवोदाहरणं कृतसमासवैशसं द्रष्टव्यम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

एवं बहुव्रीहिं विचार्य द्विगुं व्याचष्टे द्विगौ यथेति । निरवशेष इति सप्तत्वसङ्ख्यायां विधेयत्वेन संरम्भास्पदत्वं समासे तु न्यग्भावात् ।

दशस्विति दशत्वसंख्याया विधेयत्वं रावणस्य परिभवातिशयं प्रकाशयति । एकस्मिन्नपि मूर्धनि पदन्यासः परिभवास्पदं किं पुनर्दशस्विति । प्रत्युदाहरणं सप्ताङ्ग्यामिह यस्य स इतीत्यादिपाठे । वैशसं बाधः ।

मधुसूदनीविवृतिः ।

( तादृशाभिजनजपुत्रवधूभवनादि च ) पर्यवस्यति । समासे जनकजनका सीता इति करणे नैव चमत्कारः ।

एवं बहुव्रीहीं विचार्य द्विगुं व्याचष्टे द्विगौ यथेति । उपपन्नमिति । स्वाम्यमात्यसुहृत्कोपराष्ट्रदुर्गबलानि चेति सप्तानि अङ्गानि । हुताशनो जलं व्याधिर्दुर्भिक्षं मरणं तथा । इति पचविधं दैवं मानुषं व्यसनं ततः । आयुक्तकेभ्यश्चौरेभ्यः परेभ्यो राजवल्लभात् । पृथ्वीपतिलोभाच्च नराणां पञ्चधा मतमिति कामन्दकः । प्रतिकर्त्ता निवारयिता । संख्यायाः सप्तत्वाभिधानायाः । निरवशेषता पूर्णता । तत एव विवक्षात एव तेषु अङ्गेषु । दैवमानुषीभेदात् द्विविधत्वम् । तस्याः संख्यायाः तैरङ्गैः सह ।

निग्रहादिति । खरादिवधसूचनोत्तरं रावणस्य चिन्ता । रघौ द्वादशे सर्गे । स्वसुः शूर्पणखायाः निग्रहात् कर्णाद्यङ्गच्छेदनात् । आप्तानां बन्धूनां खरादीनां वधाच्च हेतोः धनदानुजो रावणः रामेण दशसु मूर्धसु पदं निहितं मेने इत्यन्वयः ।

अत्र स्वसुरित्येकवचनस्य एकैव स्वसा तस्या इयं दशा । आप्तानां सर्वेषां वधो घातः नेदानीमाप्तः कश्चिदवशिष्टः । दशसु नैकस्मिन्निति चतुरस्रार्थमस्य व्याप्तिः दर्शिता भवति । कृतः समासेन वैशसः चारुत्वव्याघातो यत्र तत् । तद्यथा—स्वसृनिग्रहात् । आप्तवधात् । दशमूर्धसु ।

नञ्समासोदाहरणं यथा-"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः । इत्येवमादि पूर्वमेवोपदर्शितमुपपादितं च । प्रत्युदाहरणं यथा—

"वाच्यवैचित्र्यरचनाचारु वाचस्पतेरपि ।
दुर्वचं वचनं तेन बहु तत्राप्यनुक्तवान् ॥" इति ।

तत्पुरुषे कर्तुर्यथा—

"देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद् रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

एवं द्विगुं व्याख्याय नञ्समासं व्याचष्टे नञ्समासेति । उपदर्शितमिति असंरब्धवानित्यत्र विधेयाविमर्शविचारे अनुक्तवानिति नोक्तवानिति वाच्यम् ।

तत्पुरुषे कर्त्रादीनां षण्णां कारकाणां सम्बन्धस्य च क्रमेणोदाहरणान्याह देशेत्यादिना । सोऽयमिति । अत्र स एवायमिति व्याख्या । आहितसन्बन्धिनां शस्त्राणां घस्मराणि ग्रसनशीलानि अत एव गुरूणि ।

मधुसूदनीविवृतिः ।

वाच्येति । यद्यस्मात् यत्र वाचस्पतेरपि कथनं दुर्वचं वक्तुमशक्यम् तेन हेतुना अयमपि तत्र बहु अनुक्तवान् । अत्र नञो गुणत्वम् ।

देशः सोयमिति । वेण्यामश्वत्थाम्नः कर्णं प्रतीयमुक्तिः । यस्मिन् देशे अरातीनां शोणितैः तद्रूपैर्जलैः पंच ह्रदाः पूरिताः परशुरामेणेति शेषः । सोऽयं कुरुक्षेत्ररूपो देशः । क्षतान्नाशात्त्रायते इति क्षत्त्रः । पृषोदरवत्साधु । क्षतात्किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढः । इति कालिदासोऽपि । क्षत्त्रात् क्षत्त्रियात् एव धृष्टद्युम्नात् । तथाविधः कार्त्तवीर्य्यार्जुनपुत्राज्जमदग्नेरिव तातस्य द्रोणस्य केशग्रहात् केशं गृहीत्वा परिभवः तिरस्कारः । यत्क्वचित्कार्त्तवीर्यार्जुनाज्जमदग्नेःपरिभवोल्लेखो स भ्रान्तिविलसितः । अत्रेयं महाभारती कथानुसन्धेया । एकदा तृषितोऽग्निः कार्त्तवीर्यं ययाचे स च तस्मै कानिचित्स्थानानि ददौ । अग्निश्च तानि ददाह । स्थानेषु तेषु दहत्सु वशिष्ठस्याश्रमोऽपि दग्धः वशिष्ठश्च त्वद्दानादयं ददाहैतमिति कार्त्तवीर्याय शापं ते सहस्रं भुजान् जामदग्न्यो रामश्छेत्स्यतीति ददौ शापाद्व्यामोहितास्तत्पुत्रा दुर्दान्ता गोव्याजेन जमदग्नेः शिरश्चिकर्त्तिषुरिति ।

अहितानां शत्रूणां या हेतयः शास्त्राणि तेषां घस्मराणि भक्षकाणि अत एव उरूणि श्रेष्ठानि मे मम भास्वन्ति भास्वराणि अस्त्राणि ब्रह्मास्त्रादीनि तानि एव तादृशानि एव यादृशानि रामस्येत्यर्थः । द्रोणस्य परशुरामशिष्यत्वादस्य च द्रोणत्पुत्रत्वादिति अविच्छिन्नसम्प्रदायागतानीत्यभिमानः । अतः क्रोधनो द्रोणात्मजो मल्लक्षणः

इति । अत्र रामेणेति रामस्य कर्तृभावेन करणं प्रति यद्विशेषणत्वं, तत् तस्य दारुणतातिरेकात्मकमुत्कर्षं रौद्ररसपरिपोषपर्यवसायिनं समर्पयति, तस्य निरतिशयशौर्यशालित्वेन घोरतरनैर्घृण्यनिघ्नतया च प्रसिद्धेः । तेन तत्प्राधान्यान्न विशेष्येण सह समासे गुणतां नीतम् ।

कर्त्रादीनां कारकाणामनेकेषां समशीर्षिकया विशेषणभावेन यदुपादानं स द्वन्द्वस्य विषय इति तत्स्वरूपनिरूपणावसर एव तेषां प्राधान्यमप्राधान्यं चाभिधास्यत इति न तदुदाहरणमिह प्रदर्शितम् । नापि विध्यनुवादभावोदाहरणं, तस्य विशेषणविशेष्यभावतुल्यफलतया तत्समानवृत्तान्तत्वोपपादनात् ।

प्रत्युदाहरणं यथा—'यस्यावमत्य गुरुदत्तमिदं कुठारं डिम्भोऽपि राम इति नाम पदस्य हर्त्ता' इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

करणं प्रतीति क्रियां प्रतीत्यर्थः । तत्तस्येति प्रकान्तस्य विशेष्यस्य करणस्य । तस्येति रामस्य । शौर्यं बलम् । निघ्नः परवशः । तेन तदिति रामेणेति विशेषणम् ।

अनेकेषामिति । अनेकशब्दस्य नञ्समासे उत्तरपदार्थप्राधान्यादेकत्वप्रसङ्गः । सत्यम् किन्तु नञ्प्रयोगविषये एकशब्दस्यैकव्यतिरिक्तवस्तुविषयत्वं यथा अब्राह्मण-इत्यत्र ब्राह्मणशब्दस्य क्षत्रियादिगोचरत्वम् । एकव्यतिरिक्तं च वस्तु कदाचिदेकत्वोपरक्तं प्रतीयते, कदाचिन्निजेनैव स्वरूपेण । आद्ये पक्षे अनेकमिति भवति द्वितीये त्वनेकानीति । यथा च पतञ्जलिः--प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्' इति । गुरुदत्तमिति गुरुणा दत्तमिति वाच्यम् ।

मधुसूदनीविवृतिः ।

यद्रामेण कृतं क्षत्रक्षयरूपं पितृवैरनिर्यातनं तदेव कुरुते ।

करणं प्रति कृतमिति । करोतिक्रियां प्रति । तद्विशेषणत्वं तस्य रामस्य दारुणतायाः कठोरतायाः अतिरेकः आधिक्यम् । तस्य रामस्य निरतिशयम् उत्कटम् । शौर्यं पराक्रमलक्षणम् । घोरतरं महाभयंकरम् यन्नैर्घृण्यं निर्दयत्वम् । तन्निघ्नतया तदधीनतया । तेन हेतुना । तस्य रामस्य प्राधान्यात् । विशेष्येण करोतिक्रियया । समशीर्षिकया समानरूपया ।

स कर्तृकारकप्रभृतीनां विशेषणभावः । तत्स्वरूपं द्वन्द्वस्वरूपम् । तेषां कर्त्रादीनां कारकाणां च । तदुदाहरणं कर्त्रादीनां कारकाणां च उदाहरणम् । तस्य विध्यनुवादभावस्य । तत्समानवृत्तान्तत्वोपपादनात विशेष्यविशेषणभावसमानं यद्वृत्तान्तं तस्योपपादनात् "विध्यनुवादभावोऽपि विशेष्यविशेषणभावतुल्यफलः" इत्यादिभिः कथनात् ।

प्रत्युदाहरणं कृतसमासकर्तृतत्पुरुषोदाहरणं यस्येति । गुरुणा सेवया सन्तुष्टेन

कर्मणो यथा—

"कृतककुपितैर्वाष्पाम्भोभिः सदैन्यविलोकितै-
र्वनमसि गता यस्य प्रीत्या धृतापि तथाम्बया ।
नवजलधरश्यामाः पश्यन् दिशो भवतीं विना
कठिनहृदयो जीवत्येव प्रिये ! स तव प्रियः ॥"

इति । अत्र वनमिति यद् गमनक्रियायाः सीताविशेषणभूतायाः कर्मभावेन विशेषणं तत् तस्या रामप्रीतिप्रकर्षयुक्ताया अन्यकुलमहिलादुर्लभं दुष्करकारित्वं नामोत्कर्षमर्पयति वनवासदुःखस्यातिकष्टत्वात् । स चोत्कर्षो रामस्य रतेरुद्दीपनतां प्रतिपद्यत इति प्रधानं, न गतेत्यनेन सह समासे तिरस्कृतम् ।

यथा च—'गुर्वर्थमर्थी श्रुतपारदृश्वा रघोः सकाशादनवाप्य कामम्' इति । अत्र गुर्वर्थमित्यर्थिनोऽर्थनक्रियामुखेन यद्विशेषणं, तत् तस्य श्लाघ्यतातिशयाधानद्वारेण रघोरुत्साहपरिपोषे पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नार्थिना सह समासे सतामवमततां गमितम् ।

यथा च 'संवर्धितानां सुतनिर्विशेषम्' इति। प्रत्युदाहरणं यथा-'प्रद-

व्यक्तिविवेकव्याख्यानम् ।

तत् तस्या इति सीताया विशेषणभूतायाः सीताकर्तृकाया गमनक्रियाया इत्यर्थः । गुर्वर्थमिति गुरवे इदं गुर्वर्थमिति क्रियाविशेषणमेतत् । क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गत्वं च । ईप्सिततमत्वे तु षष्ठी स्यात् । अर्थनक्रियामुखेनेति अर्थयत इति निगमनात् । तत् तस्येति तद् गुर्वर्थमिति विशेषणम् । तस्यार्थिनः । अवमतताम् अनभिप्रेतताम् । अवमतत्वं गर्हितत्वम् ।

सुतनिर्विशेषमिति । क्रियाविशेषणमेव । प्रदक्षिणक्रियेति अत्र प्रदक्षिण

मधुसूदनीविवृतिः ।

ईश्वरेण न तु येनाऽपि केनाऽपि पुरुषेण दत्तं प्रसादीकृतं न तु यथाकथञ्चिल्लब्धम् एतेन कुठारे अतिशयो लभ्यते । स च समासे गुणीकरणात् नावसीयते ।

यथा—कृतककुपितैरिति । हे प्रिये ? सीते ? अम्बया कौसल्यया तथा धृताऽपि यस्य रामस्य मम प्रीत्या कृतककुपितैः कृत्रिमकोपैः अथ च वाष्पाम्भोभिः अश्रुजलैः तथा दैन्येन सहितैर्विलोकितैः निरीक्षणैः मां वशीकृत्य वनं बहुदुःखसङ्कीर्णस्थानं गताऽसि । स तव प्रियः कठिनहृदयो रामः भवतीं विना नवजलधरैः श्यामाः दिशः पश्यन् जीवत्येव मरणसमयेऽपि न मृत इत्यर्थः । तत् विशेषणम् । तस्याः सीतायाः । रामप्रीतेः प्रकर्षेण युक्तायाः । सचोत्कर्षः । दुष्करकारित्वरूपः उत्कर्षः । न तिरस्कृतमित्यन्वयः । श्लाघ्यतेति । समाप्तविद्योचिताचरणप्रशस्तिसम्पदः ।

संबर्द्धितानां सुतनिर्विशेषमिति । अत्र सुतनिर्विशेषमिति वर्द्धनक्रियाविशे-

क्षिणक्रियातीतस्तस्याः कोपमजीजनः' इति, 'तमभ्यनन्दत् प्रथमप्रबोधितः प्रजेश्वरः शासनहारिणा हरेः इति, यथाकामार्चितर्थिनाम्' इति, यथाकालप्रबोधिनामिति च। करणस्य यथा-

"आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः।
बन्धुं न सम्भावित एव तावत् करेण रुद्धोऽपि च केशहस्तः॥"

इति। अत्र करेणेति यत् केशहस्तकर्मकस्य सम्भावितस्य रोधनस्य करणभावेन विशेषणं तत् तस्याः कस्याश्चिद्रभसौत्सुक्यप्रहर्षप्रकर्षरूपमतिशयं प्रतिपादयद्वधूवरयो रूपसम्पदमसाधारणीमभिव्यनक्ति यदवलोकनव्यवधानाधायिनीं तावतीमपि कालकलां विघ्नायमानां मन्यमानयानया सततं स्वाधीनेनैकेन करकमलेन रोधोऽप्यस्य न कृतः। तेन तत् प्रधानमिति न रुद्ध इत्यनेन सह समासेऽस्तमुपनीतम्।

---

व्यक्तिविवेकव्याख्यानम्।

क्रियाया अत्ययक्रियाकर्मभूताया अन्तरायहेतुकोपनिमित्तत्वात् प्राधान्यम्। एवं प्रथमप्रबोधित इति प्राथम्यस्य। तथा यथाकामत्वयथाकालत्वयोर्ज्ञेयम्।

यदवलोकनेति रूपसम्पत् परामृष्टा।

मधुसूदनीविवृतिः।

षणेन वर्द्धयितुर्ऋषेः वर्द्धितानां तरूणामुपरि अनुपमं वात्सल्यं तैस्तैरुपायै शीतोष्णवातवर्षाभिरवनरूपम् प्रतीयते। तच्च समासे गुणीकृतम्। आधाकरवन्प्रमुखैः प्रयत्नैः सम्बर्द्धितानां सुतनिर्विशेषम्। कच्चिन्न वाय्वादिरुपप्लवो वः श्रमच्छिदामाश्रमपादपानामिति पूर्णं श्लोकः।

प्रत्युदाहरणं कृतसमासस्य कर्मणः उदाहरणं यथा प्रदक्षिणेति। अत्रातीतेति अत्ययक्रियाकर्मभूताया प्रदक्षिणक्रियायाः स्वकार्यविघ्नकारणकोपनिमित्तत्वात्प्राधान्यमिति न गुणीकरणीयम्। तमभ्यनन्ददिति। अत्र प्रथमं प्रबोधित इत्युचितः। यथाकामेति। अत्र यथाकामम् अर्चितार्थिनामिति यथाकालं प्रबोधिनामिति च युक्तः पाठः।

आलोकमार्गमिति। सहसा अतर्कितम्। आलोकमार्गं गवाक्षपथं व्रजन्त्या गच्छन्त्या कयाचित्कामिन्या उद्वेष्टने वान्तमाल्यः द्रुतगतिवशात् वान्तम् पतितं माल्यम् मालानां समूहो यस्मात्सः केशहस्तः प्रशस्तकेशसमूहः। पाशो पक्षश्च हस्तश्च कलपार्थाः कचात्परेः प्राशस्त्यबोधकाश्चामी इत्यमराभिधानचिन्तामणी। करेण बन्धुं सम्भावित एव अपि च किन्तु विलम्बभिया न रुद्धः न बद्धः।

अत्रेति। रोधनस्य बन्धनस्य। तस्याः कस्याश्चिन्नायिकायाः। रभसो वेगः रभसो वेगहर्षयोरित्यमरः। औत्सुक्यमुत्कण्ठाः। प्रहर्ष आनन्दः। असाधारणीं विलक्षणां दर्शनीयाम्। यत्तदलोकने यस्या रूपसम्पदो दर्शने। व्यवधानाधायिनीं विक्षेपकारिणीम्। रोधोऽपि बन्धनमपि। तेन हेतुना तत् करेणेति पदम्। नास्तमुपनीतमित्यन्वयः।

यथा च—

"कर्त्तुमक्षमया मानं प्राणेशः प्रत्यभेदि यत् ।
सोऽयं सखि ! स्वहस्तेन समाकृष्टस्त्वयानलः ॥"

प्रत्युदाहरणं यथा—

"धात्रा स्वहस्तलिखितानि ललाटपट्टे ।
को वाक्षराणि परिमार्जयितुं समर्थः ॥"

इति । सम्प्रदानस्य यथा—

"पौलस्त्यः स्वयमेव याचत इति श्रुत्वा मनो मोदते
देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति ।
तद्वाच्यः स दशाननो मम गिरा दत्ता द्विजेभ्यो मही
तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम् ॥"

इति । द्विजेभ्य इति निर्जयपूर्वकस्य भार्गवकर्तृकस्य महीदानस्य सम्प्रदानत्वेन यद्विशेषणं तन्मह्याः पात्रसात्करणोत्कर्षमादधत् भार्गवशौर्यातिरेकस्य व्यञ्जनेन दशाननस्य कोपोद्दीपनपर्यवसायि भवतीति प्राधान्येन विवक्षितत्वान्न दत्तेत्यनेन सह समासे कविना विच्छायीकृतम् । प्रत्युदाहरणमेतदेव पूर्ववद् द्रष्टव्यम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

स्वहस्तेनेति करणपदम् । स्वहस्तलिखितानीति स्वहस्तशब्दोऽनादरप्रतीतिहेतुकत्वेन लेखनं प्रति उत्कर्षनिमित्तमपि समासे गुणीकृतः ।

पूर्ववदिति कृतसमासवैशसम् । तच्च विप्रदत्तमिति पाठे ।

मधुसूदनीविवृतिः ।

कर्त्तुमक्षमयेति । कांचिद्दुष्टां नायिकां प्रति सखी वक्ति नायकस्य अत्यार्जवकरणेऽपि सन्तोषं नादधतीम् । हे सखि ? प्रणयकोपं कर्त्तुमक्षमया कथं मानं कर्त्तव्यमिति मानकरणप्रकारं बोद्धुमसमर्थया त्वया यत् प्राणेशः प्राणवल्लभः प्रत्यभेदि विरुद्धः कृतः । सोऽयं विरोधरूपः अनलः त्वया स्वहस्तेन समाकृष्टः ।

अत्र स्वहस्तेनेति यदनलकर्मकस्य समाकर्षणस्य करणभावेन विशेषणं तत् तस्या मानं कर्त्तुमक्षमाया नायिकायाः स्वयमुपचितमहदनर्थबीजत्वं प्रकाशयति । तेन तत्प्रधानमिति न समाकृष्ट इत्यनेन सह समासे गुणीभावं प्रापितम् ।

धात्रेति । स्वहस्तेनेति । यदक्षरकर्मकस्य लेखनस्य करणभावेन । विशेषणं तत तस्य । धातुः यथाप्राणि कर्माण्यनुवीक्ष्य अक्षरसंयोजनरूपमुत्कर्षमादधत् प्राधान्यमनुभवति तेन तत् न लिखितानीत्यनेन सह समासे विच्छायतां नेयम् । नीतञ्चैतदनुचितमेव ।

पौलस्त्य इति । महीयाचयितारं रावणं प्रति परशुरामवाक्यम् । हरप्रसादरूपः परशुः । ताम्यति दुःखीभवति । विच्छायीकृतं शोभाशून्यं सम्पादितम् ।

अपादानस्य यथा—

"ताताज्जन्म वपुर्विलङ्घितवियत् क्रौर्यं कृतान्ताधिकं
शक्तिः कृत्स्नसुरासुरोष्मशमनी नीता तथोच्चैःपदम् ।
सर्वं वत्स ! तवातिशायि निधनं क्षुद्रात्तु यत् तापसात्
तेनाहं त्रपया शुचा च विवशः कष्टां दशामागतः ॥"

अत्र तातादिति क्षुद्रात्तु यत्तापसादिति च ये जन्मनिधनयोरपादानभावेन विशेषणे ते तातस्य पितामहपितामहतया महामुनेः पुलस्त्यस्यापत्यतया च क्षुद्रतापसस्य च गणनानर्हतया तयोरुत्कर्षापकर्षद्वारेण तद्वतः कुम्भकर्णस्य कामपि कुलीनतां शौर्यापकर्षं चादधाने भ्रातुर्दशाननस्य शोकत्रपापावकेन्धनभावेन परिणमत इति प्राधान्येन विवक्षिते न ताभ्यां सह समासे गुणतां गमिते ।

प्रत्युदाहरणं यथा—अत्रैव 'क्रौर्यं कृतान्ताधिकम्' इति । यथा च 'आसमुद्रक्षितीशानामिति' ।

---

व्यक्तिविवेकव्याख्यानम् ।

पितामहपितामहतयेति पितामहो ब्रह्मा पितामहः पूर्वपुरुषो यस्य । तयोर्जन्मनिधनयोः । तद्वतो जन्मनिधनवतः । ताभ्यां जन्मनिधनाभ्याम् । कृतान्ता(द)धिकमिति आ समुद्राव् क्षितीशानामिति च वाच्यम् । अपादानसमानन्यायत्वादवधिरपि पञ्चम्यन्तोऽत्र गृह्यत इति प्रत्युदाहरणोपपत्तिः ।

मधुसूदनी विवृतिः ।

पूर्ववत् कृतसमासोक्तोदाहरणमिव सद्भिप्रदत्ता महीति पाठे बोध्यम् ।

ताताज्जन्मेति । इयं कुम्भकर्णमरणोत्तरं रावणस्य विलापमयोक्तिः । तातात् पुलस्त्यपुत्राद् विश्रवसः ऋषेः । विलंघितं वियदाकाशम् येन तदिति वपुर्विशेषणम् । कृतान्तान्मृत्योरपि अधिकं क्रौर्यम् । कृत्स्नानां सुरासुराणामूष्मणः तापस्य अहंकारस्येति भावः । शमनी नाशिका शक्तिः सामर्थ्यम् वाचामगोचरं तथोच्चैः पदं उन्नतस्थानं नीता । हे वत्स? एवं तव सर्वं जन्मादि वस्तु अतिशायि लोकोत्तरम् तु किन्तु यत् क्षुद्राव् अत्यल्पप्राणात् तापसात् अकर्मण्यात् निधनं मरणम् । तेन हेतुना विवशोऽहं त्रपया लज्जया अथ च शुचा हेतौ तृतीया । त्रपाशुग्घेतुकाम् कष्टां दशाम् आगतः प्रापम् । तातस्य विश्रवसः । पितामहो ब्रह्मा पितामहः पितुः पिता यस्य तस्य भावस्तत्ता तया । तयोः जन्मनिधनयोः । तद्वतः ते जन्मनिधने विद्येतेऽस्येति जन्मनिधनवतः ।

कृतान्तादधिकमिति वाच्यम् । आ समुद्रादिति वाच्यम् । अपादाने पञ्चमी अवधावपि सेति अवधिरपि पञ्चम्यन्तो गृह्यते यथाऽपादानो विभागः अवधिः

अधिकरणस्य यथा—

"तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्रिभिरिष्यते च या ॥"

प्रयान्ति तामाशुगतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ।

इति । अत्र रणाश्वमेध इति यत् पशुताया यशस्विकर्तृकोपागमकर्मभूताया अधिकरणभावेन विशेषणं तत् तस्या इतरपशुवैलक्षण्यलक्षणमतिशयमादधानं शूराणां समरमरणोत्साहमुद्दीपयतीति प्राधान्येन विवक्षितत्वान्न तया सह समासे समशीर्षिकतां नीतम् । यथा च—

"शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम् ॥"

इति । प्रत्युदाहरणं यथा—

रेणुरक्तविलिप्ताङ्गो विकृतो व्रणभूषितः ।
कदा दुष्प्रत्यभिज्ञानो भवेयं रणभूषितः ॥

इति । सम्बन्धस्य यथा—

"द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।"

इति । अत्र कपालिन इति यत् समागमप्रार्थनायाः शोचनीयतागतौ हेतुत्वेनोपात्तायाः सम्बन्धिद्वारेण विशेषणं तत् तस्यास्तत्र यत् सामर्थ्यं

---

व्यक्तिविवेकव्याख्याने

उपागमेति उपागता इति निर्दिष्टा उपागमक्रिया । रणभूषित इति । अत्र रणभुवीति वाच्यम् ।

शोचनीयतागतिः क्रिया । तत्र समागमप्रार्थना हेतुत्वेनोपात्ता । तस्याः सम्बन्धिद्वारेण सम्बन्धित्वमुखेन कपालिन इति विशेषणम् । अत्र सम्ब-

मधुसूदनीविवृतिः ।

समासिरिति उदाहरणासङ्गतिः स्यात् ।

तपस्विभिरिति । तां सत्रितपस्विप्रार्थिताम् । रणरूपोऽश्वमेध इति रूपकम् । तस्याः पशुतायाः । तया पशुतया । समशीर्षिकतां समानकक्षात्वम् । रणाश्वमेधे इति विशेषणस्य पशुतया सह समासो न कृत इत्यर्थः ।

शैशव इति । अत्र शैशवयौवनवार्द्धकान्तपदानि विद्याभ्यासविषयेच्छामुनिजीवनयोगद्वाराशरीरत्यागानां सामयिकामौचितीं पुष्णन्ति तेन हेतुना अभ्यस्तविद्यादिभिः न समासे मीलितच्छायानि कृतानि ।

रेणुरक्तेति । रेणुमिश्रितेन रक्तेन विलिप्तमङ्गं यस्य सः । अत्र अन्त्यानुप्रासलोभेन कविना रणभुवि निवासपदोत्थमुत्कर्ष शूरवद्युद्धमरणोद्योगरूपं समासे पिहितमिति युक्तं न प्रतिभाति सचेतसाम् ।

द्वयं गतमिति । शोचनीयताकर्मकगमनक्रियायां शोचनीयतागतावित्यस्यार्थः । हेतुत्वेन कारणत्वेन उपात्ताया गृहीतायाः । समागमप्रार्थनाया सम्बन्धिद्वारेण सम्ब-

तत् सुतरामुपबृंहयति तस्य सकलामङ्गलनिलयतया निन्दिताचारनिरततया च दर्शनसम्भाषणादीनामपि प्रतिषिद्धत्वात्। अतो विधेयार्थतया प्राधान्येन विवक्षितं विशेष्येण सह समासे न प्रत्यवरीकृतम्। यथा च—

"जनको जनको यस्या या तातस्योचिता वधूः।
आर्यस्य गृहिणी या च स्तुतिस्तस्यास्त्रपास्पदम्॥"

इति। 'स्कन्दस्य मातुः पयसां रसज्ञ' इति। 'कः त्वमेत तवानुज' इति।

---

व्यक्तिविवेकव्याख्यानम्।

न्धिशब्दो भाववृत्तिः सम्बन्धित्वे वर्त्तते, यथा 'द्व्येकयोर्द्विवचनैकवचने' (१-४-२२) इति, सधीरमुवाचेति। तत्तस्या इति। तद्विशेषणम्। तस्यास्समागमप्रार्थनायाः। तत्र शोचनीयतागतौ। सामर्थ्यमव्यभिचारेण सम्पादकत्वम्। तस्य सकलेति तच्छब्दः कपालिन इत्यस्य परामर्शकः। विशेष्येण समागमप्रार्थनयेत्यनेन। प्रत्यवरं गुणभूतम्।

एवं तातस्येति, आर्यस्येति, स्कन्दस्येति, तवेति चेत्येषां विशेषणानामु-

मधुसूदनीविवृतिः।

न्धिविधया सम्बन्धित्वविक्षयेत्यर्थः। कपालिन इति विशेषणम्। तत् विशेषणम् तस्याः। समागमप्रार्थनायाः तत्र शोचनीयतागतौ यत् सामर्थ्यम् अव्यभिचारेण सम्पादकत्वशक्तिः तत् सामर्थ्यम् सुतरामवश्यमुपबृंहयति वर्द्धयति। इत्यन्वयः। तस्य कपालिनः। दर्शनसम्भाषणादीनामपि किमुत समागमविषयकप्रार्थनाया वाच्यम्। विशेष्येण समागमप्रार्थनया सह। समासे कपालिसमागमप्रार्थनयेति दिशा न प्रत्यवरीकृतम् न तिरस्कृतम्।

जनक इति। तातस्य आर्यस्येति सम्बन्धिद्वारा इन्द्रार्धासनहरत्वसकललोकपालकत्वादिविशिष्टमहापुरुषम्बन्धरूपमुत्कर्षं सीतायां प्रतीयते। कृते च समासे स उत्कर्षः विच्छायो भाति अकारणनिगडनिरुद्धमहापुरुष इव।

स्कन्दस्येति। यः त्रैलोक्यसन्तापकारितारकासुरहननेन अखिलं लोकं दुःखार्णवनिमग्नमुद्दधार तस्य देवसेनापतेः मातुः। या भृत्यानां सहस्रैरपि तत्सिञ्चनं कारयितुं शक्ताऽपि मातृस्वभावसुलभवात्सल्येन स्वयं प्रतिदिनं समयमनुपालयन्ती अभ्यासेन पयांसि पाययमास इति स्कन्दस्येति मातुरिति पयसामिति यथोत्तरमनुपातिविशेषणत्वानां पदार्थानामुक्तदिशा उत्कर्षः सचेतसां गोचरीभवति। समासे तु दुर्दैववशाद्दास्यमनुभवद्राजकुमार इव म्लानतामापद्यते।

कः त्वमेति तवेति। यः एकलोऽपि चतुर्दशसहस्रं दुर्दान्तान् राक्षसान्निर्भयं निजघान तस्य तव अनुजातस्येत्येवमनुजे उत्कर्षातिशयस्त्वाद्यते। समासनिगलिते तु

प्रत्युदाहरणं यथा—

"पृथ्वि ! स्थिरीभव भुजङ्गम ! धारयैनां
त्वं कूर्मराज ! तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥"

इति । यत्र हि हरसम्बन्धनिबन्धनः कार्मुकस्य गौरवातिरेको दुरारोपता चेति तस्यैव विधेयतया प्राधान्यं न कार्मुकमात्रस्य, तच्च तस्य वृत्तावन्तरितं, तेन 'देवो धनुः पुररिपोर्विदधात्यधिज्य'मित्यत्र युक्तः पाठः । अस्मिंश्च पाठे कल्पितार्थस्याप्रयुक्तस्य वाततज्यस्य प्रयोगपरिहाराद् गुणान्तरलाभ इति । यथा—

"किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथवा मातैव मे मध्यमा ।

---

व्यक्तिविवेकव्याख्यानम् ।

त्कर्षसमर्पकत्वं ज्ञेयम् ।

तस्यैवेति गौरवदुरारोपत्वनिबन्धनस्य हरस्य । तच्चेति प्रधान्यम् । तस्येति हरस्य । कल्पितार्थस्येति विस्तारितकृत्रिमत्वमात्रवाचिनोऽधिज्यत्वमात्रलक्षणार्थारोपात् । अप्रयुक्तस्येति उक्तनयेनास्मिन्नर्थे कविभिरप्रयुज्यमानस्य । गुणान्तरलाभ इति वक्ष्यमाणलक्षणस्य वाच्यावचनस्य परिहारात् ।

मात्रेति 'एवं कृतम्' इत्यत्र करणम् ।

मधुसूदनीविवृतिः ।

गर्दभभक्ष्यमाणद्राक्षां प्रेक्षकस्य तत्वपरीक्षकस्य मानसमिव विवर्णभावमाकलयति ।

पृथ्वी स्थिरी भवेति । एनां पृथ्वीम् । द्वितयं पृथ्वीभुजङ्गमयोर्द्वयम् । तत्त्रितये पृथ्वीभुजंगमकूर्मराजानां त्रितये । हरकार्मुकम् रुद्रधनुः । आततज्यम् अधिज्यं करोति सन्धानयतीत्यर्थः । अत्रेति । दुरारोपता कष्टसन्धानविषयता । तस्य हरस्य । प्राधान्यमित्यन्वयः । कार्मुकस्य केवलस्य प्राधान्यं नास्ति । तच्च वृत्तौ अन्तरितमित्यन्वयः । तस्य हरस्य तत्प्राधान्यं वृत्तौ समासे अन्तरितं पिहितम् । तेन हेतुना । कल्पितार्थस्येति ।।आतता ज्या यस्येत्यर्थे धनुर्विरहिताऽपि ज्या आतता विस्तृता भवति परमिह कार्मुकपदसाहचर्यात् अधिज्यार्थत्वम् आततज्येतिपदस्य परिकल्प्यते, तथा अधिज्येतिपदस्यार्थे आततज्येति पदं कविभिर्न प्रयुज्यते । एवं नेयार्थत्वमप्रयुक्तत्वं च दूषणं प्राप्तं भवति । पाठे परिवर्तिते च ते दूषणे परिहृते भवतः । तथाच गुणान्तरस्य हरसम्बन्धनिबन्धनस्य गौरवातिरेकदुरारोपत्वादेरेकस्य गुणस्यापेक्षया द्वितीयस्य गुणस्य दोषपरिहारस्य लाभः । इति भावः ।

किं लोभेनेति । रामवनवासे हेतुं चिन्तयतो लक्ष्मणस्योक्तिरियम् । स विन-

मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ॥"

अत्र ह्यार्यस्यानुज इति तातस्य कलत्रमित्युचितं वक्तुम् । यथा च—

"जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्क इवार्पितः ॥"

इति । अत्र हरेः सम्बन्धेन चक्रस्य जयाशास्पदत्वमिति हरेरेव प्राधान्यविवक्षा न चक्रमात्रस्य, तच्च तस्य समासेऽस्तमुपगतम् । विभक्त्यन्वयव्यतिरेकानुविधायनी हि विशेषणानां विधेयतावगतिः । तत एव

---

व्यक्तिविवेकव्याख्यानम् ।

निष्क आभरणविशेषः । विभक्त्यन्वयेति श्रूयमाणाया विभक्तेरित्यर्थः ।

मधुसूदनीविवृतिः ।

यार्जवादिमत्त्वेन प्रसिद्धः भरतो लोभेन महतो राज्यस्य सम्राड् भविष्यामीति लोभेन विलङ्घितः आक्रान्तः किम् । येन भरतेन एतद्वनवासादिकम् एवं कपटेन मात्रा कैकेय्या तद्द्वारेत्यर्थः कृतम् । अथवा मे मध्यमा माता कैकेयी एव स्त्रीलघुतां गता स्त्रीणां स्वभावसुलभां क्षुद्रतां प्राप्ता किम् । विचारेण चेतसः स्वस्थत्वे आह= मिथ्येति । एतन्मया चिन्तितं द्वितयमपि भरतस्य लुब्धत्वं मातुः क्षुद्रत्वं च मिथ्या । कुतो मिथ्येत्याह ।–आर्येति । असौ गुरुर्भरतः आर्यस्य रामस्य येन महत्पदं राज्यं पितुराज्ञागौरवात्तृणमिव परित्यक्तम् दुःखाकीर्णं वनगमनञ्चाङ्गीकृतम् । तस्य अनुजः इति हेतोः लोभसंभावनं मिथ्या । माता च तातस्य यः वचसः सत्यत्वकरणाय यद्वियोगत्यक्ष्यमाणप्राणोऽपि प्रियतरं पुत्रं वनाय विससर्ज तस्य कलत्रमिति मिथ्या क्षुद्रत्वसंभावनम् । महाजनसम्पर्कात् अमेध्यस्यापि मेध्यत्वम् नीचोऽपि च पूजापदं लभते । इति भावः । तत्केन कृतमित्याह–अनुचितमति । विधात्रानुचितं कृतमिति मन्ये सम्भावयामि ।

वक्तुमिति । अयं भावः । अत्रानुचिताकरणे हेतुत्वेन विधित्सिते आर्यस्येति तातस्येति पदे समासे पिहितच्छाये न करणीये ।

जयाशेति । यत्र च हरेश्चक्रे अस्माकं देवानां जयस्याशा आसीत् । तेनाऽपि हरिचक्रेण । प्रतिघातेन उत्थितं यदर्चिर्ज्योतिः तेन तद्द्वारा अस्य तारकस्य कण्ठे निष्क इव सुवर्णभूषणमिव अर्पितः । तच्च प्राधान्यं च । तस्य हरेः ।

ननु अप्राप्तत्वेन प्रतीयमानत्वं नाम विधेयस्य स्वरूपम् । विशेष्यसमवधाने च विशेषणानां प्राप्तत्वमेव । तदेव च विशेषणत्वम् यत् स्वनिष्ठोत्कर्षापकर्षाधायकत्वेन प्रतीयमानत्वम् । तच्च विशेष्योपस्थितौ प्राप्तमेव बलाद्भवतीति कुतो विधेयत्वमित्यत्राह–विभक्त्यन्वयेति । अत्र विभक्तिः श्रूयमाणैव ग्राह्या समस्तायाः दूषणात् । श्रूयमाणाया विभक्तेरन्वयव्यतिरेकावनुविधातुं शीलमस्याः सा तथोक्ता । विधेयताया अवगतिर्ज्ञानम् । तत एव विशेषणसम्बन्धिविधेयत्वज्ञानस्य श्रूयमाणविभक्त्यन्वयवि-

चैषां विशेष्ये प्रमाणान्तरसिद्धस्वोत्कर्षाधायिनां शाब्दे गुणभावेऽप्यार्थं प्राधान्यं विशेष्याणां च शाब्दे प्राधान्ये आर्थो गुणभावोऽनूद्यमानत्वादित्युक्तम् । वक्ष्यते च ।

एतदाचार्यस्याप्यनुमतमेवेति ज्ञायते । यदयं 'वृषल्याःकामुको' 'दास्याःपुत्र'इत्यादौ कामुकादेराक्रोशादपकर्षप्रतिपत्तये समासेऽपि विभक्तेरलुकमाह । कुतस्तर्हि दासीपुत्र इत्यतः पुत्रस्याक्रोशावगतिः न ह्यत्र विभक्तिरस्ति । को वा मन्यते । स्वरूपमात्रमेवातः पुत्रस्य प्रतीयते नाक्रोश इति सूत्रारम्भप्रयोजनमेव चिन्त्यम् ।

---

### व्यक्तिविवेकव्याख्यानम् ।

तथा च 'षष्ठ्या आक्रोशे' (६-३-२१) इति ज्ञापकमुपदेश इष्यत इति प्रमाणान्तरेण 'लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधमि' त्युक्तरूपेण सिद्धौ यौ स्वस्य विशेषणस्योत्कर्षापकर्षौ तदाधायिनाम् अर्थाद्विशेष्यं प्रतीत्यर्थः । आर्थं वास्तवम् । अलुकमाह 'षष्ठ्या आक्रोश' ( ६-३-२१ ) इत्यनेन । चिन्त्यमिति । एतदवगमाय विचार्यमित्यर्थः ।

### मधुसूदनाविवृतिः ।

धायित्वादेव । एषां विशेषणानाम् । प्रमाणान्तरम् लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतमित्युक्तरूपम् । तेन सिद्धौ स्वस्य विशेषणस्य उत्कर्षापकर्षौ तदाधायिनां विशेष्ये उत्कर्षापकर्षविधातॄणाम् । आर्थं वस्तुतत्त्वलब्धम् । आर्थः विशेषणगतोत्कर्षापकर्षाधीनप्राधान्यादित्यर्थः ।

न ममेदं कपोलकल्पितमपि तु आचार्यैरपि स्वीकृतमिति तत्सम्मतिमाचिन्वन्नाह– यदयमिति । आक्रोशो निन्दा । अपकर्षप्रतिपत्तये तिरस्कारज्ञानाय समासेपि अलुकं विभक्तिश्रवणमनुजानाति ।

अलुकं श्रूयमाणत्वमित्यर्थः । ननु पुत्रेऽन्यतरस्यामिति विभाषयाऽलुकः शासनात् पक्षे लुगपि भविष्यतीति दासीपुत्रेत्यत्रापि आक्रोशः प्रतीयत एवेत्याशयेन शंकते–कुत इति। यदि अलुप्तविभक्तावेव आक्रोशप्रतीतिस्तर्हि दासीपुत्र इत्यतः समासेन लुप्तविभक्तिकात् पदात् कुत आक्रोशप्रतीतिः । न हि अत्र पदे विभक्तिरस्ति समासेन लुप्तत्वाच्छ्रूयमाणत्वादिति शेषः। उत्तरति । को वा मन्यते अत्र षष्ठीतिसूत्रकृतसमासहेतुकलुप्तविभक्तिके आक्रोशः प्रतीयत इति एवं को मन्यते अनुमोदते । अतः अस्मात् पदात् पुत्रस्य स्वरूपमात्रमेव प्रतीयते न आक्रोशः प्रतीयते । इति एवं प्रकारेण सूत्रारम्भस्य प्रयोजनं फलमेव चिन्त्यम् विचारणीयम् । अलुप्तविभक्तिके पदे यथाऽऽक्रोशप्रतीतिः तथालुप्तविभक्तिकेऽपि पदे तत्प्रतीतिः स्यात्तदा सूत्रनिर्माणस्य किं फलं स्यादित्यादि चिन्त्यं गवेषणीयमिति भावः ।

समासे च विभक्तिलोपान्नोत्कर्षापकर्षावगतिरिति न तन्निबन्धना रसादिप्रतीतिरिति तदात्मनः काव्यस्यायं विधेयाविमर्शो दोषतयोक्त इति।

अव्ययीभावे यथा—

"सा दयितस्य समीपेऽवस्थातुं नापि चलितुमुत्सहते ।
ह्रीसाध्वसरसविवशा स्पृशति दशां कामपि नवोढा ॥"

व्यक्तिविवेकव्याख्यानम् ।

समासे च विभक्तिलोपादिति । इह हि विभक्तिश्रवणाश्रवणे अन्वयव्यतिरेकाभ्यां विशेषणगतयोर्वास्तवयोः प्रयोजकतां भजेते । ते तु प्रायेण वाक्यसमासगतत्वेनोपलभ्यमाने समासस्य विभक्त्यश्रवणाद्विधेयाविमर्शतामुत्पादयतः । अत एव समासेऽपि यदि विभक्तिः श्रूयते तदा न विधेयाविमर्शो यथा दास्याः कामुक इत्यादौ । समासस्तु तत्रैकपद्यादिप्रयोजनत्वेन कृतः । तन्निबन्धनेति उत्कर्षापकर्षनिबन्धना । एवञ्च विभक्त्यश्रवणान्वयव्यतिरेकानुविधायित्वं विधेयाविमर्शस्य व्याप्त्या प्रदर्शितं भवति ।

एवञ्च सप्रकारं तत्पुरुषं निरूप्याव्ययोभावं निरूपयति अव्ययीभाव इति । समीपं विशेष्यं प्रति दयितस्येति यद्विशेषणं तत् तस्य समीपस्येति योजना ।

मधुसूदनीविवृतिः ।

इदं बोध्यम् । असमासेन वाक्ये विभक्तिः श्रूयते । नैषा कार्यप्रयोजिका प्रकृते विभक्तिश्रुतिः । किन्तु यत्र दास्याः पुत्र इत्यादौ "षष्ठया आक्रोशे" "पुत्रेऽन्यतरस्यामि"ति सूत्राभ्यां समासस्य अलुकश्च अनुशासनं तत्र आक्षेपबोधिका । आनुशासनस्य च विकल्पोन्मुखत्वात् एतादृशसूत्रकृतसमासहेतुकविभक्तिलोपेऽपि तादृशार्थप्रतीतिर्भवत्येवेति यथा दासीपुत्र इत्यत्र । अन्यादृशसूत्रविहितसमासस्थले नैव सा प्रतीतिः यथा तत्रैव दासी पुत्र इतिपदे । इत्यलुक्समासप्रकरणव्यवस्था ।

समासे चेति । समासमपि करोति तद्धेतुकं प्राप्तं विभक्तिलोपमपि वारयति इत्याचार्यप्रवृत्तिर्ज्ञापयति यद् विभक्तिश्रुतौ एवाभोप्सितकर्षापकर्षप्रतीतिः तल्लोपे च नैवेति अतो यत्र समासासमासयोरौचित्यानौचित्यबोधः सहृदयसम्मतः तत्र तौ विधेयाविति तद्विदां पन्थाः इति रहस्यम् ।

तन्निबन्धना उत्कर्षापकर्षहेतुका । तदात्मनः विभक्तिलोपवतः ।

इत्थं सप्रपञ्चं तत्पुरुषं निरूप्य अव्ययीभावमाकलयति अव्ययीभावे यथेति। ( यथा कश्चित् तत्त्वमसीत्यादिवाक्यस्थतत्पदाभिधेयं पुरुषं सप्रपञ्चं निरूप्य तस्याव्ययत्वमाकलयेत्तथेतिभावः ) ।

सा दयितस्येति । सा नायिका दयितस्य समीपे अवस्थातुं स्थिति कर्त्तुं नापि तस्य समीपे चलितुम् उत्सहते । एवं हि ह्रीसाध्वसयोर्विवशा लज्जाभययोः पराधीना इमाः सख्यः किं कथयिष्यन्ति वा संभावयिष्यन्तीति वा सहसा गमनेनेति ह्रीः । अपरिचितस्वभावस्य पार्श्वे गमनमयं भवतीति ह्रीसाध्वसविवशा नवोढा नूतनपरिणीता

इति । अत्र दयितस्येति सम्बन्धितया यत् समीपस्य विशेषणं तत् तस्य सुकृतशतलभ्यतालक्षणमुत्कर्षमादधद्रतेरुद्दीपने पर्यवस्यतीति प्राधान्येन विवक्षितत्वान्नोपदयितमितिवत् समीपार्थेनाव्ययेन सह समासेऽवसादं गमितम् ।

प्रत्युदाहरणं यथा—'मध्येव्योम त्रिशङ्कोः शतमखविमुखः स्वर्गसर्गं चकार' इति । अत्र हि भगवतो विश्वामित्रस्य तपसः प्रभावप्रकर्षप्रतिपादनं प्रस्तुतम् । स च तस्य निरुपकरणस्य सतः शून्ये व्योम्नि स्वर्गसर्गसामर्थ्येनैव प्रतिपादितो भवतीति व्योमैव प्राधान्येन विवक्षितं, न तन्मध्यम् । तेनाविषय एवायं समासः कविना कृत इति । मध्ये व्योम्न इति युक्तः पाठः ।

अनेनैव न्यायेन कृत्तद्धितवृत्त्योरपि प्रतिषेधोऽवगन्तव्यः तत्राप्युक्तक्रमेण प्राधान्येतरभावविवक्षाविशेषात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

मध्येव्योमेति 'पारे मध्ये षष्ठ्या वा (२-१-१८) इत्यव्ययीभावः । सचेति प्रकर्षः । एवमियता द्वन्द्ववर्जं समासवृत्तिर्विचारिता ।

इदानीमतिदेशमुखेन कृत्तद्धितवृत्तिर्निरूप्यते अनेनैवेत्यादिना । विवक्षाविशेषादित्यकारप्रश्लेषः ।

मधुसूदनीविवृतिः ।

कामपि स्वानुभवैकसारां दशामवस्थां स्पृशति अनुभवति ।

अत्र समीपस्य विशेष्यस्य सम्बन्धितया प्रतियोगितया यत् दयितस्येति विशेषणम् तत् विशेषणम् तस्य समीपस्य सुकृतशतैर्लभ्यतालक्षणमुत्कर्षम् आदधत् कुर्वत् रतेरुद्दीपने वर्द्धने पर्यवस्यति परिणतं भवति इति हेतोः न उपदयितमिति पदवत् अवसादं नाशं गमितं प्रापितम् ।

मध्येव्योमेति । शतमुख इन्द्रः तद्विमुखो विश्वामित्रः मध्येव्योम आकाश एवेत्यर्थः त्रिशङ्कोः स्वनामप्रसिद्धस्य कृते स्वर्गसर्गं चकार । अस्य कथा रामायणे प्रसिद्धा ततो विलोक्या । मानुषशरीरेण स्वर्गं जिगमिषुः गुरोर्वशिष्ठस्य पुत्रैः चाण्डालो भवेति शप्तः । तथाभूतोऽपि विश्वामित्रतपःप्रभावात् स्वर्गं गतः । ततश्च इन्द्रपातितेन तेन पाहीति प्रार्थितो विश्वामित्रः अन्यान् सप्तर्षीन् अन्यं सेन्द्रं स्वर्गं ससर्जेति पुराणम् ।

अत्र मध्येव्योमेत्यत्र पदे पारे मध्ये षष्ठ्या वेत्यव्ययीभावः । स च प्रकर्षः । निरुपकरणस्य स्वर्गसर्जनसाधनरहितस्य । स्वर्गसर्गसामर्थ्येनैव स्वर्गसर्जनरूपशक्तिनिरूपणद्वारैव । तन्मध्यं व्योममध्यम् । तेन अविषय एव अस्थल एव ।

  

तयोरुदाहरणं यथा—

"यः सर्वं कषति खलो बिभर्त्ति यः कुक्षिमेव सत्यतिथौ ।
यश्च विधुं तुदति सदा शीर्षच्छेद्यं त्रयोऽपि तेऽर्हन्ति ॥"

इति । अत्र सर्वादीनां कषणादिषु कर्मभावेन विशेषणतयोपात्ताना-मुत्कर्षाधायितया प्राधान्येन विवक्षितत्वान्न तैः सह वृत्तौ न्यग्भावो विहितः ।

---

व्यक्तिविवेकव्याख्यानम् ।

सर्वंकषतीति 'सर्वकूलाभ्रकरीषेषु कषः' (३-२-४२) इति खचोऽयं विषयः । बिभर्त्ति यः इति 'कुक्षिंभरिश्चे'ति निपातितस्य कुक्षिम्भरिशब्दस्यायं गोचरः । विधुन्तुद इति 'विध्वरुषोस्तुद' ( ३-२-३५ ) इति खश्प्रत्ययस्थानम् । शीर्षच्छेद्यमिति 'शीर्षच्छेदाद्यच्च' [५ २-६५] इति तद्धितस्य यत्प्रत्ययस्येदं पदम् ।

तैरिति कषणादिभिः । सर्वार्थस्येति, कार्योपलक्षणस्य कुक्षेरिति,

मधुसूदनीविवृतिः ।

एवमियता प्रबन्धेन द्वन्द्वैकशेषवर्जं समासवृत्तिर्विवेचिता सम्प्रति वृत्तित्वेन समाने कृत्तद्धितवृत्ती निरूप्येते अनेनेति । अनेन समासाख्यवृत्तिकथितेनैव न्यायेन मार्गेण । प्रतिषेधः समासनिषेधः । तत्राऽपि कृत्तद्धितवृत्त्योरपि उक्तक्रमेण कथितशैल्या । प्रधानेतरभावविवक्षाया अविशेषात् सामान्यात् ।

तयोरुदाहरणं कृत्तद्धितवृत्त्योरुदाहरणं यथा—यः सर्वं कषतीति । सत्यो विष्णुस्तस्य तिथिरेकादशी तस्यां तस्मिन् वेति । ते त्रयः खलौदरिकराहवः । अत्र सर्वादीनाम् आदिपदात् कुक्षेः विधोश्च परिग्रहः । कषणादिषु आदिपदात् भरणतुदने ग्राह्ये । उत्कर्षः क्रमशः भुवनाभयदानदीक्षाबद्धकक्ष्यत्वरूपः, सर्वाशुचिनिधानत्वकृतघ्नत्वविनश्वरत्वतुच्छत्वरूपः, सकलजगदानन्दहेतुत्वरूपः । तदाधायितया तत्कारितया । तैः कषणादिभिः । वृत्तौ कृद्वृत्तौ तद्धितवृत्तौ च न्यग्भावः गुणत्वं न विहितः ।

अयं भावः । सर्वं कषतीति विग्रहे सर्वकूलाभ्रकरीषेषु कष इति सूत्रेण खचि सर्वंकषः । कुक्षिं बिभर्त्तीति विग्रहे फलेग्रहिरात्मंभरिश्चेति सूत्रेण चात्कुक्षिंभरिरिति निपात्यते । इदमवधेयम्—ऋषयो लक्ष्यैकचक्षुष्काः । अन्ये च लक्षणैकचक्षुष्काः । कवयश्च नानृषिः कवते काव्यमित्युक्त्या ऋषयोऽतस्ते यथोचुः तथैव प्रमाणम् । अन्यच्च नैकं पाणिनीयमेव व्याकरणं सर्वशब्दसाधनेऽलम् । नचापाणिनीयलक्ष्याणां विश्रामप्रभृतीनामल्पत्वम् । नच तेषामसाधुत्वं वाचस्पतिसहस्रेणापि वक्तुं पार्यंत । एवं च

गिरिस्तु कनकाचलः कति न सन्ति चाश्मव्रजाः
किटिस्तु धरणीधरः कति न सन्ति भूदारकाः ।
मरुत्तु मलयानिलः कति न सन्तिः झञ्झानिलाः
प्रभुस्तु विबुधाश्रयः कति न सन्ति कुक्षिंभराः ॥

सर्वार्थस्य भुवनाभयदानदीक्षाबद्धकक्ष्याणां बोधिसत्त्वानामपि चरितस्य तदन्तःपातित्वात् । खलाः खलु दम्भादिदोषारोपेण तदपि तेषां कषन्त्येव । कायोपलक्षणस्य कुक्षेः कायस्य सर्वाशुचिनिधानत्वाद्विनश्वरत्वाच्च । विधोश्च सकलजगदानन्दहेतुत्वात् ।

कषणादिकर्तृष्वकार्यकारितयापराधातिरेकलक्षणमुत्कर्षमादधतां प्रा-

## व्यक्तिविवेकव्याख्यानम् ।

विधोश्चेति उत्कर्षमादधतां प्राधान्येन विवक्षेत्यत्र सामस्त्येन योजनीयम् । शीर्षच्छेदस्य चेति उत्कर्षमादधतः प्राधान्येन विवक्षेति सम्बन्धनीयम् । पूर्वेभ्योऽस्य पृथङ्निर्देशस्तद्धितवृत्तिविषयत्वेन भिन्नजातीयत्वात् । अत्र च सर्वार्थादीनां चतुर्णामुत्कर्षाधाने समनन्तरनिर्दिष्टभुवनाभयेत्यादिचतुष्टयं क्रमेण हेतुत्वेन द्रष्टव्यम् । तदपीति चरितम् । कषणादिकर्तृष्विति

## मधुसूदनीविवृतिः ।

इति केषांचित्प्रयोगः प्रामादिक एवेति वदन् तत्वबोधिनीकारः स्वस्य कूपमण्डूकत्वं व्याजहार । अन्यच्च स्वयं पाणिनिरेव काव्यमार्गेऽवतरन् स्वकृतानेव नियमान् अवामंस्त "अपश्यती वत्समिवेन्दुबिम्बं तच्छर्वरी गौरिव हुंकरोति । इति सत्यपि शप्श्यनोर्नित्यमिति सूत्रे "अपश्यती" इति वदन् । तस्मात् केवलं वाचो देव्या-उत्पादनशीलैरत एव पितृभूतैः शाब्दिकैर्नात्र दुःप्रयत्नमास्थेयम् । कन्यासुरतचातुर्यं जामाता वेत्ति नो पिता । इति तस्या उपयोगविधायकास्तु कवय एवेति ।

विधुं तुदतीति विग्रहे विध्वरुषोस्तुद इति सूत्रेण खशि विधुन्तुद इति सम्पद्यते । इमाः कृद्वृत्तयः । शीर्षच्छेदं नित्यमर्हन्तीति विग्रहे शीर्षच्छेदाद्यच्चेति यति ठकि वा शीर्षच्छेद्यः शीर्षच्छेदिकः इति प्रयोगद्वयं निष्पद्यते । इयं तद्धितवृत्तिः । यद्यत्र प्रयोगाः एते प्रयुक्ताः स्युस्तदा कषणादिषु कर्मभावेन विशेषणतयान्वितानां सर्वादीनां तेषूत्कर्षाधाननिमित्तं प्राधान्यं विवक्षितं न लभ्येत प्रत्युत कर्त्तुरविवक्षितमिह तदाप्येत कर्त्रर्थकत्वात्प्रत्ययानामिति कृत्तद्धितवृत्ती न विहिते इति ।

सर्वार्थस्येत्यादिना । उत्कर्षाधायितयेति पदोक्तः उत्कर्षपदार्थो निरूप्यते। भुवनाय त्रिभुवनाय । अभयेतिपदं स्वसदृशानामुपलक्षणम् । तेन सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः । सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् । इत्यादयोऽपि भावा गृह्यन्ते । बोधिसत्वानाम् बुद्धानाम् । एतत्तेषां संज्ञापदम् । तदन्तः पातित्वात् सर्वान्तः पातित्वात् । तदपि।चरितमपि । तेषां बोधिसत्वानाम् । कुक्षिरिति कायोपलक्षणमित्याह–कायोपलक्षणस्य कुक्षेरिति । कषणादिकर्त्तृषु खलैदरिकराहुषु । अकार्यं कषणादि । अतिरेकः आधिक्यम् । उत्कर्षमादधतां सर्वादीनां विशेषणानाम् । शीर्षच्छेदस्य उत्कर्षमपराधातिरेकमादधतः । निग्रहो दण्डः

धान्येन विवक्षा शीर्षच्छेदस्य च शारीरेषु निग्रहेषु तदतिरिक्तस्यान्यस्य निग्रहस्याऽसम्भवात्।

यथा 'रामोऽस्मि सर्वं सहे' इति "उचितकारित्वं प्रति किमुच्यते रामभद्रस्य दशरथस्य हि प्रसूतिरसावि' ति च।

प्रत्ययोत्पत्तौ पुनर्न्यग्भूतसर्वादिकर्मभावः कषणादिषु कर्त्रंश एवोन्मग्नतया प्रकाशते न कर्मांशः तत्रैव प्रत्योत्पत्तेः।

वाक्ये तु यद्यपि शब्दवृत्तौ क्रियायाः प्रधानभावेन प्रतितिस्तथापि तत्रान्यो विवक्षाकृतः साधनानामपि स प्रतीयत एव।

---

व्यक्तिविवेकव्याख्यानम्।

खलौदरिकराहुष्विवत्यर्थः।

रामोऽस्मि सर्वं सह इति। 'पूःसर्वयोर्दारिसहोः (३-२-४१) इति खचोयं विषयः। दशरथस्य हि प्रसूतिरसाविति तस्याऽपत्यमि'ति इञ् प्रत्यये तद्धिते कृते दाशरथिशब्दस्यायं गोचरः।

वाक्ये तु यद्यपीति। तदुक्तम्-'क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते' इति। अन्य इति वक्ष्यमाणन्यायेन शब्दकृतसामर्थ्योक्तिः। स इति प्रधानभावेनेत्यत्र निर्दिष्टः प्रधानभावः।

मधुसूदनीविवृतिः।

शिरश्च्छेदनाख्यः। तदतिरिक्तस्य तादृशेषु अपराधिषु शिरसश्छेदातिरिक्तस्य। अन्यस्य दण्डस्य।

यथा "रामोऽस्मि सर्वं सहे"इत्यत्र सर्वं सहे इति विग्रहे पूःसर्वयोर्दारिसहोरिति खचि सर्वंसह इति स्यात्। रामभद्रस्य उचितकारित्वं प्रति अनुरूपकर्तृत्वविषये किमुच्यते असौ दशरथस्य प्रसूतिः। अत्राऽपि तस्यापत्यमित्यधिकारे अत इञिति इञि दाशरथिरिति स्यात्परं गुणीभावः स्यात्। अत्र सहृदयाः प्रमाणम्।

कृते प्रत्यये चमत्कारो न स्यादिति प्रकाशयति–प्रत्ययोत्पत्ताविति। उक्तेषु स्थलेषु प्रत्ययानामुत्पत्तौ पुनः न्यग्भूतः गुणीभूतः सर्वादिनिष्ठः कर्मभावो येन स कर्त्रंश एव कषणादिषु क्रियासु उन्मग्नतया उत्कटतया अर्थात् प्रधानतया प्रकाशते प्रतीयते न कर्मरूपोंऽशः। कथमित्याह–तत्रैव कर्त्तर्येव प्रत्ययानामुत्पत्तेः अतः कारकाणां गुणत्वमिति भावः।

ननु एतत्प्रदर्शितं कारकाणां प्राधान्यमनुपपन्नम्। वाक्यं हि क्रियाप्रधानं भवति "क्रियाप्रधानं गुणवदेकार्थं वाक्यमिष्यते" इत्युक्तेः। अर्थात् क्रिया साध्या। साध्यं साधयितुमेव साधनानां प्रवृत्तिरपेक्षितेति अङ्गभूतानां साधनानां कारकाणामुक्तं प्राधान्यमसदेवेत्यत आह—वाक्येत्विति। यद्यपि शब्दवृत्तौ कृत्तद्धितसमासरूपशब्दनिष्ठवृत्तिस्थले। वाक्ये क्रियायाः प्रधानभावेन प्रतीतिर्जायते तथापि तत्र वाक्ये अन्यः

न चैकस्मिन्नेव वाक्ये द्वयोः साध्यसाधनयोर्युगपत्प्रधानभावोऽनुपपन्न इति शक्यं वक्तुं शब्दार्थसामर्थ्यविवक्षाकृतानां त्रयाणामप्येकस्यैव विवक्षाकृतस्य प्राधान्यस्य बलीयस्तया तयोः समशीर्षिकाभावात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

शब्दार्थसामर्थ्यविवक्षाकृतानां त्रयाणामपीति शब्दकृतं शब्दसंस्कार महिम्ना निष्पन्नं यथा कर्मधारयादुत्तरपदस्य । अर्थसामर्थ्यकृतं वस्तुवृत्तनिष्पादितं यथा 'ग्रहं सम्मार्ष्टी'त्यादौ ग्रहादेः । तस्य संस्कार्यत्वेन वस्तुतः प्राधान्यम् । विवक्षितं यथा रामस्य पाणिरसी'त्यादौ रामादेः । तत्र त्रिषु प्राधान्येषु विवक्षाकृतमेव प्राधान्यं प्रधानम् । तत्कृतत्वात् काव्यार्थचमत्कारस्य । अत एवोक्तं तयोः समशीर्षिकाभावादिति । तयोरिति शब्दार्थसामर्थ्यकृतयोः विवक्षाकृतेन सहेत्यर्थात् ।

मधुसूदनीविवृतिः ।

क्रियाऽपेक्षया पृथक् अर्थात् विवक्षाकृतः स प्रधानभावः साधनानामपि कारकाणामपि प्रतीयत एव ज्ञायत एव ।

ननु तथाप्यनुपपन्नम् । एवं क्रियाऽपि प्रधानम् तत्साधनान्यपि प्रधानानि इत्युभयोः प्रधानयोः समत्वात् सम्बन्धाभावत्यांशक्य समाधत्ते—न चैकस्मिन्निति । एकस्मिन् एव । वाक्ये साध्यसाधनयोः द्वयोः युगपदेककालं प्रधानभावः अनुपपन्नः अनन्वयादिति शेषः इति वक्तुं न शक्यम् । शब्दश्चार्थश्चेति शब्दार्थौ तयोः सामर्थ्यं शब्दार्थसामर्थ्यं । ते च (शब्दसामर्थ्यं च अर्थसामर्थ्यं च) विवक्षा चेति शब्दार्थसामर्थ्यविवक्षाः । तत्कृतानां त्रयाणामपि प्राधान्यानां मध्ये । अयमयं भावः । यद्यपि त्रिकृतं प्राधान्यमस्ति तथापि एकस्यैव विवक्षाकृतस्य प्राधान्यस्य बलीयस्तया चमत्कारोत्पादकत्वहेतोः बलवत्तया तयोः शब्दार्थसामर्थ्यकृतयोः प्राधान्ययोः समशीर्षिकाभावात् विवक्षाकृतप्राधान्येन सह तुल्यकक्ष्याभावात् । तयोः प्राधान्यमन्वयोपयोगि विवक्षाकृतं प्राधान्यं चमत्कारोपयोगि इति न समशीर्षिकतेति भावः ।

शब्दार्थसामर्थ्यविवक्षाकृतानामिति । इदायं स्वरसः । शब्दसामर्थ्यकृतम् अर्थसामर्थ्यं कृतं विवक्षाकृतमिति प्राधान्यं त्रिविधम् । तत्र शब्दसामर्थ्यकृतं प्राधान्यं च द्वैधमप्येकमेवेति मत्वा प्राधान्यगतत्रित्वनिरूपणा । तद्यथा शब्दे सामर्थ्यं द्विविधम् व्यपेक्षालक्षणमेकम् एकार्थीभावलक्षणं द्वितीयम् । सामर्थ्यं संगतार्थत्वम् । अर्थे सङ्गतत्वं च सम्बन्ध इति । व्यपेक्षा स्वार्थपर्यवसायिनां पदानामाकांक्षादिवशाद्यः परस्परसम्बन्धः तत्स्वरूपा । सा च वाक्ये भवति वाक्ये च क्रियायाः प्राधान्यम् । अत एवोच्यते "वाक्ये तु यद्यपि शब्दवृत्तौ क्रियायाः प्रधानभावेन प्रतीति" रिति । एवं चात्र "शब्दवृत्तौ" इत्यस्य पदविधौ" इत्यर्थो बोध्यः । अन्यथा हि वृत्तिपदार्थस्य परस्य शब्दस्य योऽर्थस्तस्य शब्दान्तरेण अभि-

तदिदमत्र तात्पर्यं यत् कथञ्चिदपि प्रधानतया विवक्षितं न तन्निय-

व्यक्तिविवेकव्याख्यानम् ।

ननु पूर्वं शाब्दस्यैव प्राधान्यस्य वैवक्षिकत्वमुक्तमन्यस्य तु वास्तवत्वम् । तत् कथमिह शाब्दवैवक्षिकयोरन्यत्वमुच्यते । अन्यत्वे वा प्राधान्यत्रयप्रतिपादनेऽर्थसामर्थ्यकृतविवक्षाकृतयोः को विशेषः । शब्दकृताद्धि प्राधान्यादन्यदर्थसामर्थ्यमुच्यते । तेन विवक्षाकृतस्य उक्तत्वात् । तत् किमर्थसामर्थ्यकृतमवशिष्यत इति । नैष दोषः । पूर्वं हि शाब्दिकैकगोचरस्य शाब्दिकविवक्षाकृतत्वाद् वैवक्षिकत्वम् । अन्यस्य तु कविगोचरस्य वास्तवत्वं तदेवार्थत्वम् । इह पुनः सहृदयैकगोचरस्य कविविवक्षावशाद्वैवक्षिकत्वमुच्यते । शाब्दिकैकविषयस्य शाब्दत्वमित्यपेक्षाभेदात् पूर्वस्तावन्न विरोधः ।

यदपि प्राधान्यत्रयप्रतिपादनेऽर्थसामर्थ्यविवक्षाकृतयोर्भेद उक्तस्तत्रायं भावः—इह शाब्दं वास्तवं चेति द्विविधमेव प्राधान्यम् । वास्तवत्वस्य च विवक्षानपेक्षत्वेन वस्तुसामर्थ्यप्रयोजकाधीनत्वादर्थसामर्थ्यकृतत्वमुक्तम् । सत्यपि शब्दकृतादन्यत्व उत्कर्षापकर्षप्रतिपादनप्रयुक्तविविक्षाकृतत्वे वास्तवमेव विवक्षाकृतं प्रतिपादितम्। तथा च 'ग्रहं सम्मार्ष्टी'ति वैदिकं विवक्षानपेक्षमर्थसामर्थ्यकृतस्योदाहरणं दत्तमिति विषयविभागव्यवस्थितेर्न द्वितीयोऽपि विरोध इति समञ्जसं सर्वम् ।

एवं कृत्तद्धितवृत्तिविषये आतिदेशिकं गुणप्रधानभावं विचार्य समासगतत्वेनौपदेशिकं प्रकृतमनुसन्धत्ते तदिदमत्रेति । सरूपाणामिति द्वन्द्वसमाससमा-

मधुसूदनीविवृतिः ।

धानरूपत्वात् यथा राजपुरुषः इत्यत्र शब्दान्तरेण राजशब्देन पुरुषशब्दस्य अर्थोऽभिधीयते विवक्षाकृतप्राधान्यनिरूपणमसङ्गतमेव स्यात् । अथाऽपि क्रियायाः प्रधानभावेन प्रतीतिरित्यपि कथनमसङ्गतं स्यात् । तत्र वृत्तौ क्रियाप्राधान्यस्य अलब्धेः । एकार्थीभावश्च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टार्थैकत्वरूपः । तत्र च क्वचिदुत्तरपदस्य कुहचित्पूर्वपदस्य कुत्रचन उभयपदस्य कस्मिंश्चिच्च अन्यपदस्य प्राधान्यं तस्य च स्वरविषये इन्द्रशत्रुर्वर्धस्वेत्यादौ उपयोग इति बोध्यम् उभे अपीइमे संहत्योक्तम् । अर्थसामर्थ्यकृतं वस्तुस्वभावलब्धम् । यथा अग्निहोत्रं जुहोति यवागूं पचति इत्यत्र पूर्ववाक्ये जुहोत्या हवनं विहितं तच्च करणसापेक्षमिति उत्तरपठितस्याऽपि यवागूं पचतीति वाक्यस्य पूर्वं बोधः । यथा विपच्य यवाग्वा अग्निहोत्रहोमं भावयेदिति भावः । अत एवोच्यते पाठक्रमादर्थक्रमोबलीयान् । विवक्षाकृतं च प्राधान्यं वक्तुरिच्छया प्रतिपादितम् । यदन्यस्योत्कर्षापकर्षाधानतया विवक्षितं यथा दशरथस्य प्रसूतिरसावित्यादौ दशरथादेः । एषु च यथोत्तरं बलवत् । तत्र अर्थसामर्थ्यकृतम् अर्थात् वास्तवं प्राधान्यं नियतमेव न परिवर्त्तनं सहते वह्नेरुष्णत्वगुणवत् । विवक्षाकृतं च तत् सहते ।

नन्‌ु कोऽयमवसरः प्राधान्यत्रयनिरूपणस्येत्याह—तदिदमत्र तात्पर्यमिति ।

मेनेतरेण सह समासमर्हतीति । इतरत्तु विशेष्यमन्यद्वास्तु न तत्र नियमः । तेन द्वन्द्वपदानां सरूपाणां च पदानामर्थस्यान्योन्यं विशेषणविशेष्यभावाभावेऽपि यदा प्रत्येकं क्रियाभिसम्बन्धोपगमलक्षणं प्राधान्यं विवक्ष्यते तदा तेषामपि समास एकशेषश्च नेष्यत एव यथा—

"किमञ्जनेनायतलोचनाया हारेण किं पीनपयोधरायाः !
पर्याप्तमेतन्ननु मण्डनं ते रूपं च कान्तिश्च विदग्धता च ॥"

इत्यत्र रूपादीनां प्रत्येकं मण्डनक्रियाभिसम्बन्धकृतं प्राधान्यं स्त्युद्दी-

व्यक्तिविवेकव्याख्यानम् ।

नन्यायत्वादेकशेषवृत्तिरपि स्वीकृता । विशेषणविशेष्यभावाभावेऽपीति समासोऽङ्कनिकायां प्रायग्रहणप्रयोजनं प्रकाशयति ।

रूपं च कान्तिश्च विदग्धता चेति, अमृतेन विषेणेति च अभिहितानभिहितकर्तृविभोगेनोदाहरणद्वयम् । रूपमित्यादौ हि गम्यमानभवनक्रियापेक्षं रूपादीनां कर्तृत्वम् । एतेन तत्पुरुषस्य कर्त्रुदाहरणप्रस्तावे कर्त्रादीनां कारकाणाम् अनेके

मधुसूदनीविवृतिः ।

यद्वस्तु कथञ्चिदपि केनाऽपि प्रकारेण शब्दसामर्थ्येन अर्थसामर्थ्येन वा विवक्षया वा प्राप्तया प्रधानतया विवक्षितं भवेत् तद्वस्तु नियमेन नियमतः इतरेण वस्तुना सह समासं नार्हति इति । इतिशब्दः तात्पर्यसमाप्तिं सूचयति । ननु समासोऽनेकयोस्तत्र एकं चेत् प्रधानतया विवक्षितम् तर्हि अवशिष्टस्य किं स्वरूपमित्यत आह–इतरच्चेति । इतरदवशिष्टं वस्तु विशेष्यं भवतु अन्यद्वा विशेषणं वा भवतु तत्र इतरद्विषये नियमो नास्ति एतदेव भवतु इति नियमो न भवति ।

ननु यदा एकस्य विशेष्यत्वं तर्हि अपरस्य विशेषणत्वम्, यदि वा विशेषणत्वं तर्हि विशेष्यत्वं स्यादेव । अथ किमेतादृशमपि विशेष्यविशेषणभावविरहितं स्थलं येनैतत् नियमराहित्यं चोदयति इति चेत् । अस्ति । द्वन्द्वे एकशेषे च । तदेतदाह–तेनेति । तेन तादृशनियमाभावेन हेतुना । उपगमः स्वीकारः । तेषामपि द्वन्द्वपदानां सरूपाणां च पदानामपि ।

किमञ्जनेनेति । नेत्रयोः विस्फारीकरणार्थमञ्जनादानं परमस्यास्तु ते स्वभावतः आयते दीर्घे इति आयतलोचनाया अस्याः नायिकाया अञ्जनेन कज्जलेन किम् । अर्थात् न किमपि । गलवक्षसोः शोभायै गले हारः आमुच्यते परमियं निसर्गतः पीनपयोधरा । एवं पयोधराणां पीनत्वेन वक्षसः शोभा तदाकलिता च गलस्यापि सेत्युन्नेया सुधीभिः । अर्थात् तच्छोभाकृष्टो नायकः गलेऽस्याः भुजपाशमर्पयिष्यति इति गलशोभाऽपि भवित्री एव । तथा च पीनपयोधराया हारेण किम् न किमपीत्यर्थः । ननु एतत् ते रूपम्, कान्तिः, विदग्धता च मण्डनं भूषणम् पर्याप्तं परिपूर्णम् । तत् प्राधा-

पनपर्यवसायि विवक्षितमिति न तत् तेषां समासेऽवसादितम् तथा च—

"यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः॥"

इति। एकशेषे यथा—

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः।

कश्च कश्च।

अर्जुनश्च स कर्णारिः स च क्रूरो वृकोदरः॥"

प्रत्युदाहरणमेतदेव कृतैकशेषमवगन्तव्यम्।

---

व्यक्तिविवेकव्याख्यानम्।

षामि ति यदुक्तं, तत् समाहितम्।

कश्च कश्चेति। अत्रैकशेषो न कृतः। कृतैकशेषमिति काविति प्रयोगे।

मधुसूदनीविवृतिः।

न्यम्। तेषां रूपकान्तिविदग्धतानाम्। समासे द्वन्द्वे। न अवसादितं न नाशितम्।

यान्त्या मुहुरिति। यान्त्या गच्छन्त्याः गुरुजनैः सह इति शेषः। मुहुः वारं वारम्। वलिता तिर्यक्कृता कन्धरा ग्रीवा यस्मिन् तत् वलितकन्धरम्। अत आवृत्तवृन्तं घूर्णमानप्रसवबन्धनं यत् शतपत्रं कमलं तन्निभं तत्सदृशम् आननं मुखं वहन्त्या धारयन्त्याः पक्ष्मलाक्ष्याः नायिकाया इत्यर्थः अमृतेन प्रेममयत्वात्, विषेण वियोगकाले दुःखजनकत्वात् दिग्धः उपचितः कटाक्षः मे हृदयं गाढं यथा स्यात्तथा निखात इव उत्खातुमशक्यो यथा भवेत्तथा लग्न इव। अत्र विषामृतयोः छेदनक्रियाभिसम्बन्धकृतं प्राधान्यम् उत्कण्ठारूपसंचारिभावोद्दीपनपर्यवसायि विवक्षितमिति न तत् तयोः समासेऽवसादितम्। अत्र उदाहरणयोः द्वन्द्वविषयता वर्ततेऽतः कर्त्रादिविभागो न दर्शितः। द्वन्द्वे च विशेष्यविशेषणभावाकलनस्य अप्रसङ्गात्। परं रूपं पर्याप्तं मण्डनमस्ति इति नयेन कर्तृविधया अन्वयः संभाव्य एव। एवमत्र अनेककर्तृकत्वम्। उत्तरत्रोदाहरणे अनेककरणकत्वं बोध्यम्। ततश्चोक्तं पूर्वम् कारकाणामनेकेषामित्यादि तत् समाहितं भवति।

एवं क्रमप्राप्तमेकशेषं निरूपयति प्राप्तावेकेति। वेण्यां ५ मेऽङ्के सुयोधनान्वेषकयोः भीमार्जुनयोरागमनसूचिका सूतस्येयमुक्तिः। पृच्छन्तौ प्राप्ताविति द्वित्वश्रुत्या पृच्छति कश्च कश्चेति। अत्र कौ इति एकशेषरूपं स्यात्। परं कश्च कश्चेति एकशेषाभावे प्रष्टुः तौ प्रति जिज्ञासातिशयो विभाति। कृते च तस्मिन्नैव भातीति एकशेषाभावो युक्त एव।

उत्खातुम्

यत्र पुनरेष प्रधानेतरभावो न विवक्षितः स्वरूपमात्रप्रतिपत्तिफलश्च विशेषणविशेष्यभावस्तत्र समासासमासयोः कामचारः । यथा—

"स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥

इत्यत्र तु भवत इति रिपुस्त्रीणामिति च रिपुस्त्रीणां स्तनयुगस्य च सम्बन्धित्वेन यद्विशेषणं न ततस्तेषामुत्कर्षयोगः कश्चिद्विवक्षितः, अपि तु तत्सम्बन्धप्रतीतिमात्रम् । तच्च व्रतमिव भवदरिवधूस्तनद्वितयमित्यतः समासादपि तुल्यमेव । यथा चात्रैव रिपुस्त्रीणामिति रिपुसम्बन्धमात्रप्रतीतिः स्त्रीणामिति ।

व्यक्तिविवेकव्याख्यानम् ।

अधुना प्रधानेतरभावापत्तिं दर्शयति यत्र पुनरिति । भवत इति रिपुस्त्रीणां सम्बन्धित्वेन, रिपुस्त्रीणामिति च स्तनयुगस्य सम्बन्धित्वेनेति योजना । रिपुस्त्रीणामिति समासस्योदाहरणम् । न चात्र सम्बन्धमात्रादतिरिक्तं प्रतीयते ।

मधुसूदनीविवृतिः ।

ननु यदा प्रधानेतरभावो विवक्षाधीनस्तर्हि यदा न विवक्षा तादृशी तदा किमास्थेयमित्याह—यत्र पुनरेष इति । यत्र विशेष्यविशेषणयोर्मध्ये प्रधानेतरभावो न विवक्षितः न इष्टः प्रत्युत स विशेष्यविशेषणभावः स्वरूपमात्रस्य प्रतिपत्तिरूपं फलमाचिनोति । तत्र स्थले समासासमासयोः कामचारः समासो भवतु मा वा भवतु इति यथेच्छम् ।

यथेति समासासमासयोर्यादृच्छिकस्थलं दर्शयति स्तनयुगमिति । इमामार्यां कादम्बर्यां मातङ्गकन्यानीतः शुकः राजानमुद्दिश्य पपाठ । भवतस्तव रिपुस्त्रीणाम् स्तनयुगं व्रतमिव नियममिव चरत्यासेवते । कीदृशं तदित्याह हृदयस्थो यः शोकः भर्तृवियोगजनितं दुःखं तदेवाग्निस्तस्य समीपतरवर्ति अतिनिकटस्थायि, अश्रुभिः प्रलापाश्रुभिः स्नातं कृताभिषेकम् । विमुक्तः त्यक्तः आसमन्तात् सर्वथेत्यर्थः वैधव्ये भूषणादिधारणस्य निषेधादनुचिताद्वेति हारो मौक्तिकं सरः येन तत्तथा । अन्योऽपि यो व्रतं चरिष्णुः सोऽपि कृतत्रिषवणः अग्निसेवायां सततमुद्युक्तः त्यक्ताहारो भवतीति प्रसङ्गार्थः ।

अत्र भवत इति पदं रिपुस्त्रीणां सम्बन्धित्वेन विशेषणम् । रिपुस्त्रीणामिति च पदं सम्बन्धित्वेन स्तनयुगमित्यस्य विशेषणम् । ततो विशेषणात् तेषां विशेष्यणाम् मध्ये कश्चित् उत्कर्षयोगो न विवक्षितः । तत्किमित्याह-अपि त्विति । किन्तु सम्बन्धमात्रं ततो विशेषणात् प्रतीयते इति भावः । तच्च सम्बन्धप्रतीतिमात्रं च ।

( मा भवतु समासासमासाभ्यामिह कश्चिदुत्कर्षः । परं शत्रुस्त्रियो व्रतं चर-

  

विनोत्कर्षापकर्षाभ्यां स्वदन्तेऽर्था न जातुचित् ।
तदर्थमेव कवयोऽलङ्कारान् पर्युपासते ॥ १४ ॥
तौ विधेयानुवाद्यत्वविवक्षैकनिबन्धनौ ।
सा समासेऽस्तमायातीत्यसकृत् प्रतिपादितम् ॥ १५ ॥
अत एव च वैदर्भीरीतिरेकैव शस्यते ।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते ॥ १६ ॥
सम्बन्धमात्रमर्थानां समासो ह्यवबोधयेत् ।
नोत्कर्षमपकर्षं वा—

---

व्यक्तिविवेकव्याख्यानम् ।

**तदर्थमेवेति** उपमोत्प्रेक्षादयोऽप्यलङ्काराः उपमोत्प्रेक्षादीनामुत्कर्षमपकर्षं वा प्रतिपादयितुं विधीयन्ते । अन्यथा तद्विरचनं निष्प्रयोजनं स्यात् । **तौ विधेयेति** । उत्कर्षापकर्षौ ।

**सा समास** इति विवक्षा परामृश्यते ।

**वैदर्भीति** यद्यपि वामनमते असमासा पाञ्चाली, मध्यसमासा तु वैदर्भी, तथापि मतान्तरे विपर्ययः स्थित इति तदभिप्रायेणेहासमासा वैदर्भी कथिता ।

मधुसूदनीविवृतिः ।

न्ति इत्यभिप्राये स्तनयुगं वाष्पसलिलस्नातं शोकाग्निसमीपतरवर्ति विमुक्ताहारं सद् व्रतम् चरतीत्युक्तिः परमरमणीयाम् औचितीं कर्तृपदस्य सम्भावयति परं नैप प्रकृतोपयोगीति ध्येयम् । )

**विनोत्कर्षापकर्षाभ्यामिति** । उत्कर्षापकर्षाभ्यां विना अर्थाः पदार्थाः जातुचित् कदाचिदपि न स्वदन्ते रसं न जनयन्ति इत्यर्थः । तदर्थमेव आस्वादप्रयोजकोत्कर्षापकर्षार्थमेव कवयः काव्येषु अलङ्कारान् पर्युपासन्ते सेवन्ते विदधते इत्यर्थः ।

**तौ विधेयेति** । तौ उत्कर्षापकर्षौ । विधेयानुवाद्यत्वस्य विशेष्यविशेषणयोर्मध्ये प्रधानेतरभावस्य या विवक्षा सा एव एकं निबन्धनं कारणं ययोस्तौ तथोक्तौ । सा विधेयानुवाद्यत्वविवक्षा समासे समस्ते पदे अस्तं नाशमायाति इति एतद् असकृत् पुनः पुनः प्रतिपादितम् ।

**अत एवेति** । अत एव समासकृतवैशसादेव च एकैव वैदर्भीरीतिः शस्यते उचिता भवति । यतः तत्र वैदर्भीरीतौ अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते इति लक्षणात् समाससंस्पर्शः समाससम्बन्धः नैव उपपद्यते नैव विद्यत इत्यर्थः ।

**सम्बन्धेति** । ननु कोयं दुराग्रहो भवतां यत् समासो नैवास्थेयः इति चेच्छृणु । समासो हि अर्थानां वस्तूनां सम्बन्धमात्रं केवलमन्वयम् अवबोधयेत् । उत्कर्षम् अपकर्षं वा न बोधयेत् । यथा—

यथा—

"ऊर्ध्वाक्षितापगलितेन्दुसुधालवाक्त-
जीवत्कपालचयमुक्तमहाट्टहासम् ।
सन्त्रस्तमुग्धगिरिजावलिताङ्गसङ्ग-
हृष्टं वपुर्जयति हारि पिनाकपाणेः ॥"

इति ।

वाक्यात्तूभयमप्यदः ॥ १७ ॥

यथा—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।

---

व्यक्तिविवेकव्याख्यानम् ।

कारिकामध्य एव सम्बन्धमात्रप्रतीतौ समासस्योदाहरणम् । ऊर्ध्वाक्षितापेति । अत्र चतुर्थपादकदेशयुक्तस्य पादत्रयस्य समासे सम्बन्धमात्रं प्रतीयते नोत्कर्षापकर्षौ ।

वाक्यात्तूभयमिति । उभयं सम्बन्धरूपमुत्कर्षापकर्षरूपं च वस्त्वित्यर्थः ।

अत्रोदाहरणं मे यदरय इति समासे हि मदरय इति स्यात् । न चास्मादतिशयः प्रतीतः । ननु पदादुत्तरपदयोर्युष्मदस्मदोः 'तेमयावेकवचनस्य' ( ८-१-२२ ) इति तेमयावादेशावुक्तौ । न चात्र पदात् परोऽस्मच्छब्दः । एवशब्दः पदमिति चेन्न ।

मधुसूदनीविवृतिः ।

ऊर्ध्वाक्षितापेति । ऊर्ध्वाक्षणः भालनेत्रस्य अग्निस्वरूपस्य तापेन गलितो य इन्दुस्तस्य सुधालवेन अमृतकणेन अक्तं त्रक्षणम् अर्थात् सम्बन्धः तेन जीवद्भिः कपालचयैः मुक्तः महान् अट्टहासो यस्मिन् । संत्रस्ता भीता मुग्धा भावावबोधे अचतुरा या गिरिजा पार्वती तस्याः वलिताङ्गस्य सङ्गात् हृष्टम् । हारि हारवत् मनोरमं च पिनाकपाणेः शिवस्य वपुः शरीरं जयति सर्वोत्कर्षेण वर्त्तते ।

अत्र पद्ये समासः केवलं सम्बन्धमात्रं परिचाययति न कीदृशमपि उत्कर्षमपकर्षं वेति ।

वाक्यात्त्विति । तु किन्तु वाक्यादुभयमपि अदः उत्कर्षमपकर्षं च प्रतीयते ।

यथा—

न्यक्कार इति । अयमेव मे मम न्यक्कारः निन्दा । ननु कोऽयमित्याह—यत् अरयः। अन्येषां तु अरिकृतोपद्रवादावपि न न्यक्कारः मम पुनर्वशीकृतजगत्त्रयस्य अरिसत्त्वेऽपि न्यक्कारः इत्यर्थः । तत्राऽपि अरयः नत्वेकः द्वौ वा तौ । अस्तु नाम अरिसत्ता परन्तु यदि कश्चिन्महापुरुषो भवेत्तदापि मर्षणीयम् परन्तु तत्राऽपि अरिष्वपि असौ अर्थात् मानुषः । सोऽपि तापसो वराकः अकर्मण्य इत्यर्थः । यद्यपि अरय इति बहुत्वमुक्त्वा तत्राप्यसौ तापस इति एकत्वनिर्देशोऽसङ्गतः तथापि प्राधान्येन व्यपदेशा भवन्तीति

  

धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥" इति ।

---

व्यक्तिविवेकव्याख्यानम् ।

तत्प्रयोगे 'नचवाहाहैवयुक्ते' ( ८-१-२४ ) इति निषेधाद् भिन्नवाक्यगतत्वाच्च । समानवाक्ये हि निघातयुष्मदस्मदादेशाः । एतेनैव मे इति (न) व्यतिरिक्तं पदान्तरमिति प्रत्युक्तम् । उत्तरपद एव मे इति शब्दादेशः । अत्र केचिदाहुः वाच्ये तावद्रसप्रतीतिर्निर्व्यूढा । तामनुपमर्दयन् काव्ये यद्यसाधुशब्दोऽपि स्यान्न तदा स्थूलः कश्चिद् दोषः । काव्ये हि रसप्रतीतिः प्रधानम् । तदनिर्वाहे काव्यमेव न स्यात् । अपशब्दप्रयोगे तु लक्षणास्मरणमात्रम् । तदुक्तं—

"नीरसस्तु प्रबन्धो यः सोऽपशब्दो महान् कवेः ।
स तेनाकविरेव स्यादन्येनास्मृतलक्षणः ॥"

इति । अन्ये त्वाहुः । भवतु रसापेक्षयापशब्दस्य स्वल्पदोषत्वं तथापि महाकवीनामपशब्दप्रयोगो महान् दोषः । तेनात्र 'तेमेशब्दौ निपातेष्वि'ति सदृशो विभक्तिप्रतिरूपको मेशब्दो निपातो, यथा अहन्ता अहंयुरित्यादावहंशब्दः । ततश्च नात्र कश्चिद्विशेष इति ।

मधुसूदनीविवृतिः ।

नयात् वानरीचतुरङ्गिणीसहितस्यापि रामस्य एकस्यैव निर्देशः कृतः । अतोऽत्र मुख्य इतिपदमध्याहार्यम् । तेन च तत्राऽपि अरिष्वपि मुख्यः असौ तापस इति योजनाऽनुसन्धेया । मनुष्याणां भक्ष्यत्वात् तपस्विनां च शस्त्रादिविद्याऽपाटवाच्च न्यक्कारसंभावना । ननु यदि तापसोऽपि रिपुरस्ति तर्हि भवतु, तस्याकर्मण्यत्वाद्भयं नास्तीति चेन्न । सोऽप्यत्रैव नान्यस्मिन् स्थले यथा पंचवट्यां खरादयो हता तथा न अपि तु मत्समक्षमेव । राक्षसानाम् एकं वा द्वौ वा त्रीन् वा राक्षसान् न किन्तु तेषां कुलं समूहम् आबालवृद्धाङ्गनं सर्वम् । तत्राऽपि हन्त्येव इति न अपितु निहन्ति निःशेषेण हन्ति धनजनतन्वादिबलं सर्वं निःशेषीकृत्य हन्ति मारयति । अहो आश्चर्यम् । एतत्सर्वं वीक्ष्याऽपि न कश्चिज्जीवति म्रियत एव सर्वः । परम् रावणः सन्नपि यो निजभुजप्रतापेन त्रीन् लोकान् सन्ताप्य रावयामास । यस्माल्लोकत्रयं चैतद्रावितं भयमागतम् । तस्मात्त्वं रावणो नाम नाम्ना वीरो भविष्यति इति रामायणीकथा ज्ञेया । स रावणो जीवति न मृतः । शक्रजितम् । यः शक्नोति परान्नाशयितुं स शक्रोऽपि येन जितः स्ववशे कृतः तमपि शक्रजेतारं धिग् धिग् येन मनुष्यमात्रात्पराजयो लब्धः । प्रबोधितवता उत्थापितेन कुम्भकर्णेन किं न किञ्चित्फलम् । स्वर्ग एव ग्रामटिका अल्पग्रामः तस्य विलुण्ठनेन ध्वंसनेन वृथोच्छूनैः वृथापुष्टैरेभिः विंशतिसंख्याकैः भुजैः किं न किञ्चित्फलम् । द्विदशभुजस्यापि द्विभुजात्पराजय इति महती न्यक्कृतिः ।

किन्तु प्रवृत्तिरेतस्य रसाभिव्यक्त्यपेक्षया।
शान्तश्रृङ्गारकरुणानन्तरेण प्रशस्यते ॥ १८ ॥
यतः समासो वृत्तं च वृत्तयः काकवस्तथा।

---

व्यक्तिविवेकव्याख्यानम्।

किं सर्वात्मना करणस्य दुष्टत्वमेव नेत्याह किन्त्विति। एतस्य समासस्य। अन्तरेणेति वीररौद्रादेः समासेन प्रकाश्यत्वात्।

वृत्तं वसन्ततिलकादि। वृत्तयः कैशिक्याद्याः उपनागरिकाद्याश्च। काकुः

मधुसूदनीविवृतिः।

अत्र अयमेव मन्न्यक्कारः, यत्तापसशत्रुत्वम्। इति रीत्या समस्तपदानां योजने न व्याख्योक्तः समुत्कर्षः प्रतीतिपथमवतरति समालोचकानामतो वाक्यान्येव सातिशयवन्ति इति सिद्धम्।

अत्र "मे यदरय" इति प्रतीकमुपादाय यत्—समासे हि मदरय इति स्यात्, । ननु पदादुत्तरपदयोर्युष्मदस्मदोरित्यादि केषांचिद् व्याख्यानम् तदनाघ्रातव्याकरणगन्धम् अनाकलितान्वयसरणि च प्रतिभाति। तद्यथा—अयमेव मे न्यक्कारः। इत्यन्वयस्य पन्थाः। एवमेतद् एकं वाक्यम् तथा "मे" + "अरयः" इति पदयोः मध्ये यदो व्यवधानाच्च कुतः समासः। तथाच मे इत्यस्य भिन्नवाक्यस्थत्वभ्रान्त्या अस्मदः स्थाने मेइत्यादेशनिषेधः पर्यसाधि तन्न रमणीयं कस्यापि स्यात्। अयमेव मे इति विधया इदमेकं वाक्यमनुसंहितम् । यच्च एवपदमनुरुध्य "न चवाहाहैवयुक्ते" इति पाणिनेरनुशासनं प्रादर्शि तथा एवयुक्तौ मे इत्याऽदेशऽनुचित इत्यपि तदपि न हृद्यं ज्ञेयं च। तद्यथा—उक्तस्यानुशासनस्य यत्र युष्मदस्मदर्थगतान् व्यावर्त्यादीन् एवकारादयो द्योतयन्ति तदा एवादिभिः सह अर्थद्वारा तयोर्युष्मदस्मदोः साक्षाद्युक्तिः, तत्रादेशनिषेधः। न परम्परया युक्तौ निषेधः। तत्र तु स स्यादेव। इत्यर्थो वर्त्तते। किन्तु प्रकृतप्रयोगे अत्र एवकारेण सह अस्मदः कीदृशोऽपि योगो नास्ति। साक्षाद्योगस्तु मे एव न्यक्कारः इत्यन्वये स्यात्परमयमसंभवी। परम्परायोगस्य द्वारं नास्ति। अस्तु वा परम्परया योगः। तत्र परम्परायोगे आदेश आचार्यानुज्ञात एव तेन नात्र दोषलेशः सम्भाव्यः इति। एवं वागुत्पादनशीलैरतस्तत्पितृभूतैः वैयाकरणैर्नेह किमपि वक्तव्यं तदुपयोगविदः कवयो यथा चक्रुस्तथा साधु मन्तव्यम्। कन्यासुरतचातुर्यं जामाता वेत्ति नो पितेति बहुश उक्तम्।

समासविषये प्रकारान्तरं नियममाचोदयति—किन्तु प्रवृत्तिरिति। एतस्य समासस्य प्रवृत्तिः प्रयोगः रसानामभिव्यक्तिमपेक्ष्य भवति। एवं च सा प्रवृत्तिः शान्तश्रृङ्गारकरुणान् रसान् अन्तरेण विना प्रशस्यते। अर्थात् शान्तादीन् रसान् विहाय वीरादिषु समासप्रवृत्तिः शोभामावहति।

इदानीं रसाभिव्यक्तिहेतून् परिगणयति-यतः समास इति। समासादिः वाचि-

वाचिकाभिनयात्मत्वाद्रसाभिव्यक्तिहेतवः ॥ १६ ॥
स चार्धान्तावधिः कार्यो नाधिको गद्यताप्तितः ।
गद्ये हि वृत्तवैकल्ये न्यूना तद्व्यक्तिहेतुता ॥ २० ॥

व्याक्तविवेकव्याख्यानम् ।

काक्वध्यायलक्षितो ध्वनिविकाररूपो वा । वाचिकाभिनयो वाग्विकाररूपोऽनुभावः ।

अर्धान्तावधिरिति श्लोकापेक्षया अर्धमन्तावधिः । न्यूनेति पद्यापेक्षया न्यूनं रसाभिव्यक्तिहेतुत्वमित्यर्थः । यथा पूर्वोक्त इति 'ऊर्ध्वाक्षितापे'त्यादौ । समासोऽर्धान्तावधिः कार्यो नाधिक इत्यनेन व्यावर्त्यस्याधिकस्य तदुदाहरणम् ।

मधुसूदनीविवृतिः ।

काभिनयात्मकत्वात् वागभिनयस्वरूपत्वात् रसानामभिव्यक्तौ हेतुः । तत्र समासः अल्पः अनल्पः मध्यमश्चेति त्रिधा स्वस्वरूपं प्रकाशयन् रसाभिव्यक्तौ हेतुः । अत एवोक्तम्—"अवृत्तिरल्पवृत्तिर्वा माधुर्ये घटना तथे"ति, "वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि' इति च । वृत्तं छन्दोऽनुष्टुवादि । तस्यापि रसव्यञ्जकत्वम् ।

तथोक्तम् ।

काव्ये रसानुगुण्येन वर्णनानुगुणेन च ।
कुर्वीत सर्ववृत्तानां विनियोगं विभागवित् ॥
नानावृत्तविशेषास्तु कवेः शल्तस्य शासनात् ।
यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम् ॥
उग्रगोग्रहसंग्रामे तत्कालसदृशोपमाः ।
दृष्टास्त एव वैराटेस्त एवाश्वा किरीटिनः ॥
तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः ।
सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव ॥
वृत्तरत्नावली कामादस्थाने विनिवेशिता ।
कथयत्यज्ञतामेव मेखलेव गले कृता ॥ इति ।

वृत्तयः उपनागरिकाद्याः या ह्यन्यत्र रीतिनाम्ना प्रथिताः । तास्वपि रसव्यञ्जकत्वम् । यथोक्तम्—

माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजः प्रकाशकैस्तैस्तु परुषा कोमला परैः ॥ इति ।

गुणानां रसधर्मत्वेन धर्मव्यञ्जने धर्मिणोऽभिव्यक्तिरर्थादेव धर्म्यतिरेकेण धर्मस्यानवस्थितेः । काकवः प्रसिद्धाः हर्षभयशोकादिभिर्विकृतकण्ठस्वराः ।

ताश्च आकांक्षायाम् प्रश्नगर्भा आक्षेपगर्भा वितर्कगर्भा इति तिस्रः । तदभावे विधिरूपा उत्तररूपा निर्णयरूपा इति तिस्रः । एता अपि रसाभिव्यञ्जकाः ।

सचेति । समासः कीदृशः कार्य इति शिक्षयति—स च समासः अर्धावधिः अन्ता-

यथानन्तरोक्त उदाहरणे ।

तस्याच्छिन्नः पदार्थानां सम्बन्धश्चेत् परस्परम् ।
न विच्छेदोऽन्तरा कार्यो रसभङ्गकरो हि सः ॥ २१ ॥

इत्यन्तरश्लोकाः ।

यथा—'माद्यद्दिग्जगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः' इति । अत्र हि क्षुण्णद्रवच्चन्दन इति युक्तः पाठः । क्वाप्ययमपि पाठो दृश्यते ।

विधेयत्वं चैतत्प्राधान्योपलक्षणमव्यभिचारात् । ततश्च प्रधानाविमर्शोऽपि दोषतयावगन्तव्यः यथा—

"स्नेहं समापिबति कज्जलमादधाति

---

व्यक्तिविवेकव्याख्यानम् ।

तस्येति पदार्थानां परस्परसम्बन्धश्चेन्न च्छिद्यते तदा तस्य समासस्य मध्ये विच्छेदो न कार्य इत्यर्थः ।

अव्यभिचारादिति विधेयत्वं हि प्राधान्याविनाभावः ।

स्नेहमिति । अत्र पानादीनां प्रकाशनस्य च विध्यनुवादलोपित्वैककर्तृकाणां

मधुसूदनीविवृतिः ।

वधिः पादापेक्षयेति शेषः कार्यः । श्लोकापेक्षयान्तावधित्वं समास्याङ्गीकारे अन्तं यावत्समासे कृते तर्हि नाधिक इति किमपेक्ष्य निषेधः स्यात् । अधिकः पादार्धान्तावध्यपेक्षयेति शेषः । समासो न कार्यः । तत्कुतः । गद्याप्तितः गद्यस्वरूपप्राप्तेः । अधिकसमासकरणे पद्यस्याऽपि गद्यस्वरूपत्वं स्यात् । हि यतः । वृत्तवैकल्ये छन्दोभावरहिते गद्ये तद्व्यक्तिहेतुता रसाभिव्यक्तिकारणता न्यूना पद्यापक्षेया अल्पैवेति भावः ।

अनन्तरोक्ते पूर्वोक्ते ऊर्ध्वाक्षीति उदाहरण अधिकसमासेन गद्यप्राये रसव्यक्तिहेतुता न्यूनेति समन्वयः ।

समासे नियमान्तरं प्रतिप्रसुते–तस्येति । चेत् यदि समासकरणात् पदर्थानां परस्परं सम्बन्धः अच्छिन्नः नियतः । तर्हि अन्तरा मध्ये तस्य सम्बन्धस्य विच्छेदो न कार्यः। अर्थात् समासः कार्य एव । हि यतः स विच्छेदः रसभङ्गकरः ।

यथा–माद्यदित्यत्र कषणैरितिः विच्छेदः अनुचित एव । अतः माद्यद्दिगजगण्डभित्तिकषणक्षुण्णद्रवचन्दन इति समस्तः कार्यः । माद्यन्तो ये दिग्गजाः आशागजाः । तेषां यानि गण्डभित्या कषणानि तैः भग्नः क्षुण्णः अत एव स्रवत् द्रवत् चन्दनो यत्र स मलयाद्रिरितिशेषः । क्वापि पुस्तकान्तरे ।

विधेयपदं प्राधान्यपरमपि इति तदविमर्शेऽपि दूषणं भवतीति निरूपयितुमाह–विधेयत्वं चेति । प्राधान्यस्य उपलक्षणम् संग्राहकम् । तत उपलक्षणाद्धेतोः ।

स्नेहं समापिबतीति । योऽयम् । कृशानोरग्ने कणानां सञ्चयेन समूहेन सम्-

सर्वान् गुणान् दहति पात्रमधः करोति ।
योऽयं कृशानुकणसञ्चयसम्भृतात्मा
दीपः प्रकाशयति तत् तमसो महत्त्वम् ॥"

अत्र हि प्रकाशनक्रियाया एव प्राधान्यविवक्षा नान्यासामिति तासां तत्समशीर्षिकया निर्देशो दोष एव । स हि तत्र शत्रादिभिरेव वक्तुं न्याय्यो नाख्यातेन ।

---

व्यक्तिविवेकव्याख्यानम् ।

प्राधान्यभावो नापस्मर्तव्यम् । अत्र च योयमिति यच्छब्देन दीपस्य पदार्थस्य परामर्शोपक्रमे तत्तमस इति तच्छब्देन वाक्यार्थस्य परामर्शो दुष्ट इत्युपपादितं प्राक् ।

मधुसूदनीविवृतिः

भृतः पूरितः आत्मा शरीरो यस्य स दीपः स्नेहं तैलं समापिबति कज्जलमादधाति अञ्जनं करोति । सर्वान् लक्षणया सर्वविधान् कार्पासकौशेयशणादिनिर्मितान् गुणान् वर्तीः दहति । पात्रं स्नेहवर्त्योराश्रयम् अधः करोति । ऊर्ध्वज्वलनात् ज्योतिषः मूर्ध्नि स्थितिः पात्रस्याधः स्थितिः इति वस्तुस्वभावः । प्रकाशयति । तत् तमसो महत्वम्। तमसः तेजोऽभावरूपतया सति तस्मिन् दीपावश्यकता तदर्थं च स्नेहादियोजना एवं मूलकारणं तम एवेति भावः स्यात् । अन्योऽपि क्रोधकृशानुकणसञ्चयसम्भृतात्मा स्नेहं प्रेमाणम् आपिबति आचामति । कज्जलम् आदधाति दोषमुद्गिरति । स्वस्थितान् सर्वान् गुणान् अभिजनत्वपण्डितत्वादीन् दहति न्यक्करोति । पात्रं विद्वांसमपि अधःकरोति तिरस्करोति । तदेतत्तमसः तमोगुणस्य महत्वम् । तादृशगुणप्रादुर्भावे एव एतादृशी स्थितिः । अत्र योऽयमिति यच्छब्देन दीपपदार्थस्य परामर्शः, तत्तमस इति तच्छब्देन वाक्यार्थस्येति उपक्रमोपसंहारयोः संहार एव । तस्मादत्र "यच्चायमग्निकणे"ति पाठः श्रेयान् ।

अत्रेति । अन्यासां पानाधानदहनकरणानाम् । तासां पानादीनाम् तत्समशीर्षिकया प्रकाशनतुल्यश्रेणितया । स हि पानादीनां निर्देशो हि शत्रादिभिरिति ।

स्नेहं पिबन्नथ च कज्जलमादधत्सन्
ज्वालन् गुणान् विमलपात्रमधश्च कुर्वन्
यच्चायमग्निकणसञ्चयसम्भृतात्मा । इति ।
आख्यातेन तिङन्तेन समापिबतीतिरूपेण न वक्तुं न्याय्यः ।

ज्वलधातोः णप्रत्यये ज्वाल इति प्रातिपदिकात्सर्वप्रातिपदिकेभ्यः क्विबिति क्विपि धातुसंज्ञायां ज्वालतीति ज्वालन्निति सिद्धम् ।

यथा—

"विभ्राणः शक्तिमाशु प्रशमितवलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।
आधेयादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥"

व्यक्तिविवेकव्याख्यानम् ।

विभ्राण इति । शक्तिः सामर्थ्यम् आयुधभेदश्च । तारकाः ज्योतींषि दैत्यविशेषश्च तारकः । अधो निस्तेजस्त्वेन वाहनत्वेन च । शिखी वह्निर्मयूरश्च । चन्द्रस्य सुवर्णस्य सम्बन्धी कान्तावभासो लसन् देदीप्यमानो यस्मिन् । चन्द्रकाणां मेचकानामवभासो लसन् स्फुरद्यस्य । अन्धकारे तमसि अन्धकारेऽहरस्य । गुहः कुमारः । अपर इवेति अत्रापरशब्दसामर्थ्याद् (१)भूपे द्वितीयगुहत्वप्रतीतौ वस्तुतस्तदसम्भवे तत्सम्भावनायामुत्प्रेक्षा । अपरशब्दाभावे तु स्वस्वरूपस्थितस्यैव वास्तवस्य गुहस्य प्रतीताविय‌मुपमा स्यात् । एव 'मपर इव पाकशासनो' 'मौर्वी द्वितीयामि'त्यादौ च मन्तव्यम् । अहर्पतेरिति । 'अहरादीनां पत्यादिषु' इति वचनाद्रेफः । अत्र धारणादीनां गुणभावः । आधानस्य तु प्राधान्यम् ।

मधुसूदनीविवृतिः ।

यथेत्यनेन । शत्रादिभिराख्यातकथनप्रकारवदुदाहरणमाचिनोति । "विभ्राणः शक्तिमाशु" इति । अहर्पतेः सूर्यस्य आतप उद्योतः अपरो गुह इव कार्तिकेय इव अपारामपर्यन्तां लक्ष्मीं वो युष्माकमाधेयात् कुर्यादिति प्रार्थनायां लिङ् । अत्र गुहातपयोः श्लिष्टानि विशेषणानि । किंभूतः आतपः कीदृशो गुह इति क्रमशो विशेषणद्वारा स्पष्टयति । प्रशमितं शान्तिं नीतं यद् बलवदुल्वणं तारकाणां नक्षत्राणां और्जित्यम् । ऊर्जितस्य भाव और्जित्यम् तेजः । तेन गुर्वीं शक्तिं सकललोकोद्योतनसामर्थ्यं विभ्राणः धारयन् । आशु शीघ्रं प्रशमितं नाशितम् बलवतस्तारकस्य असुरस्य और्जित्यं प्रभावो यया सा चासौ गुर्वी च तां शक्तिमायुधविशेषं विभ्राणः दधानः । पुनः कीदृश आतपः लसन् यश्चन्द्रः तस्य कान्तोऽवभासः प्रकाशो यस्मात् । अपि च शिखिनम् अग्निम् लीलया अनादरेण अधः कुर्वाणः तिरस्कुर्वन् । गुहपक्षे च लसन्तो ये चन्द्रकास्तैरन्तोरमणीयोऽवभासो यस्य तम् तथोक्तम् । शिखिनम् मयूरम् लीलया विलासेन अधः कुर्वाणम् वाहनं सम्पादयन् । अन्धकारे तमसि वीक्षणानां नेत्राणाम् । अतिशयिनीं विपुलां रतिं प्रीतिमावहन् । गुहपक्षे अन्धकारिः अन्धकासुररिपुः शिवः तस्य वीक्षणानाम् सूर्यचन्द्राग्निरूपाणाम् नेत्राणां रतिं प्रीतिम् अतिशयिनीमधिकाम् आवहन् कुर्वन् । अत्र बिभ्रत्यादीनां शत्रन्तानां गुणत्वमाधानस्य प्राधान्यम् ।

---

(१) अत्रापरशब्दसामर्थ्यात् भूपे द्वितीयगुहत्वप्रतीतावित्यत्र "भूपे" इति पदे "आतपे" इति पठनीयम् ।

इत्यादौ । सर्वासां पुनः प्राधान्यविवक्षायां नाख्यातवाच्यत्वं दोषः । यथा—

"सौधादुद्विजते, त्यजत्युपवनं, द्वेष्टि प्रभामैन्दवीं
द्वारान्नश्यति चित्रकेलिसदसो, वेषं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
सङ्कल्पोपनतत्वदाकृतिरसायत्तेन चित्तेन सा ॥"

यत्रैककर्तृकाऽनेका प्राधान्येतरभाक् क्रिया ।
तत्राख्यातेन वाच्याद्या शत्राद्यैरपरा पुनः ॥ २२ ॥

इत्यन्तरश्लोकः ।

व्यक्तिविवेकव्याख्यानम् ।

कर्त्ता हि गुणक्रियां निष्पादयन् प्राधानक्रियामैदम्पर्येण निष्पादयति न तु तास्वैदम्पर्यम् । यत्र सर्वास्वैदम्पर्यं तत्र भवत्येव सर्वासामाख्यातवाच्यत्वम् । यथा—सौधादित्यादि । इतरद्प्राधान्यम् । आद्या प्रधानभूता । अपरा अप्राधान्यवती ।

मधुसूदनीविवृतिः ।

क्रियाविषये नियमान्तरं प्रतिप्रसूते—सर्वासामिति । पुनर्यदि सर्वासां श्लोकोपात्तानां यावत्क्रियाणां प्राधान्यविवक्षा स्यात् तर्हि तस्यां विवक्षायां क्रियाणामाख्यातवाच्यत्वम् आख्यातैरभिधेयत्वं भवतु तत् न दोषः । यथा—

सौधादिति । सा नायिका तव विरहेण क्लिष्टेति शेषः । सौधात् प्रासादाद् उद्विजते भयं करोति । उपवनं त्यजति अर्थात् तत्र न याति । ऐन्दवीं प्रभां कौमुदीं द्वेष्टि न सेवते इत्यर्थः । चित्राणां केलीनां साधनानि यस्मिन् तस्मात्सदसो गृहान्नश्यति तत्तु वीक्षितुमपि नेच्छति । वेषं नेपथ्यं शृङ्गारं विषं मन्यते अनुपकारिणमिव दूरं त्यजतीति भावः । तत्किं करोत्यात्याह—आस्ते । सङ्कल्पेन मानसव्यापारेण उपनता स्वहृदि स्थापिता या तवाकृतिस्तस्यां यो रस आनन्दः तदायत्तेन चित्तेन उपलक्षिता सा अब्जिन्या कमलिन्याः किसलयानां कोमलदलानां प्रस्तारो यस्याः तस्याः शय्यायास्तले केवलं निर्व्यापारतया आस्ते तिष्ठति ।

अत्र नायिकाया विरहावस्थाद्योतकत्वेन उपात्तानां सर्वासामुद्विजनादीनां क्रियाणां प्राधान्यम् नायकस्यावर्जनमाभिः साधनात् ।

क्रियाणामाख्यातवाच्यत्वावाच्यत्वविषयं नियमयति । यत्रेति । यत्र पद्यादौ । एकः कर्त्ता यस्याः सा एककर्तृका । प्राधान्येतरौ भजतीति प्राधान्येतरभाक् अनेका क्रिया भवेत् । तत्र आद्या प्राधान्यवती क्रिया आख्यातेन वाच्या वक्तव्या । अपरा अप्राधान्यवती शत्राद्यैः वाच्या । आद्यपदात् शानजादेः संग्रहः । तात्पर्येण आसां क्रियाणां विनियोगः । यत्र च वस्तुवृत्तलब्धं मुख्यं तात्पर्यं भवेत् सा आख्यातेन वाच्या । यत्र च तन्नास्ति सा शत्रादिभिरुल्लेख्या । इत्यन्तरश्लोकः इति तदर्थ-

ननु चाचार्येणैवानिष्टनिवृत्त्यर्थं समासविधौ बहुलग्रहणं कृतम् । अतस्तेनैव क्वचिदेवंविधे विषये वृत्तिर्न भविष्यत्यन्यत्र भविष्यतीति किमनेन प्रधानेतरभावपरिकल्पनप्रयासेन ।

सत्यम् । किन्तु समासविधेः प्रधानेतरभावविवक्षानिबन्धनस्य च तत्प्रतिषेधस्योत्सर्गापवादभावेनावस्थानं द्रष्टव्यमित्यपवादस्यैवायं वि-

---

व्यक्तिविवेकव्याख्यानम् ।

बहुलग्रहणमिति । 'विशेषणं विशेष्येण बहुलम्, (२-१-५७) इत्यत्र । क्वचिदित्यादि । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरिति बहुलग्रहणप्रयोजनस्य व्यवस्थितत्वात् । उत्सर्गेति समासविधिः सामान्यरूपत्वादुत्सर्गःप्राधान्यादिविवक्षानिमित्तश्च तत्प्रतिषेधो विशेषरूपत्वादपवादः ।

अपवादस्यैवेति । 'अपवादविषयपरिहारेणोत्सर्गस्य प्रवृत्ति'रिति न्यायात् । कर्तुमशक्य इति । व्यवस्थितविषयत्वात् । यथा 'उत्सर्गस्य घञ्यमनुष्ये बहुल' (६-३-१२२) मित्यत्र । परिशब्दे त्वयं भवति । परिवादः परीवाद इति । विवाद इत्यत्र नैव भवति ।

मधुसूदनीविवृतिः ।

श्लोकः । अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये इति कोषोक्तेः ।

मध्ये प्रसङ्गारूढं निरूप्य प्रकृतमाचिनोति—ननु च आचार्य्येणेति । अयं भावः । यत्त्वं स्थले स्थले समासाभावमादिशसि स तु आचर्येणैव विशेषणं विशेष्येण बहुलमिति सूत्रे बहुलग्रहणेन अनुशासितः । तदेतस्मिन् नास्ति किमपि ते नवीनार्थंघटनापटीयस्त्वमिति । ननु शंकते । आचार्येण व्याकरणशास्त्रप्रवर्त्तकाचार्येण पाणिन्यादिना एव अनिष्टनिवृत्त्यर्थम् अनिच्छितविषयपरिहारार्थम् । समासविधौ समासविधायकशास्त्रे विशेषणं विशेष्येण बहुलमित्यादिषु बहुलग्रहणं कृतम् । अतः तेनैव बहुलग्रहणेनैव एवंविध अभीष्टविषये क्वचित् वृत्तिः एकार्थीभावो न भविष्यति । अन्यत्र उत्कर्षापकर्षप्रतीतिरहिते स्थले भविष्यति समास इति शेषः । इति हेतोः अनेन उक्तेन प्रधानेतरभावकल्पनायाः प्रयासेन श्रमेण किम् अलम् ।

अभ्युपैति—सत्यम् । किन्तुरिति आक्षेपे । समासविधेः वृत्तिविधानस्य, प्रधानेतरभावयोऽर्विवक्षानिबन्धस्य च तत्प्रतिषेधस्य समासनिषेधस्य । उभयोः विधिप्रतिषेधयोः । उत्सर्गापवादभावेन अवस्थानं द्रष्टव्यम् । उदूर्ध्वं सृज्यते विधीयते असौ उत्सर्गः सामान्यशास्त्रम् । अपोद्यतेऽनेन इति अपवादः विशेषशास्त्रं बाधकशास्त्रमिति यावत् । तत्र यथा विधिशास्त्रम् अकलितप्रधानेतरभावं सामान्यतः सर्वत्र प्रवर्त्तते बाधशास्त्रं च तत् विशेषस्थलेषु निरोधयति एवमेव अस्मदुपदिष्टपन्थानं गच्छतामपि उत्कर्षापकरूपोपेयलाभे सुखसम्पत्तिरन्यथा न । इति हेतोः समासविधिरुत्सर्गशास्त्रस्य विषयो भवतु अयं प्रधानेतरविवक्षानिबन्धनः समासप्रतिषेधस्तु अपवादस्यैव विषयो भवितुमर्हः,

षयो भवितुमर्हति न बहुलग्रहणस्य ।

यत्र तु क्वचिदुत्सर्गापवादयोर्विषयव्यवस्थानियमः कथञ्चनापि कर्तुमशक्यः स तस्य विषयो वेदितव्यः । अन्यथा गोदः कम्बलद इत्यत्राणभावोऽपि तद्विषयः स्यात । इह तूक्तक्रमेण नियमः शक्यक्रिय एवेति नायं बहुलग्रहणस्य विषयः कल्पनीयः ।

न चायमर्थः स्वमनीषिकयैवास्माभिरुपकल्पितः किन्तर्हि, आचार्यस्याप्यभिमत एव । यदयं समासविधौ समर्थग्रहणं कृतवान् । केवलं

व्यक्तिविवेकव्याख्यानम् ।

तद्विषयः स्यादिति 'कृत्यल्युटो बहुलम्' (३-३-११३) इत्यादिगतस्य बहुलग्रहणस्य विध्यनुवादभावविषये सामर्थ्याभावात् समासाभाव इति भावः ।

मधुसूदनीविवृतिः ।

बहुलग्रहणस्य विषयो भवितुं नार्हः । एव हि अपवादविषयपरिहारेण उत्सर्गस्य प्रवृत्तेरिति न्यायात् उत्कर्षापकर्षप्रतीतिविरहस्थले एवं समासः सेत्स्यति तत्प्रतीतिस्थले नेति भावः ।

तर्हि बहुलग्रहणस्य को विषय इत्याह—यत्र त्विति । स अशक्योत्सर्गापवादव्यवस्थानियमः तस्य बाहुल्यस्य । अर्थात् यत्र केवला प्रवृत्तिरेव वा निवृत्तिरेव वा विकल्पो वा अन्यथाभावो वा तत्राव्यवस्थितस्थले बहुलग्रहणं चरितार्थम् अन्यथा उक्तस्य बहुलग्रहणविषयकनियमस्यास्वीकारे । गां ददातीति च विग्रहे सामान्यशास्त्रे कर्मण्यणिति प्रवृत्तावपि अणं प्रबाध्य आतोऽनुपसर्गे क इति को विधीयते । तथा च गोदः कम्बलद इति सिध्यति । एवमयमुत्सर्गापवादयोर्विषयः उक्तनियमाऽस्वीकारे तु गोदः कम्बलद इत्यत्रत्याणोऽभावपक्षोऽपि तद्विषयः बहुलग्रहणस्य विषयः स्थलं स्यात् । उक्तक्रमेण तु समासविधितत्प्रतिषेधौ उत्सर्गापवादयोर्विषयः । अशक्योत्सर्गापवादव्यवस्थानियमो बहुलग्रहणस्य विषयः इति ।

दर्शितपरिपाट्या तु इह प्रधानेतरविवक्षानिबन्धने समासप्रतिषेधे ( अणभावस्थले वा ) नियमः उत्सर्गापवादरूपः शक्यक्रियः कर्त्तुं शक्य एव । इति हेतोः अयं तादृशप्रतिषेधः बहुग्रहणस्य विषयो न कल्पनीयो नोद्भावनीयः अपि तु अपवादस्यैव विषयः कल्पनीयः ।

स्वकपोलकल्पनाव्युदासार्थमाह—न चेति । अस्माभिः ग्रन्थविधातृभिः अयमर्थः "समासविधेः प्रधानेतरभाव विवक्षानिबन्धनतत्प्रतिषेधस्य च उत्सर्गापवादभावेनावस्थानम्" इत्येवं रूपोऽर्थः स्वमनीषिकया स्वबुद्ध्या न उपकल्पितः । ननु यदि स्वमनीषिकया नोपकल्पितस्तर्हि कथं ज्ञात इत्याह—आचार्यस्येति । पाणिनेरभिमत एव इष्ट एव । तत्कुतः-यद् यस्मात् अयमाचार्यः समासविधौ समासाधिकारसूत्रे "समर्थः पदविधौ" इत्यस्मिन् "समर्थ" इति पदस्य ग्रहणमुपादानं कृतवान् ।

तदभिप्रायमनवगच्छद्भिर्व्याख्यातृभिः सापेक्षतादिदोषान्तरव्यावृत्तिपरतयैव तद् व्याख्यातं न पुनरेतद्व्यावृत्तिपरतयापीति तदभिप्रायमेवास्माभिः प्रकटयद्भिस्तस्येहार्थत्वमपि प्रतिपादितं न त्वपूर्वं किञ्चित् ।

व्यक्तिविवेकव्याख्यानम् ।

**तदभिप्रायमिति** आचार्याभिप्रायम् । **साक्षेपतादीति** । ऋद्धस्य राज्ञः पुरुष इत्यादौ । **तत्** समर्थग्रहणम् । **एतद्व्यावृत्तीति** एतच्छब्देन प्रधानेतरभावः परामृष्टः । **तस्येहार्थत्वमपीति** समर्थग्रहणं प्रधानेतरभावविषयनिवृत्त्यर्थमपीत्यर्थः ।

मधुसूदनीविवृतिः ।

नन्वेवं तर्हि कथं विप्रतिपद्यन्ते केचिदित्याह—**केवलमिति** । केवलम् तस्याचार्यस्याभिप्रायमाशयमनवगच्छद्भिर्व्याख्यातृभिरन्यैः सापेक्षतादिरूपस्य दोषान्तरस्य या व्यावृत्तिः संकोचः तत्परतया तदधीनतया एव तत् समर्थग्रहणं व्याख्यातम् न पुनः न तु एतस्य प्रधानेतरभावस्य व्यावृत्तिपरतयाऽपि व्याख्यातम् । इति हेतोः तदभिप्रायमाचार्याभिप्रायं **प्रकटयद्भिरस्माभिः** इह ग्रन्थे प्रकरणे तस्य समर्थग्रहणस्य अर्थत्वमपि प्रयोजनत्वमपि अर्थात् समर्थग्रहणं प्रधानेतरभावविषयनिवृत्यर्थमित्यपि प्रतिपादितं दर्शितम् । न अपूर्वं स्वमनीषोद्भावितं नूतनं किञ्चित् प्रतिपादितम् ।

**अयं भावः** । यत्र विशेषणकृतः उत्कर्षः अपकर्षो वा विशेष्ये प्रतीयते अथवा यत्र उद्देश्यविधेयभावेन अन्वयबोध आवश्यकस्तत्र वाक्यमेव स्थाप्यं न समासो विधेयः । यतो वाक्यस्यैव उत्कर्षापकर्षप्रत्यायकत्वं उद्देश्यविधेयभावावगाहिबोधजनकत्वं च समस्ति । वृत्तौ तु एकार्थीभावात् पदैरर्थस्य पृथगनुपस्थापनात् नोत्कर्षापकर्षप्रतीतिः न चोद्देश्यविधेयभावेनान्वयः ।

एतदेव क्रियाद्वारके आयुष्यादियोगे चतुर्थी चाशिषीति सूत्रेण चतुर्थीविधायिका आचार्यप्रवृत्तिरपि ज्ञापयति । अर्थात् यत्रानेन सूत्रेण चतुर्थी तत्र चतुर्थ्यन्तस्योद्देश्यत्वमाशीर्विषयक्रियान्वयिनो विधेयत्वमिति वाक्यस्यैव तादृशबोधजनकत्वं वृत्तौ तु न तथा बोध इति वृत्तिविग्रहयोरसमानार्थकत्वान्नैतद्विहितचतुर्थ्यन्तेन समासः । तथा यत्र सम्बन्धमात्रमभिप्रेतम् तयोः समानार्थता च तत्र कामचारः समासोऽपि समासा भावो वा ।

अथ च सापेक्षतादीनां दोषाणां व्यावृत्त्यर्थं "समर्थः पदविधौ" इति समर्थग्रहणं कृतमिति व्याख्यानमाचार्याभिप्रायानवगमनिबन्धनम् । तद्यथा—अथ समर्थग्रहणं किमर्थमिति आक्षिप्य—"सापेक्षमसमर्थं भवतीति । यदि सापेक्षमसमर्थं भवतीत्युच्यते । राजपुरुषो दर्शनीय अत्र वृत्तिर्न प्राप्नोतीति ।

नैष दोषः । प्रधानमत्र सापेक्षम् । भवति च प्रधानस्य सापेक्षस्यापि समासः" इति "अवश्यं कस्यचिन्नञ्समासस्य असमर्थस्य गमकस्य साधुत्वं वक्तव्यम् ( अत्र

मधुसूदनीविवृतिः ।

असमर्थसमासे क्रियायामुभयोः सन्निपातादेकार्थीभावस्तद्वारकोऽस्त्येवेति मत्वा साधुत्वमाख्यातम्) असुर्यंपश्यानि मुखानि अपुनर्गेयाः श्लोका अश्राद्धभोजी ब्राह्मणः । इति च सापेक्षतायां समासस्य । तस्मान्नार्थः समर्थग्रहणेनेत्यादिना ।

अथ च "अथ क्रियमाणेऽपि (अबुधजनबोधार्थं करणेऽभ्युपगम्यमाने) समर्थग्रहणे इह कस्मान्न भवति महत्कष्टं श्रित इति" इत्याशंक्य "अगमकत्वात् (यथा वाक्येन प्रतीयते तथा वृत्तेः बोधजनकताया अभावात्) इति समाधाय "इह समानार्थेन वाक्येन भवितव्यं समासेन च । यश्चेहार्थो वाक्येन गम्यते महत्कष्टं श्रित इति नासौ जातुचित्समासेन गम्यते महत्कष्टश्रित इति । यत्र च गमको भवति भवति च तत्र वृत्तिः । तद्यथा—देवदत्तस्य गुरुकुलम् देवदत्तस्य गुरुपुत्रो देवदत्तस्य दासभार्येति ।—तत्र यद्यगमकत्वं हेतुर्नार्थः समर्थग्रहणेन । इहापि भार्या राज्ञः पुरुषो देवदत्तस्येति योऽर्थो वाक्येन गम्यते नासौ जातुचित्समासेन गम्यते भार्या राजपुरुषो देवदत्तस्येति तस्मान्नार्थः समर्थग्रहणेनेत्यादिना च अन्वयव्यतिरेकाभ्यां वृत्तिवाक्ययोः समानार्थत्व एव समासः अतथात्वे तु न समास इति स्पष्टं कण्ठतः तत्र भगवता भाष्यकारेण उपपादितम् ।

तथा च वाक्ये उद्देश्यविधेयभावयायोः उत्कर्षापकर्षयोर्वा प्रतीतिः, न सा यदि समासे तर्हि वाक्येनैव अवस्थेयं समासो नकर्त्तव्यः । वृत्तौ तादृशबोधस्य तादृशप्रतीतेश्च अनाकलनात् । एवं च एतादृशस्थले यत्र समासः स दोषतयैवानुसन्ध्यातव्यः । इति ।

अन्यच्च यदन्यैः कैश्चिन्महामान्यैरूचे "अन्ये त्वेकार्थीभाववशादपृथगुपस्थितेर्वृत्तौ नोद्देश्यविधेयभावेन अन्वयः । पृथगुपस्थितेस्तन्त्रत्वेन तथान्वये तद्भङ्गादिति । तन्न भाष्यकृतानुक्तत्वात्" इत्यन्तम् । तत्सर्वम् अनाकलितमहाभाष्यगन्धस्येव वचोऽनादरणीयम् तुच्छत्वाच्च । तद्यथा क्रमशः ।

भाष्यकृतानुक्तत्वादिति । मान्याः "अथ क्रियमाणेऽपि समर्थग्रहणे" इत्यारभ्य "तस्मान्नार्थः समर्थग्रहणेन इत्यन्तं यावद् भाष्यकृता किमुक्तम् तदुदस्यापि वारमेकं दृशा सनाथीकरणीयम् ।

अन्यच्च "इह समानार्थेन वाक्येन भवितव्यं समासेन चेत्यस्य क आशयः । तदाशयो भाष्यकारशब्दैरेव यथा यश्चेहार्थो वाक्येन गम्यते महत्कष्टं श्रित इति नासौ जातुचित्समासेन गम्यते महत्कष्टाश्रित इति । यत्र च गमको भवति भवति च तत्र वृत्तिरिति ।

अङ्ग ? रामस्य पाणिरसीत्यत्र यथोत्कर्षप्रतीतिः, अथ एषा मे बहु न्यक्कृतिर्यदरयस्तत्राप्यसौ तापसः सोप्यत्रैव निहन्ति राक्षसकुलम् इत्यत्र च यथोत्कर्षप्रतीतिः उद्देश्यविधेयभावप्रतीतिश्च भवति तथैव रामपाणिरसि इत्यत्र एतन्मन्य-

मधुसूदनीविवृतिः ।

क्कारः । अरितापसक्तैतद्राक्षसकुलनिहननम् इत्यत्रापि च तादृशप्रतीतिरस्ति किम् । नास्ति चेत्कुतः समानार्थकता । एवं हि तदभावादगमकतया वृत्तेरभाव एव तादृशस्थले अकामेनाऽपि स्वीकर्त्तव्यमेव ।

यच्चोच्यते "किंचोद्देश्यत्वविधयत्वे यच्छब्दतच्छब्दोपबन्धव्यङ्गे वृत्तौ ऋद्धत्वादिवत्तदन्वयासंभवान्न तथान्वयः । इति । तदपि बालभाषितवदेव । सोमेन यजेत । अग्निहोत्रं जुहोति । दध्ना जुहोति पयसा जुहोति । दध्नेन्द्रियकामस्य जुहुयादित्यादौ । सोमवता यागेन इष्टं भावयेदिति सोमवद्यागोद्देश्येन इष्टभावनाया विधायके, अग्निहोत्रोद्देश्येन हवनविधायके हवनस्यान्यतः प्राप्तत्वे दध्नः पयसश्च करणत्वविधायके, हवनदधिकरणत्वयोरन्यतः प्राप्तत्वे ऐन्द्रियकत्वविधायके वाक्ये क्वापि यत्तच्छब्दोपबन्धः अस्ति किम् । एवं च नियमोल्लंघनेन कृतायां वृत्तौ उद्देश्यविधेयभावेन अनन्वयः दोष एव ।

इदमपि न विस्मर्त्तव्यं उद्देश्यविधेयभावो हि बुद्धेरनुभवः इति न तेन सह यत्तदोरविनाभावः । अत एव यत्तदुपबन्धाभावस्थले नञ्समासे अन्यत्र च विधेयाविमर्शदोषोद्भावनं सङ्गच्छते । तदुपनिबन्धव्यङ्ग्यत्वे तु वृत्तौ यत्तदोरुपनिबन्धाभावेन दोषोद्भावकग्रन्थानां सर्वेषामाकुलीभावः स्यात् ।

तथा च "एवं च पृथगुपस्थितयोस्तथान्वयः इत्युत्सर्गस्य त्यागेन सहृदयहृदयस्य वैमुख्यं तस्य दूषकताबीजम्" इति वाक्यगतस्य सहृदयहृदयस्येत्यादेः कथं संगतिः स्यात् । यस्मान् मूर्ध्नामुद्वृत्तेत्यादिस्थलेषु समासे यत्तदोरभावेन भवदुक्तरीत्या केवलयत्तच्छब्दोपबन्धव्यङ्ग्यतया उद्देश्यत्वविधेयत्वयोश्च दूषकताबीजस्य सहृदयहृदयवैमुख्यस्य अभाव एव ।

यच्च "अभ्यासलोपश्चेत्यादौ समासेऽपि तथान्वयेन च तस्य तत्कृतत्वाभावाच्चे"त्युक्तम् । तत्रोच्यते । अभ्यासलोपश्चेत्यत्र षष्ठयाः सौत्रलुक्त्वेन समासाभाव एवास्ति । एवं च अभ्यासलोपश्चेत्यादिनाऽपि समासाभाव एव तथान्वय इति साधनात् वाक्यस्यैव उद्देश्यविधेयभावेनान्वययोग्यत्वं प्रतीयते । इति ।

यदपि "तथान्वयाभिप्रायेण समासप्रयोगेऽपि प्राप्तत्वादिपर्यालोचनोत्तरं लोहितोष्णीषा इत्यादौ बोधो भवत्येवेति नासाधुतेत्याशयेन अयं भाष्ये नोक्तः" इति तत्तु धूलिप्रक्षेपमात्रम् ।

"प्राप्ताप्राप्तविवेकेन यत्प्राप्तं तदुद्देश्यम् ( अनुवाद्यम् ) यच्चाप्राप्तं तद्विधेयम् । तथा च सोष्णीषा ऋत्विजः प्रचरन्ति" इति वाक्येन उष्णीषस्य प्राप्तत्वात् "लोहितोष्णीषा" इति वाक्येन तदनूद्य लौहित्यमात्रं विधीयते इति वृत्तौ उद्देश्यविधेयभावेन अन्वयबोधो भवत्येवेति तथान्वयाभिप्रायेण समासप्रयोगेऽपि नासाधुता" इत्युक्तम् । तत्र प्रष्टव्यम् । तथान्वये कस्याभिप्रायः, कश्चासाधुतां नोदाजहार ।

मधुसूदनीविवृतिः ।

किम् व्याकरणभाष्यकर्त्ता भगवान् पतञ्जलिर्वा मीमांसाभाष्यकर्त्ता शबरस्वामी वा । तत्र भाष्यकारेण पूज्यपतञ्जलिचरणेन "अगमकत्वादिति । इह समानार्थेन वाक्येन भवितव्यं समासेन चेति च वृत्तिवाक्ययोः समानार्थत्वं वदता तदुक्तमेव । नह्येष स्थाणोरपराधो यदेनमन्धो न पश्यति ।

शबरस्वामिनाऽपि वषट् कर्त्तुः प्रथमभक्षः इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम् । एकप्रसरताभङ्गापत्तेरिति । "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यङ्गानुवादेन त्रित्व विधानं न युक्तम् । एकप्रसरताभङ्गापत्तेरिति चोक्तं मीमांसादर्शनतृतीयदशमाध्याययोर्भाष्यमालोचनीयम् ।

यच्च "विशेषणं विशेष्येणेति सूत्रे उभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धिरिति वार्तिके उभयमुद्दिश्य विशेषणत्वस्य विधेयताप्रतीतेश्चेति" ।

तत्र प्रष्टव्यं कोऽस्य वार्तिकस्याभिप्रायः । वार्तिकोयं शंकापक्षीयः—यदि उभेऽपि विशेषणे, ते एव उभे विशेष्ये, तर्हि विशेष्यत्वेन, उपसर्जनत्वेन अप्रसिद्धिः । एवमनेन विशेषणस्य विधेयता प्रतीतिरेवेति न सिद्धम् । शंकामत्रमेतत् समाधानभाष्येण तस्य निरासात् । समाधानभाष्यं च "न वा अन्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्च अपरस्योपसर्जनप्रसिद्धिः । न वा एष दोषः । किं कारणम् । अन्यतरस्य (द्रव्यस्यैवेत्यर्थः) प्रधानभावात् । अन्यतरदत्र प्रधानम् । तद्विशेषकत्वाच्च अपरस्य (गुणस्यैवेत्यर्थः) अन्यतरस्य प्रधानभावात्तद्विशेषकत्वाच्चापरस्योपसर्जनसंज्ञा भविष्यति । इति । अस्मात् विशेषकत्वरूपस्य विशेषणस्य अप्रधानत्वमेवोक्तं ततश्च कुतस्तस्य विधेयतया प्रतीतिः ।

अन्यच्च यदि विशेषणविशेष्यभावो सर्वत्र विवक्षानिबन्धनश्चेदभविष्यत्तर्हि "कामं तर्हि अनेनैव हेतुना यस्य कृष्णाः प्राधान्येन विवक्षिता भवन्ति तिला विशेषणत्वेन तेन कर्तव्यं तिलकृष्णा इति । इत्येवं रीत्या आक्षेपभाष्यम्, "तिलकृष्णा इति प्रयोगं न कर्त्तव्यमि"ति समाधानभाष्येण न न्यसेधिष्यत् । एवं हि यत्र केवलं विशेषणयोः प्रयोगस्तत्रत्यसन्देहनिरासार्थम् एतस्य सूत्रस्य निर्माणम् । यथोक्तं भाष्ये । "तत्र त्वेतावान् सन्देहः किं प्रधानं किं विशेषणम् स चापि क्व सन्देहः यत्रोभौ गुणशब्दौ" । इति ।

यच्च "आशीर्विषयचतुर्थ्यन्ते तु न समासः । विप्राय भद्रं भूयात् इत्यादौ विप्रभद्रार्थयोरुभयोरपि तिङन्तार्थान्वयेन परस्परमसामर्थ्यात्" इति तदपि न सम्यक् । अत्रापि असूर्यंपश्यानि इतिवत् क्रियायामुभयोः सन्निपातादेकार्थीभावं तद्द्वारेण भवन्तं को वारयिष्यति । मन्मते तु वृत्तिवाक्ययोः समानार्थत्वाभावान्न समासः ।

यच्चोक्तम् "समासादावपि तथाव्युत्पन्नस्य तद्बोधो दुर्वारः नचासाधुत्वमिति । तत्र न चासाधुत्वमिति प्रमाणाभावात् [illegible] केनचित्प्रत्येतव्यम् ।

विधेयोद्देश्यभावोऽयं वक्तुं वृत्त्या न पार्यते ।
यत् तेनानभिधानं वा समर्थग्रहणं च वा ॥ २३ ॥
कारणद्वयमेवेष्टं बहुलग्रहणं न तु ।
अशक्यनियमो ह्यर्थो विषयस्तस्य नेतरः ॥ २४ ॥

इति सङ्ग्रहश्लोकौ ।

यद्वा कवीनामेवैष विषयो न खण्डिकोपाध्यायानामित्यनवगततद्-

---

व्यक्तिविवेकव्याख्यानम् ।

विधेयोद्देश्येति उद्देश्योऽत्रोर्ध्वदेशार्हत्वादनुवाद्यः । यत् तेनेति यच्छब्दः पूर्वार्थसम्बद्धः । तेनापारणेन । अभिधानं वेति अभिधानलक्षणा हि कृत्तद्धितसमासा इति । समर्थग्रहणं च वेति । चशब्दोऽत्रातिरिक्तः, समुच्चयविकल्पयोर्विरोधात् । एवञ्च—

'दृष्टिर्नामृतवर्षिणी स्मितमधुप्रस्यन्दि वक्त्रं न त-
न्नाद्रार्द्रं हृदयं न चन्दनरसस्पर्शानि चाङ्गानि वा'

इत्यत्र चवाशब्दद्वयं प्रयुक्तं, चवाशब्दार्थयोरेकत्र विरोधात् ।

खण्डिकेति खण्डो ग्रन्थसम्बन्धी न तु समस्तो ग्रन्थः । स विद्यते येषाम् ।

मधुसूदनीविवृतिः ।

विप्रतीपवचनं च कः श्रद्दध्यात् तस्मात् विशिष्टार्थोपस्थितिजनकत्वरूपैकप्रसरताभङ्गादसाधुरेव बोधः इति ।

यच्चात्र भाष्याद्यनुक्तेरिति हेतुमाकलयसि तदपि असम्यक् । भो पातञ्जले महाभाष्ये भूरिकृतश्रम? इह समानार्थेन वाक्येन भवितव्यं समासेन चेति भाष्यं कुतो हेतोः स्मृतिपथं नारोहयसि । इत्यलं महामान्यानामुपजीव्यानामुपरि कटाक्षनिक्षेपणेन ।

कारिकाभ्यामुक्तार्थं संगृह्णाति-विधेयोद्देश्येति । कारणेति च । अयम् उद्देश्यविधेयभावः वृत्या वक्तुं न पार्यते वृत्तिः उद्देश्यविधेयभावं वक्तुं न समर्था इत्यर्थः । तेनेति हेतौ तृतीया । तेन असामर्थ्येन हेतुनेति भावः । तथा च असामर्थ्यहेतुकं यद् उद्देश्यविधययोरनभिधानम्, यच्च समर्थःपदविधाविति परिभाषासूत्रे समर्थग्रहणम् । तदेतत् । द्वयमेव कारणम् इष्टम् समासविधौ तत्प्रतिषेधे चेति शेषः । तु किन्तु बहुलग्रहणं कारणं नेष्टम् । हि यतो बहुलग्रहणस्य अशक्यनियमः अर्थः विषयः । इतरः समासविधिनिषेधरूपो न । अयं तु उत्सर्गापवादयोर्विषय इति सर्वं निरवद्यम् ।

ननु प्रकारताविशेष्यते यथा समासेऽपि अक्षते प्रतीयेते । प्रकारताविशेष्यते च विशेषणविशेष्यते एव । "अनुवाद्यविधेयभावश्चायं विशेषणविशेष्यभावतुल्यफलः" । इति त्वयाऽपि स्वीकृतमेव तर्हि किमिति दुरागृह्यते वाक्यमेव रक्षणीयं न समासो विधेय इत्येवमित्यत आह--

यद्वा कवीनामेवैष विषय इति । एषोऽर्थः रामस्य पाणिरसि इत्येतादृशे स्थले वृत्तिर्न विधेया अपितु वाक्यमेव स्थाप्यमित्येवंरूपोऽर्थः कवीनामेव विषयः ।

भिप्रायैस्तैरुपेक्षितमेतत् । ते हि स्वप्नेऽप्यनासादितसाहित्यसुधारसास्वादचमत्काराः शुष्कशब्दव्युत्पत्तिमात्रोपजनिताभिमानदुर्विदग्धा विविधाभिधानाधानाद्धारा अभिधेयप्रतीतिवैचित्र्यविवेककौशलशालीनाः लक्षण-

व्यक्तिविवेकव्याख्यानम् ।

अनवगततदभिप्रायैरिति । समर्थग्रहणं प्रत्याचार्यस्य हि तैरभिप्रायो नावगतः । अभिधानाधानोद्धारेति । अभिधानानां शब्दानामाधानमभिनवानां न्यसनम् ।

मधुसूदनीविवृतिः ।

नानृषिः कवते काव्यमृषिश्च किल दर्शनात् । दर्शनाद्वर्णनाच्चेति कविरेषा सती श्रुतिरिति भामहोक्तेः ऋषीणां कवीनामेव स विषयः इत्यः । न खण्डिकोपाध्यायानाम् । खण्डः एकदेशः इयं प्रकृतिरयं प्रत्यय इति अध्याप्यत्वेव अध्ययनीयत्वेन च एषामस्ति ते खण्डिकाः । ते च उपाध्यायाश्चेति खण्डिकोपाध्यायाः । तेषाम् । इति अविषयत्वाद्धेतोः अनवगतः अज्ञातः तस्य काव्यस्य कवितायाः अभिप्रायो रसमाधुर्यं यैस्तैः तथोक्तैः । यथाचोक्तम्–कवितारसमाधुर्यं कविर्जानाति नेतरः । इति । तैः खण्डिकोपाध्यायैः एतत् रामस्य पाणिरसीत्यादिस्थलस्थलेषु समासविधानाविधानम् उपेक्षितम् उदासितम् ।

ते हि खण्डिकोपाध्याया हि स्वप्नेऽपि किमुत अन्यासु जागृतिप्रभृतिषु अवस्थासु । अनासादितः अप्राप्तः साहित्यरूपायाः सुधाया रसस्यास्वादे चर्वणायां चमत्कारो विच्छित्तिर्यैस्ते । शुष्का चमत्कारजनकास्वादाश्रयरसशून्या या शब्दानां व्युत्पत्तिः अस्माद्धातोरयं प्रत्ययः इति ज्ञानम् । तन्मात्रोपजनितेन अभिमानेन "वयं शाब्दिकाः" इति मिथ्याहङ्कारेण दुर्विदग्धाः अर्थज्ञानविरहितया दुःपण्डिताः इत्यर्थः । विविधानां नानाप्रकाराणाम् अभिधानानाम् आधानं कृत्वा उद्धाराः उद्धारकाः उत्पादका इति यावत् । उद्धरन्तीति उद्धाराः । ऋदोरप् । अभिधेयेऽर्थे यत् प्रतीतौ वैचित्र्यं चमत्कारः तस्य विवेककौशले विचारपाटवे शालीना अधृष्टाः । शालीनकौपीनावधृष्टाकार्ययोरिति सूत्रात्साधु । एते वैयाकरणाः वाण्याः उत्पादकाः । वाणी व्याकरणज्ञमेति ( जानाति ) पितरमित्युक्तेः पितरः । अत एते तस्या प्रयोगमुपयोगं कथं कर्त्तुं शक्नुवन्ति । स उपयोगस्तु तस्याः । कवीनामेवायत्तः । तथाचोक्तमपि–कन्यासुरतचातुर्यं जामाता वेत्ति नो पितेति भावः ।

लक्षणमस्ति सूत्रस्य प्रवृत्तिरस्ति इति एव बुध्वा रसाभिव्यक्तौ विघ्नभूतं तस्या नाशकम् । अपरमपि बहुतरमत्यधिकम् । अवकरप्रायम् दोषसजातीयम् । प्रयुञ्जते विदधते । इत्यतः रसविषयकास्वादस्य अनुगुणे प्रयोगे अवहितं चेतो येषां तेषां कवीनामेव तच्चिन्ता प्रधानेतरभावेन समासासमासचिन्ता उचिता योग्या, इतरेषां खण्डिकोपाध्यायानां चिन्ता न उचिता । तद् दूषणं पुरस्तादग्रे ।

मस्तीत्येव,रसाभिव्यक्तिविघ्नभूतमपरमपि बहुतरमवकरप्रायं प्रयुञ्जत इति रसास्वादानुगुणप्रयोगावहितचेतसां कवीनामेव तच्चिन्तोचिता नान्येषाम् अस्माभिस्तु विस्तरतस्तत् पुरस्तादभिधास्यते ।

प्रकरणकाक्वादिसखो यस्यार्थोऽर्थान्तरं प्रकाशयति ।
इष्टार्थभङ्गभीतेः शब्दो न समासमर्हति सः ॥ २५ ॥

इति सङ्ग्रहार्या ।

इत्थमवस्थिते समासासमासयोर्विषयविभागप्रतिनियमे सति यदेतदिहाम्बिकायाः केसरिणो विशेषणभावेनोपादानं तत् किमितरकेसरिव्यावृत्तिमात्रफलम् आहोस्विदसमासे वा समासादितभगवतीपादार्पणप्रसादोप-

---

व्यक्तिविवेकव्याख्यानम् ।

उद्धारः पूर्वकाणामुद्धरणम् । शालीना अधृष्टा अविचारका इत्यर्थः । अपरमपीति पुनरुक्तादिकम् । तच्चिन्तेति । प्राधान्येतरभावेन समासासमासचिन्ता ।

प्रकरणेति । यत्रार्थप्रकरणादिना शब्दस्य वाच्योर्थः प्रकर्षाप्रकर्षादिकमर्थान्तरं प्रकाशयति तत्राभिप्रेतार्थविनाशभयात् समासो न कर्त्तव्यः । यथा 'रामस्य पणिरसी'ति । प्रकरणशब्दादिसख इति पाठः । तथा काकुग्रहणेन स्वरविशेष उच्यते यः 'कालो व्यक्तिस्वरादयः' इति काव्यगतत्वेन स्वीकृतः ।

एवं प्रसक्तानुप्रसक्तिकया समासगतत्वेन तदतिदेशेन समग्रवृत्तिगतत्वेनापि गुणप्रधानभावविवक्षां महता प्रपञ्चेन परिघटय्य प्रकृतोदारणे षष्ठीतत्पुरुषगतत्वेन योजयितुमाह—इत्थमवस्थित इति । अम्बिकाया उपादानमिति सम्बन्धः । तत् किमिति । विशेषणस्यान्यकेसरिव्यावृत्तिर्वा, केसरिगतप्रकर्षप्रतिपादनं वा फलम् । आद्ये पक्षे

मधुसूदनीविवृतिः ।

प्रकरणेति । यस्य शब्दस्य । प्रकरणकाक्वादीनां सखा । राजाहः सखिभ्यष्टज् बोध्यः । प्रकरणादिसहायः अर्थः अर्थान्तरम् उत्कर्षापकर्षादिकम् प्रकाशयति अभिव्यञ्जयति । स शब्दः । इष्टस्यार्थस्य भङ्ग एव भीतिस्तया हेतोः समासं नार्हति ।

एवं महता प्रघट्टकेन समासविधेः तत्प्रतिषेधस्य च प्रपञ्चनं संगमय्य प्रस्तुतपरिचिन्तनायाग्रिमं ग्रथ्नाति—इत्थमवस्थित इति । इत्थं पूर्वोक्तप्रकारेण समासासमासयोः । विषयः स्थलम् , विभागः निषेधः प्रतिनियमः प्रतिप्रसवः । एषां समाहारद्वन्द्वः । तस्मिन्नवस्थिते कृते सति । यदेतद् इह "अम्बिकाकेसरी" इति पदे केसरिणः सिंहस्य विशेषणभावेन व्यावर्त्तकत्वेन अम्बिकाया उपादानं ग्रहणं तद् ग्रहणम् । इतरेभ्यः केसरिभ्यो भिन्नोऽयं केसरी इति इतरकेसरिव्यावृत्तिमात्रफलम् । आहोस्विदथवा समासादितो लब्धो यो भगवत्याः पादार्पणरूपः प्रसादस्तेन उपनतं

नतविश्वातिशायिशौर्यातिरेकप्रतिपादनप्रयोजनम् ।

तत्र प्रथमपक्षे तस्य केसरिणो विवक्षितजातिमात्रविहितहेवाकातिरिक्तचमत्कारातिशयाविर्भावोऽन्यकेसरिण इव निर्निबन्धन एव स्यात् ।

न हि इतरेभ्योऽन्यसम्बन्धिभ्यः स्वतन्त्रेभ्योऽपि वा व्यावृत्तस्य तस्याम्बिकासम्बन्धमात्रात् तस्याः कामप्युपकारकणिकामनासादयत एवाकस्मात् तथाविधचमत्काराविर्भावः सम्भाव्यते ।

अथ जात्यन्तरावच्छिन्नो विशिष्ट एव केसरी केसरिशब्देनात्राभिमतः

---

व्यक्तिविवेकव्याख्यानम् ।

निर्दिष्टचमत्कारासम्भावना । द्वितीये तु समासानुपपत्तिरिति तात्पर्यम् । विवक्षितपदं चमत्कारातिशयपदेन योजनीयम् ।

तस्या इत्यम्बिकायास्सकाशात् ।

जात्यन्तरं विशिष्टावान्तरकेसरिजातिः । तयावच्छिन्नो विशिष्टः । विशिष्ट

मधुसूदनीविवृतिः ।

प्राप्तं यद्विश्वातिशायि शौर्यम् तस्य अतिरेकप्रतिपादनमेव आधिक्यकथनमेव प्रयोजनं फलं यस्य तत् ।

तत्र तयोर्मध्ये प्रथमपक्षे इतरकेसरिव्यावृत्तिमात्रफले तस्य प्रस्तुतस्य केसरिणः। विवक्षितः अभीष्ट इति यावत् । जातिमात्रे प्रतिजाति विहिताद् हेवाकाद् अहंमहमिकताख्यभावादतिरिक्तः अधिको यश्चमत्कारातिशयस्तस्य आविर्भावः स अन्यकेसरिण इव सामान्यसिंहस्य इव निर्निबन्धनः निर्हेतुक एव स्यात् ।

अयं भावः । "अम्बिकाकेसरी" इत्यत्र यदि केसरिणि न अन्यस्य केसरी इत्येव बुभुत्सितम् तर्हि अकन्यकेसरिणोऽपेक्षया तस्मिन् अभीष्टः चमत्कारो न लभ्येत । अथोच्यते, लभ्यते तर्हि महत्सम्बन्धशून्ये सामान्यकेसरिणि यथा चमत्कारसत्ताकथनं निर्हेतुकं तद्वत् अत्राऽपि तत्कथनं हेतुशून्यं स्यादिति ।

नहीति । अन्यसम्बन्धिभ्यः अथवा स्वतन्त्रेभ्यः सम्बन्धरहितेभ्यः इतरेभ्यः केसरिभ्यः व्यावृत्तस्य पृथग्भूतस्य तस्य केसरिणः अम्बिकासम्बन्धमात्रात् केवलाम्बिकासम्बन्धात् तस्या अम्बिकायाः सकाशात् कामपि कीदृशीमपि उपकारकणिकामपि चमत्कारलेशमनासादयतः अनासवत एव अकस्मात् कारणं विना तथाविधस्य विश्वातिशायिशौर्यातिरिक्तस्य चमत्कारस्य आविर्भावो न संभाव्यते ।

अथेत्यनेन प्रथमपक्ष एव विषयान्तरं प्रस्तौति । जात्यन्तरेण विलक्षणया कयाचिज्जात्या अवच्छिन्नो युक्तः अत एव विशिष्टः विलक्षणधर्मवान् एव न सामान्य इत्यर्थः केसरी अत्र पद्ये केसरिशब्देन अभिहितः । यत्र केसरिणि स्वस्यां विलक्षणायां जातौ नियतः सम्बद्ध एव स तादृशो विलक्षणः अतिशयश्चमत्कारः । येन अतिशयेन

यत्र स्वजातिनियत एव स तादृशोऽतिशयो येनासावितरकेसरिसाधारणेन हेवाकलवेन लज्जमानः करिकीटजलदशकलावज्ञया दिग्द्विरदप्रलयपयोदघटाबन्धेऽपि न संरभते, यथा 'मोहन्तु हरेर्विहङ्गमो हन्तु' इत्यत्र विहङ्गमशब्देन विहङ्गमविशेषो गरुडजात्यवच्छिन्नः कश्चिदेव प्रत्याय्यते।

तत्र च यथा भगवतो हरेरतिशयाधानानपेक्षयैव सम्बन्धमात्राद्विशेषणभावस्तद्वदिहापि भविष्यतीत्युच्यते। तदप्ययुक्तम्। भगवत्यनुग्रहसम्पत्सम्पर्कशून्यस्य कस्यचिदेवंविधस्य केसरिविशेषस्य भगवतीवाहनत्वेनाप्रसिद्धेः। न चायमर्थः कवेरभिप्रेतः।

तथा ह्यसमाभियोगाभिमुखीभूतभगवत्सरस्वतीप्रसादासादितासामान्यवैदुष्यातिशयशालिनमात्मानं मन्यमानस्य कस्यचित् कवेरितरमनीषिमात्रसमुचितेनाचरितेन लज्जमानस्य महतोऽपि तज्जातीयानगणयतो निजगुणगरिमोद्दामकण्डूविनोदसुखसमाश्रयमनुरूपमपरमपश्यतः सहृ-

---

व्यक्तिविवेकव्याख्यानम्।

एवेति लोकोत्तरः। मोहन्त्विवति हरेर्विहङ्गमो गरुडः मोहमज्ञानं हन्त्वित्यर्थः। गरुडजात्यवच्छिन्न इति। सौगतदृशा गरुडानां बहुत्वादिति भावः। विहङ्गमविशेषत्वं तु जात्यादिवैलक्षण्यात्।

मधुसूदनीविवृतिः।

असौ केसरी। हेवाकः अहमहमिका अहंपूर्वम् अहं पूर्वमित्याख्यो भावः। लज्जमानः मन्दाक्षं लभन् करिकीटे पयोदशकले च याऽवज्ञा तया दिशां द्विरदाः प्रलयकालीनाः पयोदाः। तेषां घटाबन्धेऽपि घटनारचनयामपि न संरम्भते नोद्योगं करोति।

उदाहरणेन "सामान्यपदादपि विशिष्टस्य बोधो भवति" इति स्पष्टयति—यथा—मोहमिति। मोहं विषयलिप्साम्। कश्चिदेव विलक्षण एव।

तत्र चेति। हरेः सकाशात् अतिशयाधानस्य अनपेक्षया एव। हरेः विशेषणभाव इत्यन्वयः। तद्वत् हरिवत् इहापि अम्बिकायामपि। भगवत्या अनुग्रहस्य सम्पत् राशिः। अथवा अनुग्रहरूपा सम्पत् लक्ष्मीः। तस्याः सम्पर्केण शून्यस्य रहितस्य एवंविधस्य जात्यन्तरावच्छिन्नस्य। अयमर्थः तदनुग्रहशून्यस्य विलक्षणकेसरिणः तद्वाहनत्वप्राप्तिरूपोऽर्थः। कवेः नाभिप्रेतः।

तथाहीत्यादिना कवेरनभिप्रेतत्वमर्थस्य दर्शयति। असमो योऽभियोगः निरन्तरं दीर्घकालं यावत् दृढसेवारूप उद्योगः तेन अभिमुखीभूता द्रवीभूता प्रसन्नेति यावत् या भगवती सरस्वती तस्याः प्रसादेन प्रसन्नतया आसादितं लब्धं यद् असामान्यं विलक्षणं वैदुष्यं पाण्डित्यम् तस्य अतिशयेन शालते शोभत इति शालिनम्। इतरमनीषिमात्रसमुचितेन साधारणपण्डिताईेण आचरितेन कृत्येन। तज्जातीयान् इतरमनीषिसदृशान् महतोऽपि विततवैदुष्यानपि अगणयतो तृणाय मन्यमानस्य।

दयचूडामणिमानिनो विमनसः समानधर्माणमप्रकृतमेवाम्बिकाकेसरिण पुरस्कृत्य स्वाभिप्रायाविष्करणमेतत् ।

न च तत्र स्वाभाविक एव कवेर्विद्याचमत्कारातिशयलाभोऽभिमतः अपि तु सरस्वतीपादप्रसादजनित एव । तस्याश्चात्मनश्चोभयोरपि बिम्बप्रतिबिम्बभावेनाम्बिकाकेसरिणोरुपादानात् ।

द्वितीयपक्षपरिग्रहे पुनर्न भवितव्यमेव समासेन अम्बिकाया विशेषणभूताया उत्साहपरिपोषपर्यवसायिकेसरिचमत्कारातिशयाधाननिबन्धनभावेन विधेयतया प्रधान्येन विवक्षितत्वात् समासे चास्य विध्यनुवादभावस्य निमज्जनादित्युक्तमेव ।

ननु च यदि विशेषणस्य विवक्षितत्वे सति विशेष्यस्य कोऽपि चमत्कारः समुन्मिषति स च तस्य समासेऽस्तमुपयातीत्युच्यते तर्हि समासादसौ न प्राप्नोति इष्यते च कैश्चित् ततोऽपीति वृत्तिवाक्ययोस्तस्य यदेतदुदयास्तमयपरिकल्पनं तदयुक्तमेव ।

---

व्यक्तिविवेकव्याख्यानम् ।

स्वाभिप्रायाविष्करणमिति । सादृश्यमूलयाऽप्रस्तुतप्रशंसयेति भावः । तस्याश्चेति तच्छब्देन सरस्वती परामृष्टा । सरस्वत्या अम्बिका प्रतिबिम्बम् आत्मनश्च केसरीत्यर्थः ।

द्वितीयपक्ष इति । केसरिगतप्रकर्षप्रतिपादनपक्षे ।

समासादसाविति अम्बिकाकेसरिशब्दाद् उन्मिपत्येव स चमत्कार इत्यर्थः । उदयास्तमयेति । वृत्तौ चमत्कारस्यास्तमयता, वाक्ये उदय इति चूलिकाक्रमेण योगः ।

मधुसूदनीविवृतिः ।

निजगुणानां गरिम्णा या उद्दामदर्पकण्डूस्तस्या विनोदेन अपाकरणेन यत्सुखं तस्य समाश्रयम् पात्रम् । आत्मानं सहृदयचूडामणिं मन्यते तस्य । विमनसः स्वानुरूपविद्वद्लाभात् दुःखिनः । अप्रकृतमप्रस्तुतम् । स्वस्य केसरिणा । सरस्वत्याः अम्बिकया सह साधर्म्यम् । स्वाभाविक स्वप्रवाहपल्लवित इति यावत् ।

द्वितीयपक्षस्य केसरिगततादृशातिरेकप्रतिपादनप्रयोजनपक्षस्य परिग्रहे स्वीकारे । विशेषणभूताया अम्बिकायाः विधेयतया प्राधान्येन विवक्षितत्वादित्यन्वयः । विधेयत्वे हेतुमाह—उत्साहेति । उत्साहस्य परिपोषे पर्यवसायि यत् केसरिणि चमत्कारातिशयस्य आधानं तन्निबन्धनभावेन तत्कारणतया निमज्जनात् गुणतया म्लानात् ।

समासेऽपि चमत्कारो भवतीति वैयाकरणानां मतमाशंकते–नन्विति । विवक्षितत्वे उत्कर्षापकर्षप्रतीतिनिबन्धनभावेन विधेयतया विशेषणस्य प्राधान्ये विवक्षितत्वे । समुन्मिषति प्रादुर्भवति तस्य विशेष्यस्य असौ चमत्कारः । कैश्चित्ततोऽपि समासादपि

उच्यते । उदयास्तमययोर्यत् तावदर्थस्य वैचित्र्यं तदुपदर्शितमेव प्राक् । यत् पुनः समासचमत्कारांभावप्राप्तिप्रसञ्जनं न तच्चोद्यम् । इष्टं हि नामाप्राप्त्या चोद्यते । न चास्माभिरसौ समासादपीष्यते वाक्यादेव तत्सिद्धेरिष्टत्वात् यैस्तु ततोऽपीष्यते तेषां वृत्तिवाक्ययोर्नूनमिदमर्थवैचित्र्यं न प्रतिभातमेव ।

या पुनरेषां वृत्तेरपि चमत्कारातिशयावगतिः यथा—

"मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु-
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम्"

इत्यार्यानुज इत्यतस्तातकलत्रमित्यतश्च सा प्रतीतिरेवाभिमानिकी शुक्तिरजतप्रतीतिवत् । परमार्थतस्तु सा व्याख्यावाक्यादेव तेषां, न समासात्, केवलं तत्रारोपितेत्युदयास्तमयपरिकल्पनमुपपन्नमेवेति सिद्धम् । तस्मादेवमत्र पाठः कर्तव्यः ।

---

व्यक्तिविवेकव्याख्यानम् ।

उपदर्शितमेव प्रागिति उदाहरणप्रत्युदाहरणप्रदर्शनद्वारेण । इष्टं हीति अभिप्रेतस्याप्राप्तिर्या, सा चोदनार्हा इष्टमेतन्न सिध्यतीति । यत्तु नाभिप्रेतं तस्याप्राप्तिर्भूषणं न तु दूषणमित्यर्थः । अस्माभिरसाविति असौ चमत्कारः ।

सा भ्रान्तिरेवेति निर्विकल्पाविकल्पभेदेन द्विविधा भ्रान्तिः । तत्राद्या तिमिराद्युपप्लुतेन्द्रियस्य द्विचन्द्रादिप्रतीतिरूपा । द्वितीया त्वभिमानरूपा शुक्तिरजतादिप्रतीतिस्वरूपा । सेति चमत्कारावगतिः । व्याख्यावाक्यादेवेति अम्बिकायाः केसरीति समासविवरणवाक्यात् । तेषामिति प्रतीतिवैचित्र्यानभ्युपगमवादिनाम् । तत्रारोपितेति तत्र समासे शुक्तिस्थानीये रजतमिवारोपिताऽवास्तवीत्यर्थः । उदयास्तमयपक्षौ क्रमाद् वाक्यसमासगतौ ।

मधुसूदनीविवृतिः ।

इष्यते चमत्कार इत्यन्वयः । इति हेतो । वृत्तिवाक्ययोर्द्वयोर्मध्ये । तस्य चमत्कारस्य ।

समाधत्ते—उच्यते इति । वाक्ये चमत्कारः उदयते । वृत्तौ स अस्तमयते । तयोर्मध्ये । चमत्कारेति । चमत्काराभावस्य या प्राप्तिः तस्याः प्रसञ्जनमापत्तिः । तत्प्रसञ्जनं न चोद्यम् न वक्तव्यम् । हि यतः अप्राप्त्या असिद्ध्या इष्टं चोद्यते अस्मादेतन्न सिद्धमिष्टमिति इष्टसाधनार्थं प्रेरणा भवति । अनभिप्रेतकृते न कोऽपि चोदनामाचरति तस्य तु अप्राप्तिर्भूषणमेव न दूषणमिति भावः । असौ चमत्कारः । तत्सिद्धेः चमत्कारसिद्धेः । यैः वैयाकरणैः ततोऽपि समासादपि । तेषां वैयाकरणानाम् ।

मिथ्यैतदिति । व्याख्यातं प्राक् । शुक्तीति । यथा शुक्तौ चाकचिक्यवशाद्रजतप्रतीतिः तद्वत्समासस्थले चमत्कारप्रतीतिराभिमानिको भ्रान्तिरेवेति । परमार्थतस्तु तत्वतस्तु सा चमत्कारप्रतीतिः व्याख्याभूताद् समासविवरणरूपाद् वाक्या-

"उद्योगः करिकीटमेघशकलोद्देशेन सिंहस्य यः
सर्वस्यैव स जातिमात्रनियतो हेवाकलेशः किल ।
इत्याशाद्विरदक्षयाम्बुदघटाबन्धेऽपि नोद्युक्तवान्
योऽसौ कुत्र चमत्कृतेरतिशयं गौर्या हरिर्यातु सः ॥"

इति । इत्थञ्चोक्तदोषत्रयावकाशः प्रतिविहतो भवति ।

यद्यपि च योऽसावित्यत्र प्रतिपादिताभिसम्बन्धक्रममेकमेव तदमुपादाय सोऽयमिति पाठे विपर्यासिते सत्येकवाक्यतायां न यथोक्तयत्तदभिसम्बन्धदोषावकाशः यथा—

"तस्य प्रयातस्य वरूथिनीनां पीडामपर्याप्तवतीव सोढुम् ।
वसुन्धरा विष्णुपदं द्वितीयमध्यारुरोहेव रजश्छलेन ॥" इत्यत्र ।

व्यक्तिविवेकव्याख्यानम् ।

उद्योग इति । संरम्पदं निरस्योद्योगपदकरणं प्रक्रम्यमाणोद्युक्तवत्पदक्रमाभेदाय । योऽसावित्यदः शब्दः प्रसिद्धिपरामर्शकः यच्छब्दप्रतिनिर्देशस्य तच्छब्देन करिष्यमाणत्वात् ।

प्रतिपादितेति । आर्थो हि केवलतच्छब्दस्य प्रयोगनिबन्धन उपक्रमोपसहारक्रमः प्रतिपादित एव ।

मधुसूदनीविवृतिः ।

देव । तत्र समासे वाक्याद्भवन्ती सा प्रतीतिरारोपिता अवास्तवी अभ्यस्ता । इत्यतः । सिद्धम् युक्तिप्रयुक्तिभिः सपन्नमेव ।

यदि अत्र दूषणं तर्हि कथं पाठ्यमिति शुद्धं पाठं विपर्यस्य दर्शयति—उद्योग इति । अत्र संरम्भपदस्थाने उद्योगपदं दत्तम् । तेन उद्युक्तवानिति पदेन सह सङ्गतिः अर्थात् क्रमभेदाख्यदूषणपरिहारः । योऽसावित्यत्रादःशब्दः प्रसिद्धिं परामृशति । यच्छब्दप्रतिनिर्देशस्य तच्छब्देन करिष्यमाणत्वात् ।

ननु भक्षितेऽपि लशुने न शान्तो व्याधिः । एवं पाठे विपर्यासितेऽपि दूषणान्तरमुदीते । तद्यथा—यत्र प्रक्रान्तार्थस्तच्छब्दो भवेत् न तच्छब्दो यच्छब्दोपादानमपेक्षते यथा प्रागुक्ते उदाहरणे कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम् । अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः इत्यत्र, यथा च तस्य प्रयातस्येत्यत्र । एवं च प्रकृतोदाहरणेऽपि "सोयं कुत्र चमत्कृतेरतिशयं गौर्या हरिर्गच्छतु" इत्येवं कृते न कश्चिद्दोषः । प्रत्युत अर्थबललब्धस्य शब्देन प्रतिपादनं पुनरुक्तिप्रकारत्वमिव प्रतीयते इत्यभ्युपगम्य ब्रूते—

यद्यपि चेति । प्रतिपादितः प्रकरणेन उक्तः अभिसम्बन्धुं योग्यः क्रमो यस्य तमेकमेव तदम् तच्छब्दम् उपादाय गृहीत्वा । एकवाक्यतायाम् चरणत्रयस्य चतुर्थ चरणेन संगतौ सत्याम् । यथोक्तस्य पूर्वोक्तस्य यत्तदभिसम्बन्धस्य दोषस्य अवकाशः प्रसरो न अस्तीति शेषः । यथा तस्य प्रयातस्येत्यत्र पद्ये न यथोक्तदोषः ।

तथापि तत्रार्थस्य चमत्कारातिशयो न्यग्भवत्येव । स हि भिन्नवाक्यतायामेव सहृदयैकसंवेद्यः समुन्मिषतीति तदनुगुणार्थोऽयमेव पाठः श्रेयानिति ।

---

व्यक्तिविवेकव्याख्यानम् ।

रजश्छलेनेति । छलेवशब्दप्रयोगे सापह्नवेयमुत्प्रेक्षा । केवलच्छलशब्दप्रयोगेऽप्यपह्नुतिः । केवलेवशब्दप्रयोगे च सम्भावनप्रतीतावुत्प्रेक्षा । द्वयप्रयोगे तु शबला प्रतीतिः । न चात्रापह्नुत्युत्प्रेक्षयोः सङ्करः । उत्प्रेक्षा ह्यपह्नुत्यविनाभाविनी । सोऽपह्नवः क्वचित् गर्भीकृतो यथा 'नखक्षतानीव वनस्थलीनामि'त्यत्र, न पलाशानि किन्तु सम्भावयामि नखक्षतानीति प्रतीतेः । क्वचित्तु शब्देन प्रतिपाद्यते यथा 'अध्यारुरोहेवे'ति । एवञ्चास्या अपह्नुत्यविनाभाविन्या अपह्नुतिबाधकत्वं, न तया सह सङ्करः ।

भिन्नवाक्यतायामेवेति । तत्र हि विध्यनुवादभाव आञ्जस्येन क्रमेण प्रतीयते ।

मधुसूदनीविवृतिः ।

तस्य प्रयातस्येति । प्रयातस्य युद्धार्थमभिगच्छतः तस्य राज्ञः वरूथिनीनां सेनानां पीडां सोढुं भारजन्यां व्यथाम् वोढुम् अपर्याप्तवती इव असमर्था इव वसुन्धरा पृथ्वी रजश्छलेन द्वितीयं विष्णुपदं खम् अध्यारुरोह इव । अत्र अपर्याप्तवती इवेति उत्प्रेक्षा । एवमत्र शुद्धोत्प्रेक्षाया पूर्वार्द्धोपात्तायाः उत्तरार्द्धगतया सापह्नवोत्प्रेक्षया सह संकरः । रजश्छलेनेति अपन्हुत्या सह अध्यारुरोहेवेत्युत्प्रेक्षायाः संकर इति न भ्रमितव्यम् । तस्यास्तदुपजीव्यत्वात् ।

अयमत्र विवेकः । केवलव्याजादिशब्दप्रयोगे अपन्हुतिः केवलेवादिप्रयोगे उत्प्रेक्षा । उभयोः प्रयोगे तु शबला प्रतीतिः । परमुत्प्रेक्षा अपह्नुतिमुपजीव्यैव प्रवर्तते इति तदविनाभाविनी तस्याः स्थितिः । इत्यन्यदेतत् यत क्वचित्सोऽवह्नवः गर्भीकृतो भवति यथा—नखक्षतानीव वनस्थलीनाम्" नेमानि पलाशानि किन्तु सम्भाव्यते नखक्षतानीति प्रतीतेः । क्वचित्तु सा स्फुटा भवति शब्देन प्रतिपादितत्वात् यथा अध्यारुरोहेवेत्यत्र । एवमपह्नुत्यविनाभावेन लब्धस्थानाया अस्यास्तद्बाधकत्वमेव न तयात्र संकरः । किन्तु पूर्वार्द्धोत्तरार्द्धगतयोस्तयोः संकरोऽस्त्येवेति सर्वं निरवद्यम् ।

समाधत्ते—तथापि तत्र अर्थबललब्धे यच्छब्दे अर्थगतः चमत्कारस्यातिशयः विशेषो न्यग्भवत्येव म्लानतामापद्यते । ननु किं तस्य प्रयातस्येत्यत्र चमत्कारो न्यग्भूत इत्यत आह–स हि चमत्कारो हि भिन्नवाक्यतायामेव अर्थात् यत्तदोः विभिन्नविभक्तिघटितवाक्यगतत्वेन उपादाने एव समुन्मिषति । प्रादुर्भवति अन्यथा नेत्यर्थः । ननु तत्रैव चमत्कारोद्भूतौ का प्रमेत्याह विशेषणम्—सहृदयैकसंवेद्य इति । तत्रत्यचमत्कारस्य वेत्ता सहृदय एव नान्यः । अस्मिन् विषये ते तत्वेन प्रष्टव्याः एतादृशे स्थले चमत्कारः अनीदृशस्थले वा समुन्मिषतीति तदनुगुणार्थः चमत्कारानुगतगुणलाभाय अयमुक्त एव पाठः श्रेयान् ।

यत्रोत्कर्षोऽपकर्षो वा विशेष्यस्य विशेषणात् ।
तदेव वा विधेयं स्यात् समासस्तत्र नेष्यते ॥ २६ ॥
अन्यत्र त्वर्थसन्बन्धमात्रे वक्तुमभीप्सिते ।
कामचारस्तदर्थं हि समर्थग्रहणं मतम् ॥ १७ ॥
न तु सापेक्षताद्यन्यदोषजातनिवृत्तये ।
पित्रोः स्वतेव वन्द्यत्वे सा हि न्यायेन सिध्यति ॥ २८ ॥

इति सङ्ग्रहश्लोकाः

---

### व्यक्तिविवेकव्याख्यानम् ।

तदेव वेति विशेषणम् । तच्च विध्यनुवादभावविवक्षायां विधेयम् । अन्यत्रेति। उत्कर्षापकर्षयोर्विधेयत्वस्य चाभावे ।

कामचार इति समासासमासयोः । तदर्थमिति उत्कर्षादिविषये समासनिषेधार्थम् ।

सापेक्षेति सापेक्षमसमर्थं भवतीत्येतावन्मात्रप्रतीतये । पित्रोः स्वतेवेति यथा पितरौ वन्दनीयाविति नित्यसंबन्धन्यायाद् निजावेव पितरौ प्रतीयेते, तद्वत् सापेक्षाणामनभिधानाख्येन न्यायेन समासाभावः प्रत्येष्यते । स्वता आत्मीयत्वमिव । सा दोषप्रकारनिवृत्तिः ।

### मधुसूदनीविवृतिः ।

यत्रेति । यत्र स्थले विशेषणात् अर्थात् विशेषणहेतुकः विशेष्यस्य उत्कर्षः अपकर्षो वा प्रतीयात् वा अथवा तदेव विशेषणमेव उत्कर्षापकर्षनिबन्धनभावेन विधेयं स्यात् तत्रोभयत्र स्थले समासो न इष्यते विद्वद्भिरिति ।

अन्यत्रेति। अन्यत्र उक्तादतिरिक्तस्थले अर्थात् यत्र केवलमर्थेन सह सम्बन्ध एव वक्तुं प्रतिपादयितुमभीप्सितो भवेत् न उत्कर्षापकर्षौ न च विधेयता तत्र कामचारः । समासो वा असमासो वेति । हि यतः तदर्थम् समासासमासस्थलबोधनार्थम् समर्थः पदविधौ इति परिभाषासूत्रे समर्थग्रहणं मतमिष्टम् ।

नत्विति । तु किन्तु सापेक्षतादिरूपस्य अन्यदोषजातस्य निवृत्तये न । जातशब्दः समूहवाची । हि यस्मात् । सा सापेक्षताद्यन्यदोषजातनिवृत्तिः पित्रोः वन्द्यत्वे स्वता इव न्यायेन सिध्यति । अयं भावः । यथा "पितरौ वन्दनीयौ" इत्यत्र नित्यसाहचर्यादिबलात् स्वस्यैव तौ प्रतीयेते नान्यस्य तद्वत् समर्थत्व एव वृत्तिवाक्ययोः समानार्थत्व एव समासः असमर्थतायां सापेक्षतायां न समास इत्यर्थादेव सेत्स्यति । इति सापेक्षतादोषनिवृत्तये समर्थग्रहणं कृतमिति न बोध्यमिति ।

काव्यकाञ्चनकषाश्ममानिना कुन्तकेन निजकाव्यलक्ष्मणि ।
यस्य सर्वनिरवद्यतोदिता श्लोक एष स निदर्शितो मया ॥ २९॥

प्रक्रमभेदोऽपि शब्दानौचित्यमेव । स हि यथाप्रक्रममेकरसप्रवृत्ता-

---

व्यक्तिविवेकव्याख्यानम् ।

अधुना सर्वोत्कर्षशालिताप्रकटनार्थं स्वपरिश्रमं पिण्डीकृत्य श्लोकेन दर्शयितुमाह काव्यकाञ्चनेति । काव्यमेव परीक्षणीयत्वात् सुवर्णं तत्र परीक्षास्थानं निकषोपलमात्मानं मन्यते, न पुनरुक्तक्रमेण परमार्थतस्सन् निकषोपलः । अत एव कुन्तकेनेति । ख्यातस्याप्युल्लुण्ठवचनम् । श्लोक एष इति । यः सर्वसारतया प्रदर्शितस्तत्रैयती दूषणवृष्टिर्मुक्ता । तत्रान्यस्य ग्रन्थस्य का गणनेति सूचितम् । निदर्शितः स्थालीपुलाकन्यायेनोदाहृतः । अत्र श्लोके वक्ष्यमाणैतदीयन्यायानुसारेण कषेण नियमेन काञ्चनपदं पौनरुक्त्यदोषदुष्टम् । निजकाव्यलक्ष्मणीत्यत्र निजार्थस्य संरम्भास्पदत्वेन विधेयत्वात् समासकरणं विधेयाविमर्शदूषितं केचिदाचक्षते विचक्षणाः । तत्त्वनेनैव ग्रन्थकृता 'स्वकृतिष्वयन्त्रित' इत्यादिना दत्तोत्तरमेव । अस्य च विधेयाविमर्शस्यानन्तेतरप्रसिद्धलक्ष्यपातित्वेनास्माभिर्नाटकमीमांसायां साहित्यमीमासायां च तेषु तेषु स्थानेषु प्रपञ्चः प्रदर्शित इति ग्रन्थविस्तरभयादित एवोपरम्यते ।

एवं विधेयाविमर्शं प्रकारवैचित्र्येण लक्षयित्वा प्रक्रमभेदं लक्षयितुमाह–प्रक्रमभेदोऽपीति । प्रतिपत्तृप्रतीतेरिति रथस्थानीया प्रतिपत्तृप्रतीतिः ।

मधुसूदनीविवृतिः ।

इदानीं विश्वातिशायिप्रकर्षविकासनाय स्वपरिश्रमं पिण्डीकृत्य श्लोकेन दर्शयितुमाह—काव्यकाञ्चनेति । काव्यमेव काञ्चनं तस्य कषाश्म निकषोपलम् । अर्थात् काव्यस्य परीक्षणीयत्वात् परीक्षास्थानम् । तदेवात्मानं मन्यते तेन कुन्तकेन । प्रसिद्धस्याप्युल्लुण्ठतार्थं नामग्रहणं बोध्यम् । निजे लक्षणया निजकृते काव्यलक्ष्मणि लक्षणया तदभिधायके ग्रन्थे यस्य संरम्भः कारिकीटेत्यस्य श्लोकस्य सर्वभावेन निरवद्यता दोषराहित्यम् । उदिता कथिता । स एष इयता प्रघट्टकेन व्याख्यातः । एतेन एकस्मिन्नेवेह इयान् दूषणाब्धिः प्रवहते तर्हि समग्रे ग्रन्थे ते कियन्त इति अगणनीयत्वं तेषां प्रकटयति । श्लोकः मया निदर्शितः स्थालीपुलाकन्यायेन दृष्टान्तीकृतः ।

अत्र परदोषमाविष्कर्तुरस्य "अनेन च" सकलकलाकनकनिकषपाषाण" इत्यादौ कनकादिशब्दानामपि पौनरुक्त्यं व्याख्यातम्" इति वक्ष्यमाणनयेन कषस्य नियमेन काञ्चनार्थता प्रसिद्धेति काञ्चनपदस्य पौनरुक्त्यम् दूषणम् । एवं संरम्भास्पदस्य निजपदस्य समासे गुणीकरणात् विधेयाविमर्शो बोध्यः ।

इत्थं विधेयाविमर्शमुदाहरणप्रत्युदाहरणैः सुनिपुणं निरूप्य अवसरप्राप्तं प्रक्रमभेदं निरूपयति—प्रक्रमभेदोऽपीति । शब्दानौचित्यमेवेति एवेनास्य आर्थी अनौचिती व्यावर्त्यते । स हि प्रक्रमभेदो हि यथाप्रक्रमम् प्रक्रमानुगतम् एकरसेन एकभावेन

या: प्रतिपत्तृप्रतीतेरुत्खात इव परिस्खलनखेददायी रसभङ्गाय पर्यवस्यति ।

किञ्च सर्वत्रैव शब्दार्थव्यवहारे विद्वद्भिरपि लौकिक्रमोऽनुसर्त्तव्यः । लोकश्च मा भूद्रसास्वादप्रतीतेः परिम्लानतेति यथाप्रक्रममेवैनमाद्रियते नान्यथा । स चायमनन्तप्रकारः सम्भवति । प्रकृतिप्रत्ययपर्यायादीनां तद्विषयभावाभिमतानामानन्त्यात् । तत्र प्रकृतिप्रक्रमभेदो यथा—

"सततमनभिभाषणं मया ते परिपणितं भवतीमनानयन्त्या ।
गतधृतिरवलम्बितुं बतासूननलमनालपनादहं भवत्याः ॥"

व्यक्तिविवेकव्याख्यानम् ।

उत्खातो विषमोन्नतः प्रदेशः ।

एनमिति शब्दार्थव्यवहारम् । तद्विषयभावः प्रक्रमभेदविषयत्वम् ।

अनभिभाषणं तत्कर्तृकभाषणाभावः । एवमनालपनं ज्ञेयम् । अनलमसमर्था ।

मधुसूदनीविवृतिः

प्रवृत्तायाः प्रस्थितायाः प्रतिपत्तुः प्रतीतेः उत्खात इव उद्घात इव विषम उच्चावच-प्रदेश इव परिस्खलनस्य परिपतनस्य खेदं दुःखं दातुं शीलमस्येति तथा भवन् रसभङ्गाय रसविषयकास्वादनाशाय पर्यवस्यति परिणमति । यथा गर्त्तबहुले पथि रथेन यान् पथिकः पतनभयस्य निरन्तरं जागरूकतया सुखलवमपि नाधिगच्छति तद्वत् प्रक्रमभेदस्थले प्रतिपत्तुः प्रतीतेरवस्था । अत्र रथस्थानीया प्रतिपत्तुः प्रतीतिरधिगन्तव्या ।

ननु कुतस्त्वयाऽधिगम्यते यदेतादृशस्थले एतादृग्दोष इति दोषस्य उद्गमं कटाक्षयति—किञ्चेति । लोकत एतदधिगतमित्यर्थः । एनम् शब्दार्थविषयकव्यवहारम् । परिम्लानता नाशः । अन्यथा रसादुदस्य । स चायं तयोर्व्यवहारः । तद्विषयभावेन प्रक्रमभेदस्थलत्वेन अभिमतानाम् स्वीकृतानाम् ।

सततमिति । भवतीं त्वाम् अनानयन्त्या मया सह ते तव सततं निरन्तरम् अनभिभाषणम् भाषणाभावः परिपणितम् "यद्यहं त्वां सङ्केतस्थले न प्रापयेयम् तर्हि मया सह त्वं भाषणं नाचरे"ति प्रतिज्ञातम् । बत खेदे । किन्तु महद् दुःखम् । भवत्या तव अनालपनात् भाषणाभावात् । गता धृतिर्यस्याः सा अहम् असून् प्राणान् अवलम्बितुं धारयितुम् न अलम् अनलम् असमर्था । अत्र भष् प्रकृतेः प्रक्रमभेदः । अतः यथोपक्रान्तम् उपसंहारोऽपि तथैव समुचितः । अयं भावः "न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" इतिशास्त्राच्छाब्दे ज्ञाने शब्दस्यापि भानं भवति इति उपक्रमोपसंहारयेः भिन्नपदाभ्यामुपादाने सति शब्दभेदेन अर्थभेदः इति दर्शनाद् भिन्नत्वमिव अर्थस्य प्रतीयेत अतः यया क्रियया प्रकृत्या येन प्रत्ययेन पर्यायेण अन्येन वा केनचिदुपक्रम्यते तयैव तेन वा उपसंहारो न्याय्यः एकार्थत्वाय प्रतीतेरित्येद् व्याख्यानं सर्वत्रात्र प्रकरणे बोध्यं पुनः पुनरुल्लेखे पिष्टपेषणं स्यादिति ।

अत्र हि भाषतिलपत्योरुभयोरपि वचनार्थाविशेषेऽपि यदा भाषतिप्रयोगक्रमेण वस्तु वक्तुमुपक्रान्तं तदा तेनैव निर्वाहः कर्तुमुचितो नेतरेण। एवंविधस्य प्रक्रमाभेदाख्यस्य शब्दौचित्यस्य विध्यनुवादभावप्रकारत्वोपगमात् यथा—

"ताला जाअन्ति गुणा जाला दे सहिअएहि घेप्पन्ति।
रइकिरणाणुग्गहिआइ होन्ति कमलाइ कमलाइ॥"

यथा च—

"एमेअ जणो तिस्सा देउ कवोलोपमाइ शशिविम्बम्।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ॥"

अत्र ह्युत्कर्षापकर्षमात्रविवक्षया परिकल्पितभेदेऽप्येकस्मिन्नर्थे विधे-

व्यक्तिविवेकव्याख्यानम्।

विध्यनुवादभावप्रकारतोपगमादिति प्रकारः सादृश्यम्। उपक्रान्तं ह्यनुवादस्थानीयम्। निर्वाहकं च विधेयप्रख्यम्। तत्र स्पष्टं विधेयानुवाद्यप्रकारमुदाहरति यथेति।

"तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥"
"एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम्।
परमार्थविचारे पुनश्चन्द्रश्चन्द्र इव वराकः॥"

उत्कर्षापकर्षमात्रेति कमलानामुत्कर्षविवक्षा। अत एवोदाहरणद्वयं दत्तम्।

मधुसूदनीविवृतिः।

अत्र वचनार्थत्वाविशेषेऽपीति। वचनार्थत्वे कथनार्थत्वे अविशेषः समानता भाषतेरपि वचनमेवार्थः, लपतेरपि वचनमेवार्थः एवमर्थे एकरूपतेति भावः। तस्मिन्। वस्तु भाषणाभावरूपम्। तेनैव भाषतिप्रयोगेणैव। इतरेण लपतिप्रयोगेण। प्रक्रमाभेदाख्यस्य प्रक्रमगतैकत्वाह्वयस्य। विध्यनुवादभावप्रकारत्वस्य विध्यनुवादभावसादृश्यस्य उपगमात् स्वीकारात्। प्रकारो भेदसादृश्ये इत्यमरः। तत्र प्रक्रान्तस्य अनुवाद्यत्वम्। उपसंहृतस्य विधेयत्वम्।

यथेति दृष्टान्तेन निगमयति—। "ताला" इति। तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते। रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि। इत्यनुवादः। स्पष्टार्थः। अत्र कमलान्युद्दिश्य कमलानां विधेयत्वम्।

"एमेअ" इति। एवमेव जनस्तस्या ददाति कपोलोपमायां शशिबिम्बम्। परमार्थविचारे पुनश्चन्द्र चन्द्र इव वराकः। इति छाया। तस्या नायिकाया कपोलौ चन्द्रबिम्बतुल्यौ इत्यर्थः। वराकः क्षीणत्वादिसधर्मत्वान्निस्तुल इत्यर्थः। अत्राऽपि चन्द्रोद्देश्येन चन्द्रस्य विधानम्।

अत्रेति। उत्कर्षः कमलानाम्। अपकर्षः चन्द्रस्य। एकेनैव अभिधानेन एकेनैव

यानुवाद्यविषयेण एकेनैवाभिधानेन विध्यनुवादभावो भणित इति प्रक्रमा-भेदप्रकार एवायमिति मन्तव्यम् । केवलं पर्यायप्रक्रमभेदनिवृत्तये शशि-बिम्बमित्यत्र चन्द्रमिणमिति पाठः परिणमयितव्यः । यथा —

"एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत ।"

इति । तेन प्रत्यवोचत इत्यत्र पाठो युक्तः । यथा च—

"नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशापि याता ।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥"

इति ।अत्र हि गता निशापीति युक्तः पाठः ।

न चैवं शब्दपुनरुक्तिदोषप्रसङ्गः-यथान्ये मन्यन्ते 'नैकं पदं द्विः प्रयोज्यं

---

व्याकविवेकव्याख्यानम् ।

प्रक्रमाभेदप्रकार इति प्रकारोऽत्र विशेषः । पर्यायप्रक्रमेति । चन्द्रशब्दार्थस्य शशिशब्देन पर्यायान्तरनिर्देशो न युक्तो वक्ष्यमाणप्रक्रमभेदप्रसङ्गात् ।

न चैवमिति तेनैव शब्देनोपसंहार इत्यर्थः ।

मधुसूदनीविवृतिः ।

शब्देन । प्रक्रमाभेदप्रकार इति । प्रक्रमस्वरूपविशेषः । प्रकारो विशेषः । पर्या-येति । पूर्वार्द्धे शशिपदमुपादाय उत्तरार्द्धे चन्द्रपदोपादानेन पर्यायप्रक्रमभेद आपतति इति तन्निवृत्तये इत्यर्थः । परिणमयितव्यः प्रवर्त्तयितव्यः ।

परिकल्पितभेदेऽपीति । कमलम् ( सामान्यम् ) उत्कृष्टं कमलम् । चन्द्रः ( सामान्यः ) अपकृष्टः चन्द्रः इत्येवम् रविकिरणानुग्रहवत्तया उत्कर्षस्य, वस्तुतत्त्वा-लोचनेन अपकर्षस्य, यथा विवक्षया भेदः परिकल्पितः । एकस्मिन्नर्थे यथा माषतिल-पल्योरित्यत्र कथनरूप एक एवार्थः । तत्र विधेयानुवाद्ययोर्विपर्ययेण । ( वाक्यान्तः पातिनोरर्थात् अवान्तरयोः ) विधेयानुवाद्ययोः स्थलेन ।

एवमुक्त इति । अत्र उक्त इति वच्धातुना आरभ्य ततः प्रत्युत्तरमपि तेनैव धातुना कथनीयमेकरूपतारक्षार्थं इति वच्प्रकृतेः प्रक्रमभेदः ।

नाथे निशाया इति । नियतेरदृष्टस्य नियोगात् नियमात् निशाया नाथे चन्द्रे अस्तंगते सति । हन्त हर्षः तस्या पतिव्रतात्वात् । निशाऽपि रात्रिरपि अस्तं याता । ननु शोकस्थाने को हर्ष इत्यर्थान्तरेण धर्मशास्त्रगतेन समर्थयति—हि यस्मात् आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता" इति पतिव्रतानाम् दशानुरूपं नाथावस्थानुगुणं भद्रतरं कल्याणतरम् अतः परं सहा-नुगमनात् भिन्नं न समस्ति ।

अत्राऽपि प्रकृतेः क्रमभेदः । गमिधातुना प्रक्रान्तमुपसंहारोऽपि तेन न्याय्यः । तत्र गता निशापीति युक्तः पाठः ।

नन्वेवमुपक्रमोपसंहारयोरेकरूपेणाभिधाने तस्यैव शब्दस्य पुनरुपादानं स्यात् । तथा

प्रायेण' इति, तयोर्भिन्नविषयत्वात् । यथोद्देशं हि प्रतिनिर्देशोऽस्य विषयः । उद्देश्यप्रतिनिर्देश्यभावाभावविषयस्तु शब्दपुनरुक्तिदोष इति कुतस्तस्य प्रसङ्गः ।

"व्रजतः क्व तात ! वजसीति परिचयगतार्थमस्फुटम् ।
धैर्यमभिनद्रुदितं शिशुना जननीनिर्भर्त्सनविवृद्धमन्युना ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

तयोरिति प्रक्रमाभेदपुनरुक्तयोः । अस्येति प्रक्रमाभेदस्य परामर्शः । तत्र हि यथोद्देशं प्रतिनिर्देशेन पौनरुक्त्यम्, ऐकरस्येन प्रतीतिप्रसरणात् । उद्देश्यप्रतिनिर्देश्यभावो न पौनरुक्त्यस्य विषयः । यथा—

'क्षामाङ्ग्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः' ।

इति । अत्र गलच्छब्दद्वयं निर्दिष्टं यथोद्देशं प्रतिनिर्देशोऽस्य विषय इति समञ्जसम् ।

ननु व्रजतः क्व तात ! वजसी'त्यत्र व्रजिना प्रक्रमे वजिना च निर्वाहे कथं न प्रक्रमभेदः । वजतिरपि धातुरस्ति । 'वज व्रज गतौ'विति पाठाद् इत्याशङ्क्योक्तं व्रजत इति । उदितं शिशुनेति उदितमित्यस्य विशेषणम् परिचयगतार्थमिति । अस्फुटमिति च । भावे चात्र प्रत्ययः । कार्यार्थं पथि गच्छतः पश्चान्नामोदीरणं विरुद्धमिति शिशुना ललितवचसा नामन्युदीरिते जनन्यास्य भर्त्सनं कृतमिति ततोऽस्य मन्युर्विवृद्ध इत्यत्र तात्पर्यार्थः ।

मधुसूदनीविवृतिः ।

च शब्दपुनरुक्तिदोषः स्यादित्यत्र आह—नचैवमिति । एवम् एकस्यैव शब्दस्य पुनरुपादानात् शब्दपुनरुक्तिनाम्नो दोषस्य प्रसङ्गः स्यात् यथाऽन्ये मन्यन्त । अन्येषां वचनमुद्धरति नैकमिति—"एकं पदं द्विः द्विवारं न प्रयोज्यं प्रायेण बाहुल्येन ।" इति न च वाच्यमित्यन्वयः । तयोः प्रक्रमाभेदपुनरुक्तयोः भिन्नविषयत्वात् भिन्नस्थलत्वात् । यथोद्देशम् आद्योच्चारणानुगतं हि प्रतिनिर्देशः प्रत्युच्चारणम्, अस्य प्रक्रमाभेदस्य विषयः स्थलम् । उद्देश्यप्रतिनिर्देश्यभावाभावविषयस्तु प्रागुच्चारयितव्यप्रत्युच्चारयितव्यभावविरहितस्थलः पुनः शब्दपुनरुक्तिदोष इति प्रस्थानभेदाद्धेतोः प्रक्रमाभेदस्थले तस्य शब्दपुनरुक्तिदोषस्य प्रसङ्गः अवसरः कुतः कथं स्यादिति ।

अयं भावः । यथाप्रक्रममेकरसप्रवृत्तायाः प्रतिपत्तृप्रतीतेरुत्खाते रसभङ्गात् प्रक्रमभेदो दोषः प्रादुर्भवति । किन्तु यथोद्देशं प्रतिनिर्देशे एकरसप्रवृत्ताया प्रतीतेरनुत्खाते रसभङ्गाभावात् कथं पुनरुक्तिदोषः स्यात् । प्रत्युत तथोक्तिरनुगुणैव । इति ।

इत्यत्र शिशुना व्रजतिरेव प्रयुक्तो न वजतिः,तत्रैव परिचयगतार्थत्वा-स्फुटत्वधैर्यभेदत्वसम्भवात् । केवलं शक्तिवैकल्याद्रेफोऽनेन नोच्चारित इति प्रत्युदाहरणमेतत् ।

सर्वनामप्रक्रमभेदो यथा—

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।

## व्यक्तिविवेकव्याख्यानम् ।

एवं धातुरूपायाः प्रकृतेः प्रक्रमभेदं प्रदर्श्य सम्प्रति प्रातिपदिकरूपायास्तस्या मध्ये च सर्वनामादीनां प्रकारवैचित्र्येण तं दर्शयति **सर्वनामेति** । क्वचित् पुनः पुस्तकेषु प्रकृतिप्रक्रमभेदादनन्तरं प्रत्ययप्रक्रमभेदोदाहरणं तत्पश्चात् सर्वनामप्रक्रमभेद-निर्देशो दृश्यते । तत्र च प्रकृतेरनन्तरं प्रत्ययस्यैव निर्देश उचित इति स एव कथित इति सङ्गतिः । ततः परं प्रकृतिविशेषाणां प्रत्ययविशेषाणां तत्समुदायानां च तत्प्रक्रमभेदो निरूपयिष्यते ।

## मधुसूदनीविवृतिः ।

ननु किमियं वेदाज्ञा लोकव्यवहारादेवमुन्नीयते लोकश्च अन्यथाऽपि प्रयुङ्क्ते— यथा—**व्रजतः क्वेत्यत्र** व्रजिना उपक्रम्य वजिनोपसंहारः।अस्ति च वज व्रज गताविति वजिर्धातुरतो लक्ष्यानुसारेण लक्षणस्य व्यवस्थानान्नात्रोक्तोदाहरणेषु कश्चित्कलंकपङ्क इति।

प्रत्युदाहरणमुद्धृत्य समाधत्ते-**व्रजतः क्वेति** । जनन्याः भर्त्सनेन वाचा ताडनेन विवृद्धो मन्युर्यस्य तेन । कार्यार्थं प्रस्थितं प्रति क्व व्रजसि इति प्रश्नो विघ्नकरः कार्यस्येति मुहूर्त्तविदः । तदनभिज्ञेन शिशुना स्वबालस्वभावसुलभचेष्टया "तात क्व वजसी"त्युक्ते जनन्या स भर्त्सित इति तन्मन्योः वृद्धिकारणम् । तथाभूतेन शिशुना अस्फुटम् अत एव परिचयेन निरन्तरं तथाविधश्रवणाहितसंस्कारेण गतो ज्ञातोऽर्थो यस्य तत् । हे तात क्व वजसि " इत्युदितं कथितं व्रजतो गच्छतः पितुः धैर्यमभिनत् नाशयामास ।

**इत्यत्र** पद्ये **शिशुना** बालेन **व्रजतिरेव** वजिधातुरेव **प्रयुक्तो न वजतिः** वजिधातुः । अर्थात् यदि व्रजिः स्यात् तर्हि परिचय/गतार्थत्वास्फुटत्वविशेषणयोरुपादानं व्यर्थमेव स्यात् व्रजतेः गमने प्रसिद्धत्वात् स्फुटार्थत्वाच्च । एवं तत्रैव व्रजसिबुद्ध्या वजसी-त्युच्चारणे एव परिचयगतार्थत्वास्फुटत्वयोः संभवात् ।

अत्र धैर्यभेदित्वसम्भवादित्युक्तिस्तु दुष्टैव यतो वज व्रज गतौ इति धातुपाठे गमनार्थत्वेन वजतेरपि पठितत्वादिति "तत्रैव" इति एवकारव्यावर्त्यत्वं न संभवति तथार्थत्वेन तत्रापि धैर्यभेदित्वमस्त्येव तथाच तत्रैव परिचयगतार्थत्वास्फुटत्वसंभवादिति पाठः साधीयान् केवलमुक्तिवैकल्यात् बालत्वेन कुण्ठितकण्ठत्वात् तादृशक्लिष्टवर्णोच्चारणसामर्थ्यराहित्यात् । प्रत्युदाहरणम् प्रक्रमाभेदविरुद्धोदाहरणम् । दोषस्थलमेवेत्यर्थः ।

**ते हिमालयमिति**। कुमारसम्भवे षष्ठसर्गे कवेरुक्तिरियम् । ते सप्तर्षयः भगवच्छिवेन पार्वत्यासह स्वविवाहोत्सुकताज्ञापनाय हिमवत्सविधे प्रेषिताः मरीच्यादयः । मानसाः ।

सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥"

अत्र हि भगवन्तं शूलिनं प्रक्रान्तमिदमा परामृश्य तेनैवोक्तरीत्या तत्परामर्शः कर्तुं युक्तो न तदा तयोर्देवदत्तयज्ञदत्तशब्दयोरिव भिन्नार्थत्वात् । न चासौ कृत इति सर्वनामप्रक्रमभेदः ।

न चैवं यत्तदोरिदमेतददसां चाभिन्नार्थत्वेऽप्येतद्दोषविषयत्वप्रसङ्गः । तेषामुक्तप्रकारेण स्वभावतोऽन्योन्यापेक्षसम्बन्धोपपादनात । तेनेदमादिभिस्त्रिभिस्तस्य परामर्शो, न तदेति स्थितम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

उक्तरीत्येति । 'यस्त्वेकवाक्ये कर्तृत्वेनोक्तो यश्चेदमादिभिरि' त्यत्रोक्तेन क्रमेणेत्यर्थः । ननु यच्छब्देन प्रक्रमे तच्छब्देनेदमादिभिर्वा कथमुपसंहार इत्याह न चैवमिति । अन्योन्यापेक्षे इति । यत्तदोर्नित्याभिसम्बन्ध इत्युक्तम् । एवं तच्छब्दादूरविप्रकृष्टार्थेष्विदमादिषु प्रागुक्ते 'योऽविल्पम्' इत्यादौ ज्ञेयम् । तेनेति प्रकृतोपसंहारः । इदमादीनां परस्परावान्तरवैचित्र्येऽपि स्थूलदृष्ट्या एकार्थत्वम् ।

मधुसूदनीविवृतिः ।

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शंभुरस्मत्संक्रामितैः पदैः । इत्युक्तेः ।

हिमालयमामन्त्र्य कर्त्तव्यं निश्चतं साधु यामेत्यापृच्छ्य पुनः शूलिनं । प्रेक्ष्य । अर्थात् तत्सविधे प्राप्य । अस्मै शूलिने अर्थं सिद्धं निवेद्य । तद्विसृष्टाः खमाकाशमुद्ययुः उद्गताः । तेनैव इदमैव उक्तरीत्या ।

तच्छब्देन परामर्शो न तयोरुपपद्यते ।
यतोऽव्यक्षायमाणोऽर्थः स तेभ्यः प्रतिपद्यते ।
नचासौ तत्परामर्शसहिष्णुरसमन्वयात् ॥

"यस्त्वेकवाक्ये कर्त्तृत्वेनोक्तो यश्चेदमादिभित्यत्र च प्रोक्तेन क्रमेण ।

तत्परामर्शः शूलिपरामर्शः । न तदा न तच्छब्देन । तयोः इदंतदोः । भिन्नार्थत्वादिति "इदमस्तु सन्निकृष्टे" इति "तदिति परोक्षे विजानीयादि"ति चोक्तेः । असौ परामर्शः ।

ननु यथा इदमा प्रक्रान्तस्य तदा परामर्शे दोषः तथा यदा प्रक्रान्तस्य तदा इदमादिभिर्वा परामर्शेऽपि दोषः स्यात् । इत्याह न चैवमिति । एवम् इदंशब्दोक्तप्रकारेण । एतद्दोषेति सर्वनामप्रक्रमभेदाख्यदोषस्य । तेषां तदादीनाम् । उक्तप्रकारेण "तत्र हि प्रत्युत सा तयोस्तदितरपरामर्शव्यपेक्षा सुतरामुन्मज्जति" इत्याद्युक्तप्रकारेण । तेन हेतुना इदमादिभिस्तस्य तच्छब्दस्य परामर्शः करणीयः । न तदा इदमादीनामिति शेषः ।

प्रत्ययप्रक्रमभेदो यथा—

"रुदता कुत एव सा पुनर्भवता नानुमृतरेवाप्यते ।
परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथाः शरीरिणाम् ॥"

इति । अत्र हि 'कुत एव तु सानुरोदना'दिति युक्तः पाठः । यथा च—

"यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्त्तितुं वा ।
"निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥

इदं चापरमत्र प्रक्रमभेदानुषङ्गि दोषान्तरमप्याविर्भवति, योऽयं विकल्पार्थवृत्तेर्वाशब्दस्य समुच्चयार्थस्येव चशब्दस्याविषय एव प्रयोग इति वक्ष्यते । तेन 'यशोऽधिगन्तुं सुखमीहितं वे'ति युक्तः पाठः ।

व्यक्तिविवेकव्याख्यानम् ।

अत्र हीति अत्र हि कर्तृविशेषणद्वारेणैकस्य हेतुत्वमपरस्य साक्षादिति प्रक्रमभेदः ।

यशोधिगन्तुमिति अत्र हि तृतीयातुमुनोः प्रतीतित्रैपस्यजनकत्वम् ।

वाशब्दस्येति । वक्ष्यति हि 'तुल्यकक्ष्यतया यत्र पदार्थाः' इति ।

मधुसूदनीविवृतिः ।

रुदतेति । रघौ अजं विलपन्तं प्रत्युद्बोधनाय वशिष्ठशिष्योक्तिः । रुदता भवता सेन्दुमती कुत एव अवाप्यते ननु अनुमृतेरपि अनुमरणादपि न अवाप्यते । परलोकजुषां शरीरिणाम् गतयो भिन्नपथा भिन्नमार्गा भवन्ति ।

अत्र शतुः प्रक्रमे अनुमृतेरिति क्तिन्प्रत्ययस्याभिधानमेकरूपां प्रतीतिं स्थगयति । शतुः वर्त्तमाने क्तिनः भूते अनुशासनात्प्रतीतिभेदः ।

यशोऽधिगन्तुमिति । किराते अर्जुनं प्रति द्रौपद्युक्तिः । यशोऽधिगन्तुमित्यादीनां निरुत्सुकानामित्यत्रान्वयः । यशः कीर्तिम् अधिगन्तुम् लब्धुम्, सुखस्य लिप्सा लब्धुमिच्छा तया वा, मन्युष्येषु संख्यां गणनाम् अतिवर्त्तितुम् अतिक्रम्यावस्थातुं मनुष्यदुर्लभमुत्कर्षं प्राप्तुमिति यावत् । निरुत्सुकानाम् इदं मे भवतु इदं मे भवतु इति केवलोत्कण्ठारहितानाम् अभियोगभाजां यत्नतत्पराणां पुंसामिति शेषः । अत्र पुंसामिति न प्रयुक्तं निधानगर्भामिव सागराम्बरामित्यादिषु पृथ्वीपदस्येव विशेषणमात्रप्रयोगेण विशेष्यप्रतिपत्तौ सत्यामिति भावः । सिद्धिः अर्थलक्ष्मीः समुत्का इव अङ्कम् उत्सङ्गम् उपैति स्वयमागच्छति ।

अत्र तुमुनः प्रक्रमे उपसंहारे च लिप्सयेति सनोऽभिधानमेकरूपतां प्रतीतेः स्थगयति । अतो दोषः प्रक्रमभेदः ।

प्रासङ्गिकं वदति । इदं चापरमिति । वक्ष्यते इति अत्र दुष्टप्रयोगो नास्तीति भावः । अत्रैव प्रकरणे अनुपदमेव ।

तुल्यकक्ष्यतया यत्र पदार्थाः स्युः परस्परम् । समुच्चयो विकल्पो वा तत्रेष्टौ दुष्टताऽन्यथा । इति वक्ष्यते ।

"पृथ्वि ! स्थिरा भव भुजङ्गम ! धारयैनां
त्वं कूर्मराज ! तदिदं द्वितयं दधीथाः ।
दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥"

इत्यत्र पृथ्व्यादिविषयः प्रैषलक्षणोऽर्थः कविना वक्तुं प्रक्रान्तः । तस्य प्रत्ययभेदेऽपि निर्व्यूढत्वात् प्रषार्थानां पदानामुद्देश्यप्रतिनिर्देश्यभावेनोपादानं न कृतमिति नैतादृशः प्रत्ययप्रक्रमभेददोषस्य विषयोऽवगन्तव्यः।
पर्यायप्रक्रमभेदो यथा—

"महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥"

---

मधुसूदनीविवृतिः ।

पृथ्वि स्थिरेति । एतां पृथ्वीम् । तद् द्वितयं पृथ्वीभुजङ्गमद्वयम् । तत्त्रितये पृथ्वीभुजङ्गमकूर्मराजत्रये । देवो रामः । आततज्यम् अधिज्यम् । प्रैषे । प्रैषलक्षणः अनुज्ञास्वरूपः । प्रत्ययभेदेऽपि "सिप् थास् थ" इति रीत्या प्रत्ययानां भेदेऽपि तस्य प्रैषार्थस्य निर्व्यूढत्वात् लोट एव प्रयोगतया यथावदुपसंहृतत्वात् ।
न कृतमिति । प्राक्प्रत्यायितस्य पुनः प्रत्यायनाभावादिति भावः ।

महीभृत इति । कुमारे प्रथमसर्गे कवेरुक्तिः । पुत्रवतोऽपि मैनाकादिपुत्रवतोऽपि महीभृतः हिमालयस्य भूधरस्य दृष्टिः तस्मिन् गौरीरूपे अपत्ये तृप्तिम् इच्छाविरामं न जगाम न प्राप स्नेहातिरेकादिति भावः । उक्तमर्थं दृष्टान्तेनोपन्यस्यति—अनन्तेत्यादि । हि यतः अनन्तपुष्पस्य बहुतरकुसुमस्य मधोः वसन्तस्य सम्बन्धिनी द्विरेफमाला भ्रमरपंक्तिः चूते चूतपुष्पे सविशेषः सातिशयः सङ्ग आसक्तिर्यस्याः सा तथाभूता भवतीत्यर्थः ।

अत्रायं भावः । लोकोहि कश्चिद्बहुवस्तुसमवाये आन्तरेण केनाऽपि हेतुना कस्मिंश्चिदेव भूयसा आसज्जते । सा च आसक्तिः गुणनिमित्तेति गुणास्पदतया स्नेहाधिष्ठानतया आसक्तिपात्रं विशेषवस्तु, अन्यानि सामान्यानि । ततः सर्वः सामान्यं परित्यज्य विशेषमनुगृह्णाति । इत्येव सर्वमान्यः पन्थाः । यथात्र दृष्टान्त एव अनन्तसामान्यपुष्पसत्तायामपि विशेषाय चूतपुष्पाय भ्रामरमनुस्पृहयति । परमत्र दार्ष्टान्तिके अन्यथा कृतम् । तद्यथा—पुत्रवत इति अपत्यविशेषाभिधायिपदेनोपक्रम्य सामान्येन अपत्य इति पदेन परामर्शः कृतः स च अनुचितः दृष्टान्तदार्ष्टान्तिकयोर्वैषम्याधायकत्वात् । यदा प्रथमत एव विशेषः ( पुत्रेति ) उपक्रम्यते तदा ( अपत्य ) विशेषस्य उपक्रान्तत्वात् विशेषकुक्षावेव सामान्यस्य सम्पातात् सामान्यस्य प्रयोग एव भवितुं नार्हः । यदा तु प्रथमं सामान्यमुपक्रम्यते तदाऽधिकजिज्ञासाय विशेष उपादीयते । एवं चात्र "अपत्यवतोऽपि तस्मिन्पुत्रे" इत्युक्तौ सुसमन्वयः । यदि च

इत्यत्र हि पुत्रापत्यशब्दावेव पर्यायत्वात् प्रक्रमभेदविषयौ। न पुष्पचूतशब्दौ। तयोः सामान्यविशेषवचनत्वादित्यपत्यवतोऽपीति युक्तः पाठः।

व्यक्तिविवेकव्याख्यानम्।

अपत्यवतोऽपीति युक्तः पाठ इति। अत्र केचित् समर्थयन्ते विशेषतः स्निह्यन्तो दृश्यन्ते—तत् पुत्रशब्दस्यापत्यविशेषवाचित्वे अपत्यशब्दस्य च सामान्यवाचित्वेऽपि सर्वनामवशाद् विशेषपर्यवसाने भवत्येव प्रकृतार्थपरितोष इति। तदेतदस्य ग्रन्थकारस्य हृदयमनालोक्यैव, यस्माद् दृष्टान्तदार्ष्टान्तिकभावेनात्र वाक्यार्थद्वयमुपनिबद्धम्। तत्र च द्वयोर्बिम्बप्रतिबिम्बभावेन निर्देशो युज्यते। दृष्टान्ते चात्र समान्योपक्रमः, विशेषोपसंहारः, पुष्पशब्दस्य समान्यवाचित्वाच्चूतशब्दस्य विशेषाभिधायकत्वाद्। विशेषस्य चोत्कृष्टतयैवातृप्तिविषयकत्वम्। दार्ष्टान्तिके तु विशेषोपक्रमः सामान्योपसंहारः। सर्वनामवशाद्वा विशेषान्तरनिर्देशो न्याय्य। स्थितपाठे पुत्रशब्दस्य विशेषवाचित्वम् अपत्यशब्दस्य सामान्यवाचिनो विशेषपर्यवसानम्। यदा त्वपत्यवतोऽपीति पाठस्तदास्य सामान्योपक्रमो विशेषोपसंहारः। द्वितीयस्यापत्यशब्दस्य सर्वनामसम्बन्धेन विशेषपर्यावसानाद्, यथैकीयमते 'तस्मिन्नद्रौ कतिचिद्बले'त्यत्र अपि शब्दस्यार्थसङ्गतिश्चेद्दृश्येव भ्राजते। यस्य नैवापत्यसम्बन्धस्तस्य मा भूत् कन्यायामेकस्यमतृप्तिः यस्य त्वनेकापत्ययोगस्तस्य कथमेकस्मिन्नपत्ये स्निग्धत्वमिति विस्मयः एतदर्थं एवाऽपि शब्दोजीवति। अतृप्तिकारणत्वं च कन्यया: परसमर्पणीयत्वेन। गुणगौरवेण चस्नेहपात्रता। एतदमर्थमस्याश्चूतेन प्रतिबिम्बनम् तदित्थमपत्यवतोऽपीत्येष एव पाठः श्रेयान।

मधुसूदनीविवृतिः।

पुत्रवत इत्येव आग्रहः तर्हि तस्यां तु पुत्र्यामिति कर्त्तव्यम्। अथोच्यते सत्यपि पुत्रे कन्यारूपेऽपत्ये बहुमानः इति तर्हि दृष्टान्तेऽपि सत्यपि चूते सामान्यपुष्पे बहुमान इति कर्त्तव्यं स्यात्। तथा चात्र स्थितिः द्विधा यदि सामान्यमुपक्रम्यते तर्हि विशेषस्य परामर्शः यदि विशेषः उपक्रम्यते तर्हि तद्विशेषस्य परामर्शः। एवमपि तद्विशेषापेक्षया विशेषस्य सामान्यरूपमेव। अत एवोच्यते ग्रन्थकृता अत्र हि पुत्रापत्यशब्दौ एव पर्यायत्वात्प्रक्रमे भेदविषयौ। न पुष्पचूतशब्दौ। तयोः सामान्यविशेषवचनत्वादिति।

पर्यायत्वादिति। एकधर्मिवाचकतया गौणपर्यायत्वात्। अन्यथा सामान्यविशेषवाचकयोः पुत्रापत्यशब्दयोः जन्यप्राणित्वेन जन्यपुंस्त्वेन च शक्यतावच्छेदकस्य भेदात्। तयोः पुष्पचूतयोः।

अपत्यवतोऽपीति युक्तः पाठ इति। ननु उपक्रम्यमाणस्य न तु उपक्रान्तस्य परामर्शकस्यभेदेऽयं दोषः तथा च अपत्यवतोऽपीति युक्तः पाठः इति अयुक्ताभिधानमपि तु तस्यां

यथा च 'उदन्वच्छिन्ना भूः सच निधिरपां योजनशतम्' इति । अत्र हि 'मिता भूः पत्यापां स च पतिरपां योजनशतम्' इति युक्तः पाठः । एवञ्च छिदिक्रियाकर्त्तुरुदन्वत उक्तनयेन विधेयतया प्राधान्यात् समासानुपपत्तिदोषोऽपि परिहृतो भवति ।

यथा वा—

"वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान् नालङ्कारश्च्युतोपलः ॥"

एवं—

"खमिव जलं जलमिव खं हंस इव शशी शशीव कलहंसः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

• समासानुपपत्तीति अधिकं, न तु तद्धानिरिति न्यायेन गुणान्तरलाभ इत्यर्थः ।

वरं कृतेति । कृताः शिक्षिताः सन्तो ध्वस्ता नष्टा गुणा यस्य । अमणिरविद्यमानमणिरलङ्कारः । उपलशब्देनात्र मणिरेव विवक्षितः । तन्नात्र मणिशब्दः प्रयुक्त इति पर्यायप्रक्रमभेदत्वम् ।

खमिवेति । हंसश्चन्द्र इव चन्द्र इव हंस इति युक्तः पाठः ।

मधुसूदनीविवृतिः ।

हि पुत्र्यामिति युक्तमिति चेच्छृणु । अनौचित्यादृते नान्यद्रसभंगस्य कारणमिति सिद्धान्तः । एवं च यथा पदार्थानामौचिती न भग्ना भवेत् तथा प्रयतितव्यम् । पूर्वापरीभावस्तु नेह प्रकरणे उपयोगी । दृष्टान्तदार्ष्टान्तिकयोश्च अपत्यवत इति पाठे सङ्गतिः । "तस्यां हि पुत्र्याम्" इति पाठे तु दृष्टान्तवैकल्यं स्यात्समन्वयाभावात् । वस्तुतः समालोचने कवेः "सत्यपि पुत्रे कन्यायां बहुमानः" इत्येष एवाभिप्रायः । एवं दृष्टान्ते एव परिवर्त्तनीयम् । तद्यथा अनन्तचूतस्य मधोर्हि भृङ्गी सामान्यपुष्पे सविशेषसङ्गेति ।

उदन्वदिति । अत्र उदन्वता उपक्रम्य अपां निधेः परामर्शात्प्रक्रमभेदः ।

वरमिति । कृताः पूर्वं शिक्षिताः पश्चाद् ध्वस्ता गुणा येन तस्मात्पुरुषात् अत्यन्तम् आदित एवेति भावः, अगुणः गुणशून्यः पुमान् वरम् । हि यस्मात् अलङ्कारः अमणिः मणिरहितः श्रेयान्, च्युतोपलः विगलितमणिः न श्रेयान् ।

अत्र उपलशब्देन मणिर्विवक्षितः । उपलः पाषाणः मणिः पाषाणविशेषः । तथा चात्र विशेषेण मणिशब्देनोपक्रम्य उपलशब्देन सामान्येन तत्परामर्शः पर्यायप्रक्रमभेदः । प्रकृत्याऽनुपलः श्रेयानिति पाठः । नालङ्कारो गलन्मणिर्वा ।

खमिवेति । अत्र इवेन उपक्रम्य समासिरपि इवेनैव करणीया न तु आकारशब्देन ।

इत्यादावपि द्रष्टव्यम् । विभक्तिप्रक्रमभेदो यथा—

"धैर्येण विश्वास्यतया महर्षेस्तीव्रादरातिप्रभवाच्च मन्योः ।
वीर्यं च विद्वत्सु सुते मघोनस्स तेषु न स्थानमवाप शोकः ॥"

न चायं समुच्चयस्य विषयः । स हि तुल्यकक्ष्यत्वादभिन्नविभक्तिकानेकार्थविषयो वेदितव्यः यदुक्तम्—

"तुल्यकक्ष्यतया यत्र पदार्थाः स्युर्विवक्षिताः ।

व्यक्तिविवेकव्याख्यानम् ।

मघोन इन्द्रस्य सुतेऽर्जुने । वीर्यञ्च विद्वत्स्विति । वीर्यवेदनञ्चेत्येव हेतुत्वेन विवक्षितम् ।

मधुसूदनीविवृतिः ।

अयं भावः । खमिवेत्यादिषु इवप्रयोगे उपमायाः श्रौतीत्वम् उपक्रान्तम् परमन्ते कुमुदाकारा इति प्रभृतितु आकारशब्देन तस्या आर्थीत्वमित्येकाकारेणोपस्थितायाः प्रतीतेः भग्नत्वात्प्रक्रमभेद उपमागतो बोध्यः । तस्या एवात्र प्रत्यायने कवेः संरम्भाद् । यद्वा हंसशशिनो उपमानोपमेयभावः प्रक्रान्त इति तयोरेव परामर्शोऽप्युचितः न तु शशिकलहंसयोः । कलहंसस्य विशेषरूपत्वात् । यद्वा खमिवादिषु अविशिष्टस्य उपमानोपमेयभावः प्रक्रान्तः । अतः शशिनि अपि अविशिष्टस्यैव स वाच्यः । शशविशिष्टः शशी इति प्रतीतेः । यद्वा हंसः निष्कलंकः शशी सकलंकः वटुकोपासकः इत्यसभ्यार्थप्रतीतेः ।

धैर्येणेति । किराते तृतीयसर्गे कवेरुक्तिः । तेषु युधिष्ठिरादिषु शोकः स्थानं न अवाप । कस्मान्न अवापेति चतुरो हेतूनाकलयति । धैर्येणेति । धैर्येण स्वस्य महाप्राणतया वेगधारणसामर्थ्येन, महर्षेः विश्वास्यतया, व्यासोक्तवाक्येषु आस्थया, अरातिप्रभवात्तीव्रात् घोरात् मन्योश्च क्रोधाच्च, मघोनः इन्द्रस्य सुते अर्जुने वीर्यं च असाधारणतपसा रुद्रं सन्तोष्य अस्त्रादिप्राप्त्यर्हबलं च विद्वत्सु जानानेषु ।

अत्र वीर्यं चेति समुच्चयोऽयुक्तः । अयं भावः । अत्र तेषामशोकित्वे धैर्यादिकारणचतुष्टये वीर्यवेदनं कारणं न वीर्यमति वीर्यपदोत्तरं समुच्चयार्थकचकारविन्यासः अस्थल एव कृतः । यतोऽयं वीर्यपदार्थः समुच्चयस्य विषयो न अर्थात् समुच्चेतुमिष्टो न अपि तु तद्वेदनं तथेष्टम् ।

ननु वीर्यस्य कथं न समुच्चेतव्यत्वमित्याह—सहीति । स हि समुच्चयः । तुल्यकक्ष्यत्वात् समानश्रेणित्वात् । अविभिन्नविभक्तिकाः समानविभक्तिकाः अनेकार्थाः भिन्नार्थाः । तेषां विषयः ।

उक्तार्थं प्रमाणयति—तुल्यकक्ष्यतयेति । यत्र स्थले तुल्यकक्ष्यतया समानश्रेणितया पदार्थाः विवक्षिताः । तत्र स्थले समुच्चयः विकल्पो वा इष्टौ । अन्यथा तुल्यक-

समुच्चयो विकल्पो वा तत्रेष्टौ दुष्टतान्यथा ॥"

इति । न चात्र तथाविधोऽर्थस्समस्तीति समुच्चयार्थयोश्चशब्दयोरपि प्रयोगोऽनुपपन्नः । तेनात्र 'तीव्रेण विद्वेषिभुवागसा च' 'विद्वत्सु वीर्यं तनये मघोन' इति पाठौ विपरिणमयितव्यौ ।

"बभूव भस्मैव सिताङ्गरागः कपालमेवामलशेखरश्रीः ।

व्यक्तिविवेकव्याख्यानम् ।

समुच्चयो विकल्पो वेति । विकल्पो यशोऽधिगन्तुमित्यत्रोदाहृतः समुच्चयस्य त्विदं वीर्यञ्चेत्युदाहरणम् । 'विद्वत्सु वीर्यं तनये' इति पाठे न चेदनं हेतुत्वेन विवक्षितम् अपि तु वस्तुस्वरूपप्रतिपादनपरत्वेनेत्यर्थं मन्यते । एवञ्च विद्वत्स्विति विशेषणस्य नैरर्थक्यमापद्यत इति नानेन विचारितम् ।

दुकूल भाव इति । सामानाधिकरण्येनोपक्रमे वैयधिकरण्येन प्रतिनिर्देशः प्रक्रमभेदावहः अत्र चतुर्थे पादे । 'कपालमेवामलशेखरश्रीरि' त्यत्र कपालानां बहुत्वे वाच्ये यदेकत्ववचनम् अमलशेखरश्रीरित्यत्र च शेखरमात्रे धर्मिणि वक्तव्ये यच्छेखर-

मधुसूदनीविवृतिः ।

क्षयत्वाभावे पदार्थेषु समुच्चयस्य विकल्पस्य दुष्टता दोष एव । अत्र वीर्यपदे तथाविधस्तुल्यकक्ष्यः अर्थो नास्ति । अथ च एकेनैव चशब्देन कार्यनिर्वाहे चद्वयोपादानं दुष्टमिति च द्रष्टव्यम् अत एव आगसा चेति एकचकारः कृतः ।

ननु विद्वत्सु वीर्यं तनये मघोन इति ।पाठान्तरे असमुच्चेतव्यसमुच्चयकरणरूपदोषस्य परिहारेऽपि तेषामशोकित्वे विवक्षितं कारणत्वं नोपगतं भवति इति अस्य विशेषणस्य वैयर्थ्यं प्रकृतानुपकारकतया समापतति । तस्मात् ज्ञानेन वीर्यस्य छते मघोन इत्येव पाठः श्रेयान् ।

बभूवेति । सुकरोऽन्वयः । अत्र उद्देश्यविधेययोः "भस्म एव सिताङ्गरागः" इति प्रथमयैव प्रक्रमः इति उपसंहारस्थलेऽपि प्रथमैवोचिता । ततश्च सिंहाजिनस्येति षष्ठी अनुचिता । तस्मात् मृगेन्द्रचर्मैव दुकूलमस्येति पाठः चतुर्थपादस्य श्रेयान् । तृतीयपादस्य पाठपरिवर्त्तनं ग्रन्थकृता न कृतं तत्रैव सरम्भात् । किन्तु अस्मिंश्च पाठे रोचनाङ्कत्वस्य द्रव्यधर्मत्वादित्यादिना कटाक्षितमेव । अतः "उपान्तभागेषु सुरोचनाङ्कम्" इति पाठः तृतीयपादे श्रेयान् ।

अयं भावः । रोचनया । ( गोरोचनया ) अङ्कनं विशेषाधानहेतुत्वाद् गुणः । स च द्रव्य एव सम्भवति । न तु दुकूलभावपदेन उपस्थिते दुकूलत्वे धर्मे इति तत्र "दुकूलम्" इति करणीयम् । द्रव्यरूपस्य धर्मिण उपस्थानार्हत्वात् । कृतेचैवं रोचनांक इति पुंस्त्वघटितः पाठोऽनुचितः । अङ्कनस्य रङ्गरूपतया गुणत्वात् गुणवचनानां हि शब्दानामश्रयतो लिङ्गवचनानि भवन्ति । यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवतीति भाष्यप्रामाण्यात् रोचनाङ्कमिति पठनीयम् । एवमपि

उपान्तभागेषु च रोचनाङ्कः सिंहाजिनस्यैव दुकूलभावः ॥"

अत्रापि 'मृगेन्द्रचर्मैव दुकूलमस्ये'ति युक्तः पाठः । अस्मिंश्च पाठे रोचनाङ्कत्वस्य द्रव्यधर्मत्वाद् दुकूलभावविशेषणत्वानुपपत्तिपरिहाराद् गुणान्तरलाभः । उपसर्गप्रक्रमभेदो यथा—

"विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥"

इति । तेन 'तदुपेतं विजहाति चायति'रिति युक्तः पाठः ।

व्यक्तिविवेकव्याख्यानम् ।

श्रीरिति धर्मवचनं तदनुपपन्नेव गन्तव्यम् । एवञ्चवोक्तेषु वक्ष्यमाणेषु चोदाहरणेषु सम्भवन्नपि विचारो ग्रन्थविस्तरभयान्न न निरवशेषतया कृत इति तत्रैवाभियोग कर्त्तव्यः ।

तदुपेतमिति । स्वशब्देन सर्वनाम्ना वा निर्देशस्तुल्यफल इति प्रतिपादयिष्यमाणत्वात् ।

मधुसूदनीविवृतिः ।

रोचनाया अङ्को यस्मिन्निति व्यधिकरणबहुव्रीहेरसाधुत्ववारणाय "सु" इति उपस्रष्टव्यः । तथा च सु शोभनः रोचनाया अङ्को यस्मिन्निति सुरोचनाङ्कम्" इति ज्ञेयम् । एवमन्यदपि दूषणमलोच्यम् ।

मधुसूदनीविवृतिः ।

विपद इति । विपदः अविक्रमम् अनुद्योगिनं पुरुषं अभिभवन्ति तिरस्कुर्वन्ति । आपदुपेतं विपद्भिरभिभूतम् तम् आयतिः उत्तरकालम् शुभोदर्कः रहयति त्यजति-नागच्छति । निरायतेः उत्तरकालशून्यस्य लघुता क्षुद्रता नियता अवश्यंभाविनी । अगरीयान् लघुतावान् नृपश्रियो राजलक्ष्म्याः पदं न । राज्यार्थं विक्रमितव्यमिति निष्ठ्यूतार्थः ।

अत्र विपद इति विना उपक्रम्य आदुपेतमिति आङा परामर्शे उपसर्गप्रक्रमभेदः । तेन हेतुना तदुपेतं विजहाति चायतिरिति युक्तः पाठः । परं न दोषविनिर्मुक्तिः । तद्यथा विपदः इति कर्तुः अभिभवन्ति इति क्रियायाश्च बहुत्वेन उपक्रान्तत्वात् । अतो नात्र एकवचनेन भाव्यम् । अथवा अत्रैकवचनेन चेदास्थेयं तर्हि पूर्वत्राऽपि एकवचनेन भाव्यम् । तथा "लघुता" इति उपक्रम्य अगरीयानिति परामर्शे पर्यायप्रक्रमभेदः । पादत्रये कर्मकर्तृभावेनान्वयः, चतुर्थे स नास्ति इत्यन्वयप्रक्रमभेदः । एतमेव ग्रन्थकृत् शाब्दप्रक्रमभेदनाम्नोदाहरिष्यति अस्माभिस्तु स्वतन्त्रतया इदं नाम दत्तम् । अन्यच्चात्र यत् महामान्यैः काव्यप्रकाशकारैः मम्मटभट्टैः एतदुक्तदोषद्वयनिराकरणाय "तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः" इति युक्तमुल्लिखितम् तत्राऽपि वचनस्य, परस्मैपदस्य अन्वयस्य चेति त्रयः प्रक्रमभेददोषाः सन्त्येव ।

वचनप्रक्रमभेदो यथा—

"काचित् कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी-
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यः शशंसुः ॥"

अत्र हि 'काश्चित् कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा' इति युक्तः पाठः ।

---

मधुसूदनीविवृतिः ।

अथ च चेत्कश्चिन्न विक्रामति, तर्हि अविक्रमं विपदा ( आपं चैव हलन्तानां यथा वाचा निशा दिशेत्युक्तेः विपदिति विपदा इत्यपि च साधु ) अभिभवति । अभिभूतं तम् आयतिर्विजहाति निरायतिं तं लघुता इच्छति अर्थात् निरायतिर्लघुर्भवति । लघुश्च नृपश्रियं कथं प्राप्नोति अतस्त्वया विक्रम आस्थेय इति भीमसेनोक्तेराशयः । अतः इत्थं पाठोऽवसेयः ।

विपदाऽभिभवत्यविक्रममभिभूतं विजहाति चायतिः ।
लघुतेच्छति तं निरायतिं लघुराप्नोति कथं नृपश्रियमिति ॥

अस्मिन्नेव पाठे सम्यक् भीमसेनाशयः स्फुटीभवति ;कारणमाला च साधु सङ्गच्छते इति सर्वं निरवद्यम् ।

**काचिदिति** । काचित्स्त्री रजोभिरार्त्तवैः कीर्णा व्याप्ता । "स्याद्रजः पुष्पमार्त्तवम्" इत्यमरः । रजस्वला जाता इत्यर्थः । दिवस्तु औत्पातिकरजोवर्षणात् तैः कीर्णता । वक्त्रम् इन्दुरिव नायिकापक्षे । द्यौपक्षे वक्त्रमिव इन्दुः । मन्दाः वक्त्रेन्दोर्लक्ष्मीः यस्याः सा तथोक्ता । दिवमनुविदधौ अनुचकार । काश्चिन्नार्यः दिश इव अश्रीका वीतशोभाः । उभयत्र समानम् । उद्भ्रान्तसत्वा व्याकुलचित्ताः नायिकापक्षे । इतस्ततो भ्रमज्जन्तुकाः दिक्पक्षे । अन्तरात्मनि मध्ये च दाहं सन्तापम् औत्पातिकं प्रज्वलनं च दधिरे दधुः । अन्या नार्यो वात्या इव वातसमूहा इव प्रतिदिशं दिशि दिशि भ्रेमुः । अपरा नार्यः भूमिवत् प्रतिपदं कम्पमापुः । इतीत्थं पार्थिवानां प्रस्थाने प्रयाणे भावि अशिवम् अशुभम् पुरःपूर्वं शशंसुः सूचयामासुः ।

अत्र काचिदित्येकत्वं वचनस्य उपक्रम्य पुनः काश्चिदिति तस्य बहुत्वपरामर्शो दोषावहः । ततोऽत्र कर्तरि क्रियायां विशेषणे च बहुत्वं कर्त्तव्यम् । तथा च काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुलक्ष्म्यः । इति विपरिणमयितव्यम् । अश्रीका इति पुरः पदगतावर्णं दृष्ट्वा विसर्गस्तिरोभवति चेद्भवतु "वा पदान्ते त्वसौ" इति शास्त्रं तद्गुरुत्वरक्षायै जागर्त्त्येव । अतः तद्रक्षार्थं "शोभा निश्रीका" इति पाठकल्पनं तदेतदनवबोधनिबन्धनम् । प्रकृतपाठं रक्षंती कल्पनोचिता ।

यथा च 'अभिवाञ्छितं प्रसिध्यतु भगवति युष्मत्प्रसादेन' इति। अत्र ह्येकवचनेन भगवतीमेकां सम्बोध्य प्रसादसम्बन्धितया यस्तस्या बहुत्वनिर्देशः स वचनप्रक्रमभेदो दोषः। तेनात्र भवतीप्रसादेनेति युक्तः पाठः।

तिङन्तप्रक्रमभेदो यथा अत्रैव 'अपरा भूमिवत् कम्पमाना' इति। अत्र हि कम्पमापुरित्युचितः पाठः। एकस्याः क्रियायाः प्राधान्याभावादित्युक्तम्।

कालविशेषप्रक्रमभेदो यथा—

"सस्नुः पयः पपुरनेनिजुरम्बराणि

---

व्यक्तिविवेकव्याख्यानम्।

भगवति युष्मत्प्रसादेनेति। अनेन न्यायेन 'पश्यत मातः' इति वार्त्तिके धर्मकीर्त्तेः प्रयोगः प्रत्युक्तः।

प्राधान्याभावादित्युक्तमिति। 'यत्रैककर्तृकानेका प्राधान्येतरभाक् क्रिया इत्यत्र।

अनेनिजुरक्षालयन्। जक्षुरखादन्। विसप्रसूनं पद्मम्।

मधुसूदनीविवृतिः।

अन्यच्च पूर्वं परस्ताच्च परस्मैपदिभिरेव धातुभिः उपक्रमोपसंहारौ वर्त्तेते मध्ये आत्मनेपदिना परामर्शः दधिरे इति ततश्च परस्मैपदप्रक्रमभेदः समापतति। तथाचेत्थं पाठ्यम्। अश्रीकाः काश्चिदन्तः ककुभ इव दधुरिति।

अभिवाञ्छितमिति। उत्फुल्लकमलकेसरपरागगौरद्युतेः मम हि गौरि ?। इति पूर्वार्धः।

एकवचनेनेति उत्फुल्लेत्यादिना "गौरि" इति भगवति" इति एकवचनान्तम्। प्रसादसम्बन्धितया प्रसादस्य प्रतियोगिविधया सम्बन्धितया। तस्या भगवत्याः। बहुत्वनिर्देशः युष्माकं प्रसादः इति समासार्हवाक्येन।

तिङन्तप्रक्रमभेद इति आदौ अवसाने च अनुविदधौ इत्यादौ शशंसुरित्यन्ते च तिङन्तेनोपक्रम्य उपसंहृत्य च मध्ये कम्पमाना इति "कृदभिहितो भावो द्रव्यवत्प्रकाशते "इति नयाद् द्रव्यस्य शानजन्तस्य परामर्शो दोषाधायकः। अतः कम्पमापुरिति पठनीयम्।

ननु बिभ्राणः शक्तिमित्याद्युक्तनयेनेह अन्वयोऽस्तु ततश्च न तिङन्तप्रक्रमभेद इत्याशंकायामाह—एकस्याः क्रियाया इति। एकस्याः क्रियाया प्राधान्ये एव शत्रादिभिरन्वयस्य व्युत्पादितत्वात्। तथाचोक्तं पूर्वम्।

यत्रैककर्तृकानेका प्राधान्येतरभाक् क्रिया
तत्राख्यातेन वाच्याद्या शत्राद्यैरपरा पुनरिति।

प्रकृतेचात्र एकस्याः क्रियायाः प्राधान्याभावः इति।

सस्नुरिति। सैन्याः सस्नुः स्नानं चक्रुः पयः पपुरित्यन्वयः सुगमः। नेजना-

जक्षुर्विसान्धृतविकासिविसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषप्रवादममृजन्नगनिम्नगानाम् ॥

अत्र हि स्नानादौ यः कालविशेषः प्रक्रान्तः स नेजनादौ भेदं नीत इति प्रक्रमभेदो दोषः । तेन

'सस्नुः पयांसि पपुरम्बरमानिनेजु-
र्जक्षुविसान्धृतविकासिविसप्रसूनाः ।
सैन्याः श्रियामनुपभोगनिरर्थकत्व-
दोषं वनेषु सरितां प्रसभं ममार्जुः ॥' इति युक्तः पाठः ।

यदि वा दोषोऽयमनुद्भावनीय एव । कालविशेषस्य विवक्षामात्र-

---

व्यक्तिविवेकव्याख्यानम् ।

नेजनादाविति लिटा भूतानद्यतनपरोक्षप्रक्रमे अनेनिजुरिति तु भूतानद्यतनेन निर्वाहः । तथा 'धृतविकासी'त्यत्र भूतमात्रे क्तप्रत्यय इत्यत्रापि कालप्रक्रमभेदः । तत्रोपरि तिङन्तप्रक्रमभेदो द्वितीयोऽत्र न स्थितः । एवञ्चेहादिग्रहणेन धृतविकासीति गृह्यते । विकचमस्य दधुः प्रसूनमिति । अनेनिजुरित्यत्र समाधानं न कृतम् प्रकारान्तरेण समर्थयिष्यमाणत्वात् ।

यदि वेत्यादिनामुं प्रक्रमभेदं निराकरोति । अजयदिति अत्र परोक्षोऽपि जयो दर्शनार्हत्वात् परोक्षत्वेन न विवक्षित इति लिट्प्रयोगो न कृतः । विद्यमानास्यावि-

मधुसूदनीविवृतिः ।

दौ भेदमिति । आदिपदात् अमृजन्नित्यत्र च लङ्प्रत्ययेनेति भावः । आदौः पय इति अवसाने दोषप्रवादमिति एकत्वं वचसः उपक्रम्य उपसंहृत्य च मध्ये अम्बराणि इति विसानिति च बहुत्वेन परामर्शाद् भेदं नीतम् । अथो "विसान्" "विसप्रसूना" इति विसस्य पुनरुक्तिः, शाब्दान्वयप्रक्रमभेदश्च । तस्मादित्थं पाठ्यम् । अत्र दोषत्रयं ग्रन्थकृताऽत्र न समाहितमिति च बोध्यम् ।

सस्नुः पयांसि पपुरर्हपटान्निनेजुः
जक्षुर्विसान् दधुरमानि सुमान्यथैषाम् ।
सैन्याः श्रियामनुपभोगनिरर्थतादि
दोषान् वनेषु सरितां प्रसभं ममार्जुः ।
इति सुप्रयुक्तः पाठः ।

अमानि नास्ति मा लक्ष्मीः येभ्यस्तानि परमशोभीनि अर्थात् संफुल्लानि इति ।

यदि वेत्यादिना कालविषयकप्रक्रमभेददोषो नास्तीति साधयति । विवक्षेति । वर्त्तमानसामीप्ये वर्त्तमानवद्वेत्यादिभिरनवस्थासूचनादितिभावः । यदाहुरिति स्वोक्तेऽर्थे प्रमाणयति—परोक्षे चेति । अननुभूतत्वात् परोक्षे परं लोकेन विज्ञाते विज्ञातुं

भावितयानवस्थितत्वात् । यदाहुः—'परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये दर्शनयोग्यत्वात् परोक्षस्याविवक्षायां लङ् भवत्येव । अजयज्जयन्तो भूतानि' इति । सतोऽपि चासतो वापि चाविवक्षा ( विवक्षा च ) भवति यथानुदरा कन्येति ।

अर्थस्य तदतद्भावो विवक्षामात्रतो भवेत् ।
यत्र प्रक्रमभेदोऽयं न तत्रोद्भाव्यते बुधैः ॥ ३० ॥

---

व्यक्तिविवेकव्याख्यानम् ।

वक्षायां दृष्टान्तमाह अनुदरा कन्येति । नहि कस्याश्चित् कन्याया उदराभावः कृशत्वात् पुनः सोऽपि विवक्ष्यते । एवञ्च—

"अभूदभूमिः प्रतिपक्षजन्मनां भियां तनूजस्तपनद्युतिर्दितेः ।
यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥" इत्यादेः
"तात ! त्वं निजतेजसैव गमितः स्वर्गं यदि स्वस्ति ते
किन्त्वन्येन हृता वधूरिति कथां मा सख्युरग्रे कृथाः ।
रामोऽहं यदि राघवस्तदखिलं व्रीडानमत्कन्धरं
सार्धं बन्धुजनेन सेन्द्रविजयी वक्ता स्वयं रावणः ॥"

इत्यादेश्च महतः काव्यप्रवाहस्य न किञ्चिद् दुष्टत्वम् ।

अर्थस्येति तद्भावोऽर्थत्वं सत्ता अतद्भाव असत्त्वम् । यत्रेति पूर्वार्धशेषः ।

मधुसूदनीविवृतिः ।

शक्ये प्रयोक्तुः पुरुषस्य दर्शनविषये प्रत्यक्षयोग्यतामात्राश्रयेण दर्शनविषये इत्यर्थः । अत्र भाष्यकारस्य पतञ्जलेः पाठस्तु "परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः । अरुणद्यवनः साकेतम् अरुणद्यवनो माध्यमिकामिति । अतः "दर्शनयोग्यत्वात् परोक्षस्य अविवक्षायां लङ् भवत्येव अजयज्जयन्तो भूतानि" इति पाठो ग्रन्थान्तरस्य बोध्यः भाष्येऽनुपलम्भात् । अजयदिति प्रयोक्तुः प्रत्यक्षत्वमिष्यते कालस्यात्रेति भावः ।

अनुदरा कन्येति । ननु विद्यमानस्य वस्तुनोऽपि कथमविवक्षा इत्याह—अनुदरेति । नास्ति काचित्कन्या यस्या उदरं न स्यात्परं सूक्ष्मत्वात्तस्या उदरस्य विद्यमानत्वेऽपि अभावविवक्षा यथा भवति तथा कालस्यापि अविवक्षा भवति इति भावः । सतोऽपि अविवक्षा यथा सतः उदरस्य अविवक्षा । असतोऽपि विवक्षा यथात्रैव असतः अविद्यमानस्य अनुदरत्वस्य विवक्षा अन्यथा चेत्संगतिरूह्या ।

अर्थस्येति । अर्थस्य वस्तुनः तद्भावः तत्त्वम् अतद्भावः अतत्त्वम् । यत्र स्थले अर्थस्य तदतद्भावो विवक्षामात्रकृतो भवेत् । यथा विशेषकालस्य तदतद्भावः । तत्र वैवक्षिकतदतद्भावस्थले अयं प्रक्रमभेदो नोद्भाव्यते बुधैः ।

यथा विशेषकालस्य शीलादिप्रत्ययेषु च ।
कर्तुश्च फलवत्तायां तेन ते नोपदर्शिताः ॥ ३१ ॥

इति सङ्ग्रहश्लोकौ ।

कारकशक्तिप्रक्रमभेदो यथा—

"गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

व्यक्तिविवेकव्याख्यानम् ।

यथेति । न प्रक्रमभेद इत्यन्वयः । तत्र कालविशेषो दर्शितः । यथा भूतस्य भाविनश्च कालस्याद्यतनानद्यतनत्वे परोक्षापरोक्षत्वे च वैवक्षिके एवेति । ते शीलादयोऽर्थाः 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' (३-२-१३४) इत्यत्र निर्दिष्टाः । तेषां च वैवक्षिके सत्त्वासत्त्वे । एवञ्च क्वचिताच्छीलिकादिप्रत्ययप्रयोगेऽप्यन्यत्र तदकरणमदुष्टम् । यथा—

"जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥"

इत्यत्रागृध्नुरिति ताच्छील्याद्यर्थप्रत्ययप्रयोगेऽप्यत्रस्त इत्यत्रात्रस्नुरित्यकरणेऽपि न दुष्टत्वम् अत्रस्नुरिति वा निर्देशे अगृध्नुरिति निर्दोषमेव ।

कर्तुः फलवत्ता कर्त्रभिप्रायत्वम् । तदपि वैवक्षिकमेव । एवञ्च 'दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता' इत्यत्र यदि कर्त्रभिप्रायत्वं क्रियाफलस्य, तदा ददातीति परस्मैपदप्रसङ्ग इति प्रक्रमभेदपर्यनुयोगो निरवकाश एव । एवमन्यत्र बोद्धव्यम् । तेन ते इति । ते कालविशेषादयः तेन विवक्षाप्रयुक्तत्वेन कारणेन न दर्शिता इत्यर्थः ।

गाहन्तामिति । अत्र कर्तुराख्यातेनाभिधानं कर्मणश्चानभिधानं प्रक्रान्तं विस्रब्धैरित्यन्यथा कृतमिति कारकप्रक्रमभेदः ।

मधुसूदनीविवृतिः ।

यथेति । यथा कालविशेषस्य तदतद्भावः तथा शीलप्रत्ययेषु कर्तुः फलवत्तायां अर्थात् क्रियाफलस्य कर्तृगामित्वे च तदतद्भावो विवक्षाकृतः । तेन हेतुना वैवक्षिकत्वेन हेतुना ते प्रक्रमभेदाः शीलादिप्रत्ययेषु कर्तुः फलवत्तायां च नोपदर्शिताः । अत्र एकस्मिनेव पद्ये न प्रक्रमभेद इत्यन्वयः इति पूर्वत्र, ते कालविशेषादयः न दर्शिता इत्यर्थः इत्युरत्र च कीदृशो व्याख्यानस्य संगतिरिति विज्ञैरीक्ष्यं ।

गाहन्तामिति । महिषा अरण्यमहिषा शृङ्गैः मुहुस्ताडितम् उत्फालितम् निपानसलिलं आहावजलम् । "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरः । गाहन्ताम् । रोमन्थम् अभ्यवहृतस्य वस्तुनः आकृष्य चर्वणम् अभ्यस्यतु । विश्रब्धैः सन्निः । पल्वले क्षुद्रसरसि । मुस्तायाः "नागरमोथा" इति प्रतीतवस्तुनः । क्षतिः त्रोटनम् । अस्माकं धनुश्च शिथिलं ज्याबन्धनं यस्य तत् । विश्रान्ति लभताम् । सर्वे

विस्रब्धं क्रियतां वराहततिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्यावन्धमस्मद्धनुः ॥"

इति । अत्र हि 'कुर्वन्त्वस्तभियो वराहततयो मुस्ताक्षतिम्' इत्युपपन्नः पाठः । यथा च—

"कृतवानसि विप्रियं न मे प्रतिकूलं च न ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥"

अत्रापि 'न च तेहं कृतवत्यसम्मतम्' इति । यथा च—

"सजलजलधरं नभो विरेजे विहृतिमियाय रुचिस्तडिल्लतानाम् ।
व्यवहितरतिविग्रहैर्वितेने जलगुरुभिः स्तनितैर्दिगन्तरेषु ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

विहृतिं विहरणं भङ्गिभाजनत्वमित्यर्थः । विवृतिमिति पाठे विस्तरशालित्वमित्यर्थः । रतौ विग्रहो विरोधः स्तनितैर्व्यवहितस्तत्प्रसादाद्विरोधस्य कर्तुमशक्यत्वात् । वितेने इति भावे प्रत्ययः । स्तनितानि विततीभूतानीत्यर्थः ।

मधुसूदनीविवृतिः ।

वीतभयाः सन्त्विति भावः । अत्र कर्तृकारकवाचकाख्यातस्य गाहन्तामित्यस्य प्रक्रमे क्रियतामिति कर्मकारकवाचकस्य परामर्शात् कारकशक्तिप्रक्रमाख्यः दोषः । तस्मात् विश्रब्धाः अभिकुर्वतां किरिवरा मुस्ताक्षतिमिति निरवद्यः पाठः । ग्रन्थकारपाठे मम्मटपाठे च आत्मनेपदप्रक्रमभङ्गः । नागेशपाठस्तु अशुद्ध एव । भोः वैयाकरणोऽपि काव्यकलायां चेष्टते । एषोऽस्याऽविषयः अत एव वचनप्रक्रमभङ्गं नेक्षते । अन्यच्च द्वितीयपादे वचनात्मनेपदप्रक्रमभेदनिरासायेत्थं पाठ्यम्—छायाबद्धकदम्बका हरिणका रोमन्थमातन्वताम् । शाकुन्तलं पद्यम् ।

कृतवानसीति । कुमारे रतिविलापः । अत्र कृतवानसीति कर्तृकारकवाचकस्यक्तवतोः प्रक्रमे कर्मकारकवाचकस्य क्तस्य परामर्शो दोषाधायकः । तस्मात् "कृतवत्यस्मि च ते न विप्रियम्" इति पाठः श्रेयान् । ग्रन्थकारपाठस्तु "न च तेऽहं कृतवत्यसम्मतम्" इति दुष्ट एव । तद्यथा—अत्र केवला कृतिर्नापेक्षिता येन "कृतवान्" इत्युद्देश्यं प्रति "कृतवती" इति निर्देशेन कृतार्थता स्यात् । परन्तु "त्वं मां न विप्रकृतवान् अहमपि च त्वां न विप्रकृतवती" इत्येव परस्परविरोधकरणाभावो विवक्षितः । एवं च असम्मतमिति करणेन शब्दैकरूपताप्रच्यव एव इति पर्यायस्य प्रक्रमभेदः । पूर्वं विप्रियमिति प्रक्रम्य असम्मतमिति परामर्शात् । अन्यच्चात्र पाठे न चेति निषेधः समुच्चयस्य अविषयः तुल्यकक्ष्यत्वाभावात् । उक्तरीत्या अस्मदर्थस्य तथात्वादिति ।

सजलजलधरमिति । जलेन सहितः सजलो जलधरो यस्मिन् । एवंभूतं नभो विरेजे । तडिल्लतानां रुचिः कान्तिः विहृतं विहरणमियाय । व्यवहिता दूरीकृता रतिकालीना विग्रहा यैस्तैः । तस्मिन् काले मानस्य कर्तुमशक्यत्वान्मानजनिता

शाब्दः प्रक्रमभेदो यथा—

"चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥"

इति अत्र हि 'तमपि वल्लभसङ्ग' इति युक्तः पाठः । यथा च—

"सस्नुः पयः पपुरनेनिजुरम्बराणि
जक्षुर्बिसान् धृतविकासिबिसप्रसूनाः ।"

---

व्यक्तिविवेकव्याख्यानम् ।

शाब्दः प्रक्रमभेद इति शब्दविषयत्वाच्छाब्दः । शाब्दप्रक्रमभेद इति तु प्रकृतिप्रक्रमभेदस्यानुक्रमेण ये पठन्ति तैः शाब्दश्चार्थश्चेत्युत्तरो ग्रन्थो नालोचित इत्युपेक्ष्यमेतत् ।

सङ्गमभूषेति । अत्र बहुव्रीहावन्यपदार्थोपसर्जनेनार्थेन क्रमेणोपसंहृतमिति । भिद्यमानशब्दविषयत्वाच्छाब्दः प्रक्रमभेदः । एवमार्थः प्रक्रमभेद इत्यत्र प्रथमप्रकान्तभिद्यमानार्थविषयत्वादार्थ इति व्याख्येयम् । धृतविकासीति पूर्वं कालप्रकरणेनोदाहृतम् , सम्प्रति शाब्दविषयत्वेनोदाह्रियते, तिङन्तगतत्वेनाप्यूहनीयम् ।

मधुसूदनी विवृतिः

रतिसामयिकविग्रहा शान्ताः इति भावः । जलहेतुकगुरुभिः स्तनितैः अर्थात् विशालैः शब्दैः दिगन्तरेषु वितेने विस्तृतम् । जलधराणां महान् घोषो भवतीत्यर्थः । अत्र पुष्पिताग्राच्छन्दः । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् । अत्र विरेजे इयायेति कर्तृवाचकस्य प्रक्रमे वितेने इति भाववाचकस्य परामर्शो दुष्टः । अथ च आत्मनेपदप्रक्रमभङ्गश्च । तत इत्थं पाठ्यम् ।

सजलजलधरं नभो विरेजे विषयिसुखं तडितां रुचिर्विजह्रे ।
व्यवहितरतिविग्रहं वितेने जलगुरु सः स्तनितं दिगन्तरेषु ।

जलगुरु इति स्तनितविशेषणम् । वितेने इति कर्तरि लिटि साधु । जलधरपदस्य पूर्वमुपात्तत्वात् स इति सर्वनाम्ना परामर्शः कृतः ।

शाब्दः प्रक्रमभेद इति । शाब्दः शब्दे भवः शाब्दान्वयगतः इत्यर्थः । चारुतेति । स्पष्टोऽन्वयः । अत्र चतुर्थपादे वक्रोक्तिजीवितकारः "दयितसङ्गमस्तं (मद) मभूषयदिति वक्तव्ये ( विशिष्टो मदस्तामभूषयदित्यत्रैवान्वयः समाप्तो भवति तत्र च ) कीदृशो मदः दयितसङ्गमो भूषा यस्येति दयितसङ्गमस्य प्राधान्येन अभिमतस्य समासवृत्तावन्तर्भूतत्वाद् गुणीभावो न तद्विदाह्लादकारी । दीपकालङ्कारस्य च काव्यशोभाकारित्वेनोपनिबद्धस्य निर्वहणावसरे त्रुटितप्रायत्वात् प्रक्रमभङ्गविहितं सरसहृदयवैरस्यमनिवार्यम् । "दयितसङ्गतिरेनम्" इति पाठान्तरं सुलभमेव" इत्थमुदाजहार । तत्रायमपि शाब्दं प्रक्रमभेदमुद्गीर्णवान् इति । "दयितसङ्गमभूषः" इति पाठः ।

इति । अत्रापि 'जक्षुर्विसं विकचमस्य दधुः प्रसूनम्' इति युक्तः पाठः । अस्मिंश्च पाठे विसशब्दस्य पौनरुक्त्यदोषपरिहाराद् गुणान्तरलाभः । यथा च—

"समतया वसुवृष्टिविसर्जनैर्नियमनादसतां च नराधिपः ।
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा ॥"

अत्र हि अनुयातिक्रियाकर्मभावो वरुणस्यार्थः प्रक्रान्त इति तत्रास्य तादृश एव हेतुरुपादातुं युक्तः । यस्त्वसन्नियमनलक्षणः शाब्दो हेतुरस्यान्येषामिवोपात्तः स प्रक्रमभेदो दोषः तस्याप्युक्तयुक्त्या रसभङ्गपर्यवसायित्वात् । तेनायमत्र पाठः पठितव्यः । 'नियमयन्नसतः स नराधिप' इति ।

एवञ्च विभक्तिप्रक्रमभेदश्चशब्दश्चोक्तनयनिरस्तसमुच्चयविषयभावः क्रमभेददुष्टश्च परिहृतौ भवतः । एवमन्येऽप्यवगन्तव्याः । एषां चान्यो-

---

व्यक्तिविवेकव्याख्यानम् ।

परिहृतौ भवत इति । विभक्तिप्रक्रमभेदचशब्दयोर्द्वित्वाद् द्विवचनम् । चशब्दस्योभयथा दुष्टता च । चशब्दस्य च समुच्चयो विषयः । तद्भावः उक्तनयेन तुल्यकक्ष्यत्वाभावाख्येन निवारितः । प्रक्रमभेदस्त्वसतामित्यसमुचेतव्यनिकटप्रयोगात् । स हि

मधुसूदनीविवृतिः ।

समतयेति । नराधिपो दशरथः यमकुबेरसूर्यान् असन्नियमनधनविसर्जनजलविसर्जनकान्तिभिः समतया अनुचक्रे । वसुर्धनम् वृष्टिः प्रसिद्धा नराधिपो दशरथः । वसुवृष्टिविसर्जनहेतुकसमतया पुण्यजनेश्वरं कुबेरम् । असन्नियमनहेतुकसमतया यमम्, रुग्हेतुकसमतया सूर्यम् अनुययौ । इति शाब्दोऽन्वयः । सवरुणाविति उपात्तस्य वरुणस्य समासपिहितत्वाद् । अनुययावित्यत्र साक्षात् सम्बन्धाभावाद् आर्थोऽन्वयः प्रक्रान्तः इतिकारणात् तत्र आर्थेऽन्वये अस्य वरुणस्य तादृश एव आर्थ एव हेतुरुपादातुं युक्तः । अनुपादानेऽन्वयो दुर्घट इति अन्वयप्रक्रमभेदो दोषः । तस्मादित्थं सुपाठो बोध्यः ।

नरपतिर्वसुवृष्टिविसर्जनैर्नियमनैश्च द्विषां जडशिक्षकः ।
अनुययौ यमपुण्यजनेश्वरौ सवरुणावरुणाग्रसरं रुचा । इति ।

जडानां शिक्षकः विनयाधायकः । अथच जडानां डलयोरैक्यात् जलानां शिक्षको गुरुरधीश इति यावत् । द्विषां नियमनैर्यमस्य साम्यमुक्तम् । स तु धर्मद्विषां यमनं केवलं करोति अयं तु तद्विषये महान् जगरूकः सर्वथा मा पुनराचरेयुः प्रजा धर्मविरुद्धमिति निःशेषतया यमनमाचरति । यच्चात्र ग्रन्थकारेण "यस्त्वसन्नियमनेत्यादि स नराधिप इतीत्यन्तः पाठ उल्लिखितः तत्र तु दुर्विचारनिरूपकस्य अस्य जडता एवानुसन्धेया सूक्ष्मनिमीलितनेत्रैः किमपि ।



बहु पुंसकम् । ×इदमन्यत् । अनुपराभ्यां कृञः इत्यस्मात्पदनियमात् । [handwritten margin note]

न्यासाङ्कर्याल्लोष्टसञ्चारक्रमेण बहवः प्रक्रमभेदप्रकाराः समुद्भवन्ति । ते स्वयमेवाभ्यूह्याः । तद्यथा—

'नियतां लघुता निरायतेरगरीयान्न पदं नृपश्रियः ।'

इति । अत्र हि द्वयोः प्रकृतिप्रत्यययोः प्रक्रमभेदः । तेन 'न लघुर्जातु पदं नृपश्रिय' इति युक्तः पाठः ।

आर्थः प्रक्रमभेदो यथा अनन्तरोदाहरणयोराद्यमाहितविपर्ययम् ।

व्यक्तिविवेकव्याख्यानम् ।

'नियमनादि' त्यस्यानन्तरं पठनीयः । लोष्टसञ्चार एकैकस्य भेदस्य भेदान्तरैः सह संयोजनप्रकाराख्यो गणनाविशेषः ।

प्रकृतिप्रत्यययोरिति लघुशब्दः प्रकृतिः । तस्यां गुरुशब्देन भेदः । गुरुशब्दे चेयसुन्नधिकः प्रयुक्तो यो लघुशब्दे न प्रयुक्तः । तत्प्रत्यस्य च प्रतिनिर्देशो न कृत इति प्रत्ययप्रक्रमभेदोऽपि । अभिनवपाठे तु तत्प्रत्ययरहितस्यैव लघुशब्दस्य प्रतिनिर्देशः कृतः ।

आर्थः प्रक्रमभेद इति । अत्रोदाहरणद्वितयं दत्तं मत्ततेति समतयेति । तत्र मत्ततेत्यत्र सङ्गमभूषेत्यर्थेन क्रमेण प्रक्रमः, भूषयतीत्यत्र तु शाब्दरूपतया प्रतिनिर्देश इत्यार्थः प्रक्रमभेदः । किन्तु तद्वपुस्तदपि चारुतरत्वमिति पाठः स्थितपरिपाट्यानुगुण्याभावान्न न्याय्यः । 'चारुता स खलु सापि शरीरमि'ति तु पाठः श्रेयान् । एवञ्च दयितसङ्गतिरेषेत्येतच्छब्दः पठनीयः, न पुनरासामितिति पाठः । तत्र हि मत्तता केन

मधुसूदनीविवृतिः ।

लोष्टसञ्चारेति । यथा जीर्णस्य गृहस्य एकस्मिन् लोष्टे सञ्चार्यमाणे तत्रापराणि स्वयमेव प्रभ्रश्यन्ति एवकमेस्मिन् दूषणे समालोच्यमाने अपराणि बहूनि दृष्टिपथमागच्छन्ति दुष्टेषु काव्येषु इति तानि स्वयमूह्यानि ।

नियतेति । अत्र अस्माभिः पूर्वमेव अहंप्रथमज्ञतया समाहितम् । न लघुर्जातु पदं नृपश्रिय इत्यपि दुष्टस्ततोऽस्मदुक्त एव श्रेयान् पाठः । इह विपद इति व्युपसर्गः प्रक्रान्तः आपदुपेतमिति आङा परामर्शेन प्रक्रमो भग्नः इत्येव समालोचितम् । अधिकं समालोच्यमाने प्रकृतेः लघुपदस्य प्रत्ययस्य तलोऽपि अथच अगरीयानिति गुरुशब्दस्य इयसुनश्च प्रयोगे प्रक्रमभेदो दृष्टिगोचर एव भवति ।

आर्थः प्रक्रमभेद इति । शाब्दप्रस्तावात् आर्थोऽपि स उदाहियते । अनन्तरोदाहरणयोः शाब्दं प्रक्रमभेदं दर्शयितुं दत्तयोः चारुतेति सस्नुरिति चानयोरुदाहरणयोर्मध्ये आद्यं चारुतेत्युदारणमार्थमक्रमभेदस्य बोध्यम् । कीदृशं तत् आहितविपर्ययम् आहितः कृतो विपर्ययः विपरीतरचना यस्मिन् तत् । पूर्वस्मिन् चारुतारब्धा मदान्ता रचना वर्त्तते तस्या रचनाया वैपरीत्ये मदारब्धा चारुतान्ता भवति अतस्तथाकृते सति आर्थप्रक्रमभेदस्योदाहरणं भवतीति भावः ।

तद्यथा—

"मत्तता दयितसङ्गमभूषा भूषयत्यसमसायकलक्ष्मीम् ।
साप्यनूननवयौवनयोगं तद्वपुस्तदपि चारुतरत्वम् ॥"

इति । अत्रापि हि 'मत्ततां दयितसङ्गतिरेषा' इत्युचितः पाठः ।

व्यक्तिविवेकव्याख्यानम् ।

शब्देन परामृश्येत । 'समतये'त्येतत् प्रायेणादर्शेषु शाब्दप्रक्रमभेदे उदाहरणतया दृश्यते । अत्र आर्थप्रक्रमभेदप्रस्तावे 'अनन्तरोदाहरणयोराद्यमाहितविपर्ययम्' इति पाठः । एतच्चायुक्तं योजनग्रन्थे वरुणस्यार्थप्रक्रम इति ग्रन्थविरोधात् । किञ्च नियमयन्निति विदग्धम्मन्यतया दत्तोऽपि नो हृदयङ्गमः पाठः, वरुणेनैव तत्सम्बद्धमित्यत्र प्रमाणाभावात् । न हि वरुणस्यान्योपसर्जनत्वेन स्थितस्य स्वातन्त्र्यमस्ति । तस्य नैवंविधसम्बन्धः पुष्टत्वं धत्ते । आर्थप्रक्रमभेदप्रस्तावे इदमेवोदाहरणमाहितविपर्यमिति पाठः श्रेयान् ।

क्रमेति य उद्देशक्रमः प्रक्रान्तः सोऽनुद्देशे वैपरीत्याद् न कृत इति प्रतीतेरैक्यस्य विगमाद् दुष्टत्वम् ।

मधुसूदनीविवृतिः ।

ननु अनन्तरोदाहरणयोरिति द्वित्वं वर्तते परमत्र प्रकरणे उदाहृतानि चत्वारि चारुतेति, सस्नुरिति, समतयेति, नियतेति, चेति । तत्कथं चारुतेति गृह्यते । तद्ग्रहणे च द्वित्वस्य का गतिरिति चेच्छृणु । "एषां च अन्योन्यसाङ्कर्याल्लोष्टसञ्चारक्रमेण बहवः प्रक्रमभेदप्रकाराः समुद्भवन्ति ते स्वयमभ्यूह्याः" इति ग्रन्थाकर्त्रा कथ्यमाने ये प्रकाराः उद्भवन्ति ते स्वयं कथमभ्यूह्या इति जिज्ञासोदेति तच्छान्तये प्रसक्तानुप्रसक्तं नियतेति पद्यमुदाहृतम् । तन्न प्रकृतोदाहरणम् । समतयेति च आर्थमेवोदाहरणम् । अवशिष्टयोराद्यं चारुतेत्येव । भवति च शाब्दमेव विपर्यस्तमार्थमिति द्वित्वसंगतिः सुकरैवेति सर्वं निरवद्यम् न किमपि योजनादूषणम् ।

मत्ततेति । दयितसङ्गमभूषा मत्तता असमाः सायका वाणा यस्य तस्य कामस्य लक्ष्मीं भूषयति । अत्र दयितस्य सङ्गमो भूषा यस्या मत्ततायाः इति ( व्याख्यया ) दयितसङ्गमो मत्ततां भूषयति इत्यार्थोन्वयः मत्ततादयितसङ्गमयोः प्रक्रान्तः परन्तु साप्यनूनेत्यादिषु तस्यान्वयस्य शाब्दकरणात् भग्नः । अतः मत्ततां दयितसङ्गतिरेषा इति पाठः साधीयान् । आसामिति पाठो न विधेयः एषैवेति योग्यः । अयं भावः । यद्यपि आसामिति पाठे दयितसङ्गतिः आसां नायिकानां मत्ततां भूषयति इत्यन्वयः सुलभः तथापि असमसायकलक्ष्मीं भूषयति इत्यग्रिमवाक्ये कः लक्ष्मीं भूषयति इति आकाङ्क्षा न निरेति । एषेति पाठेतु एषा मत्तता इति रीत्या एतच्छब्देन मत्ततायाः परामर्शादाकाङ्क्षा निर्गता भवति ।

क्रमप्रक्रमभेदो यथा—

"तव कुसुमसरत्वं शीतरश्मित्वमिन्दो-
द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥" इति ।

ननु च प्रकृतिप्रत्ययपर्यायादीनां प्रक्रान्तानां भेदेऽपि प्रधानभूतस्या-

---

व्यक्तिविवेकव्याख्यानम् ।

तव कुसुमसरत्वमिति । इदं क्रमप्रक्रमभेदोदाहरणं न युक्तं चूलिकाक्रमस्यैवात्रो-चितत्वम् । तथाह्युद्देशः । स्मरं प्रति साम्मुख्येनाभिधानं विहाय नेन्दुं प्रासङ्गिकं प्रत्ययथार्थज्ञानमुचितमिति स्मरस्य तावत् प्रथमनिर्देशोयं यतः अनुद्देशे हत्व विषयं त्यक्त्वा न प्रासङ्गिकेन वाक्यार्थपरिसमाप्तिः शोभते इति पार्यवसानिकेन स्मरेणैव सम्मुखीक्रियमाणेन वाक्यार्थः परिसमापनीय इति पाठक्रमापेक्षया चूलिकाक्रम एव सहृदयहृदयरञ्जक इति कुशाग्रीयधिषणैर्निपुणं निरूपणीयमेतत् । तथा च 'युष्मदस्मदोः पदस्य पदात् षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' ( ८-१-२० ) इति चूलिकाक्रमेण व्यवहारो दृश्यते । क्रमप्रक्रमभेदस्य पुनरुदाहरणं वस्तुप्रक्रमभेदविचारप्रस्तावे निरूपयिष्यते ।

प्रधानभूतस्येति अर्थप्रतिपादनाय शब्दप्रयोगाच्छब्दस्योपायमात्रत्वाद् उपा-

मधुसूदनीविवृतिः ।

क्रमप्रक्रमभेदः । पूर्वपश्चाद्भावेन प्रक्रान्तस्य भेदः यथोदाहरणम् ।

तवकुसुमेति । अत्र पूर्वं कामः पश्चाच्चन्द्रः प्रक्रान्तः परमुपसंहारे विसृजतीत्यादौ स क्रमो भेदं नीतः इति क्रमप्रक्रमभेदः ।

अथ चात्र विसृजति इति व्युपसृष्टसृजिं प्रक्रम्य करोषीति करोतेः परामर्शात् क्रियायाः प्रक्रमभेदः । तथा शरेत्युपक्रम्य वाणोपादाने, शीरतरश्मीत्युपक्रम्य हिममयूखोपादाने च पर्यायस्य प्रक्रमभेदः । तस्मात्सर्वदोषोपनुत्तयेऽयमुत्तरार्द्धपाठः श्रेयान् ।

इह कुसुमशरांस्त्वं मुञ्चसे वज्रसारान् ।
स यत अनलगर्भान् मुञ्चते शीतरश्मीनिति ॥

ननु यदर्थं हि शब्दः प्रयुज्यते स अर्थः सरूपशब्दप्रयोगे वा असरूपशब्दप्रयोगे वा समान एव तर्हि उपेयतया प्रधानभूतस्यार्थस्य ऐकरूप्ये उपायानामप्रधानानां विसदृशत्वेऽपि नास्ति काचित् क्षतिरिति उदाहृतः प्रक्रमभेदः अकारण एवेत्याशङ्कते—नन्विति ।

प्रधानभूतस्येति । अयं भावः । यथा अस्माकं भद्रवनीतो गम्यं स्थानं विश्वेश्वरमन्दिरम् । ततो यात्रा जले नौयानेन स्थले एकाश्वरथादिना आकाशे वायुयानेन वा केनापि वा भवतु उपायानां भेदः परं गम्यं स्थानमेकमेव तथैव

र्थस्याभेदाच्छब्दमात्रस्य भेदे सति न किञ्चिदेकारसायाः प्रतीतेः परिस्खलनमुपपद्यत इति कथमयं प्रकृत्यादिप्रक्रमभेदो नाम शब्दानौचित्यमित्युक्तम्। उच्यते। सर्व एवायमेवञ्जातीयः प्रक्रमभेदः प्रायेण विध्यनुवादभावप्रकार इत्यवगन्तव्यम्। न च तत्राप्यसत्यप्यर्थभेदे शब्दभेदमाद्रियन्ते वक्तारः। यथा—

"यदधरदलमाश्रितं प्रियाया वदनसरोरुहसाम्यमेति यश्च।
तदमृतममृतं स इन्दुरिन्दुर्विषमितरत् तमसा समस्तथान्यः॥"

व्यक्तिविवेकव्याख्यानम्।

यानां च नियमाभावात्। तदुक्तम्—

"उपादायापि ये हेयास्तानुपायान् प्रचक्षते।
उपायानां च नियमो नावश्यमवकल्पते॥" इति।

**प्रक्रमभेद इति।** प्रक्रमभेदविषयस्य विध्यनुवादभावप्रकारत्वात् प्रक्रमभेदोऽप्युपचाराद्विध्यनुवादप्रकार इत्यर्थः। अनेनैव न्यायेन शाब्दश्चार्थश्चेति प्रक्रमभेदस्य भेदद्वयं शाब्दार्थविषयत्वाद् बोद्धव्यम्। **शब्दभेदमिति।** एकशब्दाभिधेयत्वेनार्थस्य प्रत्यभिज्ञायमानत्वोपपत्तये। शब्दभेदे तस्यैवार्थस्यान्यस्येव प्रतीतेः नाञ्जसेन प्रकारेण विध्यनुवादभावविषयत्वम्। काव्यगतत्वेन हि चिन्ता प्रस्तुता। न च काव्ये शास्त्रादिवदर्थप्रतीत्यर्थं शब्दमात्रं प्रयुज्यते सहितयोः शब्दार्थयोस्तत्र प्रयोगात्। साहित्यं तुल्यकक्ष्यत्वेनान्यूनातिरिक्तत्वम्।

मधुसूदनीविवृतिः।

स्वहृदयस्थितो भावः परस्मै बोधनीयः स शब्दद्वारा चेष्टया वा अन्येन केनाऽपि मार्गेण वा न तत्र नैयत्यं वस्तुतः अर्थस्यैव नैयत्यं वर्त्तते इति तस्य प्रधानत्वम् शब्दस्य तु मार्गतया उपायतया अप्रधानत्वमिति।

**न च तत्रेति।** तत्र विध्यनुवादे। शब्दभेदं नाद्रियन्ते। **विध्यनुवादभावप्रकार इति।** विध्यनुवादभावसदृशे अर्थात् तत्र यथा अर्थभेदाभावेऽपि शब्दभेदोऽरुन्तुदः तथैव तत्सदृशे प्रक्रमभेदेऽपि शब्दभेदो दूषणायैव। एकरसप्रवृत्तायाः प्रतीतेः परिस्खलनहेतुत्वात्। **अयं भावः।** एकस्यैवार्थस्य बोधने प्रवृत्तः कश्चित् पूर्वमन्यादृशं पश्चाच्चान्यादृशं तदर्थकं शब्दं प्रयुञ्जानः श्रोतुः एकरसप्रवाहेण संभवन्तीं ज्ञानवृत्तिं भिनत्ति। अस्ति कश्चिदत्र हेतुः एकार्थे असरूपशब्दप्रयोगस्येति गवेषणया श्रोता भिन्नार्थतामभ्युपगच्छन् विध्यनुवादभावं विघटयति न तं भावं तत अवबुध्यते। इति।

उदाहरणेन अर्थाभेदेऽपि शब्दभेदं नास्तीति दर्शयति—**यदधरदलमिति।** यत् प्रियाया अधरदलम् आश्रितम् तदमृतम् अमृतम् अन्यत् विषम्। अथ च यः प्रियायाः वदनसरोरुहसाम्यमेति स इन्दुः इन्दुः अन्य इन्दुः तमसा समः। अत्र अमृतम् अमृतमिति इन्दुरिन्दुरिति एक पदार्थः निर्विशेषं न सामान्यमित्युक्तेः,

इति। अस्त्वेवम्। यस्त्वयमन्यः शाब्द आर्थश्चेति द्विविधः प्रक्रमभेद उक्तः सोऽनुपन्नः। यतः 'चारुतावपुरभूषयदासा' मित्यादौ भूषणभूष्य-भावादिरूपं किमपि वस्तु प्रत्याय्यं वर्त्तते। तच्च शब्दादर्थादुभाभ्यामपि वा प्रतीयताम्। कस्तत्र प्रक्रमभेदनियमं प्रत्यभिनिवेशः यद्भेदाभेदाभ्या-मनौचित्यं स्यात्। न हि।

"शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणः पराक्रमः स नयापादितसिद्धिभूषणः॥"

---

### व्यक्तिविवेकव्याख्यानम्।

अस्त्वेवमिति सामान्येन प्रक्रमभेदाभ्युपगमो विशेषे तु पर्यनुयोग इति भावः। प्रक्रमनियमं प्रतीति हृदयङ्गमः पाठः। यद्भेदाभेदाभ्यामिति हि यच्छब्देन प्रक्रमः परामृश्यते। प्रक्रमभेदनियमं प्रतीति तु पाठे यद्भेदाभेदाभ्यामिति प्रक्रमस्यै-वोद्धृतस्य यथाकथञ्चित् परामर्शो व्याख्येयः।

शुचि भूषयतीति। अत्र भूषयतीति शाब्दं भूषणं प्रक्रान्तम् अलङ्क्रियेत्या-दावार्थेन रूपेण प्रतिनिर्दिष्टम्। अत्र च पर्यायप्रक्रमभेदः स्थितोऽपि न साम्प्रतं चि-न्तितः शब्दार्थप्रक्रमभेदचिन्तनप्रस्तावात्।

### मधुसूदनीविवृतिः।

तदर्थं च सरूप एव शब्दः प्रयुक्तः।

अस्त्वेवमिति। एवमस्तु एवंरीत्या सामान्यतः प्रक्रमभेदो भवतु स्वीक्रियते इत्यर्थः परं यः अन्यः पूर्वस्मात् सामान्यरूपात् भिन्नः शाब्दान्वयगतः आर्थान्वयगतः इति द्विभेदः उक्तः स अनुपपन्नः। कुत अनुपपन्नः। इति हेतुं दर्शयति—यत इति। अभिनिवेश आग्रहः। यद्भेदाभेदाभ्यामिति। यस्य प्रक्रान्तवस्तुनो भेदादनौ-चित्यम्। यस्य प्रक्रान्तवस्तुनोऽभेदादनौचित्यम्। तच्चेतिपदेन वस्तु प्रक्रान्तं गृह्यते कस्तत्रेति तत्रपदेन वस्तु गृह्यते प्रक्रान्तमतः यद्भेदाभेदाभ्यामित्यत्राऽपि यदा शब्देन प्रक्रान्तं वस्तु गृह्यते। किमपि वस्तु प्रत्याय्यं वर्त्तते इति पूर्ववाक्यानु-रोधात्।

"नहि" इति। नहि इति पदम्' उपलभ्यत इति अग्रिमेणान्वेति। अत्र अनौ-चित्यसंस्पर्श इति पाठः। नानौचित्यसंस्पर्श इति तु दुःष्पाठः। तद्यथा—नहीति नानौ-चित्येति च नद्वयेन कश्चिदनौचित्यसंस्पर्शो नहि उपलभ्यते इति न अपि तु उपल-भ्यते एवेत्यर्थः स्यात्। ततश्च तदेतदिति उत्तरपक्षग्रन्थः अनन्वितः स्यात्। अत एवाग्रे "यत्पुनः शुचि भूषयति" इत्यादौ सत्यपि प्रक्रमभेदे नानौचित्यसंस्पर्शः कश्चित्संवेद्यते" इत्यत्र एक एव नकारो वक्ष्यते। प्रतीतिपरिस्खलने प्रक्रमभेदे इत्यर्थः।

शुचि भूषयतीति। शुचि शुद्धं सम्प्रदायागतं श्रुतं शास्त्रं (कर्तृ) वपुः (कर्म) भूषयति। तस्य श्रुतस्य प्रशमः अलंक्रिया भूषणम्। अन्यथा श्रुतं विफल-

इत्यादौ सत्यपि प्रतीतिपरिस्खलनेऽनौचित्यसंस्पर्शः कश्चिदुपलभ्यत इति तदेतदविदितशब्दार्थव्यापारविभागस्यैवाभिधानम् ।

अन्यो हि शब्दव्यापारविषयोऽर्थोऽन्यश्चार्थव्यापारविषयः । तत्र यः प्राधान्येन प्रतिपादयितुमिष्यते स शब्दव्यापारविषयः, तस्य साक्षात् तदभिसम्बन्धसम्भवात् । अन्यस्त्वर्थव्यापारविषयो विपर्ययात् । एवञ्च सति यदयं भूषणभूष्यभावः प्राधान्येन वक्तुं प्रक्रम्यते तदा शब्दव्यापारस्यैवासौ विषयो भवितुमर्हति नार्थव्यापारस्येति विषयविभागे व्यवस्थिते सति तयोर्यदन्यथाकरणं तदेकरसायाः प्रतीतेः परिस्खलनहेतुर्भवत्यनौचित्यमित्युक्तं यथा पूर्वोक्त उदाहरणद्वये ।

यत् पुनः 'शुचि भूषयती' त्यादौ सत्यपि प्रक्रमभेददोषे नानौचित्यसंस्पर्शः कश्चित् संवेद्यत इत्युक्तं, तत्र 'वपुषः शुचि भूषणं श्रुत'मिति, 'तां मदमस्तमपि वल्लभसङ्ग' इति चोभयत्रापि पाठविपर्यासात् प्रक्रमभेददोषद्वये परिहृते सत्यनयोः प्रतीत्योर्यादृशमौचित्यमनौचित्यं वाविर्भवति

व्यक्तिविवेकव्याख्यानम् ।

अत्र विभागस्यैवेति ।

तदभिसम्बन्धः शब्दाभिसम्बन्धः । विपर्ययादिति साक्षाच्छब्दसम्बन्धाभावात् । उदाहरणद्वये 'शुचि भूषयती'ति 'चारुता वपुरि'ति च ।

यादृशमिति स्थितपाठाभिप्रायेणानौचित्यं दत्तपाठाशयेन त्वौचित्यमित्यर्थः ।

मधुसूदनीविवृतिः ।

मिति भावः । इत्यन्यत् सुगमम् ।

अत्र श्रुतं वपुर्भूषयतीति भूष्यभूषकयोः शाब्दोऽन्वयः प्रस्तुतः परमत्र नयापादितसिद्धिभूषणः स पराक्रमः प्रशमाभरणमिति आर्थान्वयस्य विधानात् भेदं नीतः । कीदृशः पराक्रमः नयापादितसिद्धिरेव भूषणं यस्येत्यन्वयात् । यत्तु कैश्चित् टीकाकारैः अत्र भूषयतीति भूषणं शाब्दं प्रक्रान्तम् अलंक्रियेत्यादावार्थेन रूपेण प्रतिनिर्दिष्टमिति व्याख्यातं तत्तु अज्ञानविजृम्भितम् । नहि तत्र आर्थोऽन्वयः अपि तु पर्यायप्रक्रमभेदस्तत्र वर्त्तते इति सूक्ष्मनिमीलितदृग्भिः सुधीभिराकलनीयम् । प्रशमाभरणमित्यत्राऽपि पर्यायप्रक्रमभेदः । तस्मादित्थं सुपाठः ।

वपुषः शुचि भूषणं श्रुतं प्रशमस्तस्य मतं तु भूषणम् । प्रशमस्य पराक्रमो नयाहितसिद्धिर्हि पराक्रमस्य तत् इति ।

तत्र य इति । यः अर्थः स अर्थः । तस्य अर्थस्य । तदभिसम्बन्धसम्भवात् शाब्दान्वयसम्भवात् । विपर्यात् साक्षात् शब्देन सह अभिसम्बन्धाभावात् । असौ भूषणभूष्यभावः । तयोः शाब्दार्थव्यापारविषययोः । उदाहरणद्वये चारुता वपुरिति शुचि भूषयतीति च द्वये ।

औचित्यं शोधितपाठे । अनौचित्यं यथास्थितपाठे । अन्ये वैयाकरणा न प्रष्ट-

तत्प्रतीतिपरमार्थविदः सहृदया एव विवेक्तुमलमिति त एव प्रष्टव्याः नान्ये । ते ह्युभयत्रापि सादृश्यमेवावगच्छन्ति ।

यदि वा शुचि भूषयतीत्यादौ भूषणभूष्यभावशृङ्खलायां यथासम्भवं भङ्गिभणितिवैचित्र्यमात्रं कवेर्विवक्षितं, तच्च निर्व्यूढमिति तदपहृतचेतसां प्रतीतिस्खलनखेदानवधारणम् ।

अथ यदि शब्दव्यापारविषयस्यैवार्थस्य प्राधान्यं नान्यस्येत्युच्यते, तर्हि 'चक्राभिघातप्रसभे'त्यादौ 'लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्' इत्यादौ 'कृतककुपितैर्बाष्पाम्भोभि' रित्यादौ च वस्तुमात्रस्यालङ्कारस्य रसादेश्च प्रतीयमानस्यार्थस्यावाच्यस्यैवाप्राधान्यं स्यात् । तच्चानिष्टं

---

व्यक्तिविवेकव्याख्यानम् ।

तच्छब्देनान्ये परामृश्यन्ते । सादृश्यमेवेति । विवेकाक्षमप्रज्ञत्वात् ।

तदपहृतेति तत्पदेन भङ्गिभणितिवैचित्र्यं परामृष्टम् । उत्कटेन भणितिवैचित्र्येण वर्णनीयमाच्छादतिमित्यर्थः । तदुक्तं वक्रोक्तिकृता लौकिकालङ्कारानुपमानीकृत्य—

"यद्वत् तद्वदलङ्कारैर्भासमानैर्निजात्मना ।
स्वशोभातिशयान्तस्थमलङ्कार्यं प्रकाश्यते ॥" इति ।

अप्राधान्यं स्यादिति । अयं भावः–यदि शब्दव्यापारविषयस्य प्राधान्यमर्थ-

मधुसूदनीविवृतिः ।

व्या इत्यर्थः । ते हि वैयाकरणा हि । उभयत्राऽपि शोधिताशोधितापाठेऽपि । सादृश्यमेवावगच्छन्ति विवेकशून्यत्वात् ।

यदि वेति । तच्च वैचित्र्यम् । तदपहृतेति वैचित्र्यापहृतचेतसाम् । भङ्गिभणितिवैचित्र्यम् अलंकारमात्रम् प्रतीतिस्खलनजन्यखेदस्य अनवधारणम् अज्ञानम् । अयं भावः । सदूषणमपि वस्तु अलंकारच्छायाऽऽच्छादितं कामपि काष्ठामानीयमानं सत् प्रतिभाति । ततश्च तत्प्रतिमानतिरोहितानि सन्त्यपि दूषणानि न सचेतसां खेदाय प्रभवन्ति इति ।

अथ यदीति । शब्दव्यापारविषयस्यैव अर्थस्य प्राधान्यं तत्परत्वादभिधानस्य । अन्यस्य अर्थव्यापारविषयस्यार्थस्य प्राधान्यं नेत्युच्यते । तर्हि—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य ।
आलिङ्गनोद्दामविलासबन्ध्यं रतोत्सवं चुम्बनमात्रशेषम् ॥

इति पद्ये आलिङ्गनोद्दामविलासराहित्येन चुम्बनमात्रावशिष्टरतोत्सवेन कार्येण राहुशिरःछेदरूपकारणस्य वस्तुमात्रस्य । लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्निति पद्ये रूपकालङ्कारस्य । कृतककुपितैर्बाष्पाम्भोभिरिति पद्ये विप्रलम्भरसस्य प्रतीयमानस्य अवाच्यस्यैव अर्थव्यापारलब्धस्यार्थस्य प्राधान्यं न स्यात् ।

ननु मा भवतु प्राधान्यमित्यत आह—तच्चानिष्टं भवतीति । तच्च अप्रा-

भवति। तयोरग्निधूमयोरिव गम्यगमकभावेनावस्थानत् प्रधानेतरभावस्यावश्याभ्युपगम्यत्वात्।

अत्रोच्यते। प्रतीत्यपेक्षमनयोः प्राधान्यमप्राधान्यं चावस्थाप्यते।

व्यक्तिविवेकव्याख्यानम्।

व्यापारविषयस्य चाप्राधान्यमिति व्यवस्था, तदा त्रिविधस्य प्रतीयमानस्य परैर्ध्वन्यमानत्वेन व्यपदिष्टस्यास्माभिरनुमेयत्वेनोपपादितस्याप्राधान्यं प्रसज्येत तस्यार्थव्यापारविषयत्वात्, शब्दव्यापारविषयत्वस्य दूषितत्वात्। इष्यते च प्राधान्यम्। तत् कथमियं प्राधान्याप्राधान्यप्रतीतिर्घटत इति। 'चक्राभिघाते'त्यादौ च पर्यायोक्ते समासोक्तिवद् गम्यमानस्यैव प्राधान्यं न वाच्यस्येत्युपपादितं प्राक्। 'एकाभिघात' इति हयग्रीववधे पाठः स्थितः, सुदर्शनस्य पुंलिङ्गस्य प्रक्रान्तत्वाद् य इत्यनेन परामर्शात्। तत्त्वनवबुध्य चक्रं यदि परामृश्यते, तदा यच्छब्दस्य नपुंसकता स्यात्। तन्मुरारिरेवात्र परामृश्यत इत्याशयेन 'चक्राभिघाते'ति पठन्ति। न त्वयं तत्र प्रस्तावः।

प्राधान्यमप्राधान्यं चेति इह गमकमप्रधानमुपायत्वात्। गम्यं प्रधानमुपेयत्वात्। तेन प्रतीयमानस्य गम्यत्वात् प्राधान्यव्यवहारः। न प्रतीत्यपेक्षयेति। शब्देनार्थेन च या प्रतीतिस्तदपेक्षया न प्राधान्याप्राधान्यव्यवहार इत्यर्थः। तयोस्त्विह गम्यगमकभावविविक्तविषयत्वेन चिन्ता कृता। तदपेक्षयैव चेति। वा-

मधुसूदनीविवृतिः।

धान्यं च अनिष्टं अनर्थकरम्। अयं भावः। यदि शब्दव्यापारविषयस्य अर्थस्य वाच्यस्यैव प्राधान्यम् तर्हि काव्यस्य यत्परं प्रधानं फलं गुडजिह्विकया अतिसुखवतां स्त्रीनृत्यातोद्यप्रसक्तानां राजपुत्रादीनां विनेयानां शिक्षणं रामादिवत्प्रवर्त्तितव्यम् न रावणादिवदिति रामायणेन तत्कथं सिद्ध्येत्। नहि रामायणे कुत्राप्येतत् प्रवर्त्तनं वा निवर्त्तनं वा शब्दतो लिखितम्। किन्तु रामरावणयोराचरणेन एतद्व्यज्यते। अपि च महाभारतेऽपि शान्तस्यैव रसस्य अङ्गित्वं मोक्षस्य च सर्वपुरुषार्थेभ्यः प्राधान्यमित्येतन्न स्वैः शब्दैरभिधाय दर्शितं किन्तु व्यञ्जनैव प्रत्यायितम्। अथ च शब्दव्यापारागम्यं रमणीयमर्थं सूचयन्तो व्याहाराः व्यापारनिबन्धाश्च विदग्धपरिषत्सु विविधा विभाव्यन्ते तेषां का गतिः स्यादित्यत उक्तं तच्चानिष्टं भवतीति।

तयोः वाच्यप्रतीयमानयोः। अत्रोच्यते इति। आशंकामुचितेति समाधत्ते। प्रतीत्यपेक्षमिति। अयं भावः। शब्देन वाच्यं प्रतीयते व्यङ्ग्यं च अर्थसामर्थ्यादाक्षिप्यते। तथा च शाब्दप्राधान्यगवेषणे वाच्यस्य प्राधान्यं आर्थप्राधान्यगवेषणे च व्यङ्ग्यस्य प्राधान्यम्। परं यथा आलोकार्थी पुरुषः पूर्वं दीपशिखामेव परामृशति तद्द्वारैवालोकप्राप्तेः। तद्वत् व्यङ्ग्यं प्रत्यादृतो जनः पूर्वं वाच्यमेव गवेषते इति उपायत्वाद्वाच्यमप्रधानम् उपेयत्वाद् व्यङ्ग्यं प्रधानमतः प्रतीत्यपेक्षं प्राधान्यमनयोः

वाच्यस्य प्रतीतिः शब्दव्यापारविषय इति तस्य प्राधान्यमवस्थाप्यते। प्रतीयमानस्य पुनरन्यथेति तस्याप्राधान्यमेवेत्युक्तम् ।

यत् पुनर्वस्तुमात्रादीनां प्राधान्यमवस्थाप्यते, तद्वाच्यप्रतीयमानयोर्धूमाग्न्योरिव गम्यगमकभावापेक्षयैव न प्रतीत्यपेक्षया । तदपेक्षयैव च क्वचिद्वाच्यस्याप्यप्राधान्यमुच्यते ।

ननु यदि प्रतीतेरेकरसप्रसृतायाः परिस्खलनहेतुत्वादयं प्रक्रमभेददोषोऽनौचित्यमित्युच्यते तदिदानीमेकस्मिन्नेव वस्तुनि निर्वर्ण्यमाने महाकवीनां या विचित्रा भङ्गिभणितयोऽलङ्कारसंज्ञास्तास्वप्ययं प्रक्रमभेददोषो दुर्निषेधः स्याद् विशेषाभावात् । मैवं वोचः । तत्राप्यस्माभिरयमिष्यत एव । कथं तर्हि वैरस्यं न प्रकाशते । तस्याङ्गनावदनेन्दुबिम्बगतस्येव कलङ्कलेशस्य स्वादिष्ठाभिरलङ्कारपरम्पराभिरभिभूयमानत्वाद्वाक्य-

व्यक्तिविवेकव्याख्यानम् ।

च्यस्यापि यः शाब्दत्वेन प्राधान्यव्यवहारयोग्यस्तस्यापि । तदपेक्षया गम्यगमकत्वापेक्षया । क्वचिद् यत्र प्रतीयमानसद्भावस्तत्राप्राधान्यमित्यर्थः । वाच्यं हि प्रतीयमानं प्रति गमकत्वेन व्यवस्थितं तेन तदपेक्षत्वेनाप्राधान्यमिति तात्पर्यम् ।

विचित्रा भङ्गिभणितय इति यथा भट्टबाणस्य तेषु तेषु स्थानेषु । अभिभूयमानत्वादिति । यदुक्तं ध्वनिकृता—

'अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः'

इति । वाक्यभेदाच्चेति वाक्यान्तरापेक्षया हि वाक्यान्तरस्य भङ्गिभणितिभिन्नस्वरूपम् , उपायोपेयभावापेक्षं च तयोस्तदन्यदिति ।

मधुसूदनीविवृतिः

अक्षरार्थस्तु । न प्रतीत्यपेक्षयेति । शब्देन वाच्यस्य अर्थेन व्यङ्ग्यस्य च या प्रतीतिः तदपेक्षया न प्राधान्याप्राधान्यव्यवहारः । तदपेक्षयैव च गम्यगमकभावापेक्षयैव च वाच्यस्यापि प्राप्तशाब्दप्राधान्यस्याऽपि अर्थस्य क्वचिद् यत्र व्यङ्ग्योऽर्थो वरीवर्ति तत्र तस्योपायत्वादप्राधान्यं गुणत्वम् ।

विचित्राः पूर्वार्थान्वयवन्त्योऽपि नवनवत्वोल्लेखशालिन्यः । ताश्च केषांचिदेव महात्मनां प्रतिभाविशेषभाजां दृश्यन्ते । अभिभूयमानत्वात् शक्तितिरस्कृतत्वाद् । कवयो हि क्वचित् काव्योपयोगिसमस्तवस्तुपौर्वापर्यपरामर्शकुशलतारूपायाः व्युत्पत्तेरभावे एतादृशमनौचित्यमुपनिबध्नन्ति तच्च तेषां शक्तितिरस्कृतत्वात् दूषणत्वेन न प्रतिभासते । यथा कुमारसम्भवे कालिदासस्य देवीसम्भोगशृङ्गारनिबन्धनादि । यथोक्तं ध्वनिकारेण–अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः । इति ।

वाक्यभेदाच्च । अंशेन वाक्ये व्यवस्थानाच्च दूषणकृतं वैरस्यं न प्रकाशते इत्यन्वयः । यत्र वाक्ये अलंकारः तत्रैव अंशेन दूषणं स्थितमपि अलङ्कारास्वादभरे

 

भेदाच्चेति । यदुक्तम्—

"एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ।"

इति । न तु तावतासौ नास्त्येवेति शक्यः कल्पयितुं तत्सद्भावस्य न्यायसिद्धत्वात् । न हि भङ्गिभणितिविषमे वर्त्मनि प्रवर्त्तमाना प्रतीतिरपरिस्खलितक्रमेणैव प्रवर्त्तेत इत्युपपद्यते कारणभेदस्यापि कार्यभेदहेतुत्वोपगमात् । तदेतदुक्तं भवति सर्व एव भणितिप्रकारः प्रक्रमभेदस्य विषय इति ।

स च विविच्यमानो वाच्यप्रतीयमानार्थनिष्ठ एव पर्यवस्यतीति शाब्दश्चार्थश्चेति तथैव द्वैविध्येन प्रतिपादितः ।

---

## व्यक्तिविवेकव्याख्यानम् ।

वैचित्र्यमित्यंशेन प्रतीतिवैदूर्यान्न प्रक्रमभेददोषं प्रकाशयति ।

न्यायसिद्धत्वादिति । न्यायोऽत्र भणितिवैषम्यम् । कारणभेदस्यापीति न केवलं प्रतीतिभेदो भेदहेतुः, यावत्कारणभेदोऽपि । प्रतीतिभेदो विज्ञप्त्यपेक्षया भेदहेतुः, कारणभेदः पुनरुत्पत्त्यपेक्षयेति विशेषः । तदुक्तम्—

"अयमेव भेदो भेदहेतुर्वा भावानां योऽयं विरुद्धधर्माध्यासः कारणभेदश्च"

इति । इह भङ्गिभणितिवैचित्र्यावैचित्र्ये प्रतीतिपरिस्खलनयोः कारणे । सचेति प्रक्रमभेदः ।

शाब्दश्चार्थश्चेति पूर्वं प्रकृत्यादिप्रक्रमभेदविलक्षणौ शाब्दार्थप्रक्रमभेदौ ललितावुदाहृतौ च । अधुना वाच्यप्रतीयमानार्थापेक्षया पर्यवसानाभिप्रायेण सर्वप्रक्रमभेदव्यापकौ सामान्येन शाब्दार्थप्रक्रमभेदावुक्ताविति विशेषो बोद्धव्यः ।

## मधुसूदनीविवृतिः ।

निमग्नमिव असत्कल्पमिव प्रतिभाति किरणसमूहे कलङ्कमिवेति भावः ।

तावता निमग्नत्वेन हेतुना असौ दोषः काव्ये नास्त्येव इति कल्पयितुं न शक्यः । तत्सद्भावस्य दोषसत्तायाः न्यायसिद्धत्वात् । यथा पितुर्धने सर्वेषां पुत्राणां समानोऽधिकारः अयमपि पुत्र इत्यर्हति तत एवं च यदयं याचते तन्न्यायसिद्धम् । एवमेव यत्र एकरसप्रवृत्ता प्रतीतिः परिस्खलेत्तत्र प्रक्रमभेदः स्यात् । यदि कुतोऽपि हेतोर्न प्रकाशते इति नास्त्येवेति वक्तुं न पार्यते न्यायेन युक्त्या प्राप्तत्वादिति तात्पर्यम् ।

अपरिस्खलितक्रमेणैव अनाहतक्रमेणव प्रवर्त्तते इति न उपपद्यते न संगच्छते ।

ननु कुतो नोपपद्यते इत्याह-कारणभेदस्यापीति । अपिशब्दस्यायमाशयः । न केवलं प्रतीतिभेदः प्रत्येयभेदहेतुः यावत्कारणभेदोऽपि ।

स चेति । स प्रक्रमभेदः । पर्यवस्यतीति अन्ततो गत्वेत्यर्थः ।

वस्तुप्रक्रमभेदो यथा 'इयं गेहे' इति । अत्र प्रथमे पादे साक्षान्नायिकायाः स्वरूपं वर्णयितुमुपक्रम्योत्तरत्र भेदेन तदीयस्पर्शादिवर्णनं निर्वाहितमिति वस्तुप्रक्रमभेदो दोषः ।

ननूभयत्राप्यर्थतस्तत्स्वरूपप्रकर्षप्रतीतिः पर्यवस्यतीति कथमयं दोषः । सत्यम् । स्यादेवं यद्यसावुभयत्राप्यसञ्जातपरिस्खलनखेदवैरस्या सत्येकरसैव पर्यवस्येत् । न चोक्तनयेनैतत्सम्भवतीति दोषतयैवायमुक्तः। तेन 'मुखं पूर्णश्चन्द्रो वपुरमृतवर्त्तिर्नयनयोः' इत्येवमयं पाठः परिणमयितव्यः । यथा च—

"तरङ्गय दृशोऽङ्गने ! पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिका-
मुदञ्चय मनाङ् मुखं भवतु च द्विचन्द्रं नभः ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

वस्तुप्रक्रमभेद इति । वस्तु वर्णनीयं यथा वर्णयितुं प्रक्रान्तं तस्य तथा निर्वाहाभावाद् वस्तुप्रक्रमभेदः । भेदेनेति अवयवसम्बन्धित्वेनेत्यर्थः । प्रथमे हि पादे अवयविन एव स्वरूपेण वर्णनं प्रक्रान्तमित्यवयविसम्बन्धित्वेन निर्वाहणं दोषः ।

उभयत्रापीति अवयविवर्णने अवयववर्णने च । तत् स्वरूपं नायिकास्वरूपम् ।

अङ्गने इत्यामन्त्रणम् । पततु अधस्ताद् गच्छतु ।

सादृश्यप्रतिपादनेति द्विचन्द्रमिति हि पाठे वदनेन सह चन्द्रो नभसो द्विच-

मधुसूदनीविवृतिः ।

वस्तुप्रक्रमभेदः वस्तुनः नायिकारूपस्य प्रक्रमः आरंभः तस्य अवर्णनेन भेदः अनिर्वाहः ।

इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो ।
रसावस्याः स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः ।
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

इति पूर्णं पद्यम् । उत्तरत्र पादेषु भेदेन स्वस्मात् स्वीया भिन्ना इति प्रतीतिसिद्धेन अगगतभेदेन निर्वाहितमित्यन्वयः ।

शङ्कते नन्विति । उभत्रापि अङ्गे अङ्गिनि च । अर्थतः वस्तुतः । तत्स्वरूपप्रकर्षप्रतीतिः नायिकास्वरूपातिशयप्रतीतिः । असौ प्रतीतिः । उभत्रापि अङ्गे अङ्गिनि च । उक्तनयेन स्वस्मात्स्वे भिन्ना इति कथितनयेन । एतत् एकत्वं प्रतीतेः ।

तरङ्गयेति । हे अङ्गने ? अबले ? दृशो नेत्राणि तरंगय कटाक्षयेत्यर्थः । मुखचन्द्रयोः सादृश्येति । अयं सारः । एकश्चन्द्रो नभसि पूर्वतो विद्यमानस्तत्र मुखस्यो-

अत्र उपमानानामिन्दीवरादीनां निन्दाद्वारेण नयनादीनामुपमेयानां यत् तेभ्योऽतिशयलक्षणं वस्तु वक्तुं प्रक्रान्तं तस्यानिर्वाहात् भेदः मुखचन्द्रयोः सादृश्यप्रतिपादनमात्रपर्यवसानात्। तदेवमत्र पाठः पठितव्यः। 'उदञ्चय मनाङ्मुखं भवतु लक्ष्यलक्ष्मा शशी'। यथा च—

"तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत् स्मितं का सुधा
सा चेत् कान्तिरतन्त्रमेव कनकं ताश्चेद् गिरो धिङ् मधु।
सा दृष्टिर्यदि हारितं कुवलयैः किं वा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविरसः सर्गक्रमो वेधसः॥"

इत्यत्राप्युपमानादुपमेयस्यातिरेकलक्षणं यद्वस्तु वक्तुमिष्टं तस्यार्थान्तरन्यासमुखेन प्रक्रमभेदः वस्तुसर्गपौनरुक्त्यस्य सादृश्यमात्रपर्यवसानादिति। तेन 'पुनरुक्तवस्तुविमुख' इत्यत्र युक्तः पाठः। दोषोऽयमेवञ्जातीयकानामर्थदोषाणामन्येषामप्युपलक्षणम्।

---

### व्यक्तिविवेकव्याख्यानम्।

न्द्रतामापादयति। तच्च वदनचन्द्रयोः सादृश्यमूलमिति व्यतिरेकप्रक्रमे सादृश्यनिर्वाहात् प्रक्रमभेदः।

**वस्तुसर्गपौनरुक्त्यस्येति** पुनरुक्तवस्तुविरस इत्यत्र हि पुनरुक्तवस्तुभिर्विरस इति व्याख्याने सादृश्येन निर्वाहः कृतः। व्यतिरेकेण च प्रक्रम इति दोष एवायम्। **विमुख इति।** केचित् पुनरुक्तवस्तुषु विरसः पुनरुक्तानि वस्तूनि (न) करोतीति व्याख्यानेन व्यतिरेकनिर्वाहाद्यथास्थितपाठं समर्थयाञ्चक्रिरे। **अर्थदोषाणामिति** प्रक्रमातिक्रमरूपाणामित्यर्थः।

### मधुसूदनीविवृतिः।

दञ्चनेन द्वितीयस्य तस्य सत्तया द्विचन्द्रवत्त्वं प्रोच्यते तच्च मुखचन्द्रयोः सादृश्यमन्तरा कथं स्यादिति तयोः सादृश्यमेव सिद्ध्यति परन्तु अनयोक्त्या प्रक्रान्तः उपमानापेक्षया उपमेयस्य प्रकर्षरूपो व्यतिरेकालंकारो भेदं नीयते इति।

**तद्वक्त्रमिति। वस्तुसर्गपौनरुक्तस्येति। अयमिह रहस्यार्थः।** वक्त्रादीनां सद्भावे शश्यादीनां निर्माणं पुनरुक्तम्। एतच्च तदैव यदा तेषां शश्यादिवत्कार्यकरत्वम्। तदपि च सादृश्ये सति इति सादृश्यमात्रपर्यवसानात् प्रक्रान्तो व्यतिरेकस्तयोर्भिद्यते। तस्मादत्र **"यत्सत्यं खलु वस्तुतत्त्वविमुखः सर्गक्रमो वेधसः"** इति पाठः परिणमयितव्यः। ग्रन्थकारपाठस्तु नितान्तमयुक्तः। पौनरुक्त्येन येन सादृश्यं प्रतीयते "पौनरुक्त्यस्य सादृश्यमात्रपर्यवासानादि"ति स्वयमुच्यते च तथापि पुनरुक्तपदमुपादीयते इति ग्रन्थतलावगाहितधिया सुधिया बोधनीयम्।

**अर्थदोषाणामिति।** अर्थशब्देनात्र वस्तु गृह्यते।

तेन 'तपेन वर्षा' इत्याद्यपाकृतं भवति ।

ननु कर्तृप्रक्रमभेदोऽपीह कस्मान्न प्रदर्शितः। असम्भवादिति ब्रूमः । यस्तु क्वचित् कविभिः प्रयुज्यमानो दृश्यते स कर्तृव्यत्यासो नाम गुण एव न दोषः । तत्रैव चायं प्रक्रमभेदभ्रमो भवतां तयोर्भिन्नलक्षणत्वात् ।

---

व्यक्तिविवेकव्याख्यानम् ।

तपेन वर्षा इति—

"तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तं ददतः सदर्त्तवः पुरेऽस्य वास्तव्यकुटुम्बितां दधुः ॥"

अत्र हि स्त्रीपुरुषयुगलत्रयरूपतया ऋतूनां वर्णने प्रस्तुते स्त्रीरूपाणामृतूनां तृतीयासम्बन्धादप्राधान्ये विवक्षिते यत् तपेन वर्षा इत्यत्र विपर्ययः कृतः, कृते वा तथा निर्देशे शरदा हिमागम इत्यादौ यदन्यथाकरणं स प्रक्रमभेद एव । यदि परं स्त्रीपुंसयोरत्र येन क्रमेण प्रक्रमः तस्यान्यथा निर्वाहात् क्रमप्रक्रमभेदमिमं विद्मः । तेन पूर्वं क्रमप्रक्रमभेदस्येदमेवोदाहरणं देयम् । तेन वरं 'घनश्रियोष्णः शरदा हिमागम' इति पाठः कर्त्तव्यः ।

कर्तृप्रक्रमभेदोऽपीति । यत्र युष्मदस्मदर्थगतं कर्तृत्वं शषेऽत्र चेतनेऽचेतने वा वक्त्रा बुद्धिपूर्वकमेवारोप्यते, तत्र कर्त्तुरन्यस्यारोपश्चारुत्वाय व्यत्यासो गुण एवेत्यर्थः । तयोरिति । कर्तृव्यत्यासप्रक्रमभेदयोः ।

मधुसूदनीविवृतिः ।

तपेनेति । तपेन वर्षाः शरदा हिमागमो वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्त्तवः पुरेऽस्य वास्तव्यकुटुम्बितां ययुरिति पूर्णं पद्यम् ।

अत्र तपादीनां त्रयाणामृतूनां पुंरूपतया वर्षादीनां त्रयाणां स्त्रीरूपतया वर्णनम् । तत्र पुंरूपस्य तृतीयान्तता पूर्वत्वं च स्त्रीरूपस्य प्रथमान्तता पश्चाद्भावश्च प्रकान्तः परमन्येषां परामर्शे स क्रमो भङ्गं नीत इति क्रमप्रक्रमभेदो दोषः ।

तस्मादुत्तरयोर्द्वयोरनुरोधात्प्रक्रम एव पाठः परिवर्त्तनीयः तथाच "घनश्रियोष्णः" इति साधु । परमेकस्मिन्नूदूषणे समालोच्यमानेऽऽपरमपि तत् प्रादुर्भवति । तद्यथा पूर्वत्र वनश्रियेति श्रीपदेन । उत्तरत्र वसन्तलक्ष्म्येति लक्ष्मीपदेन ऋतोः माहात्म्यमुद्भावितं परं मध्ये शरदा इति केवलस्य तस्योपादानं कृतम् । तस्मादत्र शरदो मया हिम इति पाठः युक्तः स्यात् । मा लक्ष्मीः तया मया । हिमोऽस्त्यत्रेति अर्शाद्यच् हिमो हिमागमः ।

ननु यथा अन्येषां प्रकृतिप्रत्ययादीनां प्रक्रमभेदोदाहरणं प्रदर्शितं तथा कर्त्तुः प्रक्रमभेदस्याऽपि तद्वक्तव्यमित्याशंकते ननु कर्त्तृप्रक्रमभेदोऽपीति । अयं भावः । समक्षं स्थितस्य पुरुषविशेषस्य सम्बोध्यत्वेन कर्त्तृत्वे साक्षात्प्राप्तेऽपि यः चारुत्वाय अन्यत्र चेतनेऽचेतने वा कर्त्तृत्वारोपात्कर्त्तुर्व्यत्यासः क्रियते स गुण एव न दोषः इति । तयोः कर्त्तृव्यत्यासप्रक्रमभेदयोः ।

यदाह—

"प्रकृतमपि यत्र हित्वा कर्तृत्वं युष्मदस्मदर्थस्य ।
चारुत्वायान्यत्रारोप्येत गुणः स तु न दोषः ॥"
"यश्च यथा प्रक्रान्तोऽभिधातुमर्थस्तथैव तस्य न चेत् ।
निर्वाहः स प्रक्रमभेदो न प्रकरणावसितः ॥"

इति भिन्नलक्षणत्वान्न प्रक्रमभेददोषाशङ्कावकाशः ।

तत्र युष्मदर्थस्य यथा 'यथाह सप्तमो वैकुण्ठावतार' इति । अत्र हि यथात्थ त्वमिति युष्मदर्थस्य कर्तृत्वं प्रकृतमपहाय चारुत्वाय ततोऽन्यत्रारोप्यैवमुक्तम् । दाशरथिं रामं प्रति हि कस्यचित् समक्षमियमुक्तिः ।

अस्मदर्थस्य यथा—'नाभिवादनप्रसाद्यो रेणुकापुत्रः । गरीयान् हि गुरु रनुभङ्गापराध' इति । अत्रापि हि नाभिवादनप्रसाद्योऽस्मीति वक्तव्ये पूर्ववच्चारुत्वायैवमुक्तम् । एषा हि भार्गवस्यात्मानमुद्दिश्योक्तिः ।

यथा च—

"अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि"

इति । अत्राप्यहं प्रष्टुमना इति वक्तव्येऽस्मदर्थस्य कर्तृत्वमन्यत्रारोप्यैवमुक्तम् ।

द्विविधो ह्यन्यशब्दार्थश्चेतनाचेतनभेदात् । तत्र चेतनेऽन्यत्रारो-

---

व्यक्तिविवेकव्याख्यानम् ।

न प्रकरणावसित इति । युष्मदस्मदर्थस्य हि क्वचित् कर्तृत्वं प्रकरणाद्यवसितं न शब्देनाभिधातुं प्रक्रान्तमिति नायं प्रक्रमभेददोषस्य विषयः ।

अन्यत्रारोप्यैवमुक्तमिति शेषत्वेन विवक्षिते रामभद्रे । एवमुत्तरत्र भार्गवे वटौ चान्यत्वं योजनीयम् ।

ननु युष्मदस्मदर्थस्य चेतनत्वात् तदपेक्षयाचेतनस्यैवान्यत्वमुचितमिति कथं

मधुसूदनीविवृतिः ।

यदाहेत्यनेन तयोर्लक्षणस्य भिन्नत्वं निरूपयति प्रकृतमपीति । यश्च यथेति । अन्यत्र सम्बोध्यापेक्षया भिन्नवस्तुनि शेषपदेन व्यवहर्त्तुंयोग्ये । प्रकरणावसितः प्रक्रान्तानिर्वाहः प्रक्रमभेदविषयो न भवति । अर्थात् यत् क्वचित् युष्मदस्मदर्थस्य कर्त्तृत्वं प्रकरणाद्यवसितं, न शब्देनाभिहितमिति न प्रक्रान्तमिति नायं प्रक्रमभेददोषः प्रक्रान्तार्थानिर्वाहहेतुकः अपि तु चारुत्वाधायकत्वाद् गुण एवेति भावः ।

अन्यत्रारोप्य एवमुक्तमिति । अन्यत्र रामचन्द्रे । रेणुकापुत्रः परशुरामः । अन्यत्र इदमर्थे ।

ननु युष्मदस्मदर्थस्य चेतनत्वेन तदपेक्षया अन्यत्वमचेतनस्यैवोचितमिति कथं

पो हि दर्शित एव । अचेतने तु यथा—

"चापाचार्यः पशुपतिरसौ कार्त्तिकेयो विजेयो
वाणव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥"

इति । अत्र हि त्वं रेणुकाकण्ठबाधां कृतवानिति त्वया बद्धस्पर्धोऽहं लज्ज इति वक्तव्ये चारुत्वाय युष्मदर्थयोः कर्तृत्वमुभयोः परशुचन्द्रहासयोर्जडयोरारोप्यैवमुक्तम् । यथा च—

"भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद् गतम् ।
नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥"

इति । अत्रापि हि अहं न सहिष्य इति वक्तव्ये पूर्ववदस्मदर्थस्य क-

---

व्यक्तिविवेकव्याख्यानम् ।

चेतनस्यैवान्यत्वमित्याह द्विविधो हीति । अयं भावः । न युष्मदस्मदर्थगतचेतनत्वापेक्षया वस्त्वन्तरस्यान्यत्वम्, अपि तु युष्मदस्मदर्थत्वापेक्षयैव । युष्मदस्मदर्थौ च क्रमात् सम्बोध्यमानवस्तुनिष्ठः परभावोऽस्मिताख्या प्रत्यक्ता च । ततश्च तदपेक्षया शेषस्यान्यत्वम् । तस्य च चेतनत्वाचेतनत्वाद् द्वैविध्यमिति न विरोधः कश्चित् ।

परशुना चन्द्रहास इति क्रमेण द्वयोरपि युष्मदस्मदर्थयोरचेतनविषयकर्तृताव्यत्यास उदाहरणम् ।

भो लङ्केश्वर इति । अत्र रामः स्वयं याचत इति अस्मदर्थकर्तृत्वस्य चेतनविषयव्यत्यासस्यान्यत् स्थितमप्युदाहरणीयं न चिन्तितं, पूर्वमुदाहरणान्तरे चिन्तितत्वात्, चिन्तान्तरप्रस्तावाच्च ।

मधुसूदनीविवृतिः ।

चेतनस्यैव अन्यत्वमित्याह—द्विविधो हीति युष्मदस्मर्थगतचैतन्यापेक्षया वस्त्वन्तरस्य अन्यत्वं नापेक्षितं किन्तु युष्मदस्मदर्थापेक्षयैव । युष्मदस्मदर्थौ च क्रमात् सम्बोध्यमानवस्तुनिष्ठः परभावः, अस्मिताभिधाना प्रत्यक्ता च । ततश्च तदपेक्षया शेषस्यान्यत्वम् । तस्य च चेतनत्वाचेतनत्वाद् द्वैविध्यमिति न विरोधः कश्चित् ।

दर्शित एवेति । यथाह सप्तमो वैकुण्ठावतार इत्यादिभिः त्रिभिरुदाहरणैः ।

चापाचार्य इति । व्याख्यातं प्राक् । अत्र परशुचन्द्रहासौ अचेतनौ द्वावपि क्रमेण युष्मदस्मदर्थविषयककर्तृताव्यत्यास उदाहृतौ ।

भो लङ्केश्वरेति । अत्र अहं याचे इत्यनुक्त्वा रामः स्वयं याचते इत्युक्त्याऽस्मदर्थकर्तृत्वं व्यत्यस्तमित्यपि बोध्यम् ।

र्तृत्वमचेतने पत्त्रिणि समारोप्यैवमुक्तम् ।

क्रमभेदो यथा—

"तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।"

इति । अत्र हि परामर्शनीयमर्थमनुक्त्वैव यस्तस्य सर्वनामपरामर्शः स क्रमभेदो दोषः । तस्य हि प्रक्रान्तोऽर्थो विषय इष्टो न प्रक्रंस्यमानः तस्य स्मृतिपरामर्शरूपत्वात् । स्मृतेश्चानुभूत एवार्थो विषयो नानुभविष्यमाणः । अत्र च प्रतीतिमात्रमनुभवोऽभिमतो नेन्द्रियविषयभावः । न स गङ्गार्थः प्रतीतपूर्वो, यः परामृश्येतेति परामर्शप्रक्रमभेदो दोषः ।

व्यक्तिविवेकव्याख्यानम् ।

तदेवमियता प्रबन्धेन प्रक्रमभेदं विचार्य क्रमप्राप्तं क्रमभेदं विचारयितुमाह क्रमभेदो यथेति ।

ननु यदि स्मृतिपरामर्शकस्य तच्छब्दस्यानुभूत एवार्थो विषय इत्युच्यते, येऽत्यन्तपरोक्षा रामादयस्तेषां कविना काव्ये तच्छब्देन कथं परामर्शः क्रियते तेषामतीन्द्रियत्वादित्याह—अत्र च प्रतीतिमात्रमिति । अयमत्राभिप्रायः । येन विना यन्नोपपद्यते तस्य तदपेक्षा न्याय्या । स्मृतिश्च प्रतीतिमात्रमन्तरेणानुपपद्यमाना तदपेक्षिणी स्यात्, नैन्द्रियिकप्रतीत्यपेक्षिणी, ऐन्द्रियिकप्रतीतिं विनापि शब्दादिभ्यः प्रतीतौ तस्याः सम्भवदर्शनात् । रामादीनां च यदि नैन्द्रियिको प्रतीतिस्तदा शब्दात् प्रसिद्धेर्वा प्रती-

मधुसूदनीविवृतिः ।

एवमियता प्रघट्टकेन प्रक्रमभेदं सुनिरूप्य क्रमप्राप्तं क्रमभेदं निरूपयितुं प्रयतते क्रमभेदो यथेति । तीर्थे तदीय इति । तदीये गाङ्गे । अत्र हीति । परामर्शयितुं योग्यम् अर्थम् गङ्गारूपम् । सर्वनाम्ना तच्छदेन परामर्शः । तस्य हि सर्वनाम्नो हि । तस्य तच्छब्दस्य । स्मृतिपरामर्शरूपत्वात् बुद्धिस्थपरामर्शकत्वात् स्मृतिविषयीभूतार्थबोधकत्वादित्यर्थः ।

ननु यदि स्मृतिपरामर्शकस्य तच्छब्दस्य अनुभूत एवार्थो विषय इत्युच्यते तर्हि ये अत्यन्तपरोक्षा रामादयस्तेषां कविभिः काव्ये तच्छब्देन कथं परामर्शः क्रियते तेषामतीन्द्रियत्वादित्याह—अत्र च प्रतीतिमात्रमिति । अत्रायमाशयः । बुद्धिश्च द्विविधा मता अनुभूतिः स्मृतिश्चेति अनुभवो बुद्धिरेव । सा च क्वचिच्छब्दजन्या—यथा "यो धार्मिकः स सुखी" इति । क्वचित्पूर्ववाक्यरूपप्रक्रमजन्या यथा "इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः—स च सर्वगुणोपेतः कौसल्यानन्दवर्द्धन" इति । क्वचिद्विद्यमानानुभवात्मकप्रसिद्धिरूपा—यथा "पुस्तकं दृष्ट्वा गोशब्दं श्रुत्वा वा वदति इदमानय शृणु वेति । क्वचित्स्मरणरूपा यथा "ते लोचने प्रतिदिशं विधुरे क्षिपन्ती" इति । अतः अनुभवपदार्थः प्रतीतिमात्रं बुद्धिमात्रम् अभिमतः केवल इन्द्रियविषयभावो न अभिमतः । ततश्च रामादीनामतीन्द्रियाणामपि शब्दात् प्रसि-

ननु पदार्थबुद्धावुपक्रम एवायमवभासते दोषः यत्र पदार्थपौर्वापर्यप्रकाशः यत्समाश्रयोऽयं दोष उद्घुष्यते, न वाक्यार्थविमर्शदशायाम् । तत्र हि न पौर्वापर्यप्रतिनियमावभासः तस्य निरंशत्वात् । बहिरङ्गा च पदार्थबुद्धिरन्तरङ्गश्च वाक्यार्थविमर्श इति कथमयं दोषः ?

सत्यमस्त्येतत् । किन्तु स वाक्यार्थविमर्शः प्रवर्त्तमानो वक्त्रभिप्रायप्रतिरूप एव प्रवर्त्तते नान्यादृशस्तत्संचारमयत्वाच्छब्दव्यवहारस्य ।

व्यक्तिविवेकव्याख्यानम् ।

तिरस्तु । तन्निबन्धनश्च स्मृतिपरामर्शकेन तच्छब्देन परामर्श इति न कश्चिद्विरोधः ।

नन्विति । अयमत्रार्थः । वाक्यार्थविमर्श इति । पदार्थविमर्शवेलायां भवत्वियमाशङ्का । वाक्यार्थविमर्शसमये त्वखण्डप्रतीतौ पूर्वापरभावनियमावभासनाभावान्नास्य दोषस्यावकाशः । उद्देश्यत्वाच्च वाक्यार्थप्रतीतेरन्तरङ्गत्वमिति तदाश्रयेणैव व्यवस्थोपपत्तौ न क्रमदोषचिन्ता काचिदिति । प्रतिरूपः प्रतिबिम्बरूपः तत्सञ्चारो वक्त्रभिप्रायसङ्क्रमणम् । शब्दव्यवहारस्येति । शब्दव्यवहारमुखेन श्रोतृगृहीतो वाक्यार्थविमर्शः स्वीकृतः । वक्तुरिति । यदि श्रोतृविमर्शपर्यवसायी शब्दव्यवहारो वक्तृविमर्शप्रतिच्छन्दकरूपो न स्यात्, तदा शब्दैर्वक्तृविमर्शस्यासम्बन्धित्वादनुमानं न स्यादित्यर्थः ।

मधुसूदनीविवृतिः ।

द्वेर्वा प्रतीतिर्भवतु शब्दादिनिबन्धनेच तच्छब्देन परामर्शे न कश्चिद्दोषलेशः । इति ।

ननु शाब्दबोधे शक्तिग्रहो बीजम् । शक्तिग्राहकेषु च वाक्यमेव मूर्धाभिषिक्तम् । तच्च संसारस्य मिथ्यात्वात् ब्रह्मणश्च निधर्मकत्वात् धर्मधर्मिभावाभावात्, तदभावाच्च क्रियाकारकभावासंभवात् पदपदार्थविभागमन्तरेण अखण्डमेव सत् अर्थं बोधयतीति निरंशमिति तत्र वाक्ये पदार्थपौवापर्यप्रतिनियमो नावभासते यत्र च सोऽवभासते स पदार्थः उपायत्वादप्रधानम् अत एव बहिरङ्गश्च इति उच्यमानः क्रमभेदाख्यो दोषो न प्ररूढमूल इत्याशयवान् शंकते-नन्विति । पदार्थबुद्धौ पदार्थविषयकज्ञानसमये उपक्रम एव आरम्भ एव अयं क्रमभेदो दोषः अवभासते । ननु कीदृश्यां बुद्धौ अवभासते इत्याह-यत्रेति । यत्र बुद्धौ पदार्थानां पौर्वापर्यम् प्रकाशते । यत्समाश्रयः पौर्वापर्यसमाश्रयः अयं दोषः । वाक्यार्थविमर्शदशायाम् वाक्यार्थविचारदशायां नावभासते । तत्र हि वाक्ये हि । तस्य वाक्यस्य निरंशत्वात् अंशशून्यत्वात् अखण्डत्वादिति परमार्थः । पदार्थबुद्धिरुपायत्वाद्बहिरङ्गा वाक्यार्थविमर्शश्च अन्तरङ्गः उपेयत्वादिति ।

समाधत्ते । सत्यमस्त्येतदिति । सत्यमित्यङ्गीकारे । प्रवर्त्तमानो जायमानः क्रियमाण इत्यर्थः । वक्तुरभिप्रायस्य प्रतिरूप एव प्रतिबिम्ब एव प्रवर्त्तते जायते उपतिष्ठते । अन्यादृशो न अभिप्रायातिरिक्तस्वरूपो न भवति । तत्कुत इत्याह—शब्दव्यवहारस्य तत्संचारमयत्वात् वक्त्रभिप्रायबोधनार्थमेव क्रियमाणार्थत्वादित्यर्थः ।

यदाहुः—'वक्तुरभिप्रायं सूचयेयुः' इति ।

तत्र चासौ सूक्ष्मतयानभिव्यक्तपदार्थस्वरूपः स्थित एव पदार्थबुद्धौ स्थूलतया केवलं व्यक्तोऽवभासत इति पदार्थसमाश्रयोऽयं दोषस्तत्रापि दुर्निषेध एव ।

न चात्र प्रमादजः पादयोः पौर्वापर्यविपर्यय इति शक्यते वक्तुं तत्रापि गङ्गाप्रतीपगमनहेतोः शाब्दस्य तदीयतीर्थाभिधानव्यवधाने

व्यक्तिविवेकव्याख्यानम् ।

तत्र चासाविति वक्तृश्रोतृगते वाक्यार्थविमर्शे सूक्ष्मत्वेनास्फुटरूपोऽस्त्येव पौर्वापर्यप्रतिभास इति यावत् । पदार्थबुद्धाविति वाक्यार्थपूर्वभासिन्याम् । तत्रापीति । वक्तृश्रोतृगतवाक्यार्थविमर्शेऽपि सूक्ष्मः पदार्थाश्रयो दोषो दुर्निवारः पदार्थानतिक्रमेणैव वाक्यार्थविमर्शस्य व्यवस्थितत्वादित्यर्थः ।

प्रमादज इति । एवं सति प्रक्रंस्यमानवस्तुपरामर्शदोपस्तावत् परिहृतो भवति । प्रतीपगमनहेतोरिति गजसेतुबन्धादित्यस्य । शाब्दस्येति पञ्चम्यन्तत्वात् । तदीयतीर्थाभिधानेति हेतुहेतुमतोस्तदीयतीर्थशब्देन व्यवधाने सतीत्यर्थः । गङ्गा-

मधुसूदनीविवृतिः ।

शब्दव्यवहारो वक्त्रभिप्रायानुसारीति अत्र वृद्धोक्तिं प्रमाणयति–यत्राहुरिति । वक्तुरभिप्रायमिति । वाक्यानि वक्तुरभिप्रायं सूचयेयुः । ध्वनिकारोप्याह—पौरुषेयाणि च वाक्यानि प्राधान्येन पुरुषाभिप्रायमेव प्रकाशयन्ति । इति । अयं भावः । वक्तुरभिप्रायं तानि सूचयेयुरित्युक्तं तत्र वक्त्रभिप्रायश्च अनुमेयरूप एव । अनुमेयप्रतीतिश्च लिङ्गाधीना । लिङ्गं च तत्र पदपदार्थप्रतीतिरेव। यत्कारणे तत्कार्येऽपीति न्यायात् लिङ्गे योऽवभासते स साध्येऽपि प्रत्येष्यति कस्तं निवारयिष्यति । स्थूलतया सूक्ष्मतया च यत्तस्य व्यक्ताऽव्यक्तत्वं तद्धि तस्य स्वरूपभेदकं न प्रतीतिप्रतिबन्धकमिति पदार्थबुद्धौ भासमानो दोषः श्रोत्राक्रियमाणवाक्यार्थविमर्शदशायामपि भासिष्यत्येव । अन्यथा पदपदार्थानां श्रोतृगृह्यमाणवक्त्रभिप्रायेण सह सम्बन्धाभावादनुमितिर्नस्यादिति ।

तत्र चासाविति तत्र वाक्यार्थे असौ दोषः सूक्ष्मतया अल्पत्वेन हेतुना अनभिव्यक्तस्वरूपः सन् स्थित एव अलक्षितस्वरूपः सन् विद्यते एव न समवभासते । पदार्थबुद्धौ वाक्यार्थपूर्वावभासिन्यां केवलं स्थूलतया विपुलत्वेन हेतुना व्यक्तोऽवभासते । पदार्थसमाश्रयः पदार्थगतत्वेन उपलभ्यमानोऽयं दोषः क्रमभेदाख्यः तत्राऽपि वाक्यार्थविमर्शदशायामपि दुर्निषेध एव अभ्युपगम्य एवेत्यर्थः । पदार्थद्वारेणैव वाक्यार्थप्रतीतेरिति भावः ।

नचात्र प्रमादज इति । अत्र पद्ये । इति वक्तुं न शक्यते इत्यन्वयः । तत्रापि पद्येऽपि । गङ्गायाः प्रतीपगमने विरुद्धप्रवहने शब्देन पञ्चम्यन्तादिपदेन उक्तस्य

सत्यन्यस्य प्रक्रमभेददोषस्याविर्भावापत्तेः । तेन पादयोर्विपर्ययः शाब्दस्य च हेतोर्गङ्गाविशेषणमुखेनार्थत्वमित्युभयविपर्ययोऽत्र श्रेयानिति ।

परामृश्यमनुक्त्वैव परामर्शोऽस्य यस्तदा ।
स दोषो वक्ष्यमाणार्थसंवित्तावक्षमो हि सः ॥ ३२ ॥

इति सङ्ग्रहश्लोकः ।

यथा च—'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचर' इति । अत्र हि आरोपनिवृत्तौ तद्विषयवाचिनोः सुरधनुर्धारासारशब्दयोरिव नवजलध-

व्यक्तिविवेकव्याख्यानम् ।

विशेषणमुखेनेति गजसेतुबन्धामिति पाठे । अयमत्राशयः—शाब्दो यत्र हेतुहेतुमद्भावस्तत्र हेतुत्वेनोपन्यासाच्च तयोर्व्यवधानं किञ्चित् कार्यं प्रतीतिविप्रकर्षप्रसङ्गात् । आर्थे हेतुहेतुमद्भावे उपन्यस्तस्य हेतुत्वाद् विशेषणभूतस्य हेतोर्विशेष्यस्वरूपवर्णनेन चरितार्थत्वात् सत्यपि व्यवधाने न प्रतीतिविप्रकर्षः कश्चित् पर्यालोचनसामर्थ्याद्धेतुत्वप्रतीतेः । अत्र च श्लोके तीर्थे तदीये इति पदद्वयाकरणेऽपि वाक्यार्थस्य निराकाङ्क्षत्वात् तत्करणमपुष्टार्थमेव ।

तदेति तच्छब्देन । स इति तच्छब्दः ।

आरोपनिवृत्ताविति आरोपो भ्रमोऽन्यस्यान्यत्वेन प्रतीतिः, यथा नवजलधरस्य सन्नद्धदृप्तनिशाचरत्वेन । तन्निवृत्तावत्र वक्ष्यमाणायामारोपविषयस्य जलधरादेर्वस्तु-

मधुसूदनीविवृतिः ।

शाब्दस्य गजसेतुबन्धादित्यस्य हेतोर्मध्ये तदीयतीर्थपदयोरभिधानेन कथनेन व्यवधाने कृते सति । अन्यस्य उक्तदोषाद्भिन्नस्य प्रक्रमभेददोषस्य आविर्भावापत्तेः । अयं भावः । यदि गजसेतुबन्धात् तदीये तीर्थे प्रतीपगामुत्तरतोऽस्य गङ्गामिति पाठः स्यात्तदाऽपिदोषान्तरमापतति इति तद्दोषनिवारणायैवेत्थं पाठोऽवधृतः कविना अतः प्रमादादेतादृशः पाठो जातः न तु कविना बुद्ध्या कृत इति वक्तुं न शक्यत इति । तेन तथास्थितौ दोषसद्भावेन हेतुना पादयोः प्रथमद्वितीययोः । विपर्ययः पूर्वापश्चाद्भावः । गङ्गाविशेषणेति गजसेतुबन्धामिति पाठेन ॥

परामृश्यमिति । यः अस्य परामृश्यवस्तुनः तदा तच्छब्देन परामर्शो बोधः स दोषः । हि यतः स तच्छब्दः वक्ष्यमाणार्थस्य संवित्तौ परामर्शे असमर्थः । अयमाशयः । तच्छब्दः पूर्वपरामर्शकः यदा पूर्वं कश्चिद्वस्तुविशेष उपात्त एव नास्ति तदा उपक्रम एव यस्तच्छब्दः प्रयुज्यते स कं परामर्शयेत् परामर्शनीयवस्त्वभावादिति दोष एवेति ।

आरोपनिवृत्ताविति । अयमाशयः । अतस्मिन् तद्बुद्धिरारोपः भ्रमः मिथ्या इत्यनर्थान्तरम् । यथा रजतत्वशून्यायां शुक्तिकायां रजतत्वज्ञानम् । तस्य

रपदस्यापि पूर्वं पश्चाद्वेदं शब्दः प्रयोक्तव्यः शुक्तिकेयं न रजतमितिवद् इत्येष तावत् क्रमो न्याय्यः यस्तु दृप्तनिशाचरविशेषणवाचिनः सन्नद्धपदानन्तरं तस्य प्रयोगः स क्रमभेदो दोषः ।

'कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी'इत्यत्र हि द्वितीयश्चशब्दो भिन्नक्रमः स हि त्वमित्यस्यानन्तरं प्रयोक्तव्यः । यथा च—

"मीलितं यदभिरामताधिके साधु चन्द्रमसि पुष्करैः कृतम् ।
उद्यता जयनी कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥"

इत्यत्र पुनःशब्दः । स हि तेनेत्यतोऽनन्तरं वक्तव्यः ।

"उक्खअदुमं व सेलं हिमहअकमलाअरं व लच्छिविमुक्कम् ।
पीअमइरंव चसअं वहुलपओसं व मुद्धअंदविरहिअम् ॥"

इत्यत्र ह्युपमानवाचिभ्यां शब्दाभ्यामेवानन्तरमिवशब्दः प्रयोक्तव्यः न साधारणधर्मवाचिभ्यां यथात्रैव कमलाकरबहुलप्रदोषशब्दाभ्यामिति । स हि यदनन्तरं श्रूयते तत्रैवोपमानतामाधातुमलमित्यन्यथार्थस्यासङ्गतिप्रसङ्गात् । न हि भवति गौरमिवेन्दुबिम्बं तव मुखमिति । न चासौ तथाप्रयु-

---

व्यक्तिविवेकव्याख्यानम् ।

सतः प्रकाशमानस्येदमादिना न्याय्ये निर्देशे तस्य परामृश्यसमीप एव प्रयोगेण भाव्यम् । यस्त्ववस्तुसदारोप्यमाणनिकटे प्रयोगः स क्रमभेदमावहति । यस्त्वत्रैवारोपविषयस्वरूपतया विद्युतो निकट इदमाद्यप्रयोगः, तत्र दूषणान्तरावकाशः ।

उत्खातद्रुममिव शैलं हिमहतकमलाकरमिव लक्ष्मीविमुक्तम् ।
पीतमदिरमिव चषकं बहुलप्रदोषमिव मुग्धचन्द्रविरहितम् ॥

मधुसूदनीविवृतिः ।

आरोपस्य निवृत्तौ यथार्थज्ञानम् । एवं हि प्रकृतेऽपि नवजलधरादिषु सन्नद्धदृप्तनिशाचरत्वादीनां प्रतीतिर्भ्रमात्मिका उत्तरकाले प्रत्यक्षेण बाधात्, आरोपनिवृत्तौ च यथार्थबोधविषयस्य प्रत्यक्षायमाणवस्तुनो निर्देशः प्रत्यक्षबोधकपदेनैव उचित इति इदमदीनां तन्निकर्षतरत्वमेवावश्यकम् । ततश्चात्र आरोपविषयवाचिभ्यः पदेभ्यः पूर्वं वा पश्चाद्वा अर्थात् अयं नवजलधर इति वा नवजलधरोऽयमिति वा प्रयोगः कर्त्तव्यः । यस्तु तत्र व्यवधानेन अन्यसन्निधाने च प्रयोगः स तु अप्रत्यक्षयोग्यस्य प्रत्यक्षवाचकपदेन निर्देशे क्रमभेदो दोष एव । इति ।

कला च सेति । त्वं चास्य लोकस्य सुनेत्रकौमुदीति पाठोऽनुष्ठेयः ।

उक्खअदुममिति । उत्खातद्रुममिव शैलं हिमहतकमलाकरमिव लक्ष्मीविमुक्तम् । पीतमदिरमिव चषकं बहुलप्रदोषमिव मुग्धचन्द्रविरहितम् । इति छाया ।

क इतिक्रमभेदो दोषः । तेन 'सेलं व उकूखअदुम'मिति च पाठः पठितव्यः ।

यथा वा-'उपालब्धेवोच्चैर्गिरिपतिरिति श्रीपतिमसा'विति । अत्र हि इतीवोपालब्धा क्षितिधरपतिः श्रीपतिमसाविति पाठः श्रेयान् । यतो नात्रोपालब्धेवोच्चैर्गिरिपतिरित्येतत्पर्यन्तोक्तिरवच्छेत्तुमभिमता । न च पदसम्बन्धस्य पुरुषाधीनत्वात् प्रापिपयिषुपदेनैवास्याभिसम्बन्धो न गिरिपतिपदेनेति शक्यते वक्तुं तस्य तदधीनत्वासिद्धेरुपपादयिष्यमाणत्वात् । यथा च—

"प्रतीक्ष्यं च प्रतीक्ष्यायै पितृष्वस्रे सुतस्य ते ।
सहिष्ये शतमागांसि प्रत्यश्रौषीः किलेति यत् ॥"

इति । अत्रापि हि 'सहिष्ये शतमागांसीत्यभ्युपैर्यत् किल स्वय'मिति युक्तः पाठ इति । अनेनैव तज्जातीयार्थानामन्येषामव्ययानां प्रयोगनियमो व्यख्यात इति तेषामपि प्रक्रमभेदो दोष एव । तद्यथा—

'किं क्रमिष्यति किलैष वामनो यावदित्थमहसन्न दानवाः ।
तावदस्य न ममौ नभस्तले लङ्घितार्कशशिमण्डलः क्रमः ॥"

इत्यत्रेत्थंशब्दस्य । स हि वामनशब्दादनन्तरं द्रष्टव्यः । यथा च—

---

व्यक्तिविवेकव्याख्यानम् ।

इतीवेति । अत्रोपालम्भरूपः पूर्ववाक्यार्थ इतिशब्दावच्छिन्न उत्प्रेक्ष्यत इत्युपालब्धेत्यतः पूर्वमितीवशब्दौ प्रयोज्यौ ।विषयान्तरे तु प्रयोगाद् क्रमभेदः । प्रापिपयिषुपदेनेति पूर्ववाक्यार्थस्थितेन ।तदधीनत्वं पुरुषायत्तत्वम् ।

मधुसूदनीविवृतिः ।

अन्यथेति । भिन्नपदाऽऽनन्तर्ये हि उपमानत्वेन प्रत्येतुमयोग्यस्य तथात्वेन प्रतीतौ अर्थस्यासंगतिरेवेत्यर्थः ।

अवच्छेत्तुमभिमतेति । अयमाशयः । इतिशब्दः स्वरूपावच्छेदकः यत्रासौ प्रयुज्यते तत्र तेन स्वाव्यवहितपूर्वं वस्तु अवच्छिद्यते । "उपालब्धेवोच्चैर्गिरिपति" रित्यन्तं च अवच्छेद्यं नास्ति । यच्च अवच्छेद्यं पूर्ववाक्यार्थगतं उपालम्भरूपं उत्प्रेक्ष्यं वस्तु तत्र इतिशब्दो नोपात्तः इति क्रमभेदो दोष एव । ततश्च उपालब्धेत्यतः पूर्वमितीवशब्दौ प्रयोज्यौ । इति ।

प्रापिपयिषुपदेनैव अन्वेतुमिच्छुना पदेनैव अर्थात् पूर्ववाक्योपात्तेन । अस्य इति शब्दस्य । तस्य पदसम्बन्धस्य तदधीनत्वासिद्धेः पुरुषाधीनत्वासिद्धेः ।

प्रतीक्ष्यमिति । प्रतीक्ष्यम् अपेक्षणीयम् । प्रतीक्ष्यायै पूज्यायै ।

किं क्रमिष्यतीति । किं कियत् । अस्य विष्णोः । क्रमः पादसंचारः ।

"स्तम्बेरमः परिणिनंसुरसावुपैति षिद्गैरगद्यत ससम्भ्रममेवमेका',

इत्यत्रैवंशब्दस्य। स ह्युपेतीत्यतोऽनन्तरं द्रष्टव्यः। तेन 'स्तम्बेरमः परिणिनंसुरसौ समभ्येत्येवं ससम्भ्रममभण्यत कापि षिद्गै'रिति युक्तः पाठः। अत्र च यत् प्रतीतिवैचित्र्यं स मतिमतामेव विषयः।

उक्तिस्वरुपावच्छेदफलो यत्रेतिरिष्यते।
न तत्र तस्मात् प्राक् किञ्चिदुक्तेरन्यत् पदं वदेत् ॥ ३३ ॥
उपाधिभावात् स्वां शक्तिं स पूर्वत्रादधाति हि।

---

व्यक्तिविवेकव्याख्यानम्।

स्तम्बेरम इति पीनोन्नतस्तनद्वयदर्शनादियं प्रशंसोक्तिः। षिद्गाः विटाः। प्रतीतिवैचित्र्यमिति वाक्यार्थस्य तिलतण्डुलीकृतस्यावगमानवगमौ।

उक्तिस्वरूपेति। उक्तिः 'स्तम्बेरमः परिणिनंसुरसावुपैती' त्येषा। तस्या विटसम्बन्धिन्याः स्वरूपम् इतिशब्देनोपलक्षणत्वाद् एवंशब्दादिना व्यवच्छेत्तुमिष्टम्। अतश्च तत्र तस्माद् इतिशब्दादितिशब्दोपलक्षितादेवमादेश्च प्राक् पूर्वम् उक्तेः पूर्वप्रदर्शितायाः। अन्यत् किञ्चित् पदम् षिद्ग इत्यादि न कथनीयमित्यर्थः। एवमुदाहरणान्तरेऽपि योजनीयम्।

उपाधिभावादिति इतिशब्दस्य स्वा शक्तिः पूर्ववाक्यावच्छेदरूपा। तां पूर्वत्र वाक्ये समर्थयंस्तस्योपाधिरितिशब्दः सम्पद्यते। अतश्च न तस्यान्यत्र प्रयोगः कर्त्तव्य इत्यर्थः। पदस्यान्यस्येति षिद्गैरित्यादेः।

मधुसूदनीविवृतिः।

स्तम्बेरम इति। असौ स्तम्बेरमो गजकलभः परिणिनंसुः प्रहर्त्तुमिच्छुरितियावत्। अत्र स्तम्बेरमः पीनोन्नतकुचयोः कुम्भत्वभ्रान्तिमातनोति तया च तव स्तनौ पीनौ उन्नतौ च इति गम्यते। षिड्गा विटाः। अस्मादेव प्रामाण्यात् षिड्गसदृशः षिद्गेतिदकारमध्यमोऽपि शब्दः।

प्रतीतिवैचित्र्यमिति। समुच्चयावच्छेदादिवाचकानां चकारेतिपदानां समुच्चेयावच्छेद्याव्यवहितोत्तरत्वे प्रतीतौ वैचित्र्यं भिन्नाधिकरणतायां न तदिति मतिमन्तः काव्यभावनापरिपक्वबुद्धयो भावुका एव विवेक्तुमलं नान्ये वैयाकरणदुर्दुरूटा इति सारः।

उक्तिस्वरुपयेति। यत्र उक्तेः वक्तव्यवस्तुनः स्वरूपावच्छेदफलः इतिशब्द इष्यते तत्र स्थले तस्मात् इतिशब्दप्रभृतेः प्राक् उक्तेः वक्तव्यवस्तुनः अन्यत् भिन्नं पदं न वदेत्।

उपाधिभावादिति। स इतिप्रभृतिशब्दः उपाधिभावात्। यथा उपाधिर्धर्मः धर्मिणि एव स्वत्वमादधाति तथा स्वस्य तदुत्तरत्वमेवेच्छति तथैव इतिप्रभृतिशब्दः स्वां अवच्छेदनरूपां शक्तिं पूर्वत्र यदुत्तरं प्रयुक्तास्तत्र स्वाव्यवहितपूर्ववर्त्तिन्येव

न च स्वरूपावच्छेदः पदस्यान्यस्य सम्मतः ॥ ३४ ॥
इतिनैवेतरेषामप्यव्ययानां गतिः समा ।
ज्ञेयेत्थमेवमादीनां तज्जातीयार्थयोगिनाम् ॥ ३५ ॥
यतस्ते चाद्य इव श्रूयन्ते यदनन्तरम् ।
तदर्थमेवावच्छिन्द्युरासमञ्जस्यमन्यथा ॥ ३६ ॥
अथानन्तर्यनियमस्तेषामर्थौचितीवशात् ।
अन्यतस्तर्हि तत्कार्यसिद्धेस्ते स्युरपार्थकाः ॥ ३७ ॥
कैश्चिदेव हि केषाञ्चिद् दूरस्थैरपि सङ्गतिः ।
न जातु सर्वैः सर्वेषामित्येतदभिधास्यते ॥ ३८ ॥

इतिसङ्ग्रहश्लोकाः ।

---

व्यक्तिविवेकव्याख्यानम् ।

अन्यथेति विषयान्तरप्रयोगे आसमञ्जस्यम् विशरारुप्रतीतित्वम् ।

आनन्तर्यनियम इति ।

"यस्य येनाभिसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमानानामानन्तर्यमकारणम् ॥"

इति न्यायेनार्थौचित्यवशाद् व्यवहितानामप्यानन्तर्यनियमो भविष्यतीत्यर्थः । अन्यतस्तर्हीति । अन्यतोऽर्थौचित्यवशात् । तत्कार्यसिद्धेः इत्यादिकर्त्तव्यसिद्धेः । इति तेषां प्रयोगो नियतः स्याद् इत्युक्तम् ।

ननु 'यस्य येनाभिसम्बन्ध, इति न्यायः कुत्रावतिष्ठतामित्याह—कैश्चिदेवेति । अयंभावः—इत्यादिशब्दवर्जनेनोक्तक्रमेण शब्दहेत्वादिवर्जनेन चान्येषां शब्दानामयं न्यायः । इत्यादीनामयं पुनर्नियतप्रयोगविषय इति नान्यथा तेषां प्रयोगः

मधुसूदनीविवृतिः ।

आदधाति । अतो यथास्थाने निवेशः कर्त्तव्यः । हि यतः अन्यस्य अवच्छेदयितुम-योग्यस्य पदस्य स्वरूपावच्छेदो न सम्मतः अर्थासंगतेरिति भावः ।

अन्यथा विपर्ययेण अनन्तरप्रयोगे आसमञ्जस्यं असाङ्गत्यं स्यात् ।

अथानन्तर्यनियम इति । अथेति प्रश्ने । अथ ब्रूषे यदि अर्थौचितीवशादेव तेषां इतिप्रभृतिशब्दानां आनन्तर्यनियमः सेत्स्यति तर्हि अन्यतः अर्थौचितीवशादेव तत्कार्यस्य इतिशब्दजनितकार्यस्य अवच्छेदनादेः सिद्धेः ते इतिप्रभृतयः शब्दा अपार्थका व्यर्थाः स्युः ।

ननु औचित्यं हि काव्यजीवातुः अत औचित्यादेव भवन्तं पदार्थानां सङ्गमं को वारयितुं समर्थ इत्यत्राह—कैश्चिदेवेति । अन्यत औचित्यवशात्सङ्गमो भविष्यति परं न स सर्वस्य दृक्पथमधिगच्छेत् स तु व्युत्पन्नस्यैव कस्यचित्प्रतिभासेत । अन्यथा सहृदयासहृदयविभागो न स्यात् वैकटिका एव हि रत्नतत्वविदः । नियमस्तु व्युत्पन्नाऽ-

पौनरुक्त्यमार्थमेकमेवाभ्युपगन्तुं युक्तं न शाब्दं तस्यार्थभेदे सत्यदुष्टत्वाद् । यदुक्तं "तच्च न शब्दपुनरुक्तं पृथग्वाच्यम् अर्थपुनरुक्तेनैव गतार्थत्वाद् । न ह्यर्थभेदे शब्दसाम्येऽपि कश्चिद्दोषः । यथा—

हसति हसति स्वामिन्युच्चै रुदत्यपि रोदिति
द्रविणकणिकाक्रीतं यन्त्रं प्रनृत्यति नृत्यति । " इति ।

तद्भेदे तु दुष्टतैव । अन्यत्र तात्पर्यभेदात् तच्च भूषणमेव न दूषणम् । तस्यानुप्रासविशेषविषयत्वेनेष्टत्वाद् । यथा—

---

व्यक्तिविवेकव्याख्यानम् ।

कर्त्तव्य इति ।

एवमुद्देशक्रमेण क्रमभेदं विमृश्य पौनरुक्त्यं विचारयितुमाह पौनरुक्त्यमिति । इह खलु द्विविधं पौनरुक्त्यं शब्दपौनरुक्त्यमर्थपौनरुक्त्यं चेति । तदुक्तमक्षपादमुनिना—"शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादाद्" इति । तत्र शब्दपौनरुक्त्यमर्थापौनरुक्त्ये न दोषः, अर्थपौनरुक्त्येन दुष्टत्वे अर्थस्यैव प्रयोजकत्वात् । अर्थपौनरुक्त्यमेवैकं पौनरुक्त्यं न शब्दपौनरुक्त्यमिति समुदायार्थः । आर्थमिति अर्थाश्रितम् । एवं शाब्दमित्यत्रापि वाच्यम् । यदुक्तमिति वादन्याये ।

हसतीति एको हसतिशब्दः शत्रन्तः स्वामिविशेषणम्, अपरः क्रियापदम् । एवमुत्तरत्र वाच्यम् । यन्त्रमिति । अभेदोपचारेण भृत्यस्य निर्देशः कृतानुकारित्वात् ।

अन्यत्र तात्पर्यभेदादिति तात्पर्यभेदे हि स्वरूपार्थाविशेषे लाटानुप्रास इष्टः । तदुक्तम्—

"स्वरूपार्थाविशेषे हि पुनरुक्तिः फलान्तराद् ।
शब्दानां वा पदानां वा लाटानुप्रास इष्यते ॥" इति ।

मधुसूदनीविवृतिः ।

व्युत्पन्नसर्वसाधारणो भवतीति सारः ।

अथेदानीं क्रमप्राप्तं पौनरुक्त्यमालोचयितुमाह—पौनरुक्त्यमिति । अयमाशयः । पौनरुक्त्यं द्विधा शब्दकृतम् अर्थकृतम् । तत्र शब्दकृतं च तस्यैव शब्दस्य पुनरभिधाने यथा घटो घटः इति । अर्थकृतं च यत्र सोऽर्थः पूर्वमन्येन शब्देनोक्तः पुनः पर्यायान्तरेण उच्यते—यथा घटः कलश इति । तत्र अर्थपुनरुक्तादन्यच्छब्दपौनरुक्त्यं नोपपद्यते । अर्थबोधनयैव शब्दः प्रयुज्यते तत्र यावन्त एवार्थाः शब्दास्तावन्त एव इति अर्थभेदेन शब्दभेद इति दर्शनाच्चेति शब्दानामर्थाधीनत्वमिति न शब्दस्य पौनरुक्त्यं स्वातन्त्र्याभावादिति ।

कश्चिद्दोष इति । कश्चिद्दोषो नेति समन्वयः । शब्दसाम्यं तु प्रत्युत अलङ्कारप्रयोजकतया गुणमेवेति भावः ।

हसतीति । एकं शत्रन्तं स्वामिविशेषणम् अपरं क्रियापदमिति बोध्यम् ।

तद्भेदेतु अर्थाभेदेतु अर्थैक्ये तु इत्यर्थः । अन्यत्र तात्पर्यभेदादिति ।

"वस्त्रायन्ते नदीनां सितकुसुमधराः शक्रसङ्काश ! काशाः
काशाभा भान्ति तासां नवपुलिनगताः श्रीनदीहंस ! हंसाः।
हंसाभोऽम्भोदमुक्तस्फुरदमलवपुर्मेदिनीचन्द्र ! चन्द्र-
श्चन्द्राभः शारदस्ते जयकृदुपगतो विद्विषां काल ! कालः॥" इति।

उभयाभावे तु पौनरुक्त्यं दूषणमेव यथा 'जिक्षुर्विसान्धृतविकासिविसप्रसूना' इति। सर्वनामपरामर्शस्य ह्ययं विषयो विसार्थो न स्वशब्दस्य। न च घासक्रियाकर्मभावाभिधानपरः प्रथमो विसशब्दः परश्च प्रसूनसम्बन्धाभिधानपर इत्यत्रापि तात्पर्यभेद इत्याशङ्कनीयम्। स्वार्थमभिदधत एव हि शब्दस्यार्थान्तरप्रतीतिप्रावण्यं तात्पर्यमुच्यते। न चात्रैतत् सम्भवति उक्तयोरर्थयोरभिधेयतयार्थान्तरत्वाभावात्।

व्यक्तिविवेकव्याख्यानम्।

शक्रसङ्काशेति श्रीनदीहंसेति मेदिनीचन्द्रेति विद्विषां कालेति च चत्वार्यामन्त्रणानि। अत्र तात्पर्यभेदः स्फुट एव। तथा चैकः काशशब्दो वस्त्राणामुपमेयत्वेन स्थितः, अन्यस्तु हंसानामुपमानत्वनेति भिन्नम् तात्पर्यम्। एवमन्यदपि योजनीयम्।

उभयाभावे इति अर्थभेदस्य तात्पर्यभेदस्य चाभाव इत्यर्थः। न च घासेति कर्मत्वेन सम्बन्धित्वेन चास्तु तात्पर्यभेद इत्यर्थः। एतन्न चेति निषिध्यते। स्वार्थमिति। एतदुक्तं भवति—न स्वार्थाभिधानमेव तात्पर्यम् अपि तु सत्येव स्वार्थाभिधानेऽधिकमर्थान्तरोन्मुखत्वं तात्पर्यं, यथा काशशब्दयोः। तत्र काशत्वजात्यवच्छिन्नद्रव्यप्रतिपादनादतिरिक्त उपमानोपमेयभावः प्रतिपाद्यते। न चैवं विसशब्दयोः। नह्यत्र विसत्वावच्छिन्नद्रव्यातिरिक्तं किञ्चिद्वस्तु प्रतीयते। यत्तु कर्मत्वं सम्बन्धित्वं च

मधुसूदनीविवृतिः।

अर्थैक्ये तात्पर्यभेदे तु लाटानुप्रासस्य आचार्यैरभ्यनुज्ञातत्वात्। अनुप्रासविशेषो लाटानुप्रासः तस्य विषयः स्थलम्।

वस्त्रायन्ते इति। शक्रसंकाश ? श्रीनदीहंस ? मेदिनीचन्द्र ? विद्विषां काल ? इत्येषां चतुर्णां सम्बोध्यतया अर्थभेदः स्पष्ट एव। काशा हंसाः चन्द्रः काल इत्येषां च उपमेयत्वम्। काशाभाः हंसाभाः चन्द्राभः इत्यत्र तेषां त्रयाणां उपमानत्वमिति तात्पर्यभेदः।

उभयाभावेत्विति। अर्थभेदस्य तात्पर्यभेदस्य चेत्युभयोरभावे तु।

नचेति। तात्पर्यभेद इति न आशङ्कनीयमित्यन्वयः। अयमाशयः। ननु यस्य न सविधे दयितेत्यादिषु उदाहरणेषु अन्वयभेदादेव शब्दार्थयोः पौनरुक्त्ये "शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः" इति लाटानुप्रासलक्षणं तात्पर्यपदघटितम् सङ्गमितमन्यैरिति तात्पर्यमन्वयः। तथा जक्षुर्विसानित्यत्र तदस्त्येव तत्कथमुच्यते

तदुक्तम्—

"सर्वनामपरामर्शयोग्यस्यार्थस्य यत्पुनः ।
स्वशब्देनाभिधानं सा शब्दस्य पुनरुक्तता ॥
प्राधान्यमथ सम्बन्धिनिबन्धो योग्यता द्वयी ।
नातः समासगस्यापि परामर्शोऽस्य दुष्यति ॥"

व्यक्तिविवेकव्याख्यानम् ।

तदभिधेयस्यैव तथावस्थानं नोद्रेकेणान्यतामावहतीति स्वशब्दपरिहारेण सर्वनामपरामर्शस्यैव विषयो न्याय्य इति । ननु पुनरुक्तं किमुच्यते? यत्र तत्प्रयोगं विनार्थप्रतीतिः यत्र च तत्समानपदान्तरप्रयोगोऽवश्यमुपयुज्यत, तत्र कथं पुनरुक्तत्वम् । यत्रैकार्थेन प्रतीतिर्न तात्पर्यभेदः, तत्र पुनरुक्तत्वं प्रतीतिवैरस्यापादनात् । यत्र तु तत्समानं पदान्तरमुपयुज्यतां मा वा सर्वथा तत्प्रयोगकृतं वैरस्यं पौनरुक्त्यप्रयोजकमिति तदाश्रयेणायं दोष उक्तः ।

सर्वनामेति 'जक्षुर्विसमि'त्यत्र निर्दिष्टं विसमुत्तरत्र प्रसूनसम्बन्धित्वेन सर्वनामपरामर्शार्हं सद्यत् स्वशब्देनोक्तं, तत् शब्दपुनरुक्तम् । यद्यप्यर्थपुनरुक्तमेवैकं पुनरुक्तं प्रागुक्तं, तथापि शब्दस्य पुनरुक्ततेत्युक्तम् अर्थमुखेनैव शब्दस्यापि पुनरुक्ततेत्यभिप्रायेण ।

'सर्वनामपरामर्शयोग्यस्ये'ति निर्दिष्टां योग्यतां विभक्तुमाह प्राधान्यमिति । द्विविधं परामर्शयोग्यत्वं शाब्दमार्थं चेति । तत्र यस्मिन् परामृश्यस्य स्वातन्त्र्येण कर्तृत्वादिना निर्देशेन प्राधान्यं तत्र शाब्दम् । यत्र पुनः परामृश्यस्यान्यः कश्चित्

मधुसूदनीविवृतिः ।

विसयोः पौनरुक्त्ये दूषणमिति चेन्न । स्वार्थाभिधानमेव न तात्पर्यपदार्थः किन्तु स्वार्थाभिधाने सति अर्थान्तरप्रत्यायनोन्मुखत्वं नाम तात्पर्यपदार्थः यथा—काशादिशब्देषु । तत्र तैः काशत्वाद्यवच्छिन्नपदार्थाभिधानादर्थान्तरमुपमानोयमेयभावः प्रतिपाद्यते । नत्वेवं विसशब्दयोः अत्र तु विसत्वावच्छिन्नं विसवस्तु एव प्रतीयते न वस्त्वन्तरम् । यच्च कर्मत्वं सबन्धित्वं तन्नार्थान्तरम् । कर्मत्वाद्यभावे अन्वयस्यैवासम्भवात् । अतोऽयं सर्वनामपरामर्शस्यैव विषयः समुचितः इति । उक्तयोरर्थयोः कर्मत्वसम्बन्धित्वयोः ।

सर्वनामपरामर्शेति । यथा जक्षुर्विसमित्यत्र उक्तं विसमुत्तरत्र प्रसूनसम्बन्धितया सर्वनाम्ना परामर्शयितुं योग्यं सदपि यत् स्वेन विसशब्देनोक्तं तत् शब्दपुनरुक्तम् । यद्यपि पूर्वं केवलमर्थपुनरुक्तत्वमेवसाधि तथापि अर्थमुखेनव शब्दस्य पुनरुक्ततेत्यभिप्रायः । अत एव शब्दस्य पुनरुक्ततेत्युक्तमिति ।

ननु सत्यमुच्यते सर्वनामपरामर्शयोग्योयमर्थः द्वितीयविसादिः परन्तु धृतविकासिविसप्रसूनाः इत्यस्य समासेन ऐकपद्यात् विसस्य च तदन्तर्गततया एकदेशत्वमेव ततश्च पदार्थः पदार्थेन अन्वेति न पदार्थैकदेशेनेति तस्य परामर्शे व्युत्पत्तिदोष एवेत्याह—नातः समासगस्यापीति । अयं भावः । पदार्थेषु द्विविधा योग्यता

इति । द्विविधा हि योग्यता शाब्दी चार्थी च । तत्र शब्दस्य प्राधान्ये सति शाब्दी साक्षात्परामृश्यार्थप्रतीतेः । यथा—

"चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदस्तमपि वल्लभसङ्गः ॥"

इति । विपर्यये त्वार्थी । सम्बन्धिप्रतीतिमुखेन तत्प्रतीतेः । यथा—

"भाति सितभूतिलिप्तः शशाङ्कमौलिस्तदंशुनिचित इव"

इति । अत्र हि शशाङ्कसम्बन्धिनामंशूनां निबन्धस्तत्परामर्शयोग्यता । स हि समासे गुणीभूतः । यथा वा—

"जयति निशापतिमौलिर्दग्धमहाकालविभ्रममजस्रम् ।
तत्तमसामिव लक्ष्म्या कण्ठविषच्छायया च्छुरितः ॥"

व्यक्तिविवेकव्याख्यानम् ।

सम्बन्धित्वेन निर्दिश्यते तन्त्रार्थम् । तत्र हि सम्बन्धिनं प्रति अस्योपयाग एव योग्यत्वम् । तथा चैकमुदाहृतम् ।

सम्बन्धिप्रतीतिमुखेनेति । अत्र सम्बन्धी हरः तस्य मौलिद्वारेण शशाङ्कसम्बन्धित्वात् । तत्प्रतीतिमुखेन चात्र शशाङ्कः प्रतीयते न तु 'चारुता वपुरि'त्यादौ चारुतादेरिव साक्षादेव शशाङ्कस्य प्रतीतिः ।

शशाङ्कसम्बन्धिनामिति । अत्र 'सन्बन्धिनिबन्ध' इति कारिकायां यः सम्बन्धी उक्तः, स निर्दिष्टः । तथा चात्रांशवः सम्बन्धित्वेन निर्दिष्टाः । तत्परामर्शयोग्यतेति तच्छब्देन परामृश्यः शशाङ्को निर्दिष्टः ।

मधुसूदनीविवृतिः ।

भवति । प्रधानतया निबन्धनविषयिणी सम्बन्धितया च । अतः समासगस्याऽपि अस्य अर्थस्य सम्बन्धिनो निर्देशात् सम्बन्धितया सर्वनाम्ना परामर्शो ग्रहणं न दुष्यति । सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्येत्यभियुक्तोक्तेस्तादृशव्युत्पत्तिस्वीकारादिति ।

शाब्दीति । अत्र शाब्द्यां योग्यतायां परामर्शयितुं योग्योऽर्थः प्राधान्येन साक्षात्प्रतीतो भवति । आर्थ्यां सोऽर्थः सम्बन्धिद्वारा । तत्र चारुता वपुरभूषयदित्यत्र चारुत्वादीनां कर्तृत्वादिना प्राधान्येन निर्देशे साक्षात्प्रतीतिः । भातिसितभूतिलिप्तः शशांकमौलिस्तदंशुनिचित इवेत्यत्र च शशांकस्य स्वप्रतिपादकत्वरूपसम्बन्धवत्पदेन गुणीभूता प्रतीतिः सम्बन्धितया वर्त्तते । तथाचात्र पदे योग्यता सम्बन्धिनं प्रत्युपयोग एवेति सारः । विपर्यये साक्षादर्थप्रतीत्यभावे । सम्बन्धिप्रतीतिमुखेन सम्बधिनः अंशोः प्रतीतिद्वारा । कस्यायमंशुः इति गवेषणया अंशुद्वारा शशाङ्कस्य प्रतीतिः । स हि शशांको हि समासे मौलिपदेन सह समासे । तस्य शशांकस्य परामर्शे योग्यता तत्परामर्शयोग्यता ।

जयति निशापतीति । कण्ठगतविषस्य छायया तस्या निशायाः तमसां लक्ष्म्या

इति। अत्र हि निशासम्बन्धिनां तमसां निबन्धो योग्यता । सा हि गुणीभूतस्यापि गुणीभूता ।

सम्बन्धिनिबन्धाभावे त्वसमासगतस्यैव तस्य योग्यता यथा—

"जयति जगत्रयजनको नगेन्द्रसुतया निरुद्धदेहार्धः ।
सा च भुवनैकजननी यया विना सोऽपि हि विहस्तः ॥"

इति । समासगतस्य यथात्रैव नगेन्द्रतनयेति पाठे ।

अयं च योग्यायोग्यत्वविवेको न सर्वजनसंवेदनीय इति प्राधान्यमेव तावत् प्रथमं योग्यतालक्षणं तदभावे तत्सम्बन्धिनिबन्ध इत्युभयं

व्यक्तिविवेकव्याख्यानम् ।

सा हि गुणीभूतस्येति । हरमन्यपदार्थं प्रति निशापतिर्गुणीभूतः । तस्यापि निशा गुणीभूता ।

सा च भुवनेति । अत्र न नरेन्द्रतनयायाः सम्बन्धी निर्दिष्टः । अपि तु सा चेत्यनेन स्वरूपम् निर्दिष्टम् । विहस्तो न क्वचिच्छक्तः ।

समासगतस्येति परामृश्यस्येति सम्बन्धः । तत्र हि परामृश्यस्य समासे गुणीभावात् सम्बन्धिनश्चानिर्देशात् परामर्शो न न्याय्यः ।

न सर्वजनसंवेदनीय इति । अस्यार्थः—"यथास्मै रोचते विश्वं तथेदं परिवर्तत" इति न्यायेनात्रातिप्रौढतया ग्रन्थकारो निजायत्तां पदार्थव्यवस्थां कर्त्तुमारब्धः, येन 'तदंशुनिचित' इति 'तत्तमसाम्' इति च शशाङ्कस्य निशायाश्च तच्छब्देन परामर्शमघटमानमपि समर्थयते, 'जक्षुर्बिसं धृतविकासिविसप्रसूना' इत्यत्र च विसप्रसूनशब्दस्य संज्ञापदस्यापि विसशब्दाश्रयेण सूक्ष्मेक्षिकया पौनरुक्त्यं दोषमुद्भावयति । न चैतत् समर्थनं हृदयहारि, यस्माच्छशाङ्कमौलिरिति च निशापतिमौलिरिति च संज्ञाशब्दावेतौ । संज्ञाशब्दानां च विद्यमानस्याप्यर्थानुगमस्य न प्रयोजकत्वं रूढेः प्राधान्यात् । ततश्चात्र न शशाङ्कार्थो न निशार्थः कश्चित् । किन्तूपायमात्रेणैतावर्थावाश्रित्य संज्ञिविशेष एवात्र विवक्षितः । एवञ्च संज्ञ्यन्तर्गतयोः शशाङ्कनिशयोस्तच्छब्दपरामर्शो न सहृदयहृदयान्यावर्जयतीति हठसमर्थनमेतत् । किं च शशाङ्कमौलिरित्यत्र वरं शशाङ्कस्य भवतु सर्वनाम्ना परामर्शः तस्य वक्राकृतेस्तत्र सन्निहितत्वात्, निशाप-

मधुसूदनीविवृतिः।

इव छुरितः संगतः। स्पष्टमन्यत्। सा हि निशा हि गुणीभूतस्यापि मौलिपदेन सह समासे निशापतिपदस्य न्यग्भूतस्याऽपि गुणीभूता पतिपदेन सह तस्याः समासात्।

सम्बन्धिनिबन्धेति । योग्यता शाब्दी इत्यर्थः। समासगतस्य नरेन्द्रतनयया निरुद्धो देहार्धो यस्य पार्वतीरूपार्थस्य । परमत्र सम्बन्धिनोऽनिर्देशे हि समासे गुणीभूतस्य परामर्शोऽनुचित एव स्यादिति बोध्यम् ।

इतरथा द्विविधयोग्यतयोरभावे तस्य परामृश्यवस्तुनः प्रतीतेरभावादित्यर्थः ।

योग्यतालक्षणमुक्तम् इतरथा तत्प्रतीतेरसम्भवात् ।

व्यक्तिविवेकव्याख्यानम् ।

तिमौलिरित्यत्र तु निशायाः परामर्शः पापात् पापीयान् निशापतेरेवोक्तक्रमेण तत्र सन्निहितत्वात् । निशाथा उपलक्षणमात्रत्वेनोपयोगिन्यास्तत्र सम्भवाभावात् । यत्र च तस्या एव न सम्भवस्तत्र का वार्ता तमसाम् । तदयम् 'अन्धो मणिमविन्दत् । तमनङ्गुलिरावयद्' इति न्याय आयातः । अपि च यत्र प्रसारितानुगमेन शब्देन संज्ञिनः प्रत्यायनं क्रियते, परं तत्रानुगमोत्कर्षाद् भवति सर्वनामपरामर्शः । यथा—

"उत्सवाय जगतः स जायतां रोहिणीरमणखण्डमण्डनः ।
तत्प्रभाभिरिव पूरितं वपुर्भाति यस्य सितभस्मगुण्ठितम् ॥"

इति । अत्र हि पदव्यापिनी संज्ञान्वर्थत्वमेवोत्कर्षयति । तेनात्र परामर्शो नाप्रतीतिकरः । प्रकृते तु तादृश्यपि गतिर्नास्ति । आस्तां वा प्रकृतम् । अत्रापि हि रोहिणीरमणेत्यादौ यदि सूक्ष्मेक्षिका क्रियते तदा संज्ञाप्राधान्यात् तदंशस्य सर्वनामपरामर्शो नादुष्टतां भजते । प्रकृते तु पापात् पापीयान् परामर्शः । कृतं चात्र समर्थनं ग्रन्थकृता । तदेतदस्य विषमगणनीयं मन्यमानस्य स्वात्मनः सर्वोत्कर्षशालिताख्यापनमिति ।

ग्रन्थकर्त्तुः पुनरयमाशयः—इह तु द्विविधाः संज्ञाशब्दाः रूढा योगरूढयश्च । तत्र रूढानामर्थानुगमाभावात् तदनुसरणं न कर्त्तव्यम् । ये तु योगरूढयस्तेषां यदि योग उत्कटतां भजते तदाश्रयो व्यवहारो न दुष्यति । अत एव निमित्तबलेन प्रवृत्तस्य शब्दस्य निमित्तान्तर्भावे प्रयोगः सौगतैर्निषिद्ध एव । यदाहुः—

"नैमित्तिकाः श्रुतेरर्थमर्थं वा पारमार्थिकम् ।
शब्दानामनुरुधानो न वाधस्तेन वर्णितः ॥"

इति । एवं स्थिते योगाश्रिते व्यवहारे यदि संज्ञावयवभूतार्थस्याव्यभिचारी कश्चित् प्रतिपिपादयिषितः स्यात् तदा तदभिसम्बन्धाय तस्यावयवस्य सर्वनामपरामर्शो न दुष्टः । यदुक्तम्—'सर्वनाम्नानुसन्धिर्वृत्तिच्छन्नस्य' ( का० सू० ५-१-११ ) इति । मौलिरित्यत्र शशाङ्काव्यभिचारिणो रक्ष्मयः सम्बन्धित्वेन प्रतिपादिताः । निशापतिमौलिरित्यत्र निशाव्यभिचारीणि तमांसि । तेषां चावास्तवत्वमपि न तथा दुष्टम् उत्प्रेक्षागोचरत्वेन प्रतिपादितत्वात् । केवलं पूर्वत्र संज्ञिसम्बन्धी परत्र तु सम्बन्धिसम्बन्धी परामृष्ट इति विशेषः । तदेवं यौगिकानां संज्ञाशब्दानां योगनिमित्तो व्यवहारः क्वचित् क्वचित् सुव्यवस्थित एव । यत्तु 'कुर्यां हरस्यापि पिनाकपाणेः'रित्यत्र पिनाकपाणिपदस्य संज्ञाशब्दस्य सतोऽर्थानुगमो निवारयिष्यते येन संज्ञावगमार्थं हरशब्दः प्रयुक्तः, तत्रार्थानुगमाभावप्रतिपादनपरेण, किन्त्वनुगम्यमानस्यार्थस्य संरम्भास्पदत्वेन विवक्षिततवं पृथक् संज्ञापदप्रयोगमन्तरेण न निर्वहति संज्ञार्थ-

अत्र तु सत्यपि सम्बन्धिनिबन्धने यत् पुनः स्वशब्देनाभिधानं तच्छब्दपुनरुक्तमिति। तेन 'जक्षुर्विसं विकचमस्य दधुः प्रसूनमित्यत्र' युक्तः पाठः।

एवञ्चार्थप्रक्रमभेददोषोऽपि परिहृतो भवति। तच्चानेकप्रकारं सम्भवति। प्रकृतिप्रत्ययोभयपदवाक्यविषयत्वात्। तत्र प्रकृतिविषयं यथा—

"अश्वीयसंहतिभिरुद्धतमुद्धुराभिर्भूरेणुजालमखिलं वियदाततान।"

इति। अत्र हि समूहार्थायाः प्रकृतेः संहतेश्च पौनरुक्त्यम्। प्रत्ययविषयं यथा—'विसकिसलयच्छेदपाथेयवन्त' इति' 'त्वगुत्तरासङ्गवतीमधीतिनी' मिति च। अत्र हि मत्वर्थीयस्य पौनरुक्त्यं, बहुव्रीहिसमाश्रयेणैव तदर्थावगतिसिद्धेः। यदाहुः—"कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रक्रमस्य इति।

## व्यक्तिविवेकव्याख्यानम्।

स्यार्थानुगमस्य च युगपत् प्राधान्याभावादिति द्वयप्रयोग एवंविधेषु स्थानेषु शस्यत इत्यभिप्रायेण। प्रकृते वस्तुस्वरूपमात्रप्रतिपादने संज्ञाशब्दत्वेऽप्यर्थानुगमानुसरणमव्याहतमिति।

इतरथेति उभयविधयोग्यताभावे परामृश्यप्रतीतेरभावादित्यर्थः। अत्र त्विति। 'जक्षुर्विसमि'त्यत्र। सम्बन्धिनः प्रसूनस्य निबन्धने उपादाने।

आर्थ इति। क्रियाकारकभावस्याख्यातपदवाच्यत्वेन शाब्देन क्रमेण प्रस्तावेऽत्र विशेषणद्वारेण समासेन प्रतीतेरार्थत्वम्। तच्चानेकप्रकारमिति तच्छब्देन पौनरुक्त्यं परामृष्टम्। संक्षेपेण पञ्चप्रकारं पौनरुक्त्यं निर्दिश्यते।

अश्वीयेति। अत्र 'केशाश्वाभ्यां यञ्छौ' (४. २. ४८) इति समूहेऽर्थे छप्रत्ययः संहतिशब्दश्च भिसः प्रकृतित्वेन निर्दिष्टौ पुनरुक्तौ। अश्वैरित्येव हि वाच्यम्। विसेति 'विसकिसलयच्छेदपाथेया' इति 'त्वगुत्तरासङ्गाम्' इति च वाच्यम्। बहुव्रीहीति मत्वर्थे बहुव्रीहिविधानम्। कर्मधारयमत्वर्थीयाभ्याम् इति। कर्मधारयमत्वर्थीयौ समुच्चयेनावस्थितौ वृत्तिलाघवाद् बहुव्रीहिणा बाध्येते इत्यर्थः।

## मधुसूदनीविवृतिः।

अत्र त्विति। जक्षुर्विसमित्यत्र। सम्बन्धिनः प्रसूनस्य निबन्धने सति। आर्थप्रक्रमेति। एतदस्माभिः पूर्वमेव व्याख्यातम्। तच्च पौनरुक्त्यं च।

अत्र हीति समूहार्थायाः प्रकृतेरिति। अत्र "केशाश्वाभ्यां यञ्छौ" इति समूहेऽर्थे छप्रत्यये अश्वीयम् सिद्धम्। अत्र छप्रत्ययेनैव समूहार्थे प्रतिपादिते पुनः संहतिपदोपादानं पुनरुक्तमेव। समूहोऽर्थो यस्याः तस्याः संहतेः प्रकृतेः भिस्प्रत्ययप्रकृतेः पौनरुक्त्यम्। चात् अश्वैरित्येव कार्यसिद्धे छप्रत्ययस्याऽपि पौनरुक्त्यम्।

विसकिसलयच्छेदपाथेयाः "त्वगुत्तरासंगाम्" इति वाच्यम्।

"मतोर्भूमादयो येऽर्थास्तेऽप्यस्त्यर्थानुयायिनः ।
गम्याः प्रकरणादिभ्य इति नोदाहृताः पृथग् ॥"

इति । यथा वा 'वासो जाम्बवपल्लवानि जघने गुञ्जास्रजो भूषणम्' इति । 'तदीयमातङ्गघटाविघट्टितै' रिति । 'येनाकुम्भनिमग्नवन्यकरिणां यूथैः पयः पीयते' इत्यादौ तद्धितप्रत्ययस्य पौनरुक्त्यं षष्ठीसमासाश्रयेणैव तदर्थावगतिसिद्धेः ।

यत्र त्वर्थान्तरे तद्धितस्योत्पत्तिर्न तत्र समासात् तत्प्रतीतिरिति न तस्य पौनरुक्त्यम् । यथा—

व्यक्तिविवेकव्याख्यानम् ।

ननु—

"भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥"

इति बहवो भूमादयोऽर्था अस्त्यर्थमनुगच्छन्तो मत्वर्थीयताविषयत्वेनोक्ताः । ते किमिति न बहुव्रीहिवाच्यत्वेनोक्ताः इत्याह मतोरिति । मतुब्ग्रहणं मत्वर्थीयानामुपलक्षणम् । भूमादयो ह्यर्था न केवलेभ्यो मतुबादिभ्यः प्रतीयन्ते, किन्तु प्रकरणादिसहायेभ्यस्तेभ्य इति न मतुबादिविचारेणादोह्रियन्ते, नान्तरीयकतया तेषां गतत्वात् ।

जाम्बवेति तदीयेति वन्येति च तद्धितप्रत्ययस्य पौनरुक्त्यम् । जम्बूपल्लवानीति, तन्मातङ्गेति, वनकरिणामिति च षष्ठीसमासेनैव तद्धितकर्मधारयलक्षणवृत्तिद्वयार्थप्रतीतेः ।

मधुसूदनीविवृतिः ।

ननु—

भूमनन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेस्तिविवक्षायां भवन्ति मतुबादयः ॥ इत्येव मुक्त

भूमाद्यर्थंमतुपो विचारः कुतो नोपक्रान्त इत्याह—मतोरिति । अयमाशयः भूमादयोऽर्था प्रकरणादिसहायेन मतुपा गम्याः न केवलेन । अस्ति च तेषां अस्त्यर्थानुयायित्वमिति न ते पृथग् विवेचिताः इति । अत्र मतोरिति मत्वर्थीयानामुपलक्षणम् ।

जाम्बवेति तदीयेति वन्येत्यत्र च तद्धितस्य पुनरुक्तिः तं विनैव षष्ठीसमासेनैव कार्यसिद्धेः ।

यत्रत्विति । अयमुपरि निर्दिष्टो विचारः इदमाद्यर्थकतद्धितप्रत्यये बोध्यम् । अर्थान्तरे अपत्यार्थप्रभृतिषु तु समासात्तत्प्रतीतेरभावात् प्रत्ययः उचित एव । इति हेतोस्तस्य तद्धितप्रत्ययस्य पौनरुक्त्यं न दोषः । कथंचित्कारणेन तदर्थस्य प्रतीतौ सत्यां पुनरुक्तिर्भवेत्तदा दोषोऽपि स्यात् सैव नास्ति कुतो दोषः इति भावः ।

'अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः'

इति। अत्र ह्यपत्यार्थे तद्धितोत्पत्तिर्नेदमर्थ इति। उभयविषयं यथा—

"छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्" अत्र हि समूहार्थायाः प्रकृतेर्बहुवचनस्य चोभयोः पौनरुक्त्यम्। पदविषयं यथा—

"दलत्कन्दलभाग् भूमिस्सलम्बाम्बुदमम्बरम्।
वाप्यः फुल्लाम्बुजयुजो जाता द्रष्टेर्विषं मम॥"

इति। अत्र हि भजिस्सहशब्दो युजिश्च पुनरुक्तार्थः पूर्ववद् बहुव्रीहिसमासाश्रयणेनैव तदर्थावगतेः।

यत्र च विशेषणाद्विशेष्यमात्रप्रतिपत्तिरिष्यते तत्र तदुक्तेः पौनरुक्त्यं

---

व्यक्तिविवेकव्याख्यानम्।

वार्त्रघ्नेति वृत्रघ्न इन्द्रस्यापत्यमत्र विवक्षितं, नेदमर्थ इति नात्र तद्धितस्य पौनरुक्त्यम्।

**समूहार्थाया** इति। 'ग्रामजनबन्धुसहायेभ्य' इति (४-३-७.) समूहे तल्प्रत्ययः। अत्र जनशब्देनैव समूहार्थप्रतीतेस्तल्प्रत्ययरूपायाः प्रकृतेर्बहुवचनस्य प्रत्ययस्य च पौनरुक्त्यम्। पूर्ववदिति दलत्कन्दलेति लम्बाम्बुदमिति फुल्लाम्बुजा इति च बहुव्रीहिणैव भजत्यर्थादीनां प्रतीतेः पुनरुक्तत्वम्।

**विशेष्यमात्रेति** विशेष्यस्याविशिष्टविशेष्यरूपतया विशिष्टविशेष्यरूपतया वा प्रतीतिः। तत्र विशिष्टविशेष्यरूपतया प्रतीतौ तत्र विशेषणमात्रादेव विशेष्यस्यैव

मधुसूदनीविवृतिः।

**अथ भूतानीति**। वार्त्रघ्नशरेभ्यः। जयन्तबाणेभ्यः। अत्र हि अपत्यार्थे वृत्रघ्नः इन्द्रस्यापत्यं पुमानिति तद्धितस्य अणः उत्पत्तिः नेदमर्थे। इति पौनरुक्त्यं नास्ति तद्धितस्य।

**छायामपास्येति**। माघीयं पद्यम्। अत्र जनता इति बहुबचनान्तपदे जना इति पदमपि कार्यकरं स्यात्ततश्च जस्प्रत्ययप्रकृतेः, समूहार्थकस्य तलः तथा जसिति प्रथमाबहुवचनस्य प्रत्ययस्य चेत्युभयोः पौनरुक्त्यम्।

**दलत्कन्दलेति**। लम्बैः विस्तृतैरम्बुदैर्मेघैः सहितं सलम्बाम्बुदम्। पूर्ववदिति मत्वर्थीयस्थलोक्तवत्। दलत्कन्दला लम्बाम्बुदम् फुल्लाम्बुजा इति रीत्या बहुव्रीहिसमासस्य आश्रयणेनैव तदर्थावगतेः भजत्याद्यर्थप्रतीतेः भज्यादिः पुनरुक्तार्थः।

**विशेष्यमात्रप्रतिपत्तिरिति**। अयं भावः। विशेषणेन विशेष्यस्य प्रतीतौ द्विधा स्वरूपम्। क्वचिदनन्यसाधारणविशेषणमहिम्ना क्वचिच्च साधारणविशेषणमहिम्ना। तत्र अनन्यसाधारणविशेषणमहिम्ना विशेष्यप्रतीतौ सत्यां यद् विशेष्यपदो-

यथा—"पायात् स शीतकिरणाभरणो भवो वः" इत्यत्र भवशब्दस्य ।
यथा वा—

"चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ।"

इत्यत्र नागेन्द्रेन्द्रवाहनशब्दयोरेकतरस्य ।

यत्र तद्विशेषप्रतिपत्तिर्न तत्र पौनरुक्त्यम्—

"तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यपि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

प्रतीतिः तत्र विशेष्यप्रयोगो न दुष्यति यथा 'तव प्रसादादि'त्यत्र वक्ष्यते ।

भवशब्दस्येति शीतकिरणाभरण इत्यनेनैव प्रतीतत्वाद् भवार्थस्य, यथा 'निधानगर्भामिव सागराम्बराम्' इत्यत्र सागराम्बराशब्देन मेदिन्याः ।

चमूरुर्मृगविशेषः । कुथः वर्णकम्बलः । एकतरस्येति इन्द्रवाहनशब्दप्रयोगे कुथसामर्थ्यान्नागेन्द्रप्रतीतिर्नागेन्द्रशब्दप्रयोगे च शुक्लवर्णस्य वर्णितत्वाद् इन्द्रवाहनप्रतीतिरित्येकतरस्यैव प्रयोगो न्याय्यः । यत्र तदित्यादिना विशिष्टविशेष्यरूपतया विशेष्यप्रतिपत्तिमुदाहरति ।

तद्विशेषः विशेष्यगतो विशेषः ।

मधुसूदनीविवृतिः ।

पादानं तद् दुष्टम् । यथाऽत्रैव पायात्स शीतकिरणाभरणः इति । शीतकिरणाभरणः चन्द्रशेखरः भव एव नान्यः अतो भवपदोपादानं दुष्टम् । यत्र तु साधारणविशेषणमहिम्ना ज्ञातार्थस्य विशेष्यस्य पुनः प्रयोगः स न दुष्टः यथा—कुर्यां हरस्याऽपि पिनाकपाणेरित्यत्र । पिनाकपाणिपदेनैव हरस्य प्रतीतौ हरप्रयोगः विशेषोत्कर्षाधायक उचित एवेति ।

चकासतमिति । चमूरुः अजिनोपयोगिमृगविशेषः । कुथः चित्रकम्बलः मारवडप्रदेशे झूल इति प्रसिद्धः । एकतरस्येति नागेन्द्रशब्दप्रयोगे उपक्रान्तस्य शुक्लवर्णस्य अन्यहस्तिन्यभावान् अर्थादेव इन्द्रवाहनत्वस्य प्रतीतिः । इन्द्रवाहनशब्दप्रयोगे च कुथस्य हस्तिधारणयोग्यवस्तुनः अन्यवाहनेषु अभावात् अर्थादेव नागेन्द्रप्रतीतिः स्यात् ।

यत्र तद्विशेषेति । यत्र साधारणविशेषणमहिम्ना विशेष्यस्य प्रतीतौ अपि विशेष्यप्रयोगस्थले तद्विशेषस्य विशेष्यनिष्ठविशेषस्य प्रतिपत्तिर्ज्ञानम् तत्र स्थले तव प्रसादादित्यादौ न पौनरुक्त्यमस्ति ।

तव प्रसादादिति । तव इन्द्रस्य । कुसुमायुधोऽपि तुच्छप्रहरणोऽपीति भावः । मधुं वसन्तम् । पिनाकपाणेः महासहायस्येत्यर्थः । हरस्याऽपि जगज्जिघत्सोरपि । हरशब्दस्येति । अत्र पिनाकपाणेरिति पदेन महासहायवत्वादिद्वारा उत्कर्षाधायकेन च हरगतो विशेषोऽभिधीयते न संज्ञिमात्रमिति न हरस्य पौनरुक्त्यम् ।

 

इति । अत्र हरशब्दस्येति वक्ष्यते ।

अथ यथात्रैव तव प्रसादात् कुसुमायुधोऽपीत्यत्र विशेष्योपादानमन्तरेणाप्युभयार्थप्रतिपत्तिस्तद्वदत्रापि भविष्यतीति । तदयुक्तम् । उत्तमपुरुषेणैवास्मदर्थस्य विशेष्यस्य प्रतिपादितत्वात् तदनुपादानासिद्धेः । यथा च—

"निर्याय विद्याथ दिनादिरम्याद् विम्बादिवार्कस्य मुखान्महर्षेः ।
पार्थाननं वह्निकणावदाता दीप्तिः स्फुरत्पद्ममिवाभिपेदे ॥"

इति । अत्र हि महर्षिमुखार्कविम्बयोर्विद्यादीप्त्योः पार्थाननपद्मयोश्चोपमानोपमेयभावावगतिरेकस्यैवेवशब्दस्य व्यापारः । तथा हि महर्षिमुखाद् विद्या निर्याय पार्थाननमभिपेदे अर्कविम्बादिव दीप्तिः पद्ममित्येवं पदार्थसमन्वये सति सर्वेषामुपमानोपमेयभावोऽभिमतः सिद्ध्यत्येवेति यत् तत्रान्येषां साम्याभिधायिनामुपादानं तत् पुनरुक्तमेव अन्यथा विद्या

---

व्यक्तिविवेकव्याख्यानम् ।

हरशब्दस्येति पिनाकपाणिशब्देन हरगतो विशेषः प्रतिपाद्यते यः सर्वोत्कर्षहेतुत्वेन विवक्षितो न संज्ञिमात्रमित्यर्थः ।

विशेष्योपादानमन्तरेणापीति । कुसुमायुधशब्दोऽपि हि विशेषणमपि विशेष्यमप्यवगमयत्यव्यभिचारात् । न तु तस्य पृथक्प्रयोगः । अत्रापीति पिनाकपाणेरित्यत्र । लिङुत्तमपुरुषेणैवेति 'अस्मद्युत्तमः' ( १-४-१०७. ) इत्यत्र हि स्थानिन्यपीत्यनुवर्तनादप्रयुक्तेऽप्यस्मच्छब्दे तदर्थसम्भवे उत्तमपुरुषो भवत्येव । तदनुपादानं विशेष्यानुपादानम् ।

अन्येषामिति । बहुवचनादीदृक्षु स्थानेष्वेकेनैवेवशब्देन गतार्थत्वाद् अन्येषां प्रयोगो विफल इत्यभिप्रायः । तृतीयस्यापीति वाक्यार्थौपम्यविवक्षायामेक एवेवशब्दः प्रयोक्तव्यः । पदार्थौपम्यविवक्षणे तु यावन्तो विशेष्यभूताः पदार्थास्तावन्त इवशब्दाः प्रयोक्तव्याः । न त्वर्धजरतीयं कार्यमित्यर्थः । एतच्चाभ्युपगमवादेनोक्तम् ।

मधुसूदनीविवृतिः ।

ननु विशेष्यस्य कामस्य उपादानमन्तरेणाऽपि यथा कुसुमायुधः इत्यनेन उभयार्थस्य विशेषणरूपस्य विशेष्यरूपस्य च अर्थस्य प्रतिपत्तिः । तथा अत्रापि पिनाकपाणेरित्यत्रापि उभयार्थप्रतिपत्तिरस्तु का हानिरित्याह–तदयुक्तमिति । कामार्थकपदेन विशेष्यभूतकामस्य उपादानं न कृतं तथाऽपि कुर्यामिति लिङुत्तमपुरुषप्रयोगेण अस्मदर्थः उक्तः स च काम एव । इति विशेष्योपादानमन्तरेणोभयार्थप्रतिपत्तिरिति न सिद्धमिति भावः । तदनुपादानस्य विशेष्यानुपादानस्य असिद्धेः ।

अन्येषामिति । अन्येषामिति बहुवचनेन सामान्योपदेशः । ईदृशेषु स्थलेषु एकेनैव इवशब्देन गतार्थत्वाद् अन्येषां साम्याभिधायिनां प्रयोगो निष्फल एव ।

दीप्तिरिवेति तृतीयस्यापीवशब्दस्य प्रयोगः प्रसज्येतेति 'स्फुरत्पद्मम-भिप्रपेद' इत्यत्र युक्तः पाठः । यथा वा—

"दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव रेखा ।
पुपोष लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि ॥"

इति । यथा च—

'यं समेत्य च ललाटलेखया युञ्जतः सपदि शम्भुविभ्रमम् ।
चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम् ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

न तु सम्भवन्त्यां वाक्यार्थोपमायां पदार्थोपमाः कार्या इत्यस्य पक्षः । तथा च दिनेदिने इत्यादिना दूषष्यति ।

दिने दिने इति । अत्र चान्द्रमस्या लेखाया पार्वत्युपमानं, विशेषाणां तु क-लान्तराणि । विशेषाणां च लावण्यमयानिति विशेषणम् । तत्स्थानीयं कलान्तराणां ज्योत्स्नान्तराणीति । ज्योत्स्नान्तरे येषामिति हि व्याख्या । 'दिनेदिने' इत्यादि पार्वतीन्दुलेखयोः साधारणो धर्मः । न तु कलान्तराणि कर्तॄणि ज्योत्स्नान्तराणि पुष्णातीति साध्वी व्याख्या वचनभेदादिदोषप्रसङ्गात् । अत्र चान्द्रमसीव लेखा कलान्तराणि पुष्णातीत्येकेनैवशब्देन गतार्थत्वे द्वितीयस्येवशब्दस्य पौनरुक्त्यम् ।

यं समेत्येति । अत्र यमित्यस्य चण्डमारुत उपमानं, चेदिपदस्य च प्रदीपः । तुल्यार्थे वतिः । विलोचनप्रशमनादेव शम्भुविभ्रमत्यागः । अत्र च दत्तेऽपि पाठे कर्म-

मधुसूदनीविवृतिः ।

वाक्योपमायामेकेनैव साम्याभिधायिना इवादिपदेन कार्यनिर्वाहे अन्येषां प्रयोगो न कर्त्तव्यः । इति ग्रन्थकर्त्तुराशयः ।

ननु यावन्ति विशेष्याणि तावताम् इवशब्दानाम प्रयोगे पदार्थोपमा उचिता का हानिरित्यरुचेराह—यथा वेति ।

दिने दिने सेति । सा पार्वती । विशेषान् अङ्गविशेषान् । अत्र चान्द्रमस्या लेखाया पार्वत्युपमानम् । विशेषाणां तु कलान्तराणि । विशेषाणां च विशेषणम् लावण्यमयानि । विशेषस्थानीयकलान्तराणां विशेषणं ज्योत्स्नान्तराणीति । दैनंदिनी वृद्धिः पार्वतीन्दुलेखयोः साधारणो धर्मः । एवं च—लब्धोदया सा पार्वती दिने दिने परिवर्द्धमाना चान्द्रमसी रेखा इव कलान्तराणि ज्योत्स्नान्तराणि लावण्यमयान् विशेषान् पुपोष । इत्येवमन्वये जाग्रति "कानिव यथा कलान्तराणि ज्योत्स्नान्तराणि इत्येवं पृथगिव व्याख्या न सुन्दरी । अतश्च एकेनैव इव शब्देन गतार्थतायां द्वितीयस्येवशब्दस्य पौनरुक्त्यम् ।

यं समेत्य चेति । ललाटलेखया शम्भुविभ्रमं ललाटगतरेखया तृतीयनेत्ररूपया शिवसौन्दर्यं युञ्जतः बिभ्रतः चेदिपस्य शिशुपालस्य विलोचनं यं हरिं श्रीकृष्णं समेत्य

अत्रापि 'दैपमर्चिरिव चण्डमारुत' मिति युक्तः पाठः । यथा च—

"नवचन्द्रिकाकुसुमकीर्णतमः कवरीभृतो मलयजार्द्रमिव ।
दद्दशे ललाटतटहारि हरेर्हरितो मुखस्य हिमरश्मिदलम् ॥"

## व्यक्तिविवेकव्याख्यानम् ।

भूतयोरुपमेयोपमानयोर्ललाटलेखयेत्यादिविजातीयपदगर्भितत्वं विकृतपदप्रयोगो वैरस्यं च दुष्परिहरमेव । तेन 'चण्डमारुतनवप्रदीपवद्' इति पाठः श्रेयान् । एवं हि मिशब्दस्थाने नशब्दमात्रकरणेन स्तोकमात्रव्यत्यासेन सौकर्येण दोषपरिहारप्रतीतिः सौन्दर्यं च ।

मलयजार्द्रमिवेति हिमांशुखण्डस्योत्प्रेक्ष्यत्वेनोपनिबद्धमाकाङ्क्षासन्निधिसामर्थ्याल्ललाटतटस्य विशेषणं पर्यवस्यतीति कवेरभिप्रायः । वस्तुतस्त्विवशब्दप्रयोगमन्तरेणापीष्टसिद्धेरिवशब्दः पुनरुक्तः । न चन्द्रखण्डस्य मलयजार्द्रत्वोत्प्रेक्षणे प्रयोजनं किञ्चित् । यत्र चैतद्धि विशेषणमुपयुज्यते, तत्रैवशब्दप्रयोगो व्यर्थः ।

## मधुसूदनीविवृतिः ।

प्राप्य निरवात विनष्टं शशामेत्यर्थः । कमिव प्राप्येत्याह—चण्डमारुतमिव प्रचण्डसमीरणमिव । किंवत् प्रदीपवत् । अत्र श्रीकृष्णचण्डमारुतयोः विलोचनप्रदीपयोः ( परस्परं ) उपमानोपमेयभावः । ततश्च यथा चण्डमारुतं प्राप्य प्रदीपो निर्वाति तथा श्रीकृष्णं दृष्ट्वा चेदिपविलोचनं निरवात् । अन्यत्राऽप्युक्तम्—

शिशुपालः पुरा जातः त्रिनेत्रश्च चतुर्भुजः ।
पितरौ चापि तं दृष्ट्वा हातुं वै चक्रतुर्मतिम् ।
अथोच्चचार नभसो वागेवमशरीरिणी ॥
नैष त्याज्यो महाराज ? श्रीमान् वीरो भविष्यति ।
स चास्य वधको भावी यं दृष्ट्वा न भविष्यतः ॥
वाहू नेत्रं च सहसा तस्माद्वै पाल्यतामयम् ।
कौतुकादथ तं द्रष्टुं नृपाः सर्वे समागमन् ॥
अवाक् पूर्वं नृपोऽर्धाङ्के पुत्रं तेषां न्यवेशयत् ।
नासौ प्राप्तविकारश्च कृष्णादन्यत्र बान्धवात् ॥

अत्र चण्डमारुतमिवेति इवपदस्य प्रदीपवदितितुल्यार्थकस्य वतेश्च द्वयोरुपादानं पुनरुक्तमेव । तस्माद्दैपमर्चिरिव चण्डमारुतमितिपाठः समुचितः प्रतिभाति ।

नवचन्द्रिकेति । नवचन्द्रिका एव कुसुमानि तैः कीर्णं व्याप्तम् तम एव कबरी केशपाशः तां बिभर्त्तीति तद्भृतो हरिहरिन्मुखस्य ललाटतटवद्धारि हिमरश्मिदलं चन्द्रखण्डं मलयजार्द्रमिव ददृशे ।

इन्द्रदिशः अग्रभागे । चन्द्रखण्डं ददृशे तन्मन्ये नायिकाया ललाटतटम् मलयजार्द्रम् इति कवेर्हृदयम् । मलयजार्द्रमिवेत्युत्प्रेक्षया चन्द्रखण्डे न कोऽपि गुण आहितो

इत्यत्रापीवशब्दप्रयोगः पुनरुक्तो हारीत्यनेनैव तदभिन्नाथन तदर्थस्य प्रतिपादितत्वात् । नचोभयोरभिन्नार्थत्वेऽपि हारीत्यस्य पौनरुक्त्यं युक्तं वक्तु तस्य यथास्थानमवस्थानादिवशब्दस्य च विपर्ययेण क्रमभेददुष्टत्वादिति 'ददृशे ललाटतटमिन्द्रदिशो वदनस्य हारि हिमरश्मिदल' मिति वरमत्र पाठो युक्तः । यथा च—

"वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव ।
अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता ॥"

इत्यत्र द्वितीय इवशब्दः पुनरुक्तः । एवं ह्यत्र पाठो युक्तः 'गेयस्य वाङ्मयस्याहो अपर्यन्ता विचित्रता' इति ।

एवमुपमारूपकेऽपिइवशब्दप्रयोगः पुनरुक्तोऽवगन्तव्यः । यथा—

---

व्यक्तिविवेकव्याख्यानम् ।

तदभिन्नार्थेनेति समासे इवार्थगर्भीकरणात् । विपर्ययेणेति ललाटतटनिकटे प्रयोगार्हत्वात् । वरमिति इवशब्दस्य भिन्नक्रमत्वापरिहारादनवतृप्तिः । केवलं हारीत्यस्य समासकरणादिवार्थप्रतीतेरिवशब्दो न पुनरुक्त इति पौनरुक्त्यपरिहारः कृतः । अहो पर्यन्तेति 'ओद्' ( १-१-१५ ) इति प्रगृह्यसंज्ञा ।

उपमारूपकेत्यादिना ।

"अलङ्कारस्य कवयो यत्रालङ्करणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवद्"

मधुसूदनीविवृतिः ।

भाति इति इवशब्दः पुनरुक्तः । इवार्थश्च हारीत्येनन समासे सति प्रतिपाद्यत एवेति ग्रन्थकर्त्तुराशयः । इात ।

अक्षरार्थश्च । तदभिन्नार्थेन इवाभिन्नार्थेन हारीत्यनेन तदर्थस्य इवार्थस्य । उभयोः इवहारिपदयोः । वक्तुं न युक्तम् । तस्य हारिपदस्य । ललाटतटवद् हर्त्तुं शीलमस्येति तत् हारि इत्यत्र शीलार्थप्रत्ययस्य सादृश्यव्यञ्जकत्वं दण्डिनोक्तं तद्यथा—

तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ।
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः । इति ।

तच्च समासे गर्भीकृतं वर्त्तते ।

इवशब्दस्य विपर्ययेणेति । ललाटतटनिकटे इवशब्दोऽपेक्ष्यते प्रयुक्तश्च मलयजार्द्रपदादग्रे इति विपर्ययेण भिन्नाधिकरणतया क्रमभेदाद् दुष्टत्वम् । वरमिति । केवलहारित्यस्य समासाकरणादिवार्थाऽप्रतीतिरितीवशब्दो न पुनरुक्तः ।

एवमुपमारूपकेपीति । उपमायां सत्याम् रूपकम् अर्थात् अलंकारोपरि अलंकारनिर्देशः यत्र कविना कृतः । वक्रोक्तिजीवितकारेण स्वग्रन्थे ।

"निर्मोकमुक्तिमिव गगनोरगस्य लीलाललाटिकामिव त्रिविष्टपविटस्य" इति। यथा च 'शातः श्यामालतायाः परशुरिव तमोऽरण्यवह्नेरिवार्चि' रिति। अत्र हि रूपकस्योपनिबन्धः श्रेयान् नोपमायाः तस्यास्तन्मुखेनैव प्रतीतिसिद्धेः। न ह्यसति सादृश्ये क्वचित् स्वस्थधीरतस्मिंस्तत्त्वमारोपयति। यथा—

"आलानं जयलक्षणस्य करिणः सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।

---

व्यक्तिविवेकव्याख्यानम्।

इति वक्रोक्तिजोवितकृतोक्तमलङ्कारपृष्ठपातिनमलङ्कारं दूषयति। निर्मोकमुक्तिमिवेति अत्रोपमारूपकत्वं परप्रसिद्ध्योक्तम्। न त्विदमुपमारूपकम्। उत्प्रेक्षारूपकं तु स्यात्, निर्मोकमुक्तेस्सम्भाव्यमानत्वेन प्रतीतेः। तथा हि निर्मोकानुगुण्यात् तावद् गगनस्योरगेण रूपणम्। निर्व्यूढे च रूपके निर्मोकमुक्तिर्न ताटस्थ्येन प्रतीयते किन्तु गगनोरगसम्बन्धित्वेन। गगनोरगसम्बन्धित्वेन च प्रतीतौ न सादृश्यम् अपि त्वध्यवसायः। तस्य च प्रवर्त्तमानत्वमित्युत्प्रेक्षैव ज्यायसी प्रतीतौ। अतश्चैवेदं मुक्तिपदं कृतम्। अन्यथा शुद्धसादृश्यप्रतिपादने धर्म्येव विशिष्टो निर्मोक उपमानत्वेन निर्देश्यः स्यात्। भिन्नलिङ्गयोरुपमाया दुष्टत्वान्न निर्दिष्ट इति चेन्न। साधारणधर्मस्यानिर्देशे निर्दिष्टस्यापि वा द्वैरूप्याभावे भिन्नलिङ्गसङ्ख्ययोरपि 'स्त्रीव गच्छति षण्डोऽय'मित्यादौ 'हन्तावहन्ति दोषा इव नृपतीनां गुणा इह(सहैव?) दुर्विनयम्' इत्यादौ चोपमानोपमेयभावस्येष्टत्वात्। तस्मादुपमायां निर्मोक इवेति स्यात्। उत्प्रेक्षायां क्रियामात्रोत्प्रेक्षणमुपपद्यत इत्युत्प्रेक्षारूपकमेतत्परमार्थतः। एतदस्माभिर्हर्षचरितवार्तिके विस्तृत्य प्रतिपादितं तत एवावसेयम्।

एवं परशुरिवेत्यादौ वाच्यम्। 'तमोरण्यवह्नेरिवार्चि'रिति। अत्र तमसोऽरण्येन रूपणे वह्निरर्चिस्सम्बन्धितया विवक्षितः समासे निवेशनीयः यतो न कश्चिदत्र निर्दिष्टो यो वह्निना रूप्येत। तस्मात् तमोरण्यस्य वह्न्यर्चिरिति वक्तव्यम् इत्यत्र वाच्यावचनं दोष।

आलानमिति सत्येव सादृश्ये आरोप्यारोपकभावस्य निदर्शनम्।

मधुसूदनीविवृतिः।

अलंकारस्य कवयो यत्रालंकरणान्तरम्।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवदिति

यस्य समुचितत्वमुक्तं तद् दूष्यतेऽनेन। निर्मोकमुक्तिमिवेति। निर्मोकः सर्पकञ्चुकम्। मुक्तिस्त्यागः। शातः तीक्ष्णः।

सादृश्ये सत्येव अतस्मिंस्तदारोपो भवतीति उदाहरणेन स्पष्टयति—आलानमिति। जयलक्षणस्य जयरूपस्य हस्तिनः आलानं बन्धनस्तम्भः ते भुजः

सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्! राजति वीरवैरिवनितावैधव्यदस्ते भुजः ॥"

इति। यथा च—

"अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥"

व्यक्तिविवेकव्याख्यानम्।

चुम्बतीवेति। अत्रोत्प्रेक्षार्थं प्रयुक्तस्येवशब्दस्य लक्षणासमर्थितेनार्थेन कृतार्थत्वात् पुनरुक्तत्वम्।

अत्र चोपमारूपकाभिमते एवंविधे च प्रदेशे ग्रन्थकारो हेवाकितयैव दूषणमदात्। तथा च शब्दार्थयोर्विच्छित्तिरलङ्कारः। विच्छित्तिश्च कविप्रतिभोल्लासरूपत्वात् कविप्रतिभोल्लासस्य चानन्त्यादनन्तत्वं भजमाना न परिच्छेत्तुं शक्यते। अत एवोक्तं ध्वनिकृता—

"वाचस्पतिसहस्राणां सहस्रैरपि यत्नतः।
निबद्धा सा क्षयं नैति प्रकृतिर्जगतामिव" ॥

इति। अन्यत्राप्युक्तम्—

'अजवि (१)अभिण्णमुद्दो पजअइ वाआपरिप्फन्दो'

इति। एवञ्च यदि विच्छित्त्यन्तरापेक्षया तस्य विच्छित्त्यन्तरस्य पौनरुक्त्यं तदोपमाया रूपकाद्यपेक्षया पौनरुक्त्यं स्यात्। उपमपेक्षया हि रूपकमतिशयोक्तिर्वा बलीयसी। न चैवं प्रयुज्यते, विवक्षाया नानात्वात्। तथा हि क्वचित् सादृश्यमात्रं विवक्षितम्। तत्रापि क्वचिद्भेदः। तस्मिन्नपि क्वचिदारोपः। क्वचिदध्यवसायः। अध्यवसायेऽपि क्वचित् साध्यत्वं क्वचित् सिद्धत्वमित्यादिक्रमेणानन्तप्रकारं विच्छित्तिवैचित्र्यम्। तत्रापि संयोजनक्रमेण नवं विच्छित्तिवैचित्र्यमनुभूयमानमाश्रितं च महाकविभिः कथं संक्षेपरुचित्वेनापह्नूयते। न हीदं वाक्यं लक्षणशास्त्रं, येन मात्रालाघवं चिन्त्यते। तत्रापि वा न नियमेन लाघवमाश्रितं महद्भिः। तथा हि वाग्रहणस्य स्थानेऽन्यतरस्यां ग्रहणमपि कृतम्। विच्छित्तिवैचित्र्यं तैरप्याश्रितमेव। तदुक्तं 'विचित्रा हि सूत्रस्य कृतिः पाणिनेः' इति। एवञ्चात्र कृतेऽपि रूपके उत्प्रेक्षादिनि-

मधुसूदिनीववृति।

राजति शोभते इत्यन्वयः। अत्र भुजे आलानत्वाद्यारोपः जयादौ कुञ्जरत्वाद्यारोपे हेतुरिति इति परम्परितरूपकम्। रूपकमुखेन भुजालानयोरुपमानोपमेयभावः इह प्रतीयते इति ग्रन्थकर्त्तुराशयः।

अङ्गुलीभिरिति। तत्सदृशार्थप्रतीतेः, जडे शशिनि चुम्बतिमुख्यार्थस्य वक्त्र-

(१) अद्याप्यभिन्नमुद्रः प्रजयति वाण्याः परिस्पन्दः। इति छाया

इति । अत्र हि चुम्बतीवेत्यत्रेवशब्दः पुनरुक्तः चुम्बतेर्मुख्यार्थबाधे सति तत्सदृशार्थप्रतीतेस्सामर्थ्यसिद्धत्वोपपादनादिति । एवं

"स्मरहुताशनमुर्मुरचूर्णतां दधुरिवाम्रवणस्य रजःकणाः ।
निपतिताः परितः पथिकव्रजानुपरि ते परितेपुरतो भृशम् ॥"

इत्यत्रापि वेदितव्यम् । यथा च—

"तृप्तियोगः परेणापि न महिम्ना महीयसाम् ।
पूर्णश्चन्द्रोदयाकाङ्क्षी दृष्टान्तोऽत्र महार्णवः ॥"

अत्र हि प्रतिवस्त्वलङ्कारान्महार्णवमहीयसामुपमानोपमेयभावमवगम्यमानमवगीर्य यद् दृष्टान्तशब्देन पुनर्महार्णवस्योपमानत्ववचनं तत् पुनरुक्तम् । वाच्यो ह्यर्थो न तथा स्वदते,यथा स एव प्रतीयमानः । अत

व्यक्तिविवेकव्याख्यानम् ।

बन्धः कमपि गुणमुत्कर्षयति न दोषमिति सहृदयैर्निपुणं निरूपणीयम् । नतु हेवाकस्य पश्चाल्लगनीयमित्यास्तां तावत् । प्रकृतमनुसरामः ॥

मुर्मुरः अङ्गारः । आम्रवणस्येति 'प्रनिरन्त' ( ८. ४. ५ ) रिति णत्वम् । पथिकव्रजान् परित इति । परितः शब्दयोगे 'अभितः परितः समयानिकषा' इति द्वितीया । अत्र दधुरिवेतीवशब्दः पुनरुक्त एव, वस्त्वन्तरभूतानां रजःकणानां वस्त्वन्तरभूतमुर्मुरचूर्णत्वधारणेन सुष्ठुसादृश्यप्रतीतेः । एवं—

"तत् पातु वः श्रीपतिनाभिपद्मं स्वाध्यायशाला कमलासनस्य ।
दीर्घनिनादैर्दधतेऽनुकारं सामध्वनीनामिव यत्र भृङ्गाः" ॥

इत्यादावनुकारशब्दप्रयोगे इवादिशब्दप्रयोगस्य पौनरुक्त्यमवसेयम् ।

प्रतिवस्त्वलङ्कारादिति 'पूर्णः शशाङ्काभ्युदयमाकाङ्क्षति महार्णवः' इति प्रतिवस्तूपमया सादृश्यप्रतीतौ दृष्टान्तशब्दोक्तिर्दुष्टा । नच दृष्टान्तालङ्कारत्वं प्रतिपादयितुं दृष्टान्तशब्दः । दृष्टान्तशब्दात् दृष्टान्तालङ्कारत्वाप्रतीतेः । न हि षष्ठ्यादिपरिहारेण सम्बन्धिशब्दात् सम्बन्धप्रतीतिः । अदूरविप्रकर्षेण त्वभिधानं वस्तुसंस्पर्शि भवतीति ।

ननु स्वकण्ठेनाभिधानमपहाय किमिति सादृश्यप्रतीतिराश्रीयत इत्याह वाच्यो

मधुसूदनीविवृतिः ।

संयोगस्य बाधात् तत्सदृशार्थस्य संयोगस्य प्रतीतेः ।

स्मरहुताशनेति । मुर्मुरोऽग्निकणः स्मृत इत्यमरः । रजःकाणानां मुर्मुरचूर्णत्वधारणोक्त्या उत्प्रेक्षायाः प्रतीतेः इवशब्दः पुनरुक्त एव । नेमे रजःकणाः किन्तु सम्भाव्यते स्मरहुताशनमुर्मुरचूर्णं यतः पथिकास्तेपुरिति ।

तृप्तियोग इति । प्रतिवस्तूपमालंकारात् पूर्णः शशांकाभ्युदयमाकांक्षति महार्णवः इत्येवं रूपात् । अवधीर्य तिरस्कृत्य ।

एव—

"सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥"

इत्यत्र प्रभाधेन्वोः 'प्रभेव भानोः सुरभिर्महर्षे' रिति शब्दवाच्यामुपमामनादृत्य कविना पूर्ववद् दीपकमुखेनोपमेयभावो भणितः । एवमलङ्कारान्तरेष्वपि यथायोगमवगन्तव्यम् ।

वाच्यात् प्रतीयमनोऽर्थस्तद्विदां स्वदतेऽधिकम् ।
रूपकादिरतः श्रेयानलङ्कारेषु नोपमा ॥ ३६ ॥

इति सङ्ग्रहश्लोकः । यथा च—

"शिशिरकालमपास्य गुणोऽस्य नः
क इव शीतहरस्य कुचोष्मणः ।
इति धियास्तरुषः परिरेभिरे
घनमतो नमतोऽनुमतान् प्रियाः ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

ह्यर्थ इति ।

पूर्ववदिति । पूर्वं यथा 'आलान'मित्यादौ रूपकमुखेनोपमानोपमेयभावः कथितस्तद्वदिह दीपकमुखेनेत्यर्थः । अत्र च द्वयोः प्रभाधेन्वोः प्राकरणिकत्वात् तुल्ययोगितामद्यतना मन्यन्ते । द्वयोरपि प्राकरणिकत्वे महाप्रकरणापेक्षया धेनोः प्रकृष्टं प्राकरणिकत्वं प्रभायास्त्वप्रकृष्टमित्येतदपेक्षया चिरन्तनैर्दीपकमेतत् स्थापितम् तदपेक्षयात्रानेन तद्वाचोयुक्तिः कृता । एवमलङ्कारान्तरेष्वपि समासोक्त्यप्रस्तुतप्रशंसादिषु । तत्राप्युपमानोपमेयभावः स्वकण्ठेन नोपनिबन्धनीयः । तथा—

"द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपिकाः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः" ॥

इत्यत्राप्रस्तुतप्रशंसया भवदर्थस्य सदृशत्वेन प्रतीतेः पुनर्वचनं न कर्त्तव्यमिति वक्ष्यते । अस्माभिश्चैतत्प्रपञ्चो बृहत्यां करिष्यते ।

मधुसूदनीविवृतिः ।

सञ्चारपूतानीति । अत्र प्रभाधेन्वोः अवान्तरप्राकरणिकत्वापेक्षया तुल्ययोगिता इत्याधुनिकाः । प्रधानप्राकरणिकधेनोरपेक्षया सायंसंध्याप्रसंगेन आगन्तुकत्वात् अप्रधानप्राकरणिकत्वं प्रभाया इति दीपकमेवेति प्राच्याः । पूर्ववत् आलानमित्यादिवत् ।

शिशिरकालमिति । नमतो नम्रान् । अतो घनं यथास्यात्तथा इतिनैवेति । हेत्वर्थः इतिशब्दः स्वभावतः पूर्ववाक्यार्थस्य उच्यमानत्वं बोध्यमानत्वं वा गर्भीकृत्य प्रवर्त्तते । तदर्थस्य धीशब्दार्थस्य अतः शब्दार्थस्य च ।

 

इत्यत्र धीशब्दोऽत इति च हेत्वर्थः शब्दः पुनरुक्तौ, हेत्वर्थेन इतिनैव तदर्थस्योक्तत्वात् ।

यथा 'अश्वेतिविद्रुतमनुद्रवतान्यमश्व' मिति । तेन वरम् 'इति यतोऽस्तरुष' इति युक्तः पाठः । यथा वा—

"आः किमर्थमिदं चेतः सतामम्भोधिदुर्भरम् ।
इति मत्वेव दुर्वेधाः परदुःखैरपूरयत् ॥"

इति । अत्र हि मननार्थः पुनरुक्तः, इतिनैव क्रोधपरामर्शिना तस्यावगमितत्वात् । तेन "इति क्रुधेव तद्वेधा' इति युक्तः पाठः । एवञ्च वेधसो दुष्टत्वस्यानिबन्धस्यावाच्यस्य यद्वचनं तदपि परिहृतं भवति ।

अव्यभिचारिणः कारकस्याविशेषणः प्रयोगः पुनरुक्तः । तत्र कर्त्तुर्यथा—

"पतितोत्पतितैः शत्रुशिरोभिः समराङ्गणे ।

---

व्यक्तिविवेकव्याख्यानम् ।

इतिनैवेति इतिशब्दो हेत्वर्थः प्रयुज्यमानः स्वभावतः पूर्ववाक्यार्थस्योच्यमानत्वं बोध्यमानत्वं वा गर्भीकृत्य प्रवर्तते ।

वरमिति उक्तदोषद्वयनिवारणमात्रमेतत् । न तु सर्वथा निरवद्यमिदं, यतश्शब्दातश्शब्दयोर्वैयर्थ्यात् ।

अनिबन्धनस्येति नहि दुःपूरणीयपूरकत्वेन दुष्टत्वम् ।

अविशेषण इति विशेषणदानार्थमव्यभिचारिणोऽपि प्रयोगः शस्यत इत्यर्थः तथा चाह वामनः—'विशेषणस्य च' ( २ अधि. १८ सू. ) इति ।

मधुसूदनीविवृतिः ।

यथेत्यनेन । दृष्टान्तद्वारा स्पष्टयति—अश्वेतीति । अश्व इति धिया विद्रुतमित्यर्थः । अत्र धीशब्दस्य अप्रयोगः इतिनैव गतार्थत्वात् ।

वरमिति । अत्र पुनरुक्तिद्वयनिवारणार्थमुपकल्पितेऽपि पाठे न दोषविनिर्मुक्तिः अतः "इति समस्तरुषः" इति पाठान्तरं श्रेयः । सम् सम्यक् अस्ता रुट् येषां ते । यद्यपि अत इति पदार्थस्य पुनरुक्तत्वं तथापि यमकालङ्कारप्रयोजकत्वात्सा भूषैव ।

आः किमर्थमिति । परदुःखैः दीनजनक्लेशैः । तस्य मननार्थस्य । अनिबन्धनस्येति । अम्भोधिवद्दुर्भरस्य सतां चेतसः परदुःखैः भरणे कृतेऽपि कारणं विना दुष्टत्वोक्तिरनुचितेति भावः ।

अव्यभिचारिणः अवश्यं प्रयोक्तव्यस्य । अविशेषणः विशेषणरहितः । परबोधनार्थं प्रयुज्यमाने वाक्ये क्रियायाः प्राधान्यात् । तस्याश्च कर्त्तारं विना अनुपपद्यमानतेति अव्यभिचारेण कर्त्तुरुपस्थितिः इति अर्थादायातस्य शब्दत उपादाने पुनरुक्तिःस्यात् तथापि विशेषयितुं प्रकर्षं वक्तुं वा तादृशस्याऽपि शब्देनोपादानं भूषणमेवेति सारः ।

यः कन्दुकैरिवोच्चण्डः क्रीडन् लोकैर्व्यलोकयत ॥'

इत्यत्र लोकशब्दस्य, विलोकनक्रियायास्तत्कर्तृकत्वाव्यभिचारात्। सविशेषणस्य न तस्य पौनरुक्त्यम्। यथा—

"जनैरजातस्खलनैर्न जातु द्वयेऽप्यमुच्यन्त विनीतमार्गाः ॥" इति।

कर्मणो यथा—

"उवाच दूतस्तमचोदितोऽपि गां
न हीङ्गितज्ञोऽवसरेऽवसीदति।"

इति। सविशेषणस्य यथा— 'शुचिस्मितां वाचमवोचदच्युत' इति। करणस्य तथा—

"यदा दृशा कृशाङ्ग्यास्मि दृष्टो जातं तदैव मे।
प्रजागरगरग्रस्तसमस्तप्रसरं मनः ॥"

इति। अस्यैव सविशेषणस्य यथा—

"तं विलोक्य सुरसुन्दरीजनो विस्मयस्तिमिततारया दृशा।"

इति। एवं कारकान्तरेष्वप्यवगन्तव्यम्।

एकैवालङ्कृतिर्यत्र शाब्दत्वार्थत्वभेदतः।

---

व्यक्तिविवेकव्याख्यानम्।

व्यलोकयतेति विलोकनक्रियैव लोकितारं लोकमाक्षिपतीति लोकशब्दस्य पौनरुक्त्यम्।

द्वयेऽपीति प्रस्थानवशान्नीतिवशाच्चाश्रीयन्ते।

गामिति गोशब्दस्य वाक्पर्यायस्य वचनक्रियायामव्यभिचारात् प्रयोगो न कार्यः।

दृष्ट इति दर्शनक्रियाया दृगेव करणत्वेनाक्षिप्तेति दृक्शब्दः पुनरुक्तः कारकान्तरेष्वपीति यथा 'स्थाने तिष्ठती' त्यत्राधिकरणस्य पौनरुक्त्यम्। विविक्ते स्थाने तिष्ठतीति तु विशेषणार्थं प्रयोगो न दुष्टः।

एकैवेति एकैवोपमादिः। शाब्दत्वं श्रौतत्वं यथेवादिशब्दप्रयोगात्। आर्थ-

मधुसूदनीविवृतिः।

तत्कर्त्तृकत्वेति। लोककर्त्तृकत्वस्य। तस्य कर्त्तुः।

जनैरिति। अजातस्खलनैरिति विशेषणविशिष्टस्य जनैरिति कर्त्तुः न पौनरुक्त्यम्।

कर्मणः। अव्यभिचारिणः अविशेषणः प्रयोगः पुनरुक्त इति शेषः।

उवाचेति। अत्र गामिति पुनरुक्तम्। शुचिस्मितामिति। केचित् शुचिस्मितमवोचदिति क्रियाविशेषणमिच्छन्ति। तेषां मतेऽस्य सविशेषणस्यापि पुनरुक्तत्वम्।

करणस्येति। यदा दृशेति। अत्र दृशैरिति करणस्य पुनरुक्तिः दर्शनक्रियाया दृक्करणकत्वाव्यभिचारात्।

एकैवेति। एकैव अलंकृतिः उपमादिः यत्र स्थले। शाब्दत्वं श्रौतत्वं यथेववा-

द्विरुच्यते तां मन्यन्ते पुनरुक्तिमतिस्फुटाम् ॥ २४ ॥

तद्यथा—

"उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥"

इत्यत्र ।

यस्य यद्रूपताव्यक्तिः सामर्थ्यादेव जायते ।
तस्योपमा रूपकं वा तदर्थं पौनरुक्त्यकृत् ॥ ४१ ॥

तत्रोपमा यथा—

"स्फुरदधीरतडिन्नयना मुहुः प्रियमिवागलितोरुपयोधरा ।

व्यक्तिविवेकव्याख्यानम् ।

त्वं सदृशादिशब्दप्रयोगात् । अतिस्फुटमिति स्थूलदृष्ट्यैव दृश्यमित्यर्थः ।

उमावृषाङ्काविति अत्र शरजन्मना यथेत्यादिना प्रतीतोऽप्युपमानोपमेयभाव-स्तत्सदृशेनेत्यादिना पुनरुक्तः । कवेस्तु नन्दननिमित्तः पूर्वं उपमानोपमेयभावः । प्र-तीयमानप्रभावादिनिमित्तस्त्वपरः । तथा चायं 'दिलीप इति राजेन्दुरिन्दुः क्षीरनि-धाविव' इत्येवंविधमुपमानोपमेयभावमातनोति । ग्रन्थकारस्तु विशिष्टोपमाननिर्देशा न्नान्तरीयकतया प्रभावादिप्रतीतिर्भवतीति न द्विरुपादानं कार्यमिति मन्यते ।

यस्येति यस्य पर्वतादेर्यद्रूपतायाः प्रियतमादिरूपत्वस्याभिव्यक्तिः सामर्थ्याल्लि-ङ्गविशेषश्लिष्टपदोपनिबन्धनरूपाद् भवति, तस्य पर्वतादेतदर्थं प्रियतमादिरूपत्वप्रती-त्यर्थमुपमा रूपकं वा यन्निबध्यते तत् पुनरुक्तमित्यर्थः ।

उरवो महान्तः पयोधरा मेघाः उरू च पयोधरौ स्तनौ च। समयात् सङ्गतेत्यर्थः ।

मधुसूदनीविवृतिः ।

दिशब्दप्रयोगात् । आर्थत्वं सादृशादिशब्दप्रयोगात् ।.अतिस्फुटम् साधारणबुद्धिगम्यम् ।

तद्यथेति दर्शयति तद् । "उमावृषाङ्कौ" इति । अत्र शरजन्मना यथा इत्यादिना ज्ञाताप्युपमा तत्सदृशेनतत्समाविति पदाभ्यां पुनरुक्ता । शरजन्मना यथे-त्यादिना निर्दिष्ट उपमानोपमेयभावः नन्दनादिनिमित्तः, अपरस्तु स प्रतीयमानरघुप्र-भावनिमित्तः इति भिन्नाभिप्रायतया न पुनरुक्त इति कवेराशयः । विशिष्टस्य उपमा-निर्देशादवश्यन्तया प्रभावादिप्रतीरपि स्यादेवेति न पुनरुपादानं कार्यमिति व्यक्तिवि-वेककाराशयः ।

यस्येति । यस्य वस्तुनः यद्रूपतायाः यत्किञ्चिद्विलक्षणरूपतायाः व्यक्तिः प्रती-तिः सामर्थ्यादेव श्लिष्टविशेषणादिबलादेव जायते तदर्थम् रूपताव्यक्तये तस्य वस्तुनः यदु-पमा रूपकं वा निबध्यते तन्निबन्धनम् पौनरुक्त्यकृत् । यथा स्फुरदधीरेति पद्ये वि-शेषणमहिम्ना रैवतकपर्वते प्रियत्वप्रतीतावपि यत्तत्र प्रियत्वप्रतीत्यर्थं प्रियमिवेति उपमायानिबन्धः स पुनरुक्तिकर एव ।

स्फुरदधीरेति । मुहुः वारं वारम् स्फुरन्ती अत एवाधीरा चञ्चला तडिदेव

जलधरावलिरप्रतिपालितस्वसमया समयाज्जगतीधरम् ॥"

अत्र जगतीधरजलधरावल्योः प्रियप्रणयिनीतुल्यत्वे समासोक्त्यैवावसिते सति यदेतज्जगतीधरस्य प्रियतुल्यत्ववचनं तत् पुनरुक्तम् । यथात्रैवोत्तरेषु चोदाहरणेषु ।

"निद्रावशेन भवता ह्यनवेक्षमाणा
पर्युत्सुकत्वमबला निशि खण्डितेव ।
लक्ष्मीर्विनोदयति येन दिगन्तलम्बी
सोऽपि त्वदानन रुचिं विजहाति चन्द्रः ॥"

इति । अत्र हि लक्ष्म्या अबला खण्डितेवेति यदुपमानमुक्तं तत् पुनरुक्तं तस्यास्तत्तुल्यवृत्तान्ताभिधानसामर्थ्यादेवानन्तरोक्तनयेन तदर्थावगतेः । यथा च—

"सुरभिसङ्गमजं वनमालया नवपलाशमधार्यत भङ्गुरम् ।
रमणदत्तमिवार्द्रनखक्षतं प्रमदया मदयापितलज्जया ॥"

इत्यत्रार्द्रनखक्षतविशेषणं, प्रमदार्थः, तद्विशेषणं चेति त्रितयमपि पुनरुक्तं तदर्थस्योपमानादेव प्रतीतेर्गतार्थत्वात् । तथा हि । सुरभिशब्दात् पुंस्त्वविशिष्टाद्रमणार्थोऽवगम्यते वनमालाशब्दाच्च स्त्रीत्वविशिष्टात्

---

व्यक्तिविवेकव्याख्यानम् ।

आर्द्रनखक्षतमिवेति भिन्नक्रम इवशब्दः । यापितो गमितः निर्वाहित इत्यर्थः । उपमानादेवेति आकारसादृश्येन पलाशं प्रति दीयमानाद् आर्द्रनखक्षतमित्यस्माद ।

मधुसूदनीविवृतिः ।

नयने यस्याः सा नायिका । अप्रतिपालितस्वसमया अनपेक्षितनिजकाला । वर्षापक्षे सर्वेषामृतूनां यौगपद्येन प्रवृत्तेः, तथाकालत्वम्, नायिकापक्षे वियोगजपीडाऽसहिष्णुतया । जलधरा वलिः मेघपंक्तिः जगतीधरं रैवतकं पर्वतं प्रियमिव समयात् प्रापत् ।

अत्र वर्षावर्णनं प्रक्रान्तम् । विशेषणानि उभयधर्मवन्ति इति नायिकायामपि संलगन्ति । जलधरावल्या नायिकायाश्च सद्भावे जगतीधरस्य नायकस्य अर्थात् प्रतीतिः ।

निद्रावशेनेति । तस्या लक्ष्म्या । तत्तुल्यवृत्तान्ताभिधानसामर्थ्यात् खण्डिताऽबलासदृशवृत्तान्तकथनबलात् एव । अनन्तरोक्तनयेन अर्थात् समासोक्त्यैव तदर्थावगतेः खण्डिताबलारूपार्थप्रतीतेः ।

सुरभिसङ्गमजमिति । आर्द्रनखक्षतस्य विशेषणं रमणदत्तमिति, तद्विशेषणं प्रमदाविशेषणम् मदयापितलज्जयेति । यत इति । अलङ्कारान्तरेण नखक्षतमिवेति उपमया उपकृतात् विशेषितात् सुरभिवनमालयोः पुंस्त्वस्त्रीत्वेतिलिङ्गविशेषस्य निर्देशात् ।

कामिन्यर्थः। तद्विशेषणोपादानं तु व्यर्थमेव व्यावर्त्याभावात्। तेन यथा कामुकसङ्गमसमुत्थमङ्गनया लोहितं वक्रं च नखक्षतं धार्यते, तद्वद्वनमालया वसन्तसमागमजनितं नवं भङ्गुरं च पलाशमधार्यतेति समुदायादयमर्थः सचेतसामुन्मिषत्येव यतोऽलङ्कारान्तरोपकृताल्लिङ्गविशेषनिर्देशादेवार्थानां स्त्रीपुंसत्वानुमितिरनुमतैव महाकवीनाम्। यथा च—

"ऐन्द्रं धनुः पाण्डुपयोधरेण
शरद्दधानार्द्रनखक्षताभम्।
प्रसादयन्ती सकलङ्कमिन्दु
तापं रवेरभ्यधिकं चकार॥"

इति। अत्र हि शरदो नायिकात्वस्येन्दो रवेश्च नायकत्वप्रतिनायकत्वयोरभिव्यक्तिः।

यथा वा—

"अत्यन्तपरिणाहित्वादत्यन्तश्लक्ष्णतावशात्।
न काचिदुपमारोढुमूरू शक्नोति सुभ्रुवः॥"

इत्यत्राङ्गनेव मणिस्तम्भाविति। यथा च—

---

व्यक्तिविवेकव्याख्यानम्।

तद्विशेषणोपादानमिति रमणदत्तमित्यार्द्रनखक्षतविशेषणोपादानं मदयापितलज्जयेति प्रमदाविशेषणोपादानं चेत्यर्थः। यत इति नखक्षतमिवेत्युपमोपकृतात् सुरभिवनमालादीनां पुंस्त्वस्त्रीत्वनिर्देशादित्यर्थः। स्त्रीपुंसत्वानुमितिरिति प्रथमविमर्शोक्तप्रकारेण व्यक्तेरनुमितिरूपत्वेनोपपादितत्वात्।

ऐन्द्रं धनुरिति अत्यन्तेति आभोगीति चोदाहरणत्रयं वैधर्म्यक्रमेणोक्तम्। उपपन्नक्रमस्या सद्भावात्। नायकत्वप्रतिनायकत्वे इति। अनुमीयेते इति शेषः।

एवम् अङ्गनेव मणिस्तम्भाविति अनुमीयत इति शेषः।

मधुसूदनीविवृतिः।

यथा चेति लिङ्गविशेषनिर्देशादर्थेषु स्त्रीत्वपुंस्त्वादेरनुमितिरन्यत्रापि दृश्यते इत्युदाहरणैः त्रिभिर्दर्शयति–ऐन्द्रं धनुरिति। अत्यन्तपरिणाहीति। आभोगिनेत्रेति। ऐन्द्रे धनुषि नखक्षतसाम्यं मेघे स्तनसाम्यं शाब्दम्। शरदि नायिकात्वस्य इन्दोः रवेश्च नायकप्रतिनाकत्वयोश्च अभिव्यक्तिरनुमितिः। अत्राभिव्यक्तिरिति वदतो ग्रन्थकर्तुरपि हृदये व्यञ्जना कृतमूला परं दुराग्रहात् अनुमितिम् अनुमोदयति इति।

"अङ्गनेव मणिस्तम्भौ" मूलोक्तिः, एवम् अङ्गनेव मणिस्तम्भाविति अनुमीयत इति शेषः इति टीकोक्तिश्च न हृदयं स्पृशतः तस्मात् अङ्गनोरू मणिस्तम्भाविवानुमीयेते इति स्यात्।

"आभोगिनेत्रपरिवर्त्तनविभ्रमेण
मूर्त्या नितम्बवलनाकुलतां वहन्त्या ।
यस्याशनैरविरलोत्कलिकाकलाप
पर्याकुलं हृदयमम्बुनिधेर्ममन्थे ॥

इति । अत्रहि आरोहार्थो हृदयार्थश्च लक्षणयोपात्तौ न मुख्यतया तयोर्जीवव्यापारतत्कार्यैकदेशविशेषरूपत्वात् । लक्षणायाश्चालङ्कारान्तरत्वमुपपादितमेव । किञ्च—

व्याक्तविवेकव्याख्यानम् ।

भोगी वासुकिः स एव नेत्रमाकर्षणरज्जुस्तस्य आसमन्ताद् यत्परिवर्तनरूपो विशेषेण भ्रमो भ्रमणं, तेन मन्दरस्य मूर्त्तिः नितम्बे मध्यभागे वलनं परिवर्त्तनं तेनाकुला जाता । तथा आभोगि विस्तारवत् यन्नेत्रं नयनं तस्य परिवर्तनं कटाक्षीकरणं स एव विभ्रमो विलासः । मूर्त्या समारोपितनायिकाव्यवहारया । उत्कलिकास्तरङ्गा रुहिरुहिकाश्च हृदयं मध्यदेशश्चित्तञ्च ।

आरोहार्थ इति आरोढुमिति पूर्वश्लोकगतः । हृदयार्थश्चेति । हृदयमम्बुनिधेरित्यत्र स्थितः । तयोरिति आरोहो जीवव्यापारविशेषः । हृदयं जीवकार्यैकदेशविशेषः । अलङ्कारान्तरत्वमिति सादृश्याल्लक्षणा वक्रोक्तिरित्यादिप्रकारेण ।

लाक्षणिकहृदयादिशब्दप्रयोगे स्वशब्दं विनाप्यर्थान्तरं प्रतीयत इत्याह यदर्थे·

मधुसूदनीविवृतिः ।

आसमन्तात् भोगिरूपस्य वासुरिरूपस्य नेत्रस्य प्राकर्षणरज्जोः परिवर्त्तनमेव विशेषेण भ्रमः भ्रमणं तेन नितम्बे मध्यभागे वलनं परिवर्त्तनं तेन आकुलतां वहन्त्या मूर्त्या मन्दरप्रतिमया । यस्याम्बुनिधेः समुद्रस्य अशनैः अविरलीनां महतीनाम् उत्कलिकानां तरङ्गाणां कलापेन समूहेन पर्याकुलं चञ्चलं हृदयं मध्यभागं ममन्थे । इति वाच्योऽर्थः । आभोगि विस्तारवत् यन्नेत्रं नयनं तस्य परिवर्त्तनं कटाक्षीकरणं तदेव विभ्रमो विलासस्तेन नितम्बस्य स्त्रीकट्याः पश्चाद्भागस्य वलनेन सञ्चलनेन आकुलतां वहन्त्या मूर्त्या नायिकया यस्य नायकस्य अशनैः अविरलानां उत्कलिकानाम् उत्कण्ठानाम् । रुहिरुहिका उत्सुकतापर्यायः । कलापेन पर्याकुलं व्यग्रं हृदयं चेतो ममन्थे इति श्लिष्टविशेषणानुगमात् नायकनायिकयोः प्रतीतिरानुमानिकी ।

आरोहार्थः अत्यन्तेतिश्लोकस्थारोढुमितिपदार्थः । हृदयार्थः आभोगीतिपद्यगतहृदयशब्दार्थः लक्षणया उपात्तौ न मुख्यतया मुख्य(शब्द)निष्ठो धर्मः मुख्यता तया अभिधयेति रहस्यार्थः । तयोः आरोहहृदयार्थयोः । आरोहस्य जीवव्यापारविशेषरूपत्वम् । उपमा च जडा तत्र मुख्यार्थस्य बाधाल्लक्षणेति भावः । हृदयस्य जीवकार्यैकदेशविशेषरूपत्वम् । इदं कर्मसम्बद्धो जीवो जगत्कारणमितिवादिनो मतेनोक्तम् । जीवो जगत्कारणं तदन्तःपातिहृदयस्यापि स एव कारणम् । जड़स्य जलधेः हृदयाभावान्मु-

यदर्थैकाश्रयो धर्मो यत्र स्यादधिरोपितः ।
उपमानोपमेयत्वं न तयोः शाब्दमिष्यते ॥ ४२ ॥

यथा—

"अपरागसमीरणेरितः क्रमशीर्णाकुलमूलसन्ततिः ।
तरुवत् सुकरः सहिष्णुना रिपुरुन्मूलयितुं महानपि ॥"

इत्यत्र तरुरिप्वोः । तद्धि सामर्थ्यादेव तयोः सिद्ध्यति, उन्मूलनस्य तरुधर्मस्य रिपावारोपितत्वात् ।

रूपकं यथा—

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।
निरकासयद् रविमपेतवसुं वियदालयादपरदिग्गणिका ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

ति । यत्रोपमेयेऽम्बुनिधिप्रभृतौ । यदर्थैकाश्रयो नायकादिरूपोपमानविषयो धर्मो हृदयादिरारोपितो लक्षणया भवेत्, तयोर्नायकादेरुपमानस्याम्बुनिध्यादेश्चोपमेयस्योपमानोपमेयभावः शाब्दो नेष्यते गम्यमानस्त्विष्ट एवेत्यर्थः ।

अत्रैव अपरागेत्यादिना शाब्दत्वे दोषोदाहरणमाह । मूलान्यमात्यादिप्रकृतिवर्गः वृक्षबन्धनानि च उन्मूलयितुं सुकर इति योजना ।

तद्धीति उपमानोपमेयत्वम् ।

रूपकं यथेति । तस्योपमा रूपकं वेत्यनुसन्धत्ते । अनुरागो लौहित्यमपि । अपिशब्दः सुखादिपदनिकरे योजनीयः । वसुशब्दस्तेजोधनयोः । अत्र निष्कासनमुन्कटत्वेन गणिकाधर्मो रूपकस्य साधकः प्रमाणम् ।

मधुसूदनीविवृतिः ।

रूयार्थबाधलक्षणा । अलंकारान्तरत्वमिति सादृश्याल्लक्षणा वक्रोक्तिरित्यादिरीत्या ।

आरोपितधर्मेण सम्भवन्त्या उपमायाः शब्देन निर्देशोऽनुचित इति दर्शयितुमाह—यदर्थैकाश्रय इति । एकत्र गतस्य धर्मस्य अन्यत्र आरोपणे सादृश्यं प्रादुर्भवति अतः तस्य सादृश्यस्य शब्दद्वारा निर्देशो न सहृदयानामिष्टः इति सारः । यथा नायकगतस्य हृदयस्य धर्मस्य अम्बुनिधौ कथनात् नायकाम्बुनिध्योः सादृश्यम् अर्थादेव प्रतीयमानं न शाब्दं कृतम् ।

सादृश्यस्य शाब्दकरणे दोषस्तदुदाहरणं यथा—अपरागेति । अपरागो विरक्तिः । मूलानि अमात्यादिप्रकृतयः वृक्षबन्धनानि च । तरुरिप्वोरुपमानोपमेयत्वं न शाब्दमुचितमित्यन्वयः । तद्धि उपमानोपमेयत्वं हि । तयोः तरुरिप्वोः ।

रूपकं यथेति यस्य यद्रूपताव्यक्तिरित्यत्रोक्तम् "तस्योपमा रूपकं वे"त्यनुस्मरति अनुरागवन्तमिति । अनुरागः स्नेहः लौहित्यं च । अतापकरम् सायमस्तमनसमयतया तापस्य क्षीणत्वादिति भावः । अतएव अदुःखकरम् । अपेः सुखमपि

इति । अत्र हि लिङ्गविशेषनिर्देशात् स्त्रीत्वस्य, कार्यतश्च तद्विशेषस्याभिव्यक्तौ सामर्थ्यादेवापरदिशो गणिकारूपत्वे वियतश्चालयत्वेऽवगते यत् तयोस्ताद्रूप्यवचनं तत् पुनरुक्तम् । पुनस्तद्वचने वा रवेरपि कामुकरूपतावचनप्रसङ्गः विशेषाभावात् । यदुक्तम्—

"उभयार्थपदनिबन्धो लिङ्गविशेषः पदञ्च गुणवृत्ति ।
उपमानविशेषाश्रयमर्थं गमयति स न हि पुनर्वाच्यः ।।"

इति । यथा—

"राहुस्त्रीस्तनयोरकारि सहसा येनाश्लथालिङ्गन
व्यापारैकविनोददुर्ललितयोः कार्कश्यलक्ष्मीर्वृथा ।
तेनाक्रोशत एव तस्य मुरजित् तत्काललोलानल-
ज्वालापल्लवितेन मूर्धविकलं चक्रेण चक्रे वपुः ।।"

---

व्यक्तिविवेकव्याख्यानम् ।

कार्यतश्चेति कार्यमत्र निष्कासनम् । तद्विशेषस्य स्त्रीत्वविशेषस्य गणिकारूपस्येति ।

उभयार्थेति द्व्यर्थपदप्रयोगः 'पाण्डुपयोधरेणे'त्यादौ । लिङ्गविशेषः 'शरद्' 'रवेः' इत्यादौ । गुणवृत्ति पदम् 'आरोढुं' 'हृदयमि'त्यादौ । उपमानविशेषो यथा आर्द्रनखक्षताभमित्यादौ । 'आक्रोशो गालिदानम् ।

मधुसूदनीविवृतिः ।

अतापकरमपि इति योजना विधेया । अपेतवस्त्रम् वसुस्तेजो धनं च । अत्र निरकासयदिति क्रियायाः प्राधान्येन प्रतीतिः रूपकस्य साधिका । कार्यतश्च निष्कासनरूपाच्च । तद्विशेषस्य स्त्रीत्वविशेषस्य गणिकारूपस्य । तयोः दिग्वियतोः । तद्वचने वा ताद्रूप्यवचने वा । विशेषाभावात् दिग्वियत्समानन्यायात् ।

यदुक्तमिति—सादृश्यव्यञ्जकान् पदार्थानाचिनोति—उभयार्थेति । उभयार्थस्य श्लिष्टस्य पदस्य निबन्धः, यथा ऐन्द्रं धनुरिति पद्ये पयोधरेणेत्यस्य । लिङ्गविशेषः यथा शरद् रवेरित्यत्र । गुणवृत्ति लाक्षणिकं पदम् यथा आरोढुं हृदयमित्यादि । उपमानविशेषनिष्ठमर्थम् गमयति प्रत्याययति अतः स उपमानविशेषाश्रयः अर्थः यथा सुरभिसङ्गमजमिति पद्ये आर्द्रनखक्षतविशेषणं प्रमदाविशेषणं च न वाच्यं न शब्देन पुनरुक्तः करणीयः ।

राहुस्त्रीस्तनेति । अश्लथं दृढं यदालिङ्गनम् तदात्मकेन व्यापारमात्रेण विनोदेन दुर्ललितयोः धृष्टयोरित्यर्थः राहुस्त्रीस्तनयोः कार्कश्यलक्ष्मीः कठोरतासम्पत् सहसा अकस्मात् येन चक्रेण वृथा निष्फला अकारि तेन तत्काले लोलस्य चञ्चलस्यानलस्य ज्वालया पल्लवितेन पुष्टेन चक्रेण आक्रोशत एव गालिप्रदानं कुर्वत एव तस्य राहोः वपुः शरीरं मूर्धविकलं शिरोरहितं मुरजित् कृष्णः चक्रे । इत्यन्वयः ।

इति। अत्र हि अनुप्रासैकरसिकेन कविना पौनरुक्त्यदोषमपश्यता पर्यायोक्त्यनुमितोऽपि चक्रशब्दार्थः प्रयुक्तः। तेन 'मूर्धविकलामस्त्रेण तेने तनु' मिति युक्तः पाठः। अनेनानुप्रासव्यसनिता काव्यस्य परिपुष्यत्येव। यतः

समासे चासमासे चानुप्रासेष्वखिलेष्वपि।
पदादिवर्णानुप्रासः कवीनामधिकं प्रियः

इति। तत्र समासे यथा–

"त्वत्कीर्त्तिकेतकीक्लृप्तकान्तकर्णावतंसकः।
दिगङ्गनागणो राजन्! राजत्यामोदनिर्भरः॥"

इति। असमासे यथा–

"कुतः कुवलयं कर्णे करोषि कलभाषिणि!।
किमपाङ्गमपर्याप्तमस्मिन् कर्मणि मन्यसे॥"

इत्यलमनेन। यथा च–

"तं जिगीषुरिव शात्रवं ततो लोकलोचनपथोपरोधकम्।
रश्मिभिः कनकसायकोपमैरन्धकारमरुणोऽस्तमानयत्॥"

इति। अत्र लोचनपथोपरोधापराधिनोऽन्धकारस्य कनकसायकोपमैः रश्मिभिर्यदेतदस्तनयनं तज्जिगीषोरेव व्यापार इत्यरुणस्यान्धकारस्य च यत् कर्तृकर्मभावेनोपादानं तत् सामर्थ्याज्जिगीषुशात्रवतुल्य-

व्यक्तिविवेकव्याख्यानम्।

पर्यायोक्तीति येन राहुस्त्रीस्तनयोः कार्कश्यलक्ष्मीर्वृथा कृतेत्यनेन भङ्ग्यन्तरेण राहोः शिरश्छेदः प्रकाशित इति तत्साधनमसाधारणं चक्रं प्रतीयत एवेत्यर्थः।

पदादीति पदादिगतानामक्षराणामनुप्रासो गुम्फभङ्गीं दर्शयन् कवीनामत्यन्तवल्लभ इत्यर्थः।

कलभाषिणीति। अत्र कमलेक्षणे इत्यर्थानुगुणः पाठः। अन्यथानुप्रासहेवाकितैव स्यात्। शत्रुरेव शात्रव इति प्रज्ञादित्वात् स्वार्थेऽण्।

मधुसूदिनीववृति।

पर्यायोक्त्यनुमितोऽपीति। "राहुस्त्रीस्तनकार्कश्यलक्ष्मीवृथाकारि" इति रूपान्तरेण चक्रमेव उच्यते किन्तु चक्रत्वेन रूपेण चक्रं नोच्यते इत्ययं पर्यायोक्तस्य मार्गः। अनेन तेने तनुमिति पाठेन।

समासे चेति। समासगते असमासगते अनुप्रास इत्यन्वयः। "त्वत्कीर्तिं" इति। तव कीर्तिरेव केतकी तया अर्थात्तत्पुष्पेण क्लृप्तो रचितः कान्तः कर्णावतंसो येन स दिश एवाङ्गनास्तासां गणः। आमोदनिर्भरः सौरभपरिपूर्णः।

कुतः कुवलयमिति। अस्मिन् कर्मणि कर्णयोः शोभाधायकत्वरूपे। शात्रवं

वृत्तान्ततामवगमयतीति यदेतत् तयोर्जिगीषुरिव शात्रवमित्युपमानोपमेयभावेनाभिधानं तत् पुनरुक्ततां नातिवर्तते । यथा वा–

"परिहासरतिर्यश्च यशः कर्पूरपांसुभिः ।
दिक्कामिनीमुखान्यारात् पटवासैरिवाकिरत् ॥"

इति । अत्र परिहासरतेः कामुकस्य कर्पूरपांसुभिर्मुखावकिरणव्यापारः प्रायेण कामिनीविषय एव प्रसिद्ध इति दिशां मुखसम्बन्धाल्लिङ्गविशेषनिर्देशाच्च व्यञ्जकात् कामिनीरूपतावगतावपि यत्तासां कामिनीत्वेन, रूपणं तत् पुनरुक्तम् अत एव कर्पूरपांसूनामपि पटवासरूपत्वेऽवगते तेषां तद्रूपणमेव तावत् पुनरुक्तं किं पुनरुपमानोपमेयभावोपनिबन्धः, सामर्थ्यादेव तत्सिद्धेः, न च सामर्थ्यसिद्धेऽर्थे शब्दप्रयोगमाद्रियन्ते सत्कवयः । यथा–

"महदपि परदुःखं शीतलं सम्यगाहुः
प्रणयमगणयित्वा यन्ममापद्गतस्य ।
अधरमिव मदान्धा पातुमेषा प्रवृत्ता
फलमभिनवपाकं राजजम्बूद्रुमस्य ॥"

इत्यत्रेतिशब्दस्य । यथा च–

"चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः ॥

इत्यत्रोत्प्रेक्षयामिवशब्दस्य । यथा च–

---

व्यक्तिविवेकव्याख्यानम् ।

तद्रूपणमेवेति उपमापेक्षया रूपकस्य गम्यमानौपम्यपौनरुक्त्याद् प्रयोगार्हत्वेऽपि सामर्थ्यावगतरूपत्वाद् यत्राभिधानं पुनरुक्तं तत्रोपमायां का शङ्का इति ।

इवशब्दस्येति मूर्च्छित इव मूर्च्छयतीत्यर्थप्रतीतेः सिद्धत्वात् । विषादिसम्पर्काद्धि मोहं प्राप्तः परानपि मोहयतीति प्रसिद्धम् ।

मधुसूदनीविवृतिः

शत्रुं स्वार्थेऽण् । तयोररुणान्धकारयोः । किं पुनरिति । यत्र सादृश्यं गम्यं तस्य रूपकस्योल्लेखोऽपि यदा पुनरुक्तस्तर्हि उपमायाः पुनरुक्तौ तु का कथेति भावः ।

महदपि परमिति । अत्र "अण्वपि" इति पाठः "महदपि" इत्यस्य स्थाने स्यात्तदा वरम् । तथा च परदुःखमण्वपि शीतलं भवति महतस्तु तस्य का कथा । यद् यतः । अन्यत् सुगमम् । "भवति इति" इत्येवमन्वये आवश्यकमितिशब्दं कवयो न प्रयुञ्जते सामर्थ्येन सिद्धस्योपादाने पुनरुक्तिप्रसङ्गात् ।

चन्दनेति । मूर्च्छितः सम्बद्ध इव मूर्छयतीत्यत्र इवशब्दस्य प्रयोगं नाद्रियन्ते कवयः । विषाक्तस्य मूर्छाकारित्वप्रसिद्धेः ।

"अयं मन्दद्युतिर्भास्वानस्तं प्रति यियासति ।
उदयः पतनायेति श्रीमतो बोधयन् नरान् ॥"

इत्यत्र निदर्शने ममेवेति ।

"स्वाभाविकं विनीतत्वं तेषां विनयकर्मणाम् ।
मुमूर्च्छ सहजं तेजो हविषेव हविर्भुजाम् ॥"

इत्यत्र विनीतत्वस्य यद्विशेषणं तद् बाधकसद्भावाभावे सति समानविभक्तिकत्वाविशेषात् तेजसाप्यनुषज्यत एवेति यत् पुनस्तेजसस्तद्वचनं तत्पौनरुक्त्यमावहति ।

धर्मस्तुल्यविभक्तीनामेकस्याप्युदितोऽखिलान् ।
तानन्वेतीति पर्यायैस्तदुक्तिः पौनरुक्त्यकृत् ॥ १४ ॥

इति सङ्ग्रहश्लोकः ॥

---

व्यक्तिविवेकव्याख्यानम् ।

अयं मन्दद्युतिरिति निदर्शनायां ममेवेत्यर्थात् प्रतीतं न पुनरुपात्तम् ।

मुमूर्च्छेति प्रससारेत्यर्थः ।

बाधकसद्भावाभाव इति अनेन यत्रैकस्यैव विशेषणस्योपमानोपमेयसम्बन्धबाधकमस्ति तत्र पृथक्प्रयोगेऽपि न दोषः यथा—

"चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।
आवन्त्य एव निपुणाः सुदृशो रतनर्मणि ॥"

इत्यादौ प्रतिवस्तूपमायामित्याह । अत्र हि इवादिशब्दाभावे सति वाक्यभेदः । प्राकरणित्वाप्राकरणिकत्वाभ्यामुपमानोपमेयभावप्रतीतौ साधारणधर्मस्य पृथक्प्रयोगमन्तरेण वाक्यार्थसङ्गतिर्भवतीति पृथक्प्रयोगो न दुष्टः । तद्वचनमिति सहजपदेन स्वाभाविकत्ववचनम् ।

तुल्यविभक्तीनामर्थात् उपमानोपमेयानाम् । एषा निर्धारणे षष्ठी । एतन्मध्ये एकस्येत्यर्थः । पर्यायैरिति । स्वाभाविकपदादिषु कृतेषु सहजपदादिभिः ।

मधुसूदनीविवृतिः ।

अयं मन्दद्युतिरिति । इत्यत्र निदर्शने निदर्शनालंकारघटिते पद्ये अर्थात्प्रतीतयोः ममेव ( सूर्यस्य इव ) इति पदयोः प्रयोगं नाद्रियन्ते ।

स्वाभाविकमिति । अत्र विनीतत्वस्य यद् विशेषणं स्वाभाविकमिति विशेषणम् । तेजसस्तद्वचनं तेजसः सहजमिति विशेषणकथनम् । तत् विशेषणम् ।

धर्म इति । तुल्यविभक्तीनां पदार्थानां मध्ये एकस्याऽपि पदार्थस्य उदित उक्तो धर्मः अखिलान् तान् तुल्यविभक्तीन् अन्वेति अर्थात्तत्र अन्वितो भवति इति पर्यायैः पर्यायवाचकैः शब्दैः तस्य धर्मस्य उक्तिः पौनरुक्त्यकारिणी । पौनरुक्त्यकृदिति क्विपि स्त्रीत्वम् ।

"कैरवेन्दीवरच्छायौ नौम्युमाधवमाधवौ।
ब्रह्मार्चितब्रह्मनुतौ निहतान्धककालियौ॥"

इति। अत्र प्रथमो धवशब्दो द्वितीयश्च ब्रह्मशब्दः पुनरुक्तौ, तावन्तरेणापि समासान्तराश्रयणेन विवक्षितार्थप्रतीतिसिद्धेः प्रत्युदाहरणयोः प्रथमचतुर्थयोरिव पादयोः। अन्यथा तत्रापि छायानिहतपदयोर्द्विरुपादानप्रसङ्गः स्याद् विशेषाभावात्।

अस्तु को दोषः? उभयोरपि लक्षणानुगमसम्भवादिति चेत्। सत्यं, किन्तु प्रतीतिरिह प्रधानमिति सैवानुसर्त्तव्या न लक्षणमात्रं, तस्य तदर्थत्वादित्युक्तम्। सा च यावद्भिरुपजायते तावतामेव प्रयोगो युक्तो नातिरिक्तानाम्।

नच प्रतीतिमनादृत्यैव लक्षणमस्तीत्येवातिरिक्तपदप्रयोगो युक्तः, तस्यार्थप्रयुक्तत्वाद्, अर्थस्य चाधिक्यात्। तदुक्तं 'तदर्थावगत्यर्थो हि

---

व्यक्तिविवेकव्याख्यानम्।

समासान्तराश्रयणेनेति उमा च मा च उमामे तयोः धवावित्यादि द्वन्द्वपूर्वकतत्पुरुषाश्रयणेनेत्यर्थः। छायानिहतपदयोरिति प्रथमं छायाशब्दः द्वितीयश्च निहतशब्दः कर्तव्यः स्यादिति दार्ष्टान्तिकक्रमेणैव दृष्टान्तावुक्तौ।

अस्त्विति छायानिहतशब्दयोः प्रयोगः। उभयोरपीति। द्वन्द्वपूर्वकस्य बहुव्रीहेर्बहुव्रीहिपूर्वकस्य वा द्वन्द्वस्येत्यर्थः। एतच्च दृष्टान्तगतत्वेनोक्तमपि दार्ष्टान्तिकगतत्वेनापि पर्यवसानं नेयम्। दार्ष्टान्तिके ह्येत्थं योजना। तत्पुरुषपूर्वस्य द्वन्द्वस्य द्वन्द्वपूर्वस्य वा तत्पुरुषस्य लक्षणानुगमः सम्भवतीति।

तदर्थत्वादित्युक्तं विधेयाविमर्शविचारे यावद्भिरिति पदैरित्यर्थात्।

मधुसूदनीविवृतिः।

कैरवेति। तावन्तरेणाऽपि धवब्रह्मशब्दौ विनाऽपि। समासान्तराश्रयणेन उमा च मा चेति उमामे तयोर्धवौ इति द्वन्द्वपूर्वकतत्पुरुषाश्रयणेन। विवक्षितार्थस्य उमाधवरूपस्य ब्रह्मनुतरूपस्य अर्थस्य। प्रथमचतुर्थयोरिवेति। छाया च छाया चेति छाये कैरवेन्दीवरवत् छाये ययोस्तौ निहतश्च निहतश्चेति निहतौ। निहतौ अन्धककालियौ याभ्यां तौ। इति एकशेषपूर्वको बहुव्रीहिः। अन्यथा समासान्तराश्रयणाभावे तत्राऽपि प्रथमचतुर्थपादयोरपि प्रथमस्मिन् छायापदस्य। चतुर्थे निहतपदस्य निहतान्धकनिहतकालियौ इति रीत्या पुनरुपादानप्रसङ्गः स्यात्।

आशङ्कते—अस्त्विति। छायानिहतपदयोः द्विरुपादानमस्तु। उभयोः पदयोः लक्षणानुगमस्य सूत्रप्रवृत्तेः सम्भवात्। उत्तरति—सत्यमिति। सैव प्रतीतिरेव तस्य लक्षणस्य तदर्थत्वात् प्रतीत्यर्थत्वात्। सा च प्रतीतिः यावद्भिः पदैः तावतामेव

शब्दप्रयोगः । अर्थश्चेदवगतः किं शब्दप्रयोगेणे' ति । तस्मादुभयोरपि लक्षणानुगमसम्भवे येनैव लघुनोपायेन प्रधानसिद्धिस्तदेव लक्षणमाश्रयणीयं भवति नेतरत्, तत्पुरुषलक्षणाश्रयणेन चोपायलाघवमिति तदेवाश्रयितुं युक्तं, न द्वन्द्वलक्षणम्।

न चैवं तस्य विषयापहारः स्यादित्याशङ्कनीयं 'जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ' इत्यादावतज्जातीये विषये तस्य चरितार्थत्वादित्यलमवान्तरचिन्तया।

"द्विषद्वधूलोचनचन्द्रकान्तनिष्यन्दनेन्दूदयसन्निभोऽयम्"।

इत्यत्रेन्दूदयस्य यश्चन्द्रकान्तविषयो निष्यन्दनव्यापारः स प्रसिद्ध इति नोपादेयतामर्हति यथा 'रजनीपुरन्ध्रीलोध्रतिलकस्तिमिरद्विपयूथकेसरी' त्यत्र प्रसाधननिर्मथनव्यापार उपादीयमानः पौनरुक्त्यमेव पुष्णाति।

यस्त्वप्रसिद्धोऽसावुपादीयत एव यथा 'संसारसम्भवनिराकरणैकरेखे' त्यत्र निराकरणम्। रेखा हि हेयोपादेययोरुभयोर्विभागहेतुः

---

व्यक्तिविवेकव्याख्यानम्।

तत्पुरुषलक्षणाश्रयणेनेति प्रकृते द्वन्द्वलक्षणपूर्वकत्वं ज्ञेयम्। एवं न द्वन्द्वलक्षणमित्यत्र तत्पुरुषलक्षणपूर्वकत्वं बोद्धव्यम्।

तस्येति द्वन्द्वस्य। तज्जातीय इति यत्र तत्पुरुषशङ्का नास्तीति पार्वतीपरमेश्वरावित्यत्रापि परमेश्वरपदे कर्मधारयाश्रयणदर्शनेन तत्पुरुषपूर्वकत्वं योजनीयम्। अवान्तरचिन्तयेति पौनरुक्त्यप्रस्तावे समासचिन्तयेत्यर्थः। अत्र माधवस्य यौगिकत्वेऽपि संज्ञत्वेन निल्डेरुमामाधवाविति प्रयोगे उमाया माधवस्य च स्पष्टत्वेन प्रतीतेर्न तु द्वन्द्वपूर्वकतत्पुरुषार्थस्येति द्वन्द्वलक्षणं नातीव हृदयङ्गममित्याहुः।

रेखा हीति रेखा मर्यादा अवधिः सीमेति पर्यायाः। तत्र हेयपक्षप्रतिक्षेपेण प्रयोगो यथा संसारेति। अत्र संसारसम्भवस्य निराकरणमिति हेयस्य प्रतिक्षेपः।

मधुसूदनीविवृतिः।

उपादानम्। तस्य पदस्य अर्थाय प्रयुक्तत्वात्। अर्थस्य चाधिक्यात्। अतिरिक्तपदप्रयोगे अर्थस्य आधिक्यादधिकपदत्वं स्यादितिभावः। तत्पुरुषलक्षणाश्रयणेनेति उमा च मा चेति द्वन्द्वलक्षणपूर्वकस्य तत्पुरुषलक्षणस्य आश्रयणेन उपायलाघवम् प्रक्रियालाघवम्। तदेव तत्पुरुषलक्षणमेव तस्य द्वन्द्वलक्षणस्य। अस्तज्जातीये यत्र तत्पुरुषशङ्का नोदेति तत्र पार्वतीपरमेश्वरावित्यादौ। तस्य द्वन्द्वलक्षणस्य।

द्विषद्वध्विति। स निष्पन्दनव्यापारः काव्ये उपादेयतां नार्हतीत्यन्वयः। रजनीति। रजनीपुरन्ध्रीप्रसाधनलोध्रतिलकः, तिमिरद्विपयूथनिमर्थनकेसरी इत्येवं रूपेण उपादीयमानः।

प्रयोजनानुरोधेन तमभ्यनुजानाति यस्त्विति। तु किन्तु यः व्यापारः

पदार्थः प्रसिद्ध इत्यनभिमतपक्षप्रतिक्षेपाय तदनुगुणस्य व्यापारस्योपादानमुपपन्नमेव । अभिमतपक्षपरिग्रहायापि यथा—

"त्वष्टुः सदाभ्यासगृहीतशिल्प-
विज्ञानसम्पत्प्रसरस्य सीमा ।"

इत्यत्र प्रसरस्य । किञ्चात्र यदिन्दूदयस्येव सन्निभा यस्येतीन्दूदयतुल्यत्वं राज्ञः शाब्दमुक्तं तत् तस्य तत्त्वारोपादार्थमेव युक्तमित्युपात्तपदातिरिक्तस्य सन्निभापदस्य पौनरुक्त्यमावहतीत्युक्तम् ।

"अयथार्थक्रियारम्भैः पतिभिः किं तवेक्षितैः ।
अरुध्येतामितीवास्य नयने बाष्पवारिणा ॥

इति । अत्र हि बाष्पस्य वारिरूपत्वाव्यभिचारेऽपि यद्वारित्वमुक्तं तदसति प्रयोजने पौनरुक्त्यं करोति । न चात्र किञ्चित्प्रयोजनमुत्पश्यामः । तस्माद् बाष्पसम्पदेत्ययमत्रोचितः पाठः । अस्मिन् हि सति पौनरुक्त्यपरिहारः सम्पदः स्त्रीत्वात सखीत्वव्यक्तौ लेशतोऽर्थान्तरावगतिश्चेत्युभयं सिद्धं भवति । सति तु प्रयोजने न दोषः । यथा—

"पृथ्वीपाल ! प्रतापस्ते वैद्यूतेनाग्निना समः ।
यो वैरिवनिताबाष्पवारिणा वर्धतेऽधिकम् ॥

---

व्यक्तिविवेकव्याख्यानम् ।

उपादेयपरिग्रहो यथा त्वष्टुरिति । अत्र सम्पदः प्रसरो विस्तारः इत्युपादेयस्य परिग्रहः । इन्दूदयस्येव सन्निभा यस्येति अत्र सन्निभाशब्दः प्रभापर्यायो, व्याख्यातः । यथा तु दाण्डो ग्रन्थस्तथा सन्निभशब्द. सदृशपर्यायोऽस्ति तदुक्तम्—

"इववद्वायथाशब्दाः समाननिभसन्निभाः" ।

इति । तदनुसारेणेन्दूदयेन सदृश इन्दूदयसन्निभ'इति व्याख्येयम् । तदुक्त्यैवेति अवहितत्वोक्त्येत्यर्थः ।

मधुसूदनीविवृतिः ।

अप्रसिद्धः अप्रतीतः असौ व्यापारः । अनभिमतपक्षस्य हेयपक्षस्य प्रतिक्षेपाय निरासाय । तदनुगुणस्य प्रतिक्षेपानुगुणस्य ।

त्वष्टुरिति । अत्र प्रसरस्य उपादेयस्य परिग्रहः ।

किञ्चेति । द्विपद्वध्विति पद्ये दोषान्तरमाकिरति । सन्निभा प्रभा । तत्तुल्यत्वं तस्य राज्ञः । अत्र निभादिनां नित्यसमासविषयतया विग्रहे सन्निभा इति पदमशुद्धम् । अविग्रहोऽस्वपदविग्रहो वा नित्यसमास इत्युक्तेः ।

अर्थान्तरावगतिश्चेति । द्रौपदी रुदनकर्त्री स्त्री इति सम्पदाऽपि स्त्रिया सजातीयया पतीनां निरीक्षणे दुःखं भवति इति दुःखनिवृत्तये नयनावरोधः क्रियते इत्येवंरूपस्यार्थान्तरस्य प्रतीतिर्भवतीति ।

इति, वैद्युताग्निवृद्धेराधिक्यस्य वारिकार्यत्वेन प्रसिद्धेः यथा च—

"साहायकार्थमिव फूत्कृतमारुतेन
सन्धुक्षितः सपदि यस्य पृषत्कवह्निः ।"

इत्यत्राग्निसन्धुक्षणस्य मारुतकार्यत्वेन प्रसिद्धेः ।

'अवहितचेतसः पथि जनस्य कुतः स्खलितमि'ति । अवहितत्वं नाम चेतस एव धर्मो नान्यस्येति मुख्यवृत्त्या तत्रैवास्य वृत्तिरुपपन्ना । या त्वन्यत्र पुरुषादावस्य दृश्यते सा तत्सम्बन्धादिति तद्विशिष्टेन चेतसा जनस्य यद्विशेषणं तत्र चेतस उपादानं पुनरुक्तं तदुक्त्यैव तदवगतेः । यथा च—

'अवगच्छति मूढचेतनः प्रियनाशं हृदि शल्यमर्पितम्' इति ।

"व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः ।" इति ।

केवलादेव तत्सम्बन्धात् तदवगतिर्भवत्येव, यथा—

"तं कृपामृदुरवेक्ष्य भार्गवं राघवः स्खलितवीर्यमात्मनि ।"

इति, यथा च

'शरीरकस्यापि कृते मूढाः पापानि कुर्वते' ।

इति । मूढोऽनात्ममयःक्वचि'दिति च यथा च—

---

## व्यक्तिविवेकव्याख्यानम् ।

मूढचेतन इति मूढधिय इति च मोहनाम्नो मूढत्वस्य बुद्धिधर्मत्वात् चेतनधी-शब्दयोः पौनरुक्त्यम्

तत्सम्बन्धात् तदवगतिरिति चेतनसम्बन्धाच्चैतन्यावगतिरित्यर्थः ।

कृपामृदुरिति । कृपा चेतनधर्म इतिचैतन्यवाचिपदं न कृतम् । एवं 'मूढा' 'मूढ' इत्यत्रापि वाच्यम् ।

## मधुसूदनीविवृतिः ।

वैद्युताग्निवृद्धेरिति । अविन्धनत्वाद् विद्युदादेः ।

अवहितचेतस इति । तत्रैव चेतसि एव अस्य अवहितत्वस्य । या वृत्तिः । अस्य अवहितत्वस्य सा वृत्तिः । तत्सम्बन्धात् चेतनसम्बन्धात् । तदुक्त्यैव अव-हितत्वोक्त्यैव तदवगतेः चेतसोऽवगतेः ।

अवगच्छति इत्यत्र व्रजन्ति ते इत्यत्र च मूढचेतनः मूढधिय इत्युभयस्मिन् मूढपदेन मूढत्वस्य बुद्धिधर्मत्वात् गतार्थत्वे चेतनधीशब्दयोः पौनरुक्त्यम् ।

केवलादेवेति । केवलादेव मूढादिपदात् तत्सम्बन्धात् चेतनसम्बन्धात् तदव-गतिः चेतनधर्मस्य अवगतिः । तं कृपेति शरीरकस्यापीति मूढोऽनात्ममयः क्वचिदित्यत्र च कृपेति मूढा इति मूढ इति च केवलात् पदात् चेतनगतबुद्ध्यादेः प्रतीतिः ।

"उदितवपुषि दिननाथे प्रविकसितात्मसु कुलेषु कमलानाम् ।
जगति प्रमुदितमनसि च कोऽन्यो विमनायते घूकात् ॥"

इति । अत्र हि वपुरात्ममनश्शब्दानां त्रयाणामपि पौनरुक्त्यम् । तत्र द्वयोः स्वरूपमात्रवचनात् तस्य च पदार्थेष्वव्यभिचारात्, तृतीयस्यापि प्रमोदस्य मनःकर्तृकत्वाव्यभिचाराद् इत्यनन्तरमेवोक्तम् ।

यथा वा 'किं पुनरीदृशे दुर्जाते जातामर्षनिर्भरे च मनसि नास्त्येवात्रकाशः शोकक्रियाकरणस्ये'त्यत्र क्रियाकरणशब्दयोः । यथा च—

"पातु वस्तारकाकान्तकलाकलितशेखरः ।
जगत्त्रयपरित्राणक्रियाविधिविचक्षणः ॥"

इति । अत्र क्रियाविधिशब्दयोः पौनरुक्त्यम् । तत्राद्यस्य तावत् परित्राणक्रियाविशेषप्रतीतेरेव क्रियासामान्यप्रतीतिसिद्धेः विशेषस्य च सामान्याव्यभिचारात्, द्वितीयस्यापि क्रियापर्यायत्वेन तत्तुल्यवृत्तान्तत्वात् । यथा च—

---

## व्यक्तिविवेकव्याख्यानम् ।

उदितवपुषीति पौनरुक्त्यमेवानुसन्धत्ते । मनः कर्तृकत्वं प्रमोदस्य ।

क्रियाकरणशब्दयोरिति । अत्र गौः शाबलेय इतिवच्छोकक्रियाशब्दयोस्सामान्यविशेषभावेन प्रयोगः । करणशब्देन च स्वीकाररूपमनुष्ठानमभिधीयत इत्यभिप्रायेण कविना क्रियाकरणशब्दौ प्रयुक्तौ । ग्रन्थकृतस्तु विशेषस्यैवोपयोगात् सामान्याव्यभिचाराच्च क्रियाशब्दस्य वैयर्थ्यम् करणशब्दस्य क्रियावाचित्वान्निष्फलत्वमिति शोकशब्द एव कर्तव्यः इत्यभिप्रायः ।

## मधुसूदनीविवृतिः ।

यथाचेति । पुनः पौनरुक्त्यं दर्शयति- । मनः कर्तृकत्वेति । मनसः सुखदुःखाद्युपलब्धिसाधनत्वेन करणत्वेऽपि चित्ताख्यस्य तस्य साक्षात्कर्तृत्वमिति भावः ।

क्रियाकरणशब्दयोरिति । अत्र कविना दाशरथिः रामः, इति सामान्यविशेषभावेन शोकक्रियाशब्दयोः प्रयोग आदृतः । तथा करणेन च स्वीकाररूपमनुष्ठानं प्रतिपद्यते इति करणशब्दश्च प्रयुक्तः । सामान्यस्य विशेषकुक्षिगतत्वात् विशेषतः शोकरूपायाः क्रियाया एव उपादेयत्वाच्च क्रियेत्यस्य नैष्फल्यम् । करणशब्दस्य च क्रियाभिधायित्वात्तन्नैष्फल्ये अर्थाद्वैयर्थ्यमेवेति शोकशब्द एव केवलः करणीयः इति ग्रन्थकाराशयः ।

पातु व इति । तारका नक्षत्राणि तासां कान्त इन्दुः तत्कलया कलितशेखरः जगत्त्रयस्य परित्राणरूपक्रियाया विधौ अनुष्ठाने विचक्षणः दक्षः । अत्रापि वोक्तःपूर्वः पन्थाः ।

"सङ्कल्पकल्पितां कान्तां सर्वत्रोत्पश्यतोऽनिशम् ।
वियोगदुःखानुभवक्लेशो वत तथापि मे ॥"

इति । अत्र हि सङ्कल्पानुभवक्लेशास्त्रयोऽपि पुनरुक्ताः । तत्राद्यस्य तावत् यत् पौनरुक्त्यं, तदर्थस्य कल्पनायां करणभावाव्यभिचारात् । द्वितीयस्य दुःखस्यानुभवविशेषात्मत्वोपगमे सति व्यतिरेकाभावात् तन्निबन्धनषष्ठीसमासस्तेन सह न सम्भवतीति । न च विशेषस्य सामान्येन सह समास इष्यते न हि भवति शाबलेयस्य गौरिति । नापि विशेषणसमासः । विशेषप्रतीतेरेव सामान्यप्रतीतिसिद्धेस्तयोर्विशेषणविशेष्यभावाभावात्, न हि भवति शाबलेयगवीति । तृतीयस्यापि दुःखपर्यायत्वात् तदुक्त्यैव गतार्थत्वात् पौनरुक्त्यमविवादसिद्धमेव ।

"अगाधापारसंसारसागरोत्तारसेतवे ।
देहार्धधृतकान्ताय कन्दर्पद्वेषिणे नमः ॥

इति । अत्र सागरोत्तारशब्दावुभावपि पुनरुक्तौ, एकस्यागाधत्वापारत्वलक्षणासाधारणसागरधर्माध्यारोपसामर्थ्यात् सेतुसम्बन्धाच्च संसारस्य तद्रूपतावगतेः । आर्थी एव हि अत्र रूपणा युक्ता अनुमेयत्वात्, न शाब्दी । यथा—

---

व्यक्तिविवेकव्याख्यानम् ।

अनुभवविशेषात्मत्वोपगम इति सौगतप्रक्रिययैतदुक्तम् । वैशेषिकास्तु जडमेवात्मगुणम् एकार्थसमवायिना ज्ञानेन ग्राह्यं सुखमाहुः । तत्प्रक्रियायां कर्तव्यमेवानुभवग्रहणम्

एकस्येति सागरस्य इतरस्य चेति उत्तारार्थस्य । तद्रूपतावगतेरित्युभयत्र तद्रूपता सागररूपता उत्ताररूपता च ।

मधुसूदनीविवृतिः ।

सङ्कल्पेति । सर्वत्र यावदधिकरणे । अनिशम् प्रतिक्षणम् । तथापि सर्वत्र प्रतिक्षणदर्शनेऽपि । करणभावाव्यभिचारादिति । कल्पनायाः संकल्पं विना अनवस्थिते । व्यतिरेकाभावादिति । दुःखमपि अनुभवविशेष एवेति अनुभवपदं पृथङ् न देयम् । व्यतिरेकस्य पार्थक्यस्य । दुःखस्य अनुभवात्मता तु नैयायिकैर्नाभ्युपगम्यते तस्तु मनसा उपलब्धव्यो गुण इति मन्यते । सुखदुःखाद्युपलब्धिसाधनमिन्द्रियं मन इत्युक्तेः । तदुक्त्यैव दुःखोक्त्यैव ।

अगाधेति । अगाधेति कथमपि सुखकणिकाया अलाभात् । अपारेति अनादिप्रवाहेण प्रवृत्तत्वात् । देहार्धधृतकान्ताय अर्धनारीविग्रहाय । शिवाय नमः ।

एकस्येति सागरस्य । अत्र अगाधत्वापारत्वलक्षणासाधारणधर्माध्यारोपसामर्थ्यादिति पाठः । एकस्येति सागरस्यैव प्रस्तुतत्वात् पुनः सागरपदोपादानं सर्वथा दुष्टम् । तद्रूपतेति समुद्रस्वरूपता ।

"चुम्बने विपरिवर्तिताधारं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद् वधूतरम् ॥"

इत्यत्र मन्मथस्यानलत्वेन इतरस्य च सेतोर्नियमेनोत्तरणार्थत्वेन प्रसिद्धेः । अनेन च 'सकलकलाकनकनिकषपाषाण' इत्यादौ कनकादिशब्दानामपि पौनरुक्त्यं व्याख्यातम् ।

"करकलितनिशातोत्खातखड्गाग्रधारा-
द्रढतरविनिपातच्छिन्नदुष्टारिकण्ठः ।"

इति । अत्र नवानां पदानामवकरत्वम् । तत्र यद् खड्गस्य करकलितत्वादिविशेषणचतुष्टयं तत् पुनरुक्तं तत्र तस्य व्यापार्यमाणस्य तत्त्वाव्यभिचारात् । यच्चाग्रत्वविशिष्टाया धाराया वचनं तत् पुनरुक्तं खड्गस्यैव करणत्वविवक्षायामौचित्यादेव तत्प्रतीतिसिद्धेः । यच्चात्र द्रढतरत्वविशिष्टो विनिपातः करणभावेनोपात्तो, यदपि दुष्टत्वमरीणां विशेषणं तदुभयमपि पुनरुक्तमेवार्थसामर्थ्यसिद्धत्वात् । अतश्च खड्गच्छिन्नारिकण्ठ इति पदचतुष्टयमेवात्र सारम् । अन्यत्त्ववकरप्रायं वृत्तस्य पूरणायैव पर्यवस्यति नार्थविशेषस्य कस्यचिदिति । यथा—

"शीधुरसविषयपानक्रियावशावाप्तजन्ममदविवशा ।
गलदंशुकदृश्यमुखी सुखायते किमपि कमितुरचिरोढा ॥"

मधुसूदनीविवृतिः ।

यथेति शाब्दरूपणाभावस्थलमुदाहरति–चुम्बने विपरिवर्त्तितेति । अत्र मन्मथस्य अनलत्वेन शाब्दी रूपणा न कृता सोचितैव । इतरस्य उत्तारशब्दस्य अनेन उक्तेन प्रकारेण

करकलितेति । अत्र नवानां करकलितनिशातोत्खातेति चतुर्णाम् अग्रधारेति द्वयोः दृढतरविनिपातेति द्वयोः दुष्टेति एकस्य इति सम्मेलनेन नवानाम् ।

तत्र तस्येति । अत्र तत्रेति पदं निष्फलम् ग्रन्थकर्त्रा प्रयुक्तम् । तस्य खड्गस्य । तत्वाव्यभिचारात् करकलितत्वेन सह नान्तरीयकत्वात् । करणत्वेति खड्गेन छिन्न इत्येवं रीत्या । तत्प्रतीतिसिद्धेः अग्रधारत्वप्रतीतिसिद्धेः । अर्थसामर्थ्येति दृढतरविनिपातेन विना कथं अरिकण्ठस्य छिदा स्यात् । यतो हि अरिर्दुष्टः तत एव तस्य कण्ठश्छिद्यते अन्यथा सामान्यस्य चिन्तैव का इत्येवं रूपेण अर्थशक्त्या सिद्धत्वम् । अवकरो दोषः

शीधुरसेति । सप्तानाम् रस[1]विषय[2]पान[3]क्रिया[4]वशा[5]वाप्त[6]जन्मे[7]ति शब्दानाम् । तस्मात् शीधुमदविवशा इत्येव पठनीयम् । गलदंशुकमध्याद् दृश्यं मुखं यस्याः सा मदवशा-दुंलन्नंशुकोऽवगुण्ठनपटः । किमपि वाचामगोचरम् । कमितुः कामुकस्य । अचिरोढा नवोढा ।

इत्यत्र रसादीनां सप्तानामवकरत्वम् । यथा वा—

"मदिराद्रवपानवशावाप्तोदयमदविघूर्णितात्मैव ।
तव तरुणि ! मदनदीपनमिदमक्षियुगं समाभाति ॥"

इति । अत्र द्रवादीनां षोडशानामवकरपदानां पौनरुक्त्यं प्रयुक्तान्तर्गताभ्यां द्वाभ्यामेव मदिराक्षिपदाभ्यां सम्बोधनीकृताभ्यां तदर्थप्रतीतिसिद्धेः । यथाह भरतः—

"आघूर्णमानमध्या या क्षामा चाञ्चिततारका ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥"

इति । एषां चावकरपदानां पर्यायेण यथायोगमेकादिप्रयोगे सति लोष्टसञ्चारक्रमेणातिबहवोऽवकरप्रकाराः समुद्भवन्ति, येषु प्रयुक्तेष्वप्रयुक्तेष्वपि तुल्यैवार्थावगतिरिति ते तत्र शल्यायमानाः शाब्दिकैः केवलमाद्रियन्ते । कविभिस्तु प्रस्तुतरसाभिव्यक्तिव्यवधाननिबन्धनधियावधीरणीया एव ।

यद्वा किं बहुनोक्तेन क्रियाकारकयोरपि ।
यदौचित्यादवगतिस्तत्रान्येषां कथैव का ॥ ४५ ॥

व्यक्तिविवेकव्याख्यानम् ।

सप्तानामिति शीधुमदविवशेत्येव वाच्यम् ।

मदिराद्रवेति । अत्र समाभातीत्येकं पदं गणितम् उपसर्गाणां द्योत्यपारतन्त्र्येण पृथक्पदार्हत्वाभावात् ।

एकादिप्रयोगे सतीति एकस्य प्रयोगाभ्युपगमेऽन्येषामेव तत्वम् । तत्राप्येकत्वमनियतम् । एवं द्वयोस्त्रयाणामित्यादियोजना कार्या, तत्राप्यनियतत्वेन प्रकारबहुलत्वात् ।

मधुसूदनीविवृतिः ।

१ २ ३ ४ ५ ६ ७ ८ ९ १ ११
मदिरेति । शोड़शानाम् द्रवपानवशावाप्तोदयमदविघूर्णितात्मैव तव तरुणि
१२ १३ १४ १५ १६
मदनदीपनमिदम् युगसमाभाति इत्येषाम् । "मदिराक्षि" इत्येत्र उचितम् । समाङोरुपसर्गयोः धात्वन्तर्गतत्वेनैव ग्रहणादेकत्वम् । तदर्थस्य द्रवाद्यर्थस्य प्रतीतिसिद्धेः । एवंरीत्या ग्रन्थकृता ।

पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा
प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ।

इत्युक्तायाः प्रौढेः प्रत्याख्यानं कृतमिति बोध्यम् ।

यद्वेति । यदा क्रियाकारकयोरपि विनापि प्रयोगेण औचित्येनावगतिः तर्हि अन्येषां पदादीनां तु कथैव का अवगतौ ।

तत्र क्रियाया यथा—

"मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वज्रमिन्द्रकरविप्रसृतं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ! ॥"

इति । कारकस्य यथा—

"मा धाक्षीन्मा भाङ्क्षीन्मा भैत्सीज्जातुचिद्वत भवन्तम् ।
सुकृतैरध्वन्यानां मार्गतरो ! स्वस्ति तेऽस्तु सह लतया ॥"

इति । वाक्यार्थविषयं पौनरुक्त्यं यथा—

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥"

इति । अत्र हि अविवेकप्रयुक्तमविमृश्यकारित्वलक्षणं सहकार्यकारित्वं नामापदामविकलं कारणमिति तेषां कार्यकारणभावमन्वयवाक्येन प्रतिपाद्य पुनः कारणाभावरूपं विमृश्यकारित्वमनूद्य तत्कार्यभूतविपदभावरूपाणां सम्पदां सद्भावो भणित इति व्यतिरेकवाक्येनापि तेषां कार्यकारणभाव एवाभिहित इति तस्य पुनरुक्तता, अन्वयवाक्यादेव तदवगतेः । यदुक्तम्—'साधर्म्येणापि प्रयोगे अर्थाद्वैधर्म्येणान्वयगतिः असति तस्मिन्

---

व्यक्तिविवेकव्याख्यानम् ।

अविवेकप्रयुक्तमिति । यद्यप्यविमृश्यकारित्वस्यैवापत्कारणत्वं, तथाप्यविवेकस्याविमृश्यकारित्वप्रयोजकत्वात् तस्य कारणत्वेऽप्यविमृश्यकारित्वमेव कारणमुक्तं भवति ।

मधुसूदनीविवृतिः ।

तत्र क्रियायाः कारकस्य यथेत्येताभ्याम् प्रयोगाभावेपि क्रियायाः कारकस्य अवगतिं दर्शयति । मा भवन्तमिति अत्र अधाक्षीदित्यादीनामवगतिः । मा धाक्षीरित्यत्र अनलादेः कर्तुरवगतिः ।

सहसेति । अयं भावः । यथा चन्द्रवत् मुखमित्युक्तौ मुखवत् चन्द्र इति प्रतीतिरर्थादेव भवति । यथा च साधर्म्यवाक्यात् त्वय्यागते सा प्रसीदति यतः चन्द्रलोके कुमुद्वती विकसति इत्यस्मादपि वैधर्म्यस्यावगतिः अन्यथा न प्रसीदति विकसति च इत्येवंरूपा भवति । यथा च वैधर्म्यं वाक्यात् त्वदग्रेऽरयः पलायन्ते यतोऽवाते पांसवः स्थिरा इत्यस्मादपि साधर्म्यस्य अवगतिः अन्यथा न पलायन्ते स्थिराश्च इत्येवंरूपा भवति । तथैव अन्वयवाक्येन यदुच्यते व्यतिरेकवाक्येनाऽपि तदेवोच्यते इति एकेनोक्तावपि अपरेणाप्यभिधानं पुनरुक्तिः । तथा च अविवेकात् सहसा अविमृश्यैव कार्यकरणे आपत् इति अविवेकप्रयुक्ताविमृश्यकार्यकरणस्य आपदश्च क्रमशः अविमृश्यकार्यकरणेन आपन्नवतीत्येवंरूपः कारणकार्यभावः प्रतीतो भवति । ततश्च अविमृश्यकार्यकरणसत्त्वे आपत्सत्त्वेत्यन्वयवाक्येन यदुच्यते तदेव व्यतिरेकवाक्येन अविमृश्यकार्यकरणाभावे आपदभाव इत्यनेनाप्युच्यते । अर्थात् अभावाभावस्य तत्त्वात् अविमृश्यकार्यकरणाभावः विमृ-

साम्याभावे हेत्वभावस्यासिद्धेरिति नावश्यं वाच्यद्वयप्रयोग' इति ।

किञ्चान्वयव्यतिरेकवाच्ययोरन्योन्यस्य न हेतुहेतुमद्भावः सम्भवति । न हि यस्मिन् सति यस्यावगतिस्तस्य प्रत्युत स एव हेतुरिति युज्यते वक्तुं हेतुहेतुमद्भावविपर्यासप्रसङ्गाद् इति व्यतिरेकवाक्ये तद्भिव्यक्त्यर्थो हिशब्दोऽप्यपार्थक एवेति । कुतस्तर्हि द्वितीयेऽर्धेऽर्थस्य चारुतावगतिः । उच्यते । लिङ्गविशेषाद्धर्मविशेषाच्च सम्पदां नायिकात्वेऽवसिते सति समासोक्तेरित्येतद् वक्ष्यते । यथा च—

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥"

इति । अत्र हि धर्माधर्मयोश्छायातपयोरिव अन्योन्यपरिहारेणावस्थितयोर्यदैवैकस्य ग्लानिस्तदैवेतरस्याभ्युत्थानमिति तयोरेकस्मिन् वाच्ये यदुभयोर्वचनं तत् पुनरुक्तमिति ।

---

व्यक्तिविवेकव्याख्यानम् ।

न हीति यस्मिन् सति 'वह्नौ धूम' इत्यादिके प्रतिबन्धकाभाविन्यन्वये सति विशेषणस्य यस्य 'असति वह्नौ न धूम' इत्यादिव्यतिरेकस्य गतिः प्रतीतिः, तस्यान्वयस्य स एव व्यतिरेको हेतुर्न युक्तः व्यवस्थितस्य हेतुहेतुमद्भावस्य वैपरीत्यप्रसङ्गात् । अन्वयप्रतीतिहेतुको हि व्यतिरेकप्रतीत्युपक्रमो न तु विपर्ययः । विशेषाच्चेति गुणलुब्धा इति साधरणत्वादित्यर्थः ।

मधुसूदनीविवृतिः ।

श्यकार्यकरणम् । आपदभावः सम्पदेवेति उक्तमेव । एवञ्च सहसेति पद्ये पूर्वार्द्धेन वस्तुनो गतार्थत्वे उत्तरार्द्धस्योपादानं पुनरुक्तम् । कारणाभावरूपमिति । आपत्कारणम् अविमृश्यकारित्वम् तदभावः अविमृश्यकारित्वाभावो विमृश्यकारित्वमेव ।

किञ्चेत्यनेन उत्तरार्द्धे "वृणते हि" इत्युक्तस्य हिपदस्य अपार्थकत्वं दर्शयितुमुद्यतते । अन्योन्यस्येति । अन्वयवाक्यं व्यतिरेकवाक्यस्य हेतुः व्यतिरेकवाक्यं वा अन्वयवाक्यस्य हेतुरिति परस्परं हेतुहेतुमद्भावो न सम्भवति । कुत एतदित्याह–न हीति । यस्मिन् "वह्नौ धूम" इत्यन्वये सति यस्य "असति वह्नौ न धूम" इति व्यतिरेकस्य अवगतिस्तत्र प्रत्युत वैपरीत्येन व्यतिरेकः तस्य अन्वयस्य हेतुरिति वक्तुं न युज्यते । अयं भावः । अन्वयः सत्ताघटितः व्यतिरेकोऽभावघटितः । अभावस्य च प्रतियोगिनिरूपणाधीनत्वमिति अन्वयस्यैव व्यतिरेकप्रतीतिहेतुत्वमुचितं न तु वैपरीत्येनेति । तत्कुतः इत्याह–हेतुहेतुमद्भावविपर्यासेति । अन्वयप्रतीतिहेतुकः व्यतिरेकप्रतीत्युपक्रम एव उचितः न तु व्यतिरेकप्रतीतिहेतुकः अन्वयप्रतीत्युपक्रम उचितः । अन्यथा हेतुहेतुमद्भावस्य विपर्यासः स्यात् तदभिव्यक्त्यर्थः हेतुहेतुमद्भावाभिव्यक्त्यर्थः । लिङ्गविशेषात् स्त्रीत्वरूपलिङ्गविशेषात् धर्मविशेषात् गुणलुब्धत्वरूपधर्मविशेषाच्च ।

सामर्थ्यसिद्धस्यार्थस्य यथार्थी पुनरुक्तता ।
तात्पर्यभेदाच्छब्दस्य द्विरुक्तिः शाब्द्यपीष्यते ॥ ४६ ॥
पौनरुक्त्यमिति द्वेधा गौणमुख्यतया स्थितम् ।
तत्र दूषणमेवाद्यमपरं भूषणं स्मृतम् ॥ ४७ ॥
शब्दालङ्कारनिपुणैर्लाटानुप्राससंज्ञया ।
तच्चोदाहृतमेव प्राग् दूषणं तु वितन्यते ॥ ४८ ॥
प्रकृतिप्रत्ययार्थोऽस्य पदवाक्यार्थ एव च ।
विषयो बहुधा ज्ञेयः स क्रमेणोपदर्श्यते ॥ ४९ ॥
अभिन्न एव यत्रार्थः प्रकृतेः प्रत्ययस्य च ।
तत् पौनरुक्त्योपहतं पदमादौ विवर्जयेत् ॥ ५० ॥
विहितस्य बहुव्रीहेः कर्मधारयशङ्कया ।
शब्दस्य मत्वर्थीयादेर्व्यक्तैव पुनरुक्तता ॥ ५१ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

सामर्थ्येति । द्विविधं पौनरुक्त्यमर्थगतं शब्दगतं चेति । तत्रार्थसामर्थ्यसिद्धत्वेऽर्थगतं गौणम् आमुखे पौनरुक्त्यानवभासात्। शब्दगतमामुखावभासमानत्वाद् मुख्यम्।

प्रकृतिप्रत्ययार्थस्येति प्रकृत्यर्थः प्रत्ययार्थः प्रकृतिप्रत्ययसमुदायार्थ इति व्यस्तसमस्तत्वेन योज्यम् । एवं प्रकृतेः प्रत्ययस्य चेत्यत्रापि वाच्यम् । अन्यथा प्राङ्निर्दिष्टस्य पञ्चविधस्य पौनरुक्त्यस्यासङ्ग्रहः स्यात् ।

विहितस्येति । वस्तुवृत्त्या स्थितस्य बहुव्रीहेर्या कर्मधारयशङ्का तया मत्वर्थीया-

मधुसूदनीविवृतिः ।

सामर्थ्यसिद्धस्येति । यथा सामर्थ्येन अर्थापत्तिद्वारा सिद्धस्य अर्थस्य शब्दतः पुनरुपादने आर्थी पुनरुक्तता तथा तात्पर्यभेदात् शब्दस्य पुनरुपादाने शाब्दी अपि द्विरुक्तिः पुनरुक्तता इष्यते ।

पौनरुक्त्यमिति । इत्येवं शब्दार्थाभ्यां पौनरुक्त्यं द्वेधा गौणमुख्यतया स्थितम् । आर्थं पौनरुक्त्यं गौणम् तस्य झटिति प्रतीत्यभावात् । शाब्दं पौनरुक्त्यं मुख्यम् आमुख एव तस्य प्रतीतेः । तत्र तयोर्मध्ये आद्यम् आर्थम् । अपरम् शाब्दम् भूषणम् तात्पर्यभेदे सति भूषणम् अन्यथा तु दूषणमेव ।

शब्देति । तच्च तात्पर्यभेदात् शब्दस्य पौनरुक्त्यम् ।

प्रकृतिप्रत्ययार्थ इति । अस्य सदूषणस्य शब्दस्य प्रकृत्यर्थः प्रत्ययार्थः क्वचिदुभयार्थः पदार्थः वाक्यार्थश्च विषयः स्थलम् ।

अभिन्न एवेति । यत्र स्थले अभिन्न एव एक एवार्थः प्रकृत्यादेः द्विरुपादीयते तत्पौनरुक्त्येन उपहतं नष्टं पदम् आदौ आर्थ्यां पुनरुक्ततायां विवर्जयेत् ।

विहितस्येति । बहुव्रीहेः समासादुत्तरं विहितस्य मत्वर्थीयादेः शब्दस्य कर्म-

यस्मिन् यत्तद्धितोत्पत्तिरर्थस्तेनैव जातुचित् ।
न तदन्तः समस्येत तद्धितव्यर्थताभयात् ॥ ५२ ॥
विशेषणवशादिच्छेद्विशिष्टं यत्र संज्ञिनम् ।
युक्ता तत्र विशेषोक्तिरन्यथा पौनरुक्त्यकृत् ॥ ५३ ॥
सकृदेव प्रयुक्तेन यत्र साम्याभिधायिना ।
अन्येषामुपमानत्वं सामर्थ्यादवगम्यते ॥ ५४ ॥
तत्रासकृत् प्रयोगोऽस्य पौनरुक्त्याय कल्पते ।

---

व्यक्तिविवेकव्याख्यानम् ।

दिः शब्दः कृतो विसकिसलयच्छेदपाथेयवन्त इत्यादौ । तस्य स्फुटं पौनरुक्त्यं वृत्तिद्वयस्य गौरवात् ।

यस्मन्निति 'जाम्बवपल्लवानी'त्यादौ यस्मिन् पल्लवशब्द इत्यर्थः । अर्थः इदन्त्वलक्षणः । यत्तद्धितोत्पत्तिःयस्मादण्प्रत्ययाख्यात् तद्धितादुत्पत्तिः प्रतीतिविषयत्वापत्तिर्यस्यार्थस्य । तदन्तस्तद्धितप्रत्ययाख्यान्तो जाम्बवशब्दादिः । तेनैव पल्लवशब्देन न समसनीयः, जम्बूपल्लवानीति समासेन गतार्थत्वात् तद्धितवैयर्थ्यप्रसङ्गात् ।

विशेषणवशादिति । पिनाकपाण्यादिविशेषणमाहात्म्यात् । विशिष्टमुत्कर्षापकर्षवन्तं संज्ञिनं हरादिकं यत्रेच्छेत् न तत्र पौनरुक्त्यम् । अन्यथा तु पौनरुक्त्यम् । यथा 'पायात् स शीतकिरणाभरणो भवो व' इत्यादौ ।

सकृदेवेति साम्याभिधायी इवशब्दादिः । 'निर्याय विद्ये'त्यादौ ।

मधुसूदनीविवृतिः ।

धारयशङ्कया पुनरुक्तता व्यक्ता एव । अर्थात् समासतद्धित रूपवृत्तिद्वयस्योपादाने गौरवं स्पष्टमेवेति ।

यस्मिन्निति । यस्मिन् पदे यस्य तद्धितस्य उत्पत्तिः तेनैव तद्धितेन अर्थः प्रतीयेत । ततः जातुचिदपि तदन्तः तद्धितान्तः न समस्येत तद्धितस्य व्यर्थताभयात् ।

विशेषणवशादिति । यत्र संज्ञिनं विशेषणस्य वशात् विशिष्टमुत्कृष्टमपकृष्टं वा इच्छेत् तत्र विशेषोक्तिः विशेषणस्योपादानं युक्तम् । अन्यथा विशिष्टसंज्ञिप्रत्ययाभावे विशेषणोक्तिः पुनरुक्ता ।

सकृदेवेति । तत्रासकृदिति अर्द्धम् । यत्र स्थले सकृदेव एकवारमेव प्रयुक्तेन उपात्तेन साम्याभिधायिना पदेन अन्येषां तत्सदृशानाम् उपमानत्वं सामर्थ्यादवगम्यते तत्र स्थले असकृत् पुनः पुनः प्रयोगः अस्य साम्याभिधायिपदस्य पौनरुक्त्याय कल्पते ।

यद्वदव्यभिचारस्य कारकस्याविशेषणा ॥ ५५ ॥
अर्थस्यानुमितस्योक्तिर्नात्येति पुनरुक्तताम् ।
यद्वशाद्यदभिव्यक्तिस्तदुक्तौ नाददीत तत् ॥ ५६ ॥
यो यद्धर्मोपचारेण यत्सम्बन्धान्वितोऽपि वा ।
तस्य तद्रूपणार्थीष्टा न शाब्दी पौनरुक्त्यतः ॥ ५७ ॥
प्रयुक्तान्तर्गतैरेव यत्र सोऽर्थः प्रतीयते ।
प्रयोगस्तत्र शेषाणां पदानां पौनरुक्त्यकृत् ॥ ५८ ॥
कर्त्तर्यङ्गिनि रूढायां तत् क्रियायां च नेष्यते ।

---

व्यक्तिविवेकव्याख्यानम् ।

यद्वदिति दृष्टान्तमुखेन 'जनैरजातस्खलनैरि'त्यादि सङ्गृहीतम् ।

अर्थस्येति 'राहुस्त्रीस्तनयोरि'त्यादौ । अथवा यत्र कारकविशेषवशात् क्रियायाः प्रतीतिः क्रियाविशेषवशाद्वा कारकस्य तत्र क्रियाकारकयोः प्रयोगो न कार्य इत्ययमर्थः । यथा 'मा भवन्तमि'त्यादौ ।

यो यद्धर्मेति 'अपरदिग्गणिके'त्यादौ यो दिग्लक्षणोऽर्थो यद्धर्मस्य गणिकाधर्मस्य निष्कासनादेरुपचारेणोपलक्षितः । तथा 'अम्बुनिधेर्ममन्थे' इत्यादौ यस्य कामुकस्य सम्बद्धं यद् हृदयादि तेनान्वितोऽम्बुधिरुक्षणो यश्चार्थः, तस्य तद्रूपणा गणिकाकामुकरूपणा शाब्दी नेष्यते आर्थी पुनरिष्यत एव ।

प्रयुक्तान्तर्गतैरेवेति 'मदिराद्रवे'त्यादौ ।

कर्तरि इति प्रधानभूते राजादौ कर्तरि तत्क्रियायां च खड्गेन च्छेदक्रियायां

मधुसूदनीविवृतिः ।

यद्वदिति । अर्थस्येति च । यद्वत यथा अव्यभिचारस्य नियतस्य कारकस्य अविशेषणा विशेषणशून्या उक्तिः पुनरुक्ततां नात्येति तथा अनुमितस्य व्यञ्जितस्य अर्थस्य उक्तिः पुनरुक्ततां नात्येति । यद्वशात् यस्य वस्तुनः अभिव्यक्तिः । तदभिव्यक्तम् उक्तौ शब्दविषये नाददीत । यतः पुनरुक्तम् स्यात् । अथवा तदुक्तौ सत्यां तत नाददीत ।

यो यद्धर्मेति । यः पदार्थः यत्पदार्थनिष्ठधर्मस्य उपचारेण उपलक्षिता, वा अथवा यस्य पदार्थस्य सम्बन्धेन अन्वितोऽपि भवेत् । तस्य तद्रूपणा तद्धर्मरूपणा आर्थी इष्टा शाब्दी न इष्टा, अर्थगतत्वेन रूपणा अर्थात् प्रतीयते इत्यनुमन्यते, अर्थात् प्रतीतस्य शब्दत उपादाने चर्वितचर्वणा स्यात अतः शाब्दी रूपणा नेष्यत इति तात्पर्यम् ।

प्रयुक्तेति । यत्र स्थले । प्रयुक्तानाम् पदानाम् अन्तर्गतैः पदैरेव सोऽभिहितः अर्थः प्रतीयते तत्र शेषाणां पदानां प्रयोगः पौनरुक्त्यकृत ।

कर्त्तरीति । कर्त्तरि अङ्गिनि प्रधानभूते, तत्क्रियायां कर्त्तुः क्रियायां च रूढा-

वाक्साधकतमाङ्गानामौचित्यादेव तद्गतेः ॥ ५९ ॥
दोषद्वयमिदं प्रायः समासविषयं मतम् ।
यतोऽवकरभूयिष्ठा लक्षणैकपरायणैः ॥ ६० ॥
कृताः प्रतीतिविमुखैर्दृश्यन्तेऽनेकधा हि ते ।
समासमत एवाहुः कवीनां निकषं परम् ॥ ६१ ॥
वृत्तावितरथा चोक्ते नान्यभाजि विशेषणे ।
विशेष्योक्तिरयुक्तैव स्यात् तदव्यभिचारतः ॥ ६२ ॥
यो यदात्मा तदुक्त्यैव तस्यार्थस्य गतिर्यतः ।
तेन प्रयोजनाभावे द्वयोक्तिः पुनरुक्तिकृत् ॥ ६३ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

रूढायां साधकतमस्य खड्गस्य बहूनि तदपेक्षयाङ्गानि धाराविनिपातादीनि तेषां वाग् वचनं नेष्यते यथा 'करकलिते'त्यादौ । एतदुक्तं भवति । राजादौ कर्त्तरि च्छेदादिक्रियायां यत् साधकतमं खड्गाद्यङ्गं तस्याप्यङ्गानां धाराविनिपातादीनां वचनं नेष्यते तेनैवाङ्गेन प्रधानभूतेनावान्तराङ्गानामाक्षेपात् ।

दोषद्वयं 'प्रयुक्ते'ति 'कर्त्तरी'ति च प्रतिपादितम् ।

ते इति समासाः ।

वृत्तावितिं । समासे वाक्ये वा असाधारणं यत्र विशेषणं तत्र विशेष्यं न वाच्यं यथा 'दुःखानुभवे'त्यादौ ।

यो यदात्मेति । बाष्पादेर्जलादिरूपत्वाव्यभिचारात प्रयोजनाभावे जलादिपदप्रयोगो न कार्यं इत्यर्थः । यथा 'नयने वाष्पवारिणे'त्यादौ ।

मधुसूदनीविवृतिः

याम् साधकतमानाम् अङ्गानाम् वाक् उक्तिः नेष्यते । कुतो नेष्यते तदाह—औचित्यादेवेति ।औचित्यादेव औचित्यबलादेव तद्गतेः अङ्गानां प्रतीतेः

दोषद्वयमिति । कृता इति । इदं प्रयुक्तेत्यादिना कर्त्तरीत्यादिना च समीहितं दोषद्वयम् प्रायः समासविषयं मतम् समासे एव बाहुल्येन प्रतीतेः । अवकरः दोषः । निकषं परीक्षास्थानमित्यर्थः ।

"वृत्तौ" इति । वृत्तौ समासे इतरथा समासाभावे अर्थात् वाक्ये च नान्यभाजि असाधारणे विशेषणे उक्ते विशेष्योक्तिः अयुक्तैव अनुचितैव स्यात् । तत्कुतः-अव्यभिचारतः । यत्र असाधारणं विशेषणं स्यात्तदा तत्र विशेष्यं बलात्प्रत्येष्यति । इति भावः ।

यो यदात्मेति । यः पदार्थः यदात्मा यत्स्वरूपः तस्य अर्थस्य गतिर्ज्ञानम् यतः तदुक्त्यैव स्वरूपोक्त्यैव स्यात् तेन हेतुना प्रयोजनाभावे द्वयोक्तिः पुनरुक्तिकृत् ।

यो यस्य नियतो धर्मस्तस्य तेन न धर्मिणा ।
समासः शस्यतेऽन्यार्थस्तत एव हि तद्गतेः ॥ ६४ ॥
क्रियाप्रतीतिः करणप्रत्ययाव्यभिचारिणी ।
तदप्रतीतौ तादात्म्यात् सैवानवसिता भवेत् ॥ ६५ ॥
यदेतत् त्यागपाकादौ क्रियेत्युक्तेर्निबन्धनम् ।
तद्व्यक्तिर्यद्वशाद्यस्य तदुक्तौ नाददीत तत् ॥ ६६ ॥
प्रयुक्ते चाप्रयुक्ते च यस्मिन्नर्थगतिः समा ।
न तत् पदमुपादेयं कविनावकरो हि सः ॥ ६७ ॥

व्यक्तिविवेकव्याख्यानम् ।

यो यस्येति यो निष्यन्दनादिः यस्य चन्द्रकान्तादेर्धर्मिणोऽव्यभिचारो धर्मः तयोः समासो न प्रशस्यते, यथा 'द्विषद्वधूलोचने'त्यादौ । अन्यार्थ इति । साधर्म्यार्थ इत्यर्थः ।

क्रियेति क्रियायाः शोकादिलक्षणायाः प्रतीतिः करणक्रियाप्रतीतिं न व्यभिचरति करणमेव यतः क्रिया, तदप्रतीतौ करणाप्रतीतौ सैव शोकादिलक्षणा क्रिया न निश्चिता स्याद् एकत्वात् । त्यागक्रियेत्यत्रैतदेव क्रियाशब्दप्रवृत्तिनिमित्तम् ।

तत् तस्मात् यद्वशात् शोकादिशब्दप्रयोगवशाद् यस्य करणस्य व्यक्तिः प्रकाशस्त क्तौ शोकादिशब्दप्रयोगे तत् करणादिपदं न प्रयुञ्जीतेत्यर्थः, यथा 'शोकक्रियाकरणस्ये'त्यादौ ।

प्रयुक्ते चेति प्रकृत्यादिपुनरुक्तानां चतुर्णामुपसंहारः । अन्योन्येति वाक्यपौनरुक्त्यसङ्ग्रहः ।

मधुसूदनीविवृतिः ।

यो यस्येति । यो धर्मः यस्य धर्मिण नियतः अव्यभिचारी तस्य धर्मस्य तेन धर्मिणा सह समासो न शस्यते । कुतो न शस्यत इत्याह—अन्यार्थ इति । धर्मो हि अन्यार्थो भवति तत एव धर्मिण एव सकाशात् तद्गतेः धर्मावगतेः । प्रधानेऽवगते तदनुयायिनोऽप्रधानस्य ज्ञानमर्थात् स्यादिति भावः ।

क्रियेति । क्रियायाः प्रतीतिः करणप्रत्ययेन अव्यभिचारिणी भवति ततः तदप्रतीतौ करणाप्रतीतौ तादात्म्यात् अभेदात् सैव क्रिया एव अनवसिता स्यात् यथा चन्द्रालोकयोरभेदात् आलोकाऽप्रतीतौ चन्द्राप्रतीतिः तद्वत् ।

यदेतदिति । यत् यस्मात् एतत्करणम् त्यागपाकादिस्थले "क्रिया" इति उक्तेः प्रवृत्तेः निबन्धनम् निमित्तम् । तत्ततः यद्वशात् यस्य व्यक्तिः तदुक्तौ तत् नाददीत । इत्युक्तमेव पूर्वम् ।

प्रयुक्ते चेति । यस्मिन् प्रयुक्तेऽपि अप्रयुक्तेऽपि समा अर्थावगतिः । तत्पदं कविना न उपादेयम् । हि यतः स अवकरः तत्पदं दृष्टम् । सेत्यत्र पुंस्त्वम् अवकराभिप्रायेण ।

अन्योन्याक्षेपकत्वे सत्यन्वयव्यतिरेकयोः ।
उभयोरुक्तिरेकस्य नात्येति पुनरुक्तताम् ॥ ६८ ॥
पुनरुक्तिप्रकाराणामिति दिङ्मात्रमीरितम् ।
विवेक्तुं को हि कात्स्न्र्येन शक्नोत्यवकरोत्करम् ॥ ६९ ॥
इति सङ्ग्रहश्लोकाः ।

वाच्यस्यावचनं यथा—

"कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ।"

इति । अत्र हि भ्रान्तौ निवृत्तायां तद्विषयभूतयोः सुरधनुर्धारासारयोरिव विद्युतोऽपीदमा परामर्शो वाच्ये यत् तस्यावचनं स वाच्यावचनं दोषः । यथा च—

"कमलमनम्भसि कमले कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥"

अत्र हि द्वितीयः कमलार्थः सर्वनामवाच्यः । तस्य यत् स्वशब्देन वचनं स वाच्यावचनं दोषः । तेनात्र 'तस्मिंश्च कुवलये'इति युक्तः पाठः।

व्यक्तिविवेकव्याख्यानम् ।

उभयोरुक्तिरेकस्य । उभममध्यात् कस्यचित् । पौनरुक्त्यं नातिक्रामति । यथा 'सहसा विदधीते'त्यादौ ॥

एवं पौनरुक्त्यं सप्रपञ्चं विचार्य वाच्यावचनं प्रपञ्चयितुमाह वाच्यस्यावचनं यथेति । असमासेन निर्देशो वक्ष्यमाणमेतत्समानन्यायमवाच्यस्य वचनमपि कटाक्षयितुम् ।

इदमा परामर्श इति अबाधितप्रत्यक्षनिमित्तत्वाद् भ्रान्तिनिवृत्तेः प्रत्यक्षस्य च विषयमुखेन परामर्शार्हत्वात् । तस्य यत् स्वशब्देन वचनमिति पूर्वं सत्येव सर्वनाम्नि पुनः स्वशब्देन प्रतिपादनम्—

मधुसूदनीविवृतिः ।

अन्योनेति । पुनरुक्तीति । उभयमध्यादेकस्योक्तिः । अवकरोत्करम् दोषवृन्दम् । अत्र पूर्वग्रन्थार्थसंग्राहकत्वात कारिकाणामित्यस्माभिः विस्तरभयादुपेक्षितमुदाहरणजातम् केवलो ग्रन्थार्थं एव निरूपितः ।

क्रमप्राप्तं वाच्यावचनं निरूपयति । वाच्यस्य अ वचनं यथेति । अवाच्यवचनसङ्ग्रहार्थं वाक्येन निर्देशः । तथा च नञर्थकस्य अकारस्य द्विधा योगः । वाच्यस्य अ वचनम् अ वाच्यस्य वचनमिति । कनकनिकषेति । भ्रान्तौ निवृत्तायामिति प्रत्यक्षेण उत्तरकालीनबाधाद्भ्रान्तेर्निवृत्तिः । इदमा परामर्श इति । इदमः सन्निकृष्टार्थवाचकत्वादिति भावः ।

स्वशब्देनेति । अवाच्यमेतिशेषः । पूर्वं सर्वनामार्हस्य स्वशब्देन उक्तौ पुनरुक्तिः।

सर्वनामपरामर्शविषये योऽर्थवस्तुनि ।
स्वशब्दवाच्यतादोषः स वाच्यावचनाभिधः ॥ ७० ॥

इति सङ्ग्रह श्लोकः ।

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इति । अत्र हि कपालिशब्दो धर्मिधर्मोभयार्थवृत्तिः संज्ञिमात्रं वा प्रत्याययेत् , कपालसम्बन्धकृतं वा गर्हितत्वम् , उभयमपि वेति त्रयः पक्षाः । तत्र प्रथमे पक्षे विशेषप्रतिपत्तये कपालिग्रहणमपरमपि कर्तव्यं येनास्य गर्हितत्वं प्रतीयेत ।

द्वितीये पक्षे तस्याश्रयप्रतिपत्तये तेनैव तत्पर्यायेण सर्वनाम्ना वा विशेष्यमवश्यमुपादेयं भवति येन तस्य विवक्षितार्थसिद्धावार्थो हेतुभावोऽवकल्प्येत । तत्र तेनैवोपादाने यथा—

"सततमनङ्गोऽनङ्गो न वेत्ति परदेहदाहदुःखमहो ।
यदयमदयं दहति मामनलशरो ध्रुवमसौ न कुसुमशरः ॥"

इति । पर्यायेणोपादाने यथा—

"कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ।"

इति । अत्र हरस्येति पर्यायशब्देनोपात्तस्यार्थस्य पिनाकपाणित्वं धै-

---

व्यक्तिविवेकव्याख्यानम् ।

'सर्वनामपरामर्शयोग्यस्यार्थस्य यत् पुनः ।
स्वशब्देनाभिधानं सा शब्दस्य पुनरुक्तता' ॥

इति पुनरुक्तमुक्तम् । इदानीं तु सर्वनामस्थानीयत्वेन स्वशब्देन वचनं वाच्यावचनमुच्यते

धर्मिधर्मेति धर्मी हरलक्षणोऽर्थः । धर्मः कपालसम्बन्धेन गर्हितत्वम् । उभयं धर्मिधर्मात्मकम् । विशेषप्रतिपत्तय इति गर्हितत्वमत्र विशेषः । तस्येति गर्हि-

मधुसूदनीविवृतिः ।

निरूपिता इदानीं सैव वाच्यावचनाख्यत्वेन निरूप्यते ।

धर्मिधर्मेति । धर्मी शिवः । धर्मः कपालयुक्तत्वम् अर्थात् कपालहेतुकगर्हितत्वम् । उभयम् धर्मिधर्मात्मकम् । विशेषप्रतिपत्तये धर्मप्रतिपत्तये । तस्य गर्हितत्वस्य धर्मस्य आश्रयप्रतिपत्तये अधिकरणलाभाय तेनैव स्वशब्देनैव । तस्य धर्मस्य विवक्षितार्थः प्रकरणानुषक्तः ।

सततमिति । अत्र धर्माश्रयप्रतिपत्तये अनङ्ग इति स्वशब्द एव उपात्तः । अनङ्गो वस्तुत अनङ्ग इति स्वशब्देनोपात्तस्यार्थस्य कामरूपस्य परदेहदुःखाज्ञाने अनङ्गत्वं हेतुः स च अनङ्गत्वादेवायं परदेहदुःखं न वेत्तीत्येवं पञ्चम्यन्तपदाभावादार्थः ।

कुर्यामिति । अहं कुसुमायुधस्तेन किम् । यदि हरोऽपि पिनाकं गृहीत्वा उपतिष्ठेत् तर्हि तस्याऽपि धैर्यच्युतिं कर्तुं समर्थोऽस्मि । अयं भावः । अशस्त्रपाणे-

र्यच्युतेरशक्यकरणीयतायामार्थो हेतुः अन्यथा हरग्रहणस्य पौनरुक्त्यं स्यादिति। यथा च 'एकः शङ्कामहिकुलरिपोरत्यजद्वैनतेया' इति।

सर्वनाम्ना यथा—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ता स्तुमो वामलोचनाः॥"

इति। अत्रापि सर्वनाम्नोपात्तस्यार्थस्य वामलोचनात्वं मनसिजदाहजीवनयोरन्योन्यविभिन्नयोरप्यभिन्नहेतुकत्वोपपत्तावार्थो हेतुः इतरथा वामलोचनात्वस्य पुनरुपादानप्रसङ्गः।

अत एव तृतीयः पक्षो न सम्भवत्येव एकस्यैव शब्दस्यावृत्तिमन्तरेणानेकार्थप्रतिपादनसामर्थ्याभावात्। न चासावनिबन्धना शक्या कल्प-

---

व्यक्तिविवेकव्याख्यानम्।

तत्त्वस्य। एवं तस्य विवक्षितेत्यत्र ज्ञेयम्। विवक्षितोऽर्थः शोच्यतालक्षणः। आर्थ इति विशेषणद्वारेण भावाव।

वामलोचनात्वमिति। न चात्र वामलोचनेति विशेष्यपदम्। यतो यत्तच्छब्दद्वयोत्थापितवाक्यार्थद्वयसामर्थ्यान्नायिकालक्षणस्य विशेष्यस्य प्रतीतिः। विशेषणमेवात्र वामलोचनापदम्।

तृतीय इति उभयवृत्तित्वाख्यः। न चासाविति आवृत्तिः। न चैषामिति

मधुसूदनीविवृतिः।

रपि हरस्य धैर्यच्युतिः कर्त्तुं दुःशका, तत्र शस्त्रपाणेः तत्राऽपि पिनाकपाणेरिति नितान्तमसम्भवा सा इत्येवं पिनाकपाणित्वं हरस्येति पर्यायशब्देन उपात्तस्य अर्थस्य शिवरूपस्य धैर्यच्युतेरशक्यकरणीयतायां हेतुः परन्तु स "पिनाकपाणित्वादेवास्य धैर्यच्युतिः कर्त्तुमशक्या" इत्येवं पञ्चम्यन्तादिपदाभावादार्थः।

दृशेति। सर्वनाम्ना तच्छब्देन उपात्तस्य अर्थस्य स्त्रीरूपस्य उपपत्तौ वामलोचनात्वं हेतुः। कीदृश्यामुपपत्तौ—अन्योन्यस्मात् विशेषेण भिन्नयोरपि मनसिजदाहजीवनयोः अभिन्नहेतुकत्वोपपत्तौ दाहेऽपि हेतुर्दृक् जीवनेऽपि हेतुर्दृक् इति दाहजीवनविषये दृक्रूपैककारणत्वसिद्धौ परन्तु स हेतुः वामलोचनात्वादेव ताः एवं कर्त्तुं पारयन्तीत्येवं पञ्चम्यन्तादिपदाभावादार्थः।

अत एवेति। अत एव पक्षद्वयाभावादेव तृतीयः उभयार्थवृत्तित्वाख्यः। असौ आवृत्तिः अनिबन्धना निष्कारणा कल्पयितुं न शक्या। एकस्यैव शब्दस्य (कपालिशब्दस्य) आवृत्तिमन्तरेण (कपालिन कपालिन इति) वारद्वयपठनं विना अनेकार्थस्य उभयार्थस्य प्रतिपादने सामर्थ्याभावात्। अत्र कपालिपदावृत्तौ न किञ्चिन्निबन्धनम् कारणमुक्तम् अर्थात् कपालिनः कपालिनः इत्यावृत्तावपि द्वयोरेकरूपत्वप्र-

यितुमिति वक्ष्यते । न चात्र किञ्चिन्निबन्धनमुक्तमिति तस्य वाच्यस्याव-चनं दोषः । तेन वरमयमत्र पाठः श्रेयान् अल्पदोषत्वात् 'द्वयं गतं सम्प्रति तस्य शोच्यतां समागमप्रार्थनया कपालिनः' इति ।

अर्थभेदाद्विभिन्नेऽपि शब्दे सादृश्यमात्रजः ।
आवृत्तिव्यवहारोऽयं मूलमस्यैकताभ्रमः ॥ ७१ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

तेनैव तत्पार्यायेण सर्वनाम्ना चेत्येषां प्रकाराणाम् । अल्पदोषत्वादिति । तस्येति व्यवहितसम्बन्धात् किञ्चिदुत्कृष्टत्वम् । तस्य समागमप्रार्थनयेति वाच्यम् ।

अर्थभेदादिति । अयमर्थः एकस्यासकृद्वृत्तिरावृत्तिः, यथा दरिद्राणां भोजने कांस्यपात्र्याः । तदुक्तम्—'आवृत्तिरसकृद्वृत्तिः' इति । न चार्थभेदे शब्दस्यैकत्वं न्याय्यम् अर्थभेदस्य प्रधानभूतस्य गुणभूतं शब्दं प्रति भेदकत्वात् । तस्मादत्र द्वयोः शब्दयोर्वस्तुवृत्तेन यत् सादृश्यं यश्च सादृश्यहेतुकः प्रतिपत्तॄणामेकताभ्रमः, तन्निब-

मधुसूदनीविवृतिः ।

त्ययान्न समीहितसिद्धिः । उपादाने तु रूढ्यर्थयोगार्थयोः योजनया समीहितसि-द्धिरेव ।

अल्पदोषत्वादिति । परामर्शनीयार्थं निरूप्यैव सति कार्ये सर्वनाम्ना परामर्शो भवति अन्यथा करणे तु क्रमभेदो भवति इत्यल्पदोषत्वमुक्तम् । क्रमभेदलक्षणमुक्तमनेनैव—

परामृश्यमनुक्त्वैव परामर्शोऽस्य यस्तदा ।
स दोषो वक्ष्यमाणार्थसंवित्तावक्षमो हि स इति ।

यत्तु अल्पदोषत्वादिति प्रतीकमुपादाय तस्येति व्यवहितसम्बन्धात् किञ्चिदुत्कृष्ट-त्वमिति व्याख्यानं तत्रोत्कृष्टत्वोक्तिरसङ्गता । तस्मादित्थं पाठ्यम्—

द्वयं गतं सम्प्रति शोचनीयतां कपालिनस्तत्स्य समागमार्थया ।

ननु परामृश्यार्थमनिरूप्य सर्वनाम्ना परामर्शे क्रमभेदः स्यात् । परं परामृश्यार्थश्च "अथाह वर्णी विदितो महेश्वरः" इत्यादिभिः पूर्वं प्रक्रान्त एवेति चेत्, सततमनङ्गोऽनङ्ग इतिवत् हरस्यापि पिनाकपाणेरितिवच्च अव्यवहितत्वेनानुपादानं दूषणं गृहाण ।

ततः इत्थं पाठ्यम्—

द्वयं गतं तस्य कपालिनोऽधुना समागमप्रार्थनयातिशोच्यताम् । इति ।

ननु अत्र कपालिपदावृत्तौ न किञ्चिन्निबन्धनमुक्तमित्युक्तिरयुक्ता यतस्तत्रैकेनैव कपालिपदेन संज्ञिमात्रस्य तन्निष्ठधर्मस्य चेति प्रतीतिरिति प्रतीतिभेद एव तदावृत्तौ निबन्धनमस्ति । न च वाच्यं शब्दस्तु एक एवेति अर्थभेदेन शब्दभेदस्य सर्वानुमत-त्वादित्यत्र आह । अर्थभेदादिति । अयं भावः । यद्यपि अर्थभेदाच्छब्दभेद इति नयोऽस्ति इत्यावृत्तौ शब्दस्याऽपि भिन्नता स्यात्परमयमावृत्तिव्यवहारः केवलसाद-श्यजनितः । अतोऽस्य मूले एकरूपता भ्रमः । भ्रमाच्चान्यथा ज्ञानमिति प्रतिपा-

अतश्च—

तत्पर्यायेण तेनैव सर्वनाम्ना विनिर्दिशेत् ।
आर्थहेतुत्वनिष्पत्तौ धर्मिधर्मोभयात्मकम् ॥ ७२ ॥

इत्यन्तरश्लोकौ ।

यत्रान्यस्यालङ्कारस्य विषयेऽलङ्कारान्तरनिबन्धस्सोऽपि वाच्यावचनं दोषः । तत्र समासोक्तिविषये श्लेषस्योपनिबन्धो यथा—

"अलकालिकुलाकीर्णमारक्तच्छदसुन्दरम् ।
आमोदिकर्णिकाकान्तं भाति तेऽब्जमिवाननम् ॥"

अत्र हि अब्जसमुचितविशेषणोपादानसामर्थ्याद्गतस्याब्जस्योपमानभावावगमः समासोक्तेरेव विषयो युक्तो न श्लेषस्य, तत्रैव तस्यानुमीयमानतया सचेतनचमत्कारकारित्वोपपत्तेः, श्लेषे तु तस्य वाच्यतया तद्विपरीतत्वादित्युक्तम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

ध्वनोऽयं मुख्य एवावृत्तिव्यवहार इति ।

अतश्चेति । यत आवृत्तिर्न युज्यते, तत इत्यर्थः । धर्मिधर्मोभयात्मकमिति ।उभयमये वस्तुनि प्रतिपिपादयिषिते इत्यर्थः ।

यत्रान्यस्येत्यादिना । वाच्यावचनोदाहरणप्रसङ्गेन।श्लेषं गुणदोषवत्तया विततं विचारयति ।

अलकालीति । अलकान्येवालिकुलम् अलकसदृशं चालिकुलम् । छदोऽधरः पत्राणि च । प्रमोदः प्रहर्षं सौरभं च । कर्णिका कर्णाभरणं बीजकोशश्च । न श्लेषस्येति । ननु श्लेषप्रस्तावे कः प्रसङ्गोऽब्जस्योपमानचर्चायाम् नैतत् । अलङ्कारान्तरविविक्तविषयाभावेन सर्वालङ्कारापवादत्वाच् श्लेषस्योपमाप्रतिभोत्पत्तिहेतुः श्लेष

मधुसूदनीविवृतिः ।

थार्थसङ्गतिर्न स्यादिति पृथगुपादानं कर्त्तुमुचितमेवेति ।

अतश्च आवृत्तेरेकताभ्रमोत्पादकत्वाच्च ।

अत्र वाच्यावचनोदाहरणव्याजेन ध्वनिकारालोचितं श्लेषालंकारं विवेचयति यत्रान्यस्येति । अन्यस्य करणीयतायामन्यस्य करणं दुष्टमित्यर्थः । अलकालीति । अलकाः चूर्णकुन्तला एव अलिकुलानि । अलकसदृशम् अलिकुलम् । तैराकीर्णं व्याप्तम् । आरक्ताभ्यां छदाभ्यां दन्तच्छदाभ्याम् । आरक्तैः छदैः पत्रैः सुन्दरम् । आमोदिभ्यां कर्णिकाभ्यां कर्णभूषणाभ्याम् । आमोदिकर्णिका सुरभिबीजकोषः तेन कान्तम् । पत्रं पलाशं छदनं दलं पर्णं छद पुमान्, कर्णिका तालपत्रं स्यात् कुण्डलं कर्णवेष्टनम् । इत्यमरौ ।

यथा च—

"बंहीयांसो गरीयांसः स्थवीयांसो गुणास्तव ।
गुणा इव निबध्नन्ति कस्य नाम न मानसम् ॥"

इति । अत्र हि मुख्यवृत्त्या निबन्धोऽप्रस्तुतरज्ज्वादिगुणैककार्यः शौर्यादिषु गुणेष्वारोपितस्तेषां सामर्थ्यादेव तत्साम्यमवगमयतीत्ययमपि समासोक्तेरेव विषयो युक्तो न श्लेषस्य ।

न हि विशेषणसाम्यमेवैकमप्रस्तुतार्थावगतिहेतुः, यथाहुः—

"प्रकृतार्थेन वाक्येन तत्समानैर्विशेषणैः ।
अप्रस्तुतार्थकथनं समासोक्तिरुदाहृता ॥"

इति; किं तर्हि तत्कार्यसमारोपोऽपीति गुणा इवेत्यपास्यमेव ।

श्लेषस्य विषये उपमाया यथा—

"भैरवाचार्यस्तु दूरादेव दृष्ट्वा राजानं शशिनमिव जलनिधिश्चचाल"

इति । अत्र हि राजशब्द एवोभयार्थत्वाच्छशिनमाहेति श्लेषस्यायमेवात्र न्यग्भावो नोपमेत्यभिप्रायः । अत एव श्लेषे तु तस्य वाच्यतयेत्युक्तम् ।

व्यक्तिविवेकव्याख्यानम् ।

निबन्ध इति निबध्नन्तीति निर्दिष्टः । तत्साम्यं रज्ज्वादिसाम्यम् । न श्लेषस्येति उपमाश्लेषस्येत्यर्थः । तेन रज्ज्वादिप्रतिपादकं गुणा इवेति न वाच्यम् ।

ननु विशेषणसाम्यनिबन्धना समासोक्तिर्न च निबध्नन्तीति विशेषणमित्याह—न हि विशेषणसाम्यमेवेति । एतच्चास्माभिर्हर्षचरितवार्तिके निर्णीतमिति तत एवावगन्तव्यम् ।

मधुसूदनीविवृतिः ।

तत्रैव समासोक्तावेव तस्य उपमानभावस्य । तद्विपरीपत्वात् चमत्काराभावादित्यर्थः ।

बंहीयांस इति । बहलादीयसुनि बंह्यादेशे बंहीयांसः । गुरोरीयसुनि गरादेशे गरीयांसः । स्थूलादीयसुनि यणादिपरलोपे पूर्वस्य गुणे स्थवीयांसः ।

मुख्यवृत्त्या वस्तुतस्तु । निबन्धो निबन्धनाख्या क्रिया । रज्ज्वादिरूपगुणमात्रकार्यः । तेषां गुणानां सामर्थ्यात् गुणशब्दस्योभयार्थवाचित्वरूपात् । तत्साम्यम् रज्जुसाम्यम् । अयमपि साम्यनिबन्धः । ननु साधारणविशेषणद्वारा अप्रस्तुतार्थकथने समासोक्तिर्भवति । परमत्र निबध्नन्तीति न विशेषणं कुतस्तस्य साधारण्यमित्याशंकां निराकर्त्तुमाह—

न हीति । नहि एकं विशेषणसाम्यमेव अप्रस्तुतार्थावगतिहेतुरस्ति—यथान्ये आहुः विशेषणसाम्यस्याप्रस्तुतार्थावगतिहेतुत्वं—यत्कार्येत्यादिना । तर्हि किं ? तत्कारणम् । उत्तरति—तत्कार्यसमारोपोऽपि अप्रस्तुतकार्यसमारोपोऽपि तत्कारणम् । इति हेतोः तस्माद्गुणा इवेति पदमपास्येत्थं पाठ्यम्—"स्थेयांसश्च" इति ।

श्लेषस्य विषये उपमाया निबन्धो दुष्टो यथा—भैरवाचार्यस्त्विति । तमुपा-

विषयो युक्तः। यदत्र पृथक्कृतमुपादाय राजशशिनोरुपमानोपमेयभावोपनिबन्धः सोऽपि वाच्यावचनं दोषः। स ह्यार्थ एव तद्विदामधिकं स्वदते न शाब्द इत्युक्तम्। एवं—

"तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः।
दिलीप इति राजेन्दुरिन्दुः क्षीरनिधाविव॥"

इत्यत्रापि द्रष्टव्यम्। अत्र हि श्लेषविषये रूपकमासूत्रितमनादृत्योपमानुरागिणा कविना सैवोपनिबद्धा। न चासौ ताभ्यां स्पर्धितुमुत्सहते तयोर्यथापूर्वं प्रतीयमानार्थसंस्पर्शातिरेकात् तदनुविधायिनः सहृदयैकसंवेद्यस्य चमत्कारातिरेकस्य सम्भवादिति तस्य वाच्यस्यावचनं दोषः।

व्यक्तिविवेकव्याख्यानम्।

पृथक्तमुपादायेति। तच्छब्देन शशी परामृष्टः। स ह्यार्थ एवेति उपमानोपमेयभावः।

श्लेषविषये इति। अत्र तिस्रः कक्ष्याः। राजशब्दस्योभयार्थत्वाच् श्लेषः। तदनाश्रयणेनेन्दुना रूपणं तत्पृष्ठे चेन्दुरिवेत्युपमा। ननु राजेन्दुरित्यत्र तूपमारूपकयोरेकपरिग्रहे साधकबाधकाभावात् सङ्करो न्याय्यः, न नियमेन रूपकम्। तत् कथमुक्तं 'रूपकमासूत्रितमि'ति। उच्यते। प्रक्रम्यमाणोपमाभिप्रायात् पौनरुक्त्यभयेन रूपकमाश्रितम्। उपमाया अभावे तु सङ्कर एवात्र युक्तः। यद्वोपमापेक्षया रूपकस्यात्र समासे स्फुटत्वेन प्रतीते रूपकं संश्रितम्। अनेनैव ह्यभिप्रायेण वक्ष्यति रूपकस्य विषये उपमाया यथेति। ताभ्यां स्पर्धितुमिति। श्लेषरूपकाभ्याम्। तयोर्यथापूर्वमिति। उप-

मधुसूदनाविवृतिः।

दायेति तं शशिशब्दमुपादाय। स हि उपमानोपमेयभावो हि। अत्र शशिपदमपास्य राजानं जलनिधिरिव चचालेति पाठः उचितः।

तदन्वय इति। आसूत्रितम् राजा एव इन्दुरित्यादिनाऽरब्धम्। अनादृत्य तिरस्कृत्य। सैव इन्दुरिवेति उपमैव। असौ उपमा ताभ्यां श्लेषरूपकाभ्याम् स्पर्द्धितुं सामानाधिकरण्येन स्थातुम् तुल्यकक्षामारोढुमित्यर्थः। तयोः श्लेषरूपकयोः यथापूर्वम् प्रतीयमानो ज्ञायमानो योऽर्थः तत्संस्पर्शातिरेकात् तदनुविधायिनः प्रतीयमानानुगतस्य चमत्कारस्य संभवात् हेतो न उत्सहते।

अयं भावः। "राजेन्दुः इन्दुरिव प्रसूतः" अत्र यदि "तदन्वयाब्धौ राजा प्रसूत" इति रचना स्यात्तदा श्लिष्टतया राजशब्दस्य श्लेषविषयता स्यात्। यदि "तत्र राजेन्दुः प्रसूतः" इति स्यात्तदा "राजा एव इन्दुः" इति रूपकं स्यात्। परं तौ अपि विहाय कविना "क्षीरनिधौ इन्दुरिव राजेन्दुः प्रसूतः" इत्युपमा आश्रिता। तत्र उपमापेक्षया रूपकस्य पूर्वत्वम् रूपकापेक्षया च श्लेषस्य पूर्वत्वम्। श्लेष एव चमत्कारस्य उद्भूतिः

रूपकस्य विषये उपमाया यथा—

"ततोद्रुतं वैरमदाभितप्तः सोऽतीव रम्याद् भवनाद्रिकुञ्जात् ।
विनिर्ययौ दानवगन्धहस्ती महाद्रिकुञ्जादिव गन्धहस्ती ॥"

न चात्राद्याविन्दुगन्धहस्तिशब्दौ प्रशंसावाचिनावपरौ पुनरुपमानवाचिनाविति तयोर्भिन्नार्थत्वान्न यथोक्तदोषावकाश इति युक्तं वक्तुम आद्याभ्यामेव ताभ्यां तदुभयार्थावगतिसिद्धेः ।

नन्वेवम्

"अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ।

---

व्यक्तिविवेकव्याख्यानम् ।

मापेक्षया रूपकस्य रूपकापेक्षया श्लेषस्येत्यर्थः ॥

नन्वेवं सतीति । अस्य दोषस्यातिप्रसङ्गं ब्रूते । ताप आतपोऽपि । फलं शाल्यादिकमपि । सुमनसः पुष्पाण्यपि । खलता दुर्जनत्वं, धान्यादिक्षोदनस्थानं च । असती दूषणीया अशोभना च ।

मधुसूदनीविवृतिः ।

प्रतीयमानार्थसंस्पर्शादिति श्लेषविषये उपमा कृता साऽनुचितैव । यतः श्लेषे कृतेऽपि साम्यस्य व्यञ्जनया प्रतीतिर्भविष्यत्येव प्रत्युत दोष एव वाच्यीकरणेनेति ।

रूपकस्य विषये उपमाया निबन्धो दुष्टो यथा-ततो द्रुतमिति । वैरमेव मदस्तेन अभितप्तः । भवनमेव अद्रिकुञ्जम् तस्मात् । दानव एव गन्धहस्ती यस्य गन्धम् अन्यगजा न सहन्ते । अत्र रूपकेणैव साम्यस्य प्रतीतौ वाच्यीकरणमनुचितम् । इदमुदाहरणं प्रक्षिप्तं पूर्वापरग्रन्थार्थस्यानुपोद्बलनात् । विरोधाच्च ।

ननु यदि राजेन्दुरिन्दुरिवेत्यत्र दानवगन्धहस्ती गन्धहस्तीत्यत्र च इन्दुशब्दयोः गन्धहस्तिशब्दयोश्च एकार्थत्वं स्यात्तर्हि एकेनैव कृतार्थतायामपरस्योपादानं दुष्टं स्यात्। परं नैतत् । तयोः द्वयोरपि मध्ये एकस्य प्रशंसावाचित्वेन अपरस्य उपमानवाचित्वेन च भिन्नार्थत्वादित्याशंक्य समाधातुमाह-नचेति । अत्र द्वयोः पद्ययोः । पूर्वस्मिन् इन्दुपदम् । उत्तरत्र गन्धहस्तिपदम् । यथोक्तदोषस्य अवकाशो प्राप्तिर्नास्तीति वक्तुं न युक्तमित्यन्वयः । आद्याभ्यां ताभ्याम् राजेन्दुरिति दानवगन्धहस्तीति समासगताभ्याम् इन्दुगन्धहस्तिपदाभ्याम् । तदुभयार्थस्य प्रशंसोपमानत्वोभयार्थस्य अवगतिसिद्धेः ।

ननु अलंकारान्तरस्थले अलंकारान्तरनिबन्धो दूषणं चेत्तर्हि अनिराकृततापसम्पदमित्यादौ श्लेषस्थले उपमाया निबन्धो दुष्ट एव स्यादित्याशंकते-नन्वेवमिति । ननु एवं चेत् तर्हि अनिराकृतमित्यादि काव्यम् असदेव दुष्टमेव उक्तदोषयोगात् अलंकारान्तरस्थले अलंकारनिबन्धेन वाच्यावचनरूपदोषस्य सम्बन्धादित्यन्वयः ।

अनिराकृतेति । न निराकृता पराक् न कृता अर्थात् निरन्तरं वर्त्तमाना तापस-

खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥"

इत्यादिकाव्यमुक्तदोषयोगादसदेव स्यात्। मैवं वोचः। यत्र हि यदलङ्कारप्रतिभानुगुणशब्दोपरचितः श्लेषस्तत्र तदलङ्कारनिबन्धस्तमेव श्लेषमभिव्यनक्ति नतु तस्य विषयमाक्रामतीति निबन्धनान्तराभावे सत्युपात्तस्यापि शब्दस्य यदेतदुपमानाभिधायितया द्विरुपादानं सा श्लेषस्यैवाभिव्यक्तिः न तु तत्रालङ्कारान्तरसंस्पर्श इति तदतद्विषयताशङ्कैवात्र

व्यक्तिविवेकव्याख्यानम्।

यदलङ्कारेति। खलतामित्यादावुपमोत्थापिते श्लेषे नोपमा श्लेषं बाधते। तस्य विविक्तविषयत्वाभावात्। श्लेषस्तु तां बाधते इति युक्तम्। अस्य न्यायस्यालङ्कारान्तरेऽपि भावाद्व्याप्तिगर्भमुक्तं यदलङ्कारेति।

निबन्धनान्तराभावे इति। सति समासोक्त्यादिनिबन्धने पूर्ववच् श्लेषोत्थापितोपमा न कर्तव्या स्यात्। नचात्रानिराकृतेत्यादिविशेषणसाम्यात् समासोक्तिरिति वाच्यम्। विशेषणानां नियतोपमानगामित्वाप्रतीतेः।

विषयताशङ्कैवेति उपमाविषयत्वसम्भावनेत्यर्थः। क्वचित्तु तदतद्विषयतेति पाठः। तत्र श्लेषविषयत्वमुपमाविषयत्वं च युगपन्न शङ्कनीयं तयोरुत्सर्गापवादभावेन व्यवस्थितेरित्यर्थः।

मधुसूदनीविवृतिः।

म्पद् दुःखराशिः अथच धर्मराशिः यया सा ताम् खलपक्षे दुःखजननैकस्वभावत्वात् आकाशलतायां छायाभावाच्च। फलरहिताम् एकत्र लाभरहिताम् प्रत्युत तन्नाशकरीम्। अन्यत्र निष्पत्तिशून्याम्। फलं फले धने बीजे निष्पत्तौ भोगलाभयोः। इत्यमरः। सुमनोभिः विद्वद्भिः पुष्पैश्च। "सुमनाः पुष्पमालत्योः स्त्री देवबुधयोः पुमान्" इति मल्लिनाथः। उज्झितां त्यक्ताम्। असतीं दुष्टाम् अथच निरुपाख्याम्। खस्य आकाशस्य लतामिव खलस्य भावः खलता ताम् दुर्जनताम् बुधो जनः सदसद्विवेकशीलः कथं प्रतिपद्येत स्वीकुर्यात्।

समाधत्ते—मैवं वोच इति। यदलंकारेति। अन्यालंकारप्रतीत्यनुकूलपदघटितः। तदलंकारस्य अन्यालंकारस्य निबन्धः तमेव स्वोपजीव्यमेव। तस्य श्लेषस्य। इति हेतोः निबन्धनान्तराभावे अन्यालंकाररचनाभावे सति उपात्तस्य खलतामिति शब्दस्य उपमानाभिधायितया यद् एतद् खलतामिवेति द्विरुपादानं सा द्विरुक्तिः श्लेषस्यैव अभिव्यक्तिस्तस्य साधिकेत्यर्थः न तु तत्र द्विरुपादानस्थले अलंकारान्तरस्य स्पर्शसम्भावना। इत्यतः तदतद्विषयतायाः अलंकारान्तरमस्ति न वेत्येवंरूपायाः शंका एव अत्र स्थले न अवतरति न प्रादुर्भवति इत्यतः उक्तदोषद्वयस्य समासोक्तिविषये श्लेषोपनिबन्धस्य श्लेषविषये उपमानिबन्धस्य चोपसिद्धप्रसक्तेः।

नावतरतीत्युक्तदोषद्वययोगासिद्धेः कथमिवास्य काव्यस्य दुष्टता स्यात्।

यदलङ्कारव्यक्त्यै ये शब्दास्तदितरोऽपि तैरेव।
व्यज्येताल्पतरैर्यदि तदसौ गृह्येत लाघवान्नान्यः॥ ७३॥
न ह्यस्ति निजे कर्मण्यलङ्कृतीनां स कश्चनातिशयः।
येन विधीयेतैका परा निषिध्येत वा कविभिः॥ ७४॥

इति सङ्ग्रहार्ये।

किञ्च सौन्दर्यातिरेकनिष्पत्तयेऽर्थस्य काव्यक्रियारम्भः कवेर्न त्वलङ्कारनिष्पत्तये, तेषां नान्तरीयकतयैव निष्पत्तिसिद्धेः भङ्गिभणितिभेदाना-

व्यक्तिविवेकव्याख्यानम्।

उक्तदोषद्वयेति। उक्तं यच् श्लेषविषये दोषद्वयं—यत्र समासोक्तिविषये श्लेषः कृतः श्लेषविषये चोपमेति, तस्यात्र सम्बन्धाभावादित्यर्थः।

यदलङ्कारेति। श्लेषोपमादीनामलङ्काराणामभिव्यक्त्यर्थं ये शब्दा अब्जमिवेत्यादयः तेभ्योऽलंकारेभ्य इतरः समासोक्तिश्लेषादिः। तैरेव शब्दैः अल्पतरैरब्जमिवेत्यादिरहितैर्यदि व्यज्यते। तदासौ समासोक्तिश्लेषादिर्लघुत्वाद् ग्राह्यो, नापरः श्लेषोपमादिरित्यर्थः।

ननु शोभातिशयहेतुत्वमलङ्कारान्तराणां लक्षणम्। तद्विशेष्यते। तत कथमिदमुक्तमित्याह—न ह्यस्तीति। शोभातिशयजनने निजे व्यापारे नास्त्यलङ्काराणां विशेषः। ततश्चैको गृह्यतेऽपरस्त्यज्यत इति न युक्तम्। गुरुलघुत्वमाश्रित्य पुनर्युज्यत एतन्नान्यथेति तात्पर्यम्। वाच्यातिशयापेक्षया चैतदुक्तम् प्रतीयमानत्वापेक्षया तु समनन्तरं विशेषो वक्ष्यते।

किञ्चेत्यादिना काव्यक्रियायां सौन्दर्यनिष्पत्तेः प्रयोजकत्वमलङ्कारनिष्पत्तेश्च

मधुसूदनीविवृतिः।

यदलङ्कारेति। अयं भावः। यः पदैः एकोऽलंकारो व्यज्यते तैस्तदपेक्षयाल्पतरैरन्योऽपि यदि व्यज्येत तर्हि स प्रथम एव ग्राह्यः अन्यो न ग्राह्यः यतोऽन्योऽलंकारः अल्पतरपदव्यज्यमानतया लघुरेव अर्थात् न पूर्णतया व्यक्तः। इति।

नहीति। अयमिह परमार्थः। अलंक्रियते अलंकारः शोभा। सा च उपचीयते अपचीयतेऽपि कारणवशात्। तदुपचयापचयाभ्यामेव शोभ्यं वस्तु बहूत्कृष्यते अल्पमुत्कृष्यते च। नहि तत्र तस्याः स्वभावगतोऽतिशयः कश्चित् येन इयं ग्राह्या इयं नेति विधिनिषेधास्पदा स्यात् किन्तु तत्कारणस्य लाघवगौरवसद्भावे तस्या अपि विधिनिषेधविषयत्वं स्यादित्यतः विपुलसामग्रीव्यक्ता सा गृह्यते अल्पतरव्यक्ता सा त्यज्यते। इति। निजे शोभाजननरूपकर्मणि।

किञ्चेति। तेषामलङ्काराणाम्। नान्तरीयकतयेति काव्यक्रिया हि हार्दभावव्यञ्जकतानुगतपदयोजना। तस्यां क्रियमाणायां शब्दा एव तथा विन्यस्ता भवन्ति

मेवालङ्कारत्वोपगमात् । तेनात्र समासोक्तिश्लेषभङ्गिभ्यामेवार्थस्य यथोक्तचमत्कारित्वसिद्धिर्नोपमयेति तयोर्वाच्ययोर्यद्वचनं स दोष एव ।

न चालङ्कारनिष्पत्त्यै रसबन्धोद्यतः कविः ।
यतते ते हि तत्सिद्धिनान्तरीयकसिद्धयः ॥ ७५ ॥

यतः—

रसस्याङ्गं विभावाद्याः साक्षान्निष्पादकत्वतः ।
तद्वैचित्र्योक्तिवपुषोऽलङ्कारास्तु तदाश्रयाः ॥ ७६ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

अनुनिष्पादित्वं यथा पक्वावोदनाचामयोरित्याह । समासोक्तिश्लेषभङ्गिभ्यामेवेति । समसोक्त्या तु 'अलकाली,त्यादौ । श्लेषेण 'भैरवाचार्य' इत्यादौ । नोपमयेति । अलकालीत्यादावुपमा श्लेषोपमा । भैरवाचार्यं इत्यादौ उपमेयोपमा । 'अत्र समासोक्तिश्लेषभङ्गिभ्यामेव' इत्येतद्ग्रन्थानुसारेण 'रूपकस्य विषये उपमाया यथे'त्यादिग्रन्थः प्रक्षिप्त इव लक्ष्यते । रूपकस्येहानुपसंहारात्, 'उक्तदोषद्वययोगानुपपत्तेः' इत्यस्य च पूर्वोक्तग्रन्थस्यात्र पक्षे अनाकलनात् अतश्चैवायं क्वचिदादर्शे न पठ्यते । अप्रक्षेपे तु त्रिरूपक(?) ग्रहणमिह कर्तव्यं स्यात् । तस्मात् स वा ग्रन्थो निवार्य इह वा रूपकग्रहणं प्रक्षेप्यम् । उक्तदोषद्वये'ति च प्रकृतौचित्येन व्याख्यातम् ।

ते हि तत्सिद्धीति । रसबन्धसिद्धावलङ्कारा अवश्यं सिध्यन्तीत्यर्थः । निष्पादकत्वमिहानुभावकत्वम् । अत एव भरते 'रसनिष्पत्तिरि'त्यत्र रसानुमितिरिति व्याख्येयम् । तद्वैचित्र्यं विभावादिवैचित्र्यम् ।

तदाश्रयाः परम्परया रसाश्रया रसज्ञसिद्धेतव इत्यर्थः । तेनैषामिति । कवेरर्थगतं चारुत्वं तात्पर्येण सम्पाद्यं, नालङ्कारोपनिबन्धः अलङ्काराणां तन्नान्तरीयकत्वेनाप्राधान्यात् । अतश्चारुत्वं यथा निष्पद्यते तथा तेषामुपनिबन्धः कार्यः । तत्प्रयोजनाबाधा-

मधुसूदनीविवृति ।

येनअलंकारो निष्पद्यते । न तदर्थमन्यो व्यापार आस्थीयते । इति भावः । समासोक्तिश्लेषेति । अलकालीत्यत्र समासोक्तिरेव उचिता भैरवाचार्यं इत्यादौ श्लेष एव न्याय्यः ताभ्यां चमत्कारात् ।

नचेति । ते हि अलंकारा हि । तत्सिद्धीत्यत्र तत्पदेन रसः परामृश्यते । ध्वनिकारेणाऽपि अयमर्थः प्रतिपादितः

रसवन्ति हि वस्तूनि सालंकाराणि कानिचित् ।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेरिति ॥

रससमाहितचेतसां निरूप्यमाणदुर्घटना अपि अलंकाराः स्वतः सिद्धिं यन्तीत्यर्थः ।

रसस्याङ्गमिति । तद्वैचित्र्येति तत्पदेन विभादयो गृहीताः । वैचित्र्यपदेन भङ्गिः । उक्तिपदेन भणितिः । तदाश्रयाः रसाधीनाः विभावादिद्वारा ।

तेनैषामप्रधानत्वादाधानोद्धरणादयः ।
चारुतापेक्षयार्थस्य कल्प्यन्ते कविना स्वयम् ॥ ७७ ॥

यदाहुः—

"मुख्या महाकविगिरामलङ्कृतिभृतामपि ।
प्रतीयमानच्छायैव भूषा लज्जेव योषिताम् ॥"इति ।

अत एव बहुष्वन्येष्वलङ्कारेषु सत्स्वपि ।
कांश्चिदेव निबध्नाति शक्तिमानपि सत्कविः ॥ ७८ ॥

यतः सर्वेष्वलङ्कारेषूपमा जीवितायते ।
सा च प्रतीयमानैव तद्विदां स्वदतेतराम् ॥ ७९ ॥

रूपकादिरलङ्कारवर्गो यमक एव हि ।
तत्प्रपञ्चतया प्रोक्तः कैश्चित्तत्त्वार्थदर्शिभिः ॥ ८० ॥

इति सङ्ग्रहश्लोकाः ।

---

व्यक्तिविवेकव्याख्यानम् ।

नोद्धरणादय इत्यर्थः । नन्विहाधानोद्धरणादय इत्युक्त्या अलङ्काराणां परस्परं चारुत्वनिष्पादने विशेषः प्रतिपादितः । पूर्वं च 'न ह्यस्ति निजे' इत्यादिना विशेषाभाव उक्तः । तत् कथं न विरोधः । नैतत् । पूर्वमव्यवधानेन चारुत्वनिष्पादनं मनसिकृत्य विशेषाभावः प्रतिपादितः । इह तु विभावाद्युपकरणत्वेन गुरुलघुत्वादिना विशेष उक्त इत्यपेक्षाभेदान्न विरोधः कश्चित् ।

कैश्चिदिति वामनप्रभृतिभिः ।

अधुना यत् प्रतिज्ञामात्रेण प्रतिपादितं यथा 'शब्दस्य शक्त्यन्तराभावाद्व्यञ्जकत्वं न सम्भवती'ति तद्वाच्यावचनोदाहरणत्वोपयोगि श्लेषप्रसङ्गेनोपपादयितुमासूत्रयति स चायमिति । यस्समासोक्तिविषये कृतो यस्य च विषये उपमा कृता स इत्यर्थः ।

मधुसूदनीविवृतिः ।

तेनेति । तेन रसाश्रयत्वहेतुना अप्रधानत्वात् । अर्थस्य चारुतामपेक्ष्य कविना स्वयम् एषामलंकाराणामाधानोद्धरणादयः विधिनिषेधादयः कल्प्यन्ते ।

अत एवेति । अयं भावः । न हि शक्तिरस्तीति कविरवकरप्रायान् अत एव रसविघातकान् अलंकारान् प्रयुंजीत । रसाक्षिप्ततया येषां रचना एकयत्नसाध्या भवेत तान् एव । इति ।

यत इति । सर्वेषु सादृश्यमूलेषु इत्यर्थः ।

रूपकादिरिति । तत्प्रपञ्चतया रसप्रपञ्चतया । अलङ्कारो हि बाह्यालंकारसाम्यादङ्गिनश्चारुत्वहेतुरुच्यते । वाच्यालंकारवर्गश्च रूपकादिर्यः स सर्वोऽपि चारुत्वहेतुर्निष्पद्यते इति ध्वनिकारोक्तेः ।

स चायं द्विविधः श्लेषः शब्दार्थविषयतयोच्यते। तत्र शब्दविषयो यथा—

यत्रान्यूनातिरिक्तेन सादृश्यं वस्तुनोर्द्वयोः।
शब्दमात्रेण कथ्येत स शब्दश्लेष इष्यते ॥ ८१ ॥
स शब्दैः कर्तृकर्मादिप्रधानार्थाविनाकृतैः।
निबद्धो धर्मिधर्मार्थैर्द्विविधः परिकीर्त्तितः ॥ ८२ ॥
इत्थं समासतो ज्ञेयं शब्दश्लेषस्य लक्षणम्।
अपरस्तु प्रसिद्धत्वादिहास्माभिर्न लक्षितः ॥ ८३ ॥
उभयत्राप्यभिव्यक्त्यै वाच्यं किञ्चिन्निबन्धनम्।
अन्यथा व्यर्थ एव स्याच्छ्लेषबन्धोद्यमः कवेः ॥ ८४ ॥

तत्र धर्म्यर्थस्य श्लेषादभिन्नत्वं यथा—

"अत्रान्तरे फुल्लमल्लिकाधवलाट्टहासः कुसुमसमय-

---

व्यक्तिविवेकव्याख्यानम्।

द्विविध इति वक्ष्यमाणस्योभयश्लेषस्यैवात्रान्तर्भावः। आभ्यामेव समुच्चिताभ्यां तस्योत्थापनात्।

यत्रान्यूनेति यत्र विशेष्यस्य विशेषणं न न्यूनीभवति नाप्यतिरिच्यते, तत्र श्लेषः। मात्रग्रहणं लिङ्गवचनानां भेदादुभयसम्बन्धसहिष्णुशब्दतापरिग्रहार्थम्।

कर्तृकर्मेति। कर्तृकर्मरूपः आदिग्रहणात् क्रियारूपो यत्र प्रधानभूतोऽर्थः श्लेषेण स्वरूपहानिं नीयते, न तत्र श्लेषो निरवद्य इत्यर्थः। तस्य च धर्मप्रतिपादकशब्दविषयत्वेन धर्मिप्रतिपादकशब्दविषयत्वेन च द्वैविध्यम्। उभयप्रतिपादकशब्दविषयत्वं तु दूषयिष्यते।

अपरस्त्विति। अर्थश्लेषः।

उभयत्रापि शब्दश्लेषेऽर्थश्लेषे च। यावत् इवादिनिबन्धनं नाश्रितं तावदर्थान्तरमप्रमाणकमेवेति श्लेषाभिव्यक्त्यर्थं निबन्धनमाश्रयणीयम्।

अत्रान्तरे इति फुल्लमल्लिकाभिर्धवला येऽट्टास्त्रिपुरचतुष्पुरमहाप्राकारा आपणा

मधुसूदनीविवृतिः

स शब्दैरिति। स शब्दश्लेषः धर्म्यर्थैः धर्म्मार्थैश्च शब्दैः निबद्धो द्विविधः परिकीर्तितः। कीदृशैः शब्दैः कर्त्तृरूपप्रधानार्थैः कर्म्मरूपप्रधानार्थैः आदिपदात् क्रियारूपप्रधानार्थैश्च। एतान् सर्वान् अविनाकृतैः अदूरीकृतैः अर्थात् श्लेषद्वारा एषां प्राधान्यं न नाशयेत्।

उभयत्रापीति। उभयत्र शब्दार्थयोः श्लेषे श्लेषस्य अभिव्यञ्जनार्थं किञ्चित्कारणं वाच्यम् अन्यथा कारणाभावे। श्लेषरचनायै कवेरुद्योगः निष्फल एव।

धर्मिरूपार्थस्य श्लेषहेतुकं सादृश्यं यथा—अत्रान्तर इति। फुल्लमल्लिकावत्

युगमुपसंहरन्नजृम्भत गीष्माभिधानो महाकालः"

इति । अत्र हि समासोक्तिनिबन्धना देवताविशेषवाचिनो महाकाल-शब्दस्यावृत्तिर्न तु तस्यैवोभयार्थत्वनिबन्धनेति वक्ष्यते ।

निबन्धनाभावे तु तस्य दुष्टतैव यथा—

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य च स्थितमुदग्रविशालशृङ्गम् ।
मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को भुवि न विस्मयते गिरीशम्"

व्यक्तिविवेकव्याख्यानम् ।

वा तैर्विकासो हासो यस्य तद्वच्च धवलाट्टहासो यस्य । कुसुमसमययुगं मासद्वयं रम्यत्वेन तत्सदृशं च युगं कृतादिमुपसंहरन् अजृम्भत विकसितवान् व्यक्ताननश्चाभूद् महाकालो दीर्घसमयः संहर्तृदेवताविशेषश्च । समासोक्तीति । महाकाल इत्यत्र महासमय इत्यक्लिष्टे विशेष्यपदे प्रयुक्ते विशेषणसाम्यादेव देवताविशेषप्रतीतेः समासोक्तिर्भवन्ती महाकालशब्दस्यावृत्तौ प्रमाणम् । नचात्र महाकालशब्दे प्रयुक्ते प्रयासः कश्चित् । येना 'लकालिकुले'तिवत् समासोक्त्या श्लेषस्य वैयर्थ्यं शङ्क्येत ।

आच्छादितेति । पर्वतपक्षे आच्छादितं वैपुल्याद् दिशश्चाम्बरमाकाशं च येन, उच्चकैरुन्नतां गां भूमिं चाक्रम्य वर्तमानं महारोहपरिणाहानि शृङ्गाणि शिखराणि यस्य, तदौन्नत्याच्च शिरसि स्फुरच्चन्द्रलेखम्, एवंविधं नगेशं पर्वतराजं दृष्ट्वा को न विस्मि-

मधुसूदनीविवृतिः ।

धवलोऽट्टहासः शिवपक्षे । धवलानि अट्टानि आपणा येन एवंभूतः फुल्लमल्लिकानां हासो विकासो यत्र ऋतुपक्षे । कुसुमयसमयः वसन्तः तस्य युगम् प्रत्येकम् ऋतूनां मासद्वयव्यापित्वात् मासाभिप्रायेण युगत्वोक्तिः । शिवपक्षे कुसुमसमयसदृशं युगं कृतादि । उपसंहरन् नाशयन् समापयंश्च । ग्रीष्माभिधानो महाकालः संहारकर्तृदेवता अथच दीर्घसमयः । अजृम्भत व्यात्तास्यः विकसितवांश्चाभूत् ।

अत्र महाकालशब्दः श्लिष्टः देवताविशेषस्य ऋतुविशेषस्य च वाचकत्वात् धर्म्यर्थः तथात्वेऽपि महाकालस्य कर्तृत्वं न नष्टम् । युगस्य कर्मत्वं च । तस्यैव धर्म्यर्थस्यैव शब्दस्य महाकालेत्यस्य ।

तस्य धर्म्यर्थस्य शब्दस्य । आच्छादितायतेति । आच्छादितानि व्याप्तानि आयतानि दीर्घाणि दिशोऽम्बरमाकाशं च ( दिगम्बराणि ) येन तम् अथच आच्छादितं वसितमायतं दिगेवाम्बरं वासो येन तं तथोक्तम् । उच्चकैरुन्नतां गां भूमिं वृषभं च आक्रम्य व्याप्य वाहनीकृत्य च स्थितम् विराजन्तम् उदग्राणि उन्नतानि विशालानि महान्ति शृङ्गानि शिखराणि यस्येति पर्वतपक्षे । अथच उदग्रे उत्कटे विशाले शृङ्गे विषाणे यस्य ताम् गोविशेषणमेतत् बोध्यम् । मूर्ध्नि शिखरे शिरसि च । स्ख-

इति। अत्र हि आवृत्तिनिबन्धनं न किञ्चिदुक्तमिति तस्य वाच्यस्यावचनं दोषः।

न च सकृत्प्रयुक्तोऽयं गिरीशशब्द एवोभयार्थत्वाच्छ्वेतो धावतीतिवद्यथायोगं प्रदीपवत् तन्त्रेण प्रसङ्गेन वार्थान्तरप्रतीतिनिबन्धनमिति शक्यते वक्तुं, तयोः प्रतिपत्तृपरामर्शानपेक्षं प्रदीपस्यापरपदार्थविषयत्वेन प्रवृत्तिदर्शनात्, न शब्दविषयतैवम्; शब्दो हि प्रतिपत्तृपरामर्शमन्तरेण नार्थान्तरे प्रतीतिमाधातुमलं, परामर्शश्च निर्निबन्धनो न भवितुमर्हति अतिप्रसङ्गात्, निबन्धनं चात्र न किञ्चिदुपकल्प्यत इति

व्यक्तिविवेकव्याख्यानम्।

तो भवतीत्यर्थः। हरपक्षे तु आच्छादितं परिधानीकृतं दिश एव आयतं वस्त्रं येन तथा उन्नतं स्थूलविषाणं च वृषभमधिरुह्य स्थितं, मस्तके चन्द्रकलान्वितं च नगेशं कैलासाधिपतिं साक्षात्कृत्य अनुगृहीतम्मन्यत्वेन को न विस्मयत इत्यर्थः।

श्वेतो धावतीतिवदिति शब्दतन्त्रम्। प्रदीपवदिति। पुनरर्थतन्त्रम्। यथायोगमिति तुल्यप्रधानत्वेन साधारण्यं तन्त्रम्। अतुल्यप्रधानत्वेन तु प्रसङ्गः। तयोः प्रतिपत्तिरिति। किञ्चित् खलु वस्तुशक्त्यैव कार्यकारि यथा दीपादि। किञ्चित्तु परामर्शापेक्षं यथा धूमादि लिङ्गम्। यत्र यस्मिन् विषये परामर्शनैरपेक्ष्येण वस्तुशक्त्यैवोभयकारित्वं तत्र तन्त्रादि नान्यत्र। शब्दः परामर्शापेक्षोऽर्थप्रतीतिकारी।

मधुसूदनीविवृतिः।

लन्ती स्फुरन्ती तुहिनदीधितेः चन्द्रस्य कोटिः कला यस्य तं गिरीशम् रैवतकं गिरेः कैलासपर्वतस्य ईशम् महादेवं च वीक्ष्य को न विस्मयते सर्वोऽपि विस्मयं तनुते।

अत्र गिरीशपदे हि आवृत्तिनिबन्धनं न किञ्चन उक्तम्। अयं भावः। उपात्तार्थस्य प्रस्तुताप्रस्तुताभावात् न तुल्ययोगिता, विशेषणसाम्यमात्रेण प्रवृत्ता समासोक्तिरपि नेति।

नचेति। इति वक्तुं न शक्यते। इतीति किम्—सकृत् प्रयुक्तः एकवारमुपात्तः अयं गिरीशशब्दः एव उभयार्थत्वात्। यथायोगम् श्वेतो धावतीतिवत् श्वेतो वर्णः लक्षणया तद्विशिष्टः कश्चिदश्वः वृषो वा धावति, श्वा इतो धावति इतिचोभयार्थकशब्दवत् प्रसंगेन प्रकरणादिसाहाय्यमलम्ब्य अर्थान्तरप्रतीतिनिबन्धनम्, प्रदीपवत् तंत्रेण अर्थात् संकेतं विना अर्थान्तरप्रतीतिनिबन्धनमस्तु इति वक्तुं न शक्यम्। तयोः शब्दप्रदीपयोर्मध्ये प्रदीपस्य या अपरपदार्थविषयत्वेन अर्थात् अर्थान्तरप्रत्यायने प्रवृत्तिः सा प्रतिपत्तृप्रभृतिसहायकानपेक्षं यथास्यात्तथा दृश्यते, शब्दविषयता तु एवं न; हि यतः शब्दः प्रतिपत्तृपरामर्शापेक्षमन्तरेण विना अर्थान्तरविषयिकां प्रतीतिं बोधमाधातुं कर्तुं नालम् न समर्थः।

अयं भावः। ननु श्वेतो धावतीत्युभयार्थकशब्दवत् प्रकरणादिना, प्रदीपवत् तंत्रेण

ऽयर्थः श्लिष्टार्थशब्दान्वेषणप्रयासः कवेः । यथा च—

"विदधतः पथिकक्षपणं प्रति स्मृतिभुवो निजशक्त्युपबृंहणम् ।
दधुरहार्यभटाः सहकारितामनवमा नवमाधवसङ्गिनः ॥"

अत्र हि सहकारिशब्देन सहकर्तुंशीलत्वं सहकारसम्बन्धश्चेत्युभयोऽर्थः श्लेषेण विवक्षितः । तत्र रम्यतातिरेकलक्षण एक एव ततः प्रतीयते नापरो निबन्धनाभावादिति तस्य वाच्यस्यावचनं दोषः ।

एकोऽनेकार्थकृद्यत्र स्वभावेनैव दीपवत् ।
समयस्मृत्यनाकाङ्क्षस्तन्त्रस्य विषयो हि सः ॥ ८५ ॥
शब्दे त्वसिद्धमेकत्वं प्रत्यर्थं तस्य भेदतः ।
सादृश्यविप्रलब्धस्तु लोकस्तत्त्वमवस्यति ॥ ८६ ॥

---

व्यक्तिविवेकव्याख्यानम् ।

परामर्शो न निर्निबन्धन इति नात्र तन्त्रादिप्रवृत्तिः ।

अहार्यः पर्वतः । सहकारिता सहकरणशीलत्वं सहकारसम्बन्धश्च । अनवमा उत्कृष्टाः । नवः प्रत्यग्रः । माधवो वसन्तः । रम्यतातिरेकेति सहकारसम्बन्धरूप इत्यर्थः । तस्य वाच्यस्येति । तच्छब्देन निबन्धनं परामृष्टम् ।

समयस्मृतिः सङ्केतस्मरणम् ।

असिद्धमेकत्वमिति । ततश्च नायं तन्त्रादेर्विषयः । तत्त्वम् एकत्वम् ।

मधुसूदनीविवृतिः ।

वा गिरीशब्दः उभयार्थं प्रत्याययतु इति चेत् । शृणु अत्र हि गिरीशशब्दः अर्थद्वयं प्रत्यायिष्यति । स च यदा अर्थान्तरं बोधयिष्यति तदा प्रतिपत्तृपरामर्शेनैव बोधयितुं समर्थः, न स्वभावेन संकेतमनपेक्ष्य प्रदीपवत् । परामर्शश्च न निर्विबन्धनो भवतुमर्ह इति निबन्धानभिधाने श्लिष्टार्थशब्दगवेषणश्रमो निष्फल एव कवयितुरिति ।

विदधत इति । नवमाधवसङ्गिनः । नवो यो माधवो वसन्तः तत्सङ्गिनः । पथिकक्षपणं पान्थनाशनं प्रति निजायाः शक्तेरुपबृंहणम् वृद्धिं विदधतः कुर्वतः स्मृतिभुवः कामस्य सहकारितां साहाय्यम् दधुः । कीदृशास्ते—अहार्या अप्रतिनिषेध्याः भटाः । अनवमाः उत्कृष्टाश्च ।

अत्र सहकर्तुं शीलमेषाम् ते सहकारिणः सहायकास्तेषां भावस्तत्त्वम् साहाय्यमित्यर्थः । सहकारो हि आम्रः । स एषु अस्तीति ते सहकारिणः आम्रवन्तः तेषां भावस्तत्त्वम् सहकारसम्बन्धः इत्यर्थः इति उभयोऽर्थः श्लेषेण विवक्षितः । एक एव सहकारसम्बन्धरूप एव । अपरः साहाय्यरूपः । तस्य धर्म्यर्थस्य शब्दस्य । समयस्मृतिः संकेतस्मरणम् ।

शब्दे त्विति । शब्दे तु एकत्वमसिद्धम् । अर्थभेदेन शब्दभेद इति नयात् तस्य शब्दस्य प्रत्यर्थं भेद एव । किन्तु सादृश्यविप्रलब्धः औपम्यवञ्चितः लोकः तत्त्वमेकत्व-

नैतावतावगन्तव्या तस्यानेकार्थवृत्तिता ।
नात एव प्रसङ्गस्य पदं शब्दोऽवकल्पते ॥ ८७ ॥
न चानिबन्धना युक्ता शब्दस्यार्थान्तरे मतिः ।
तच्चानेकविधं प्रोक्तमव्ययानव्ययात्मकम् ॥ ८८ ॥
तस्मादर्थान्तरव्यक्तिहेतौ कस्मिंश्चनासति ।
यः श्लेषबन्धनिर्बन्धः क्लेशायैव कवेरसौ ॥ ८९ ॥

इति सङ्ग्रहश्लोकाः ।

धर्मार्थस्य यथा—

"प्रकटकुलिशकुन्तचक्रभास्वत्परवलभीहितमत्तवारणाङ्का ।
दिशि दिशि ददृशे निशान्तपङ्क्तिः समरविमर्दभुवं विडम्बयन्ती ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

अव्ययानव्ययात्मकमिति । अव्ययमिवादि । अनव्ययं सदृशादि ।

धर्मार्थस्येति । श्लेषादभिन्नत्वमिति योज्यम् । प्रकटेति । कुलयश्चटकाः तदुक्तम्—'कुलिः कुलिङ्गश्चटक' इति । ते च ते शकुन्ताः शकुनयः तेषां चक्रेण समूहेन भास्वतीनां वलभीनां हिताः अनुरूपा मत्तवारणाः अङ्कः चिह्नं यस्याः । निशान्तोऽन्तःपुरम् । विडम्बयन्ती उपहसन्ती । समरभूपक्षे कुलिशं वज्रम् । कुन्ताः प्रासाः । चक्राणि अराणि । तैर्भास्वद्भिः । व्यतिरेको विडम्बयन्तीति प्रकाशितः । प्रकटेत्यादौ च विशेषणभागेऽत्र श्लेषः ।

मधुसूदनीविवृतिः ।

अवस्यति जानाति ।

नैतावतेति । एतावता प्रत्यर्थं शब्दस्य भेदात् । तस्य शब्दस्य अनेकार्थवृत्तिता नास्ति । एतेन तन्त्रविषयता शब्दस्य पराकृता । अत एव शब्दः प्रसङ्गस्य पदं नावकल्पते

तच्चेति । निबन्धप्रयोजकपदं च । अव्ययमिवादि । अनव्ययं तुल्यादि ।

कस्मिंश्चनेति । असति अविद्यमाने ।

धर्मार्थस्य श्लेषादभिन्नत्वं यथा—प्रकटेति । प्रकटः स्पष्टः । अस्य अङ्केन सहान्वयः । कुलयः चटकाः । ते च ते शकुन्ताः पक्षिणः तेषां चक्रेण समूहेन भास्वन्त्यो याः परा उत्कृष्टा वलभ्यः । तासां हिताः अनुगुणा मत्तवारणा बारहदरीति प्रसिद्धाः तासामङ्को रचना यस्यां सा । निशान्तपङ्क्तिः भवनमाला समरविमर्दभुवं विडम्बयन्ती अनुकुर्वन्ती दिशि दिशि ददृशे । समरभूरपि । कुलिशो वज्रः । कुन्तः भाला इति प्रसिद्धः । चक्राणि प्रसिद्धानि । तैः भास्वन्ति परबलानि परसैन्याः तेषां भियि भये हिता उपयुक्ताः ये मत्तवारणा हस्तिनः तेषामङ्को यस्यां सा ।

अत्र विडम्बयन्तीति पदेन व्यतिरेको निर्दिष्टः । तन्निबन्धना तद्धेतुका । अर्थात्

अत्र व्यतिरेकालङ्कारनिबन्धना श्लेषाभिव्यक्तिः । यथा च—

"उषसि विगलितान्धकारपङ्कप्लवशबलं घनवर्त्म दूरमासीत् ।
मधुरतरणितापयोगतारं कमलवने मधुपायिनां च पङ्क्तिः ॥"

इति । अत्र चशब्दः श्लेषाभिव्यक्तिहेतुः ।

केचित् पुनः धर्मिधर्मोभयार्थस्यापि शब्दस्य श्लेषमिच्छन्ति, यथा-
"अनवरतनयनसलिलसिच्यमानस्तरुरिव विपल्लवोऽपि सहस्रधा

व्यक्तिविवेकव्याख्यानम् ।

उषसीति । अन्धकार एव मलिनत्वात् पङ्कः । तस्य विगलितस्य प्लवोऽनवस्थानं तेन शबलं विचित्रम् । घनवर्त्म वियत् । दूरमत्यर्थम् । मधुरः सुकुमारो यस्तरणितापो रविप्रभा तद्योगेन तारं हृद्यम् । मधुपायिनो भ्रमरास्तेषां पङ्क्तिः । अन्धकारपङ्कप्लव एव विगलनेन निस्सारत्वाच्छवः तस्य लङ्घनेन वर्त्मसु पक्ष्मसु दूरमा अरमणीयश्रीः । मधुरता मकरन्दासक्ता तथा रणिता सशब्दा, यद्वा मधुरतेन मकरन्दासङ्गेन रणितं गुञ्जितं यस्याः । पयोगता जलगता । अरमत्यर्थम् । अत्र घनवर्त्मशब्दस्योपमेयवाचिनः श्लेषेऽन्तर्भावात् धर्मिधर्मोभयार्थस्योदाहरणत्वे न्याय्ये धर्मार्थस्योदाहरणत्वं चिन्त्यम् ।

अनवरतेति । अनवरतं नयनसलिलेन सिच्यमानो वृद्धिं नीयमानः । तथा अनवरतं नयनं प्रापणं यस्य तेन सलिलेन सिच्यमान आर्द्रत्वं प्राप्यमाणः । विपदो लवः

मधुसूदनीविवृतिः ।

विडम्बयन्तीतिपदानुरोधेन श्लेषस्य गवेषणा भवतीति । श्लेषाच्च प्रकटेत्यादि विशेषणार्थस्याभिन्नत्वम् ।

उषसीति । उषसि प्रातःकाले घनवर्त्म आकाशम् विगलितः अन्धकारः एव मालिन्यात् पङ्कः। तस्य प्लवोऽनवस्थानम् । तेन शबलम् तथा मधुरस्य नवस्य तरणितापस्य सूर्यतापस्य । योगेन सम्बन्धेन तारं मनोहरं दूरमासीत न जातमित्यर्थः। किन्तु कमलवने मधुपायिनां भ्रमराणां पंक्तिश्च आसीत् । साऽपि उषसि विगलितान्धकारपङ्कप्लव एव शवः । श्लेषे बवयोरैक्यात । तस्य लङ्घनेन वर्त्मसु पक्ष्मसु ।दूरमा अरमणायशोभा । मधुरतेन मकरन्दप्रेम्णा रणितं गुञ्जितं यस्याः सा अथ पयोगता जलगता । अरं शीघ्रम् अत्यर्थम् । चशब्दोपादानेन श्लेषगवेषणाप्रयत्नः। तेन च विगलितेत्यादिना उपात्तार्थस्य मधुरेत्यादिना चोपात्तस्य एकत्वम् । इदं तु बोध्यम् । अत्र ग्रन्थकारेण केवलं धर्मार्थस्य श्लेषादभिन्नत्वमभिहितम् । किन्तु मधुपायिपंक्तिघनवर्त्मनोः उपमानोपमेययोः धर्मस्य एकविशेषणद्वारोपादानादेकत्वस्य एषणायाम् उपमेयस्य विशेषणान्तर्गतत्वात् तस्यापि तद्द्वारा एकत्वमिति धर्मिधर्मोभयार्थस्य अभिन्नत्वं प्राप्तं भवति। इति।

अनवरतेति । अनवरतं निरन्तरं नयनसलिलेन अश्रुणा सिच्यमानः वृद्धिं नीयमानः विपदो लवः आपल्लेशः । अनवरतं नयनं प्रापणं यस्य तेन सलिलेन सिच्यमानः

प्ररोहति"

इत्यत्र विपल्लवशब्दस्य। तच्चायुक्तम्। तथाहि—विपल्लवशब्दस्य धर्मिधर्मोभयार्थत्वेऽपि न धर्मार्थत्वम्, यतोऽयमुपमानस्य विशेषणभावमुपगन्तुं नोत्सहते, तस्योपमेयाभिधाने चरितार्थस्यावृत्तेरनुपपत्तेस्तत्स्वरूपापहारप्रसङ्गात्।

यः पुनरप्रधानमेवार्थमभिधत्ते न प्रधानमसावुपयुक्तार्थोऽपि निव-

---

व्यक्तिविवेकव्याख्यानम्।

सूक्ष्मभागो विपल्लवो विगतकिसलयश्च। प्ररोहति विस्तीर्णोभवति अङ्कुरांश्च मुञ्चति।

धर्मार्थत्वमिति। अत्र स्थितमपि धर्मार्थत्वं नोपमानविशेषणत्वायालं विशेषणत्वस्य कक्ष्यान्तरभावित्वात्। न चावृत्तिमन्तरेण कक्ष्यान्तरपरिग्रहो न्याय्यः। न चात्रावृत्तिः कार्या। प्रमाणाभावात्। अनावृत्तौ तु तस्यामेव कक्ष्यायां विशेषणत्वे उपमेयस्वरूपापहारप्रसङ्ग इति पदार्थः। तस्योपमेयेति तच्छब्देन विपल्लवशब्दः परामृष्टः।

य पुनरिति श्लेषप्रयोजकः शब्दः। अप्रधानं विशेषणभूतम्। प्रधानस्य हि

मधुसूदनीविवृतिः।

आर्द्रीक्रियमाणः। विपल्लव विपदो लवः, विगतकिसलयश्च तरुरिव। सहस्रधा अनेकप्रकारेण अनेकशाखाभिश्च। प्ररोहति विस्तीर्णो भवति अङ्कुरांश्च मुञ्चति।

अत्र केचित् "विपल्लवशब्दस्य आपल्लेशवाचकत्वे धर्म्यर्थत्वम् विगतकिसलयवाचकत्वे धर्मार्थत्वम्"। इत्युभयार्थश्लेषमिच्छन्ति। तच्च श्लेषैषणं च अयुक्तम्। यद्यपि विपल्लवशब्दस्य धार्मिधर्मोभयार्थत्वं तथापि इह न धर्मार्थत्वम्। तदैवायं विपल्लवशब्दः धमार्थः स्यात् यदा उपामानस्य तरोः विशेषणं स्यात्। विशेषणं च तदैव स्यात् यदास्य आवृत्तिः स्यात्। आवृत्यभावे चायं तस्य विशेषणभावमुपगन्तुं प्राप्तुं नोत्सहते।

ननु आवृत्तिरस्तु इत्याह—तस्येति। उपमेयस्य आपल्लेशरूपस्य अभिधानेन चरितार्थस्य तस्य विपल्लवशब्दस्य आवृत्तेरनुपपत्तेः शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति नयात वारमेकमर्थबोधनेन चरितार्थस्य नावृत्तिरत्यर्थः। ननु आवृत्तिं विनैव अर्थं बोधयतु इति चेत्, उपमेयस्वरूपापहारप्रसङ्गः स्यात्। अर्थात् उपमायाः प्राधान्यं न स्यात् सादृश्यानुकूलपदोपस्थापनस्य वैयर्थ्यं स्यादिति रहस्यम्। अत्राक्षरयोजना क्लिष्टा पाठवैकल्यात्। यदि "तच्चायुक्तम् तथाहि विपल्लवशब्दस्य धर्मिधर्मोभयार्थत्वेऽपि न धर्मार्थत्वम् यतोऽयमुपमानस्य विशेषणभावमुपगन्तुं नोत्सहते" इति पाठः स्यात्तदा समीचीना संगतिः स्यात्। मुद्रितपाठस्तु। "तच्चायुक्तम् यतो विपल्लवशब्दस्य धर्मिधर्मोभयार्थत्वेऽपि न धर्मार्थत्वमुपमानस्य विशेषणभावमुपगन्तु मुत्सहते" इत्येवंरूपः प्रतिपाद्यार्थप्रतिपादने विकल एवेति ग्रन्थतलावगाहितधीभिः सुधीभिर्बोधनीयम्।

सति कारणे आवर्ततेऽपीति नियमान्तरं प्रस्तौति—य: पुनरिति। यः पुनः श्लिष्टः

न्धनसद्भावे सत्यावर्त्तत एव । यथा—

"सानुस्थितिर्जनकराजसुतेव भास्वदङ्कोल्लपल्लवतया श्रियमेति यस्य ।"

इत्यत्र भास्वदङ्कोल्लपल्लवताशब्दः ।

इह पुनर्द्विरुपादानमेवैकमुपमानसम्बन्धबुद्धिनिबन्धनमवसेयं न चेवाद्यव्ययमनव्ययमलङ्कारान्तरं वा किञ्चित् ।

---

### व्यक्तिविवेकव्याख्यानम् ।

पूर्वोक्तन्यायेनावृत्तिर्न्याय्या । निबन्धनमिवादि ।

सानुः पर्वतस्य माल(१)भूभागः । अङ्कोल्लाख्यास्तरवः तेषां पल्लवा भास्वन्तो यत्र । अङ्कोल्लशब्दः प्राकृतभाषापदमपि कविभिरतिप्रसिद्ध्या श्लेषादिषु प्रयुज्यते । तथा च 'सकुशाङ्कोल्लपल्लवा । मैथिलीव श्रियं धत्ते' इति परिमलेन प्रयुक्तम् । संस्कृते पुनरङ्कोठशब्दः स्थितः । तथा भास्वानङ्के उल्लपन् मुखरः लवाख्यः पुत्रो यत्रेति सामान्येनान्यपदार्थो गृह्यते ।

इहेति विपल्लवशब्दे । इवाद्यव्ययमिति तरुरिवेति प्रयुक्तस्येवशब्दस्यान्यथा व्यवस्थापयिष्यमाणत्वात् । अलङ्कारान्तरं समासोक्त्यादि ।

### मधुसूदनीविवृतिः ।

शब्दः अप्रधानमेव अप्रधानीभूतमेवार्थमभिधत्ते असौ उपयुक्तार्थोऽपि अन्यत्र चरितार्थोऽपि निबन्धनसद्भावे आवृत्तिकारणस्य इवादेरव्ययस्य वा अनव्ययस्य अलङ्कारान्तरस्य वा उपस्थितौ सत्याम् आवर्त्तते एव। यथा सानुस्थितिरित्यत्र इवस्य सद्भावे भास्वदङ्कोल्लपल्लवताशब्दः श्लिष्ट आवर्त्तते । तस्य पर्वतस्य सानुस्थितिः प्रस्थस्थितिः । भास्वन्तोऽङ्कोल्लानां पल्लवा यत्र तस्य भावस्तत्ता तया जनकसुतेव श्रियमेति । जनकसुताऽपि भास्वदङ्कोल्लपल्लवा । भास्वान् चञ्चत् अङ्के उल्लपन्मुखरो लवाख्यः पुत्रो यस्याः । सा अनु रामस्य पश्चात्स्थित्या सह वर्तते सानुस्थितिः । अत्र भास्वदङ्कोल्लपल्लवताशब्दः उपमानोपमेययोः जनकसुतासानुस्थित्योर्विशेषणमिति अप्रधानमेव तदर्थः न प्रधानमिति भावः । अनवरतेत्यत्र तु विपल्लवशब्दस्य उपमेयवाचकतया विशेष्यत्वमिति प्रधानमपि तदर्थः । तरुविशेषणतायां विशेषणतेति अप्रधानमपि तदर्थः । द्वैविध्यासक्तस्य यथा न हरेः न लक्ष्म्याश्च सङ्गतिर्भवति तथैव उभयार्थप्रतिपादकस्य अस्य नोपमेयत्वं नच विशेषणत्वमिति पुनरुक्तिः करणीयेति ।

विपल्लवशब्दस्यावृत्तिरेवास्थेया इति वक्तुमाह—इह पुनरिति । इह अनवरतेत्यत्र पुनः विपल्लवशब्दस्य द्विरुपादानमेव एकम् उपमानसम्बन्धस्य उपमेयस्य बुद्धौ ज्ञाने निबन्धनं कारणम् अवसेयम् ज्ञेयम् । इवाद्यम् अव्ययम् वा अनव्ययम् अलङ्कारान्तरं समासोक्त्यादि वा किञ्चित् कारणं न अवसेयम् ।

---

(१) मालं क्षेत्रम् । सद्यः सीरोत्कषणसुरभिः क्षेत्रमारुह्य मालमित्यादिष्वपि च तद् दृश्यते ।

यत्र च प्रधानार्थसंस्पर्शमात्रादेवोभयार्थस्य शब्दस्य द्विरुपादानमवश्यं कार्यं तत्र तदेकार्थस्य तत् स्थितमेव । यथा—

"व्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ।"

इति । यथा च—

"खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ।" इति ।

न चावृत्तिनिबन्धनमिवशब्दोऽत्र प्रयुक्त एवेति कुतः प्रधानार्थ-

व्यक्तिविवेकव्याख्यानम् ।

प्रधानार्थसंस्पर्शमात्रादिति । यतः तेन पदेन सम्भवदप्रधानार्थेनापि प्रधानभूतोऽर्थः संस्पृष्टः, ततोऽन्तरलम्बन्धासहिष्णुत्वात् द्विरुपादानार्हत्वम् । यत्र च प्रधानाप्रधानोभयार्थस्य द्विरुपादानमवश्यं कार्यं, तत्र दण्डापूपिकया तदेकार्थस्य प्रधानमात्रार्थस्य शब्दस्य द्विरुपादानं न्यायसिद्धमेव ।

रुचिर्दीप्तिः अभिलाषश्च रुचिः । अत्र द्वौ रुचिशब्दौ विशेष्यवाचित्वात प्रधानार्थौ । ननूपमानस्य यदि विशेष्यत्वं नोपमेयविशेषणत्वं तत् कथमुपमेयसम्बन्धिन्युपमानस्य विभक्तिः । यथा 'वागर्थाविव सम्पृक्तौ' इति । नैष दोषः । विशेषणत्वमवच्छेदकत्वं तच्चोपमानस्योपमेयं प्रत्युपमितिक्रियायां विद्यत एव । अन्यथा तयोः सम्बन्धाभावादनन्वयप्रसङ्गः । स्थिते विशेषणत्वे तस्य न विशेष्यविभक्तेर्हानिः काचित् । यत् पुनरिहोपमानशब्दस्य विशेष्यवाचित्वमुक्तं तद् धर्मिताभिप्रायेण । धर्मी ह्युपमानम् । न च स्वतन्त्रत्वात् विशेष्यार्थः । अतश्चैवायं 'स्त्रीव गच्छति षण्डोऽयम्' इत्युपमेयलिङ्गं न भजते । धर्मवाचि तु विशेषणं विशेष्यलिङ्गमेव । तदुक्तम्—'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इति । तदेवमुपमानमुपमेयविभक्तिं भजते धर्मित्वं च न जहातीति । खलता आकाशवल्ली । अत्र प्रयुक्त इति । तरुरिवेत्यत्र ।

मधुसूदनीविवृतिः ।

यत्र चेति । अयं भावः । यदा एक एव शब्दः उभयमर्थमभिदध्यात्तदा न तस्य यद्यपि पुनरुक्तिः कर्तुमुचिता तेनैव उभयार्थबोधसिद्धेः तथापि प्रधानत्वमनुभवन् अन्यत्र विशेषणत्वं न सहते इति प्रधानार्थस्पर्शमात्रादेव तस्योभयार्थस्य शब्दस्य यदा द्विरुपादानमवश्यं कर्त्तव्यं भवति तदा तदेकार्थस्य प्रधानमात्रवाचिनः शब्दस्य तत् द्विरुपादानम् स्थितमेव बलात्प्राप्तमेव ।

व्रध्नस्येति । रुचितस्य प्राप्ताभिलाषस्य रुचिरिव अभिलाष इव ब्रध्नस्य सूर्यस्य इद्धा दीप्ताः रुचिः कान्तिः वो युष्माकं वस्तुन आप्तयेऽस्तु । अत्र द्वौ रुचिशब्दौ उपात्तौ विशेष्यवाचितया प्रधानार्थत्वात् । एवं खलतामित्यत्र स्पष्टम् ।

ननु अनवरतेत्यत्र तरुरिवेति इवार्थसादृश्यम् उभयनिष्ठतया तत्र उपमानस्योपा त्तत्वादुपमेयम् तथा कथमिमौ सदृशाविति तस्य धर्माधीनतया विशेषणं च उपस्थापयतु अलं द्विरुक्त्या इत्याह—न चेति । अत्र तरुरिवेत्यत्र ।

संस्पर्शवशाद्विपल्लवशब्दस्य द्विरुपादानप्रसङ्ग इति शक्यते वक्तुं, तस्य तरुविपल्लवयोरुपमानोपमेयभावद्योतनमात्रचरितार्थस्य तयोर्विशेषणविशेष्यभावाभिधानसामर्थ्याभावात् ।

अथ विपल्लवशब्दस्य तरुविशेषणभावोपगमयोग्यार्थान्तरसम्भवे तस्य तरुणा सामानाधिकरण्ये सत्याकाङ्क्षासन्निधियोग्यतावशात् तयोर्विशेषणविशेष्यभावोऽवगम्यत इति चेत्, तन्न; वाक्यप्रभेदप्रसङ्गात् 'विपल्लवस्तरुरिव स च तरुर्विपल्लव' इति ।

अथ समासोक्तिवशादुक्तनयेन तयोः सम्बन्धावगतिरिति । तदयुक्तम् । तस्या उपमानभूतधर्मिमात्रप्रतीतिसामर्थ्योपगमात् । इह तु तरुरिवेति तदुपात्तमेवेति व्यर्थ एवायमनेकार्थपदोपादानप्रयासः कवेः ।

तस्मात् सलिलसिच्यमानत्वसहस्रधाप्ररोहादिसमानधर्मापेक्षयैवात्र तरुविपल्लवयोरुपमानोपमेयभावोऽवगन्तव्यः न तु श्लेषः, स हि भ्रान्तिमात्रकृतः । यथा च—

"क्वचित् तरुतलविवरवर्त्तिनो बभ्रवः क्वचित् स्वच्छन्द-

---

व्यक्तिविवेकव्याख्यानम् ।

वाक्यभेदप्रसङ्गादिति 'सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यत' इति वाक्यभेदस्य प्रतिपत्तिगौरववरवाद्धेयत्वम् ।

अथ समासोक्तीति । अनवरतजलेत्यादेर्विशेषणस्य द्व्यर्थत्वात् । उपमानभूतेति । यत्रोपमानभूतस्य धर्मिणोऽन्यस्यार्थस्य गम्यमानत्वं तत्र समासोक्तिः, न साक्षादुपादान इत्यर्थः ।

क्वचिदिति । बभ्रवः कपिलाः । एतद् दावाग्नि विशेषणं सन्नकुललक्षणमर्थं

मधुसूदनीवृत्ति ।

तस्य इवशब्दस्य ।

ननु अस्तु आपल्लेशवाचकतया विपल्लवशब्दस्य उपमेयार्थता परंतु विगतः पल्लवो यस्येत्यर्थात् तत्र तरुविशेषणयोग्यताऽपि वर्त्तत एव ततश्च तन्माहात्म्यात् तयोर्विशेषणविशेष्यभावोऽवगम्यत एवेत्याशयेन शङ्कते—अथेति ।

समाधत्ते तन्न । अयं भावः । यद्यपि तत्र शब्दे विशेषणत्वप्राप्तियोग्यता वर्त्तते तथापि वाक्यभेदं विना अन्वयो दुष्करः । वाक्यभेदश्चाचार्यैरस्वीकृत एव । "सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते" इत्युक्तेरिति ।

अथ समोक्तीति । अयं भावः । साधारणविशेषणबलात् कार्यसमारोपाद्वा यत्र उपमानस्य व्यङ्ग्यत्वं तत्रैव समासोक्तिर्भवति । अत्र तु उपमानं तरुरिवेति शब्दत एव उपात्त इति न समासोक्तिरिति ।

तस्मादिति । तस्मात् उक्तात् त्रिरूपाद्धेतोः । स हि श्लेषो हि ।

क्वचिदिति । अत्र श्लेषेण वनवह्निर्वर्ण्यते तस्यैतानि विशेषणानि । अ-

चारिणो हरिणाः क्वचिज्जटावल्कलावलम्बिनः कपिला" इति। एवमर्थश्लेषेऽप्यवगन्तव्यम्। यथा—

"समन्तः केसरिणं वसन्तं भीमं च कान्तं च वपुर्वहन्तम्।
विलोक्य दूरात् तरसाभिमानो दुर्वारणः क्वापि गतः स मत्तः॥"

इति। अत्र हि केसरिदुर्वारणयोर्वसन्ताभिमानयोश्च धर्मिधर्मोभयार्थयोरन्योन्यं विशेषणविशेष्यभावो रूप्यरूपकभावो वा निबद्धः। स

व्यक्तिविवेकव्याख्यानम्।

प्रतिपादयतीति धर्मिधर्मोभयात्मत्वम्। एवं हरिणा हरिता मृगाश्च। जटा मूलानि केशसन्निवेशाश्च। वल्कलं वृक्षत्वक् तत्कृतं च वासः। कपिलाः पिङ्गला मुनिविशेषाश्च। आरोपविषयबहुत्वादारोप्यमाणानामपि बहुत्वम्।

केसरिणं बकुलपुष्पवन्तं सिंहं च। वसन्तं माधवं निवसन्तं च। अभिमानो धाराधिरूढो मानो महाप्रमाणश्च। दुर्वारणोऽशक्यवारणो दुष्टश्च करी। मत्तो मत्सकाशात् समदश्च। अभिमान इति न तथा हृदयङ्गमः पाठः।

अन्योन्यमिति वसन्तमित्यस्य केसरिणमिति विशेषणं, सिंहपक्षे च केसरिणमित्यस्य वसन्तमिति। रूप्येति यः केसरी प्रतीतः स वसन्तस्य रूपकत्वेन न ताटस्थ्येन। एवं वसन्तमित्यस्य निवसनार्थयोगेऽपि वसन्तार्थः केसरिणो रूपकत्वेन योज-

मधुसूदनीविवृतिः।

स्मिन् प्रसङ्गे शब्दाः धर्मार्थाः। नकुलादिरूपार्थप्रतिपादने एतानि विशेष्याणि शब्दाश्च धर्म्यर्थाः। इति धर्मिधर्मोभयार्थतावशाच्छ्लेषः उद्भवति। परं स भ्रान्तिमात्रकृतः कारणस्य उल्लेखाभावादित्याशयः। बभ्रवः कपिलाः नकुलाश्च। हरिणाः हरिता मृगाश्च। जटा मूलम् केशसंघातः। वल्कलं वृक्षत्वक् तदाख्यं वस्त्रं च। कपिलाः पिङ्गला मुनिविशेषाश्च। अत्रारोपविषयबहुत्वादारोप्यमाणानामपि बहुत्वम्। मालारूपकम् श्लिष्टशब्दनिबन्धनम्।

अर्थश्लेषेऽपीति। अर्थश्लेषोदाहरणमाचिनोति समन्तत इति। इयं विकसित वसन्तप्रेक्षिकाया नायिकाया उक्तिः। समन्ततः सर्वतः केसरिणं बकुलपुष्पवन्तम्। भीमम् वियोगिनां दुःखदत्वात्। कान्तं शृङ्गारिणां सुखजनकत्वात्। वपुः शरीरं वहन्तम् धारयन्तं वसन्तम् ऋतुम् दूरादेव विलोक्य स प्रियमिलनप्रतिबन्धकः दुर्वारणः वारयितुमशक्यः अभिमानः। तरसा शीघ्रं मत्तः मत्सकाशात् क्वापि गतः। इति प्रस्तुतार्थः। आरोपार्थश्च। भीमं भयंकरम् अत एव कान्तं कस्य सुखस्य अन्तम् अन्तकरं वपुर्वहन्तं समन्ततो वसन्तं कृतनिवासं केसरिणं सिंहं दूरादेव विलोक्य अभिमानः महाप्रमाणः मत्तः क्षीबः दुर्वारणो दुष्टगजः तरसा जवेन क्वापि गतः पलायितः।

अत्र केशरिदुर्वारणौ धर्मिभूतौ आरोप्यमाणौ वसन्ताभिमानौ धर्मभूतौ आरोपविषयौ बोध्यौ। अन्योन्यमिति। वसन्तशब्दः निवासार्थकः केशरिविशेषणम्।

चायुक्तः । न हि स्वतन्त्रपरतन्त्रतालक्षणविशेषणविशेष्याद्यात्मकविरुद्धोभयार्थाभिधानं सकृदुपात्तेनैकेनैव शब्देन शक्यते कर्तुम् अर्थयोरन्योन्यविरोधात् । द्विरुपादाने तु तयोर्भिन्नार्थत्वान्न कश्चित् दोषः । यथा—

"अलिभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥"

इत्युक्तप्रायम् । न च तदुपात्तमिति तस्य वाच्यस्यावचनं दोषः । तदभिव्यक्तिनिबन्धनसद्भावे तु तयोः प्रधानेतराभिव्यक्तौ विशेषणविशेष्यप्रतिनियमो युक्त एव । यथा—

"अतिगम्भीरे भूपे कूप इव जनस्य निरवतारस्य ।
दधति समीहितसिद्धिं गुणवन्तः पार्थिवा घटकाः ॥"

---

व्यक्तिविवेकव्याख्यानम् ।

नीयः । इत्थमेव दुर्वारणाभिमानयोर्वाच्यम् । विशेष्यत्वेन रूप्यत्वेन च स्वतन्त्रत्वं, तद्विपर्ययेण परतन्त्रत्वम् । विशेष्याद्यात्मकेति । आदिग्रहणेन रूप्यरूपकभावो गृह्यते ।

तिलकस्तरुविशेषस्तिलकश्च विशेषकः । तदभिव्यक्तिरुभयार्थाभिव्यक्तिः । तयोरर्थयोः ।

गुणवन्तो रज्जुयुक्ता अपि । घटकाः सङ्घटयितारो ह्रस्वाश्च घटाः । पार्थिवा राजानः, ननु वक्ष्यमाणयुक्त्या पृथिवीविकारा व्याख्येयाः ।

मधुसूदनीविवृतिः ।

केशरिशब्दः वकुलपुष्पवदर्थकः वसन्तविशेषणमिति एकस्य विशेषणत्वेऽपरस्य विशेष्यत्वमिति परस्परं विशेष्यविशेषणभावः । वसन्ताभिमानौ रूप्यौ केशरिदुर्वारणौ रूपकौ । तयोर्भावः । निबद्धः कृतः । स च तद्भावश्च । स्वतन्त्रतालक्षणं विशेष्यम् परतन्त्रतालक्षणं विशेषणम् । आदिपदात् रूप्यरूपकभावो गृह्यते । तदात्मकस्य परस्परविरुद्धोभयार्थस्य अभिधानं प्रतिपादनम् । सकृत् एकवारमुपात्तेन एकनैव शब्देन वसन्तादिना कर्तुं न शक्यते । अर्थयोः उक्तयोः अन्योन्यविरोधात् ।

यथेत्यनेन अर्थयोर्द्विरुपादानस्थलीं दर्शयति । अलिभिरिति । कुसुमानां पंक्तिषु निपतितुं शीलमेषां तैः । अञ्जनबिन्दुवन्मनोहरैः अलिभिः भ्रमरैः अङ्कितः युक्तः तिलकाख्यो वृक्षः प्रमदां रमणीम् तिलक इव विशेषक इव वनस्थलीं न शोभयति इति न अपि तु शोभययि स्म । अत्र उपमानोपमेयभूतयोः तिलकयोः द्विरुक्तिः ।

नचेति । तत् पदं भिन्नमुपात्तं नास्तीति संगतिः । तदभिव्यक्तेः उभयार्थाभिव्यक्तेः निबन्धनं कारणम् इवादि अलङ्कारान्तरम् । तस्य सद्भावेन तयोरुभयोरर्थयोः । प्रधानेतराभिव्यक्तौ सत्याम् विशेष्यविशेषणभावः युक्त एव उचित एव ।

यथेति । तदौचित्यस्थलं निरूपयति—अतिम्भीर इति । अतिखातत्वाद्गभीरे कूप इव अतिगम्भीरे कथमपि भावानालक्षणात् । भूपे निरवतारस्य श्रोणीम-

इति। अत्र हि इवशब्दनिबन्धनो गुणवत्त्वघटकत्वयोर्विशेषणविशेष्यभावो न पार्थिवत्वस्यापि, तस्योपमेयतया प्राधान्यात् अन्यथा तस्य स्वरूपापहारापत्तेरित्युक्तम्।

किञ्च मत्त इत्यस्य द्विरुपादानेऽपि नार्थश्लेषो घटते तयोर्भिन्नविभक्तिकत्वादिति भ्रान्तिमात्रकृतस्तत्रार्थश्लेषाभिमानः।

किञ्च लक्षणवाक्ये शब्दमात्रेणेति यन्मात्रग्रहणं तदुपमानसामानाधिकरण्यतदितरयोग्ययोरुभयोरपि शब्दयोः परिग्रहार्थम्। तेन लिङ्गवचनविभक्तिविशेषयोगे सति यस्य तद्योग्यत्वमुपजायते तेनापि सादृश्यं कथनीयमित्यभ्यनुज्ञातं भवति।

---

व्यक्तिविवेकव्याख्यानम्।

गुणवत्त्वघटकत्वयोरिति। यद्यप्यत्र समीहितसिद्धौ हेतुत्वेन व्यवस्थितस्य घटका इत्यस्य पार्थिवा इति प्रतिविशेषणत्वं, तथापि कूप इवेत्युपमासामर्थ्याद् विशेष्यत्वमपि घटते॥(१)

मधुसूदनीविवृतिः।

प्राप्तवतः घनाद्यलब्धिवतः जनस्य समीहितसिद्धिं जलसिद्धिं धनादिसिद्धिं गुणवन्तः रज्जुयुक्ताः विद्वांसश्च घटकाः अल्पघटाः संयोजकाश्च पार्थिवाः राजानः विदधति।

इवशब्दः। अत्र भूप इवेति। तन्निबन्धनम् तद्धेतुकम्। गुणवत्वस्य विशेषणत्वम् घटकत्वस्य विशेष्यत्वम् वर्त्तते। पार्थिवत्वस्य विशेषणत्वं नास्तीति भावः। अर्थात् पृथिव्या विकाराः इत्यर्थकरणे पार्थिवा इति जलरूपसमीहितसिद्धौ हेतुत्वेन उपात्तस्य घटका इत्यस्य विशेषणम्। परन्तु वर्णनीयस्य राज्ञः प्राधान्येन तदुपयोगितया पार्थिवा इति विशेष्यमेव।

समन्तत इत्यत्र वसन्तादिपदानां पुनरुपादानेऽपि मत्त इत्यस्य भिन्नविभक्तिकतया शब्दश्लेषत्वमेवेति अर्थश्लेषत्वं न संघटते इत्याशयेनाह किञ्चेति। तयोः द्विरुक्तमत्तशब्दयोः। तत्र मत्तपदघटिते पद्ये।

किञ्चेति। लक्षणवाक्ये—

"यत्रान्यूनातिरिक्तेन सादृश्यं वस्तुनोर्द्वयोः
शब्दमात्रेण कथ्येत स शब्दश्लेष इष्यते।

इत्येवंरूपे श्लेषलक्षणवाक्ये। तत् ग्रहणम् उपमानेन सह सामानाधिकरण्येन। तस्मादितरस्य वैयधिकरण्येन अन्वययोग्यस्य चेत्युभयोः। तेन उभयपरिग्रहणहेतुना यस्य अर्थस्योपमेयस्य तद्योग्यत्वम् उपमानेन सह सामानाधिकरण्यवैयाधिकरण्याभ्याम न्वयार्हत्वम्। तेनापि उपमेयभूतेन अर्थेन।

---

(१) अयं व्याख्यानग्रन्थोऽस्माभिर्यावानुपलब्धः तावानेव पाठकानां पुरत उपस्थापितः। चेत् श्रीसुरसरस्वत्या भगवत्या अभ्युपपत्त्या अन्योऽपि लभ्येत तर्हि पुनः पाठकेभ्यः सेवायामुपहरिष्यामहे।

तत्र लिङ्गविशेषयोगे सति यथा—

"उषसि विगलितान्धकारपङ्कलवशबलं घनवर्त्म दूरमासीत्।
मधुरतरणितापयोगतारं कमलवने मधुपायिनां च पङ्क्तिः॥"

इत्यत्र चशब्दनिबन्धना श्लेषाभिव्यक्तिः। वचनविशेषयोगे यथा—

"विघटिततिमिरौघदिक्प्रबन्धप्रकटनभस्यभवन्निशावसाने।
स्फुटदलनमनाश्च पद्मषण्डास्सपदि हिमेतरदीधितिश्च तेषाम्॥"

इत्यत्र चशब्दनिबन्धनावृत्तिः। यथा च—

"तनुत्वरमणीयस्य मध्यस्य च भुजस्य च।
अभवन्नितरां तस्या वलयः कान्तिवृद्धये॥"

विभक्तिविशेषयोगे यथा—

"सरसमन्थरतामरसोदरभ्रमरसज्जलया नलिनी मधौ।
जलधिदेवतया सदृशीं श्रियं स्फुटतरागतरागरुचिं दधौ॥"

इत्यत्र सादृश्यमनव्ययमावृत्तिनिबन्धनम्।

---

मधुसूदनीविवृतिः।

उषसीति। व्याख्यातम् प्राक्। अत्र घनवर्त्मनः क्लीवत्वम्। मधुपायिपंक्तेः स्त्रीत्वम्। तद्योगे सति घनवर्त्ममधुपायिपङ्क्तेः सादृश्यमुपनिबद्धम्।

विघटितेति। निशावसाने प्रातःकाले दिग्गततमसां विगलितत्वेन नभसः स्वच्छता जाता। तदानीं पद्मषण्डा कमलसमूहाः स्फुटैः दलैः पत्रैः नमनाः नम्रा अभवन् हिमेतरदीधितिः सूर्योऽपि तेषाम् पद्मषण्डानां स्फुटदलने स्पष्टविकासने मनो यस्य स अभवत्। अत्र हिमेतरदीधितिश्चेत्युपात्तः चशब्दः तन्निबन्धना आवृत्तिः स्फुटदलनमनाश्चेति पदस्य बौद्धा पुनरुक्तिः वर्त्तते। एकत्वं बहुत्वं च विशेषणपदस्य क्रियायाश्चेति बोध्यम् तथा एकत्वबहुत्वरूपवचनयोगे पद्मषण्डहिमेतरदीधित्योः सादृश्यमुपनिबद्धम्।

तनुत्वेति। तनुत्वम् कृशत्वम् कोमलत्वञ्च। अभवत् अभवन्निति च। वलयः त्रिवलयः कङ्कणं च। अत्र वलयः इत्यत्र एकत्वं बहुत्वं च वचसः। तद्योगे मध्यभुजयोः साम्यमुक्तम्।

सरसेति। सरसः शृङ्गारो रसिको वा मन्थरः अलसो यः तामरसस्य कमलस्य उदरे मध्ये स्थितो भ्रमरः तेन सज्जः कृतः लयः गुञ्जनाख्यध्वन्यनुगतं कालक्रिययोः साम्यं यस्यां सा। तालः कालक्रियामानं लयः साम्यमित्युक्तेः। नलिनी। मधौ वसन्ते। सरसो यो मन्थः अर्थात् बलपूर्वकं यन्मन्थनं तत्र रतौ यौ अमरसोदरौ देवदैत्यौ ताभ्यां कृतेन भ्रमेण रसत् शब्दायमानं जलं यस्यास्तया जलधिदेवतया सदृशीं तुल्यां श्रियं शोभां दधौ। कीदृशीं श्रियम्। स्फुटतरं यथा स्यात्तथा आगता एकत्र रागस्य लौहित्यस्य अपरत्र पद्मरागस्य रुचिर्यत्र ताम्। अत्र सरसेति विशेषणं नलिनीपक्षे प्रथमान्तम्। जलधिदेवतापक्षे तृतीयान्तमिति विभक्तिश्लेषः

न्यूनातिरिक्तप्रतिषेधश्चास्य प्रधानविशेषणसाम्यप्रतिपत्त्यर्थः । तेन यत्र तन्न सम्भवति स दुष्ट एव श्लेष इत्यवसेयम् ।

तत्र न्यूनत्वं यथा—

"इह चटुलतया विलोचनौघैः स्फुटशितितारकविभ्रमैस्तरुण्यः ।
दधति मधुकरैश्च कोरकान्तस्थितिरमणीयतरैः श्रियं नलिन्यः ॥"

इति । अत्र मधुकरपदे न्यूनत्वम् । अतिरिक्तत्वं यथा—

"दिशि दिशि विहगास्तनूस्समन्तादनलसपक्षतयोपचीयमानाः ।
उषसि जिगमिषाकुलास्तदानीं दयितवियोगदशा वधूश्च देहुः ॥"

## मधुसूदनीविवृतिः

श्लेषलक्षणोक्तस्य अन्यूनातिरिक्तविशेषणस्य फलमाह—न्यूनातिरिक्तेति । अस्य सादृश्यस्य न्यूनस्य अतिरिक्तस्य च प्रतिषेधः । प्रधानं प्रकृतार्थोपोद्बलकत्वान्मुख्यं यद्विशेषणं तत्साम्यप्रतिपत्त्यर्थः । अयं भावः । उपमानोपमेययोः सादृश्यं न्यूनम् अतिरिक्तं वा न उपस्थाप्यम् । समत्वेनोपस्थापने हि प्रधानविशेषणस्य उभयत्र समा सङ्गतिः स्यात् अन्यथा न्यूनातिरिक्तत्वेनोपस्थापने प्रधानविशेषणस्य उभयत्र समतया प्रतिपत्तिर्न स्यादिति । तन्नेति । तत् प्रधानविशेषणसाम्यम् ।

इह चटुलतयेति । तरुण्यो युवत्यः । स्फुटे स्वच्छे शिती कृष्णे ये तारके अक्ष्णः कनीनिके तयोर्विभ्रमो विलासो येषु तैः विलोचनानामोघैः समूहैः चटुलतया चञ्चलतया श्रियं दधति । कमलिन्यः नलिन्यः कोरकस्य कलिकायाः अन्ते या स्थितिः तया रमणीयतरैः मधुकरैः भ्रमरैः चटुलतया श्रियं दधति ।

अत्र तरुणी नलिनी च क्रमशः उपमेयम् उपमानम् । तत्र पूर्वं विलोचनैः उत्तरत्र मधुकरैः शोभा आधीयते । तत्राऽपि यद् विलोचनानां स्फुटशितितारकविभ्रमशालित्वं प्रतिपादितं तन्न मधुकराणां सम्भाव्यते यच्च तेषां कोरकान्तस्थितिरमणीयतरत्वमुक्तं न तत्तादृशं भवति इति मधुकरपक्षे न्यूनत्वम् ।

दिशि दिशीति । अत्र विहगा दयितवियोगदशाः इति कर्त्तृणी द्वे । तनूः शरीराणि वधूः अभिसारिकाः इति कर्मणी द्वे । देहुः पूर्वत्र उपचिताः उत्तरत्र ओषाञ्चक्रुः । प्रातःकालतया तदानीं विहगा आहारार्थं दिशि दिशि जिगमिषाकुलाः अभिसारिका वध्वः अपि अभिसारकृत्यं निर्वर्त्य रमणसदनात् स्वगृहं प्रति जिगमिषाकुलाः । आकुलताकारणं च दयितवियोगदशाया अनलसपक्षतया उपचीयमानतापूर्वकं दहनम् । अनलो यथा वृद्धिं गच्छन् दहति तथैव दशा अपि तत्समानतया वृद्धिं गता दहन्ति अतः अनलसपक्षतया उपचीयमाना इति अभिहितम् । विहगपक्षे च अनलसाः समर्थाः पक्षा येषां तेषां भावस्तत्ता तया उपचीयमाना एकत्र समवयन्तः पक्षिणां सम्भूयोड्डयनस्य जातिस्वभावात् । देहुः एकत्र समेता जाता इति भावः ।

इति। अत्र दयितवियोगदशापदेऽतिरिक्तत्वम्। अव्ययमावृत्तिहेतुः। किञ्चात्र शब्दश्लेषे न कर्तृकर्मादिप्रधानार्थपदोपनिबन्धेन शब्दसादृश्यमुपकल्पनीयं प्रधानस्वरूपापहारप्रसङ्गात्। तत्र कर्तुः स्वरूपापहारो यथा—

"इह विबुधगजस्य कर्णतालस्खलनसमीरविधूतकुम्भधातोः।
वहति मदनदीपरागरक्ता रतिगृहभित्तिरिव श्रियं परार्ध्याम्॥"

इति। यथा च—

"सङ्ग्रामनाटककुतूहलिनां तदानीमुत्थापनेन दधतो मुदमुत्तमानाम्।
विस्पष्टभाण्डरुचयोऽतिविचित्ररूपां लक्ष्मीं दधुर्जवनिकामहितास्तुरङ्गा॥"

इति। एवम्

"अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः॥"

इत्यादावपि द्रष्टव्यः। अत्र हि 'न विद्विषा भीः सुहृदा च नादरः'

---

मधुसूदनाविवृतिः।

अत्र दयितवियोगस्यैव दाहकारणतया दशापदमतिरिक्तमधिकम्। पूर्वत्रापि विहगसङ्घा इति स्यात् तदा साम्यप्रतिपत्तिः स्यात्।

कर्त्तृकर्मादिप्रधानार्थपदोपनिबन्धेनेति। कर्त्तृकर्मादिप्रधानार्थस्य पदस्य श्लेषघटकतया उपनिबन्धेन।

इह विबुधेति। विबुधगजस्य ऐरावतस्य कर्णताल्योः कर्णरूपयोः व्यजनयोः स्खलनात् सञ्चलनात् उत्पन्नेन समीरेण। अत्र समीरणपर्यायः समीरोऽपि बोध्यः। वायुना विधूतस्य कम्पितस्य कुम्भगतधातोः परागेण कुङ्कुमेन रक्ता लोहिता मदनदी परार्ध्यां श्रियं दधाति। कीदृशी मदनदी मदन एव दीपः रते प्रकाशकत्वात् तस्य रागेण रक्ता रतिरूपस्य गृहस्य भित्तिरिव। अत्र मदनद्याः कर्त्तुः स्वरूपापहारः।

सङ्ग्रामेति। विस्पष्टा उज्वला भाण्डेषु पात्रेषु रुचिः शोभा यैस्ते रङ्गाः। विस्पष्टाः भाण्डजनिताः स्वीयाश्वोचितभूषणजनिताः रुचिः शोभा येषां ते तुरङ्गा। भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोरिति मेदिनी। जवनिकायां महिता लब्धप्रतिष्ठानाः अथवा जवनिकया महिताः पूजिताः प्रशंसिताः, जवनिका रङ्गशालायाः सति समये तिरस्करणी पटी भवति तस्या वैचित्र्यदर्शकै रङ्गः प्रशस्यते इति प्रशंसिता इत्युक्तम्। अथच जवेन वेगेन (सङ्ग्रामे) निकाममत्यन्तं हिताः हितकराः प्राणादिरक्षकत्वात्। सङ्ग्राम एव नाटकं तत्र कुतूहलिनां सोत्सुत्कामाम्। तदानीं संग्रामसमये उत्थापनेन धारणेन। नाटककरणसमये उत्थापनेन पात्रस्वरूपोज्वलीकरणेन। अत्र रङ्गस्य कर्त्तुः स्वरुपापहारः।

अबन्ध्यस्येति। स्पष्टम्।

इति युक्त पाठः। कर्मणो यथा—

"कुं तालीभिर्युधमिव गहनामेतामासाद्योच्चैश्शितशरशतसङ्कीर्णाः।
अस्मिन् नानाफलकवलनसंसक्ता वल्गन्त्येते दिशि दिशि हरिसैन्यौघाः॥"

इति। क्रियाया यथा—

"कुसुमैः कृतवासनः समन्ताद्पनिद्रत्वमुपेयिवद्भिरस्मिन्।
श्रुतिमन्त्रगणाभिरामरूपैर्न ववौ षट्पदशोभिभिः समीरः॥"

इति। एष चार्थो न्यायसिद्धोऽपि मृदुमतीन् प्रति सुखप्रतिपत्तये वचनेन प्रतिपादितः।

सा चेयमखिलस्यैव पदस्यावृत्तिरिष्यते।
निन्धनवलोद्भूता न तदंशस्य जातुचित्॥ ६० ॥
उपयुक्तार्थता ह्यस्य पदस्येव न विद्यते।
अधुना तूपयोगेऽस्य पूर्वस्यार्थस्तिरोभवेत्॥ ६४ ॥

---

मधुसूदनीविवृतिः।

कुन्तालीभिरिति। कुन्ताः प्रासाः तेषाम्। आलीभिः समूहैः गहनां व्याप्तां युधमिव युद्धभूमिमिमव तालीभिः तालपंक्तिभिः गहनां संकटां कुं भूमिमासाद्य। नाना फलानां कवलने अदने संसक्ताः। नानाफलकानां अनेकेषां बाणाग्रभागानां बलने सम्बरणे अथवा सञ्चरणे। बल सम्वरणे सञ्चरणे इत्यतो भावे ल्युट्। संसक्ताः सन्नद्धाः। उच्चैः शिताः तीक्ष्णाः शरा बाणास्तृणविशेषाश्च। अन्वयस्तु सुगमः। वल्गन्ति शब्दं कुर्वन्ति। अत्र कुमिति कर्मणः स्वरूपापहारः

कुसुमैरिति। अस्मिन् उषःसमये। वौषट्पदान्येव षट्पदास्तैः शोभिभिः। श्रुतिर्वेद एव श्रुतिः कर्णः तत्र मन्त्रगणसदृशमभिरामं रूपं येषां तैः।

निबन्धनेति। निबन्धनम् इवादि चादि च अलङ्कारान्तरं समासोक्त्यादि। तदंशस्य पदांशस्य। अयं भावः। सततमनङ्गोऽनङ्ग इत्यादिस्थलवत् अव्ययानव्ययकारणोद्भूता सम्पूर्णपदस्यावृत्तिः कार्या पदांशस्य यथा मदनदीपरागरक्ता इत्यत्र पदे अंशभूतस्य मदनदीत्यस्य वहतिक्रियाकर्तृत्वार्थम् रतिगृहभित्तिविशेषणत्वार्थम् च आवृत्तिः क्रियते सा जातुचिदपि न करणीया। इति।

ननु पदांशावृत्तेर्निषेधः कैमर्थिक इत्याह–उपयुक्तार्थतेति। अस्य पदांशस्य पदस्य इव उपयुक्तार्थता संगतार्थता न विद्यते। अधुना अस्य पदांशस्य उपयोगे तु पूर्वस्य पदस्य अर्थः तिरोभवेत्। मदनदीपरागरक्ता इत्यत्र पदे अंशभूतस्य मदनदीत्यस्य उपयोगे कर्तृत्वेन अन्वये कृते सति मदनदीपरागरक्ता इति सम्पूर्णपदस्य अर्थः नष्ट एव भवति इत्यर्थः।

अर्थप्रयोगो युगपल्लाघवेनोभयोरपि ।
स्यादयं कामचारो यद्येकेनोक्तिर्द्वयोर्भवेत् ॥ ९२ ॥

इत्यन्तरश्लोकाः

"यत्र च मातङ्गगामिन्यः शीलवत्यश्च गौर्यो विभवरताश्च श्यामाः पद्मरागिण्यश्च धवलद्विजशुचिवदना मदिरामोदिनिश्वसिताश्च प्रमदा"

इत्यत्र चशब्दावेदितो विरोधः तस्याप्यपिशब्दस्येव तदर्थाभिधानसामर्थ्योपगमात् ।

यथा—"घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ।"

मधुसूदनीविवृतिः ।

अर्थप्रयोग इति । लाघवेन युगपत् उभयोरपि पदतदंशयोरपि अर्थस्य प्रयोगः बोध इत्यर्थः स्यात् यदि एकेनैव द्वयोरुक्तिः स्यात्। अयमेतादृशः कवीनां कृते कामचारः एवंविधे विषये यथेच्छाचरणमनुष्ठेयमिति भावः । यथा–यत्र मातङ्गगामिन्यः शीलवत्यश्च इत्यत्र मातङ्गेति पदांशेन एकेन उभयार्थावगतिर्भवति । तद्यथा पूर्वम् मातङ्गगामिन्य इति श्रुतौ चाण्डालगामिन्य इत्यर्थोऽवधृतो भवति । परम् एवंविधाचरणशीलतायां तासां शीलवतीत्वं अर्थात् पतिव्रतात्वं कथं स्यादिति तद्दोषनिवारणार्थं पदांशस्यैव मातङ्गस्यावृत्तिः क्रियते मातङ्गवत् गन्तुं शीलमासां ताः इति । एवमेकेनैवोभयोरर्थयोर्बोधे कामचारः कर्त्तव्यः न तत्र स्वरूपापहारः । प्रधानस्यैव स्वरूपापहारे दोष इति तत्वम् ।

अधुना प्रसङ्गेन इह मातङ्गेत्युदाहरणे चशब्दघटिते "न वाच्यो विरोधः साक्षाच्छब्देन विरोधालंकारस्य अप्रकाशितत्वादि"ति ध्वनिकारोक्ति खण्डनाय विवेचयति—यत्र चेति । मातङ्गः चाण्डालः हस्ती च गौर्यः महादेवस्त्रियः विभवे विगतभवे भवो महादेवः तदरिक्ते इत्यर्थः रता इति विरोधः । गौर्यः गौराङ्ग्यः विभवे ऐश्वर्ये रताः । इति तत्परिहारः । श्यामाः कृष्णाः पद्मरागो रक्तमणिः तत्सदृशा इति कृष्णरक्तयोरेकाश्रयतया विरोधः । श्यामाः षोडशवार्षिक्यः पद्मरागाख्यमणिधारिण्य इति तत्परिहारः । धवलद्विजवत् उत्कृष्टविप्रवत् शुचि शुद्धं वदनं मुखं यासां ताः मदिरया सुरया आमोदि सुरभि निश्वसितं श्वासवायुः यासां ता इति विरोधः । धवलैः स्वच्छैः द्विजैर्दन्तैः शुचि निर्मलं वदनं यासां ता इति तत्परिहारः ।

चशब्दावेदित इति । अत्र चशब्देन शीलवत्यश्चेत्यादिषूपात्तेन आवेदितः उक्तो विरोधः । ननु अपिशब्दस्यैव विरोधोद्भावकतया किमित्युच्यते चशब्दावेदितो विरोध इत्यत आह–तस्यापीति । तस्यापि चशब्दस्यापि तदर्थाभिधानसामर्थ्यस्य विरोधार्थकथनशक्तेः उपगमात् स्वीकारात् ।

चकारस्य विरोधप्रकाशकत्वं दृष्टान्तेन समर्थयति–यथेति । घृणीति । घृणी दयालुः प्रमादी असावधानः । यो हि दयालुर्भवति स कदाचिदपि मम कृत्येन मा कस्याऽपि-

इत्यसिद्धं विरोधस्य साक्षाच्छब्देनाप्रदर्शितत्वम् ।

"खं येऽभ्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो
ये पुष्णन्ति सरोरुहश्रियमधिक्षिप्ताब्जभासश्च ये ।
ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरां-
स्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रियै सन्तु वः ॥"

इत्यत्रोभयेषां पदानां व्यतिरेकोऽनुमेयस्तत्र चैषां भिन्नविशेषणत्वमेव हेतुः ।

अभिन्नविशेषणत्वे हि निबन्धनसद्भावे सति सादृश्यमात्रं प्रतीयते न व्यतिरेकः, यथा—

"भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीं दृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥" इत्यादौ ।

मधुसूदनीविवृतिः ।

पीडा स्यादिति सन्ततमप्रमत्तो भवति इति घृणित्वप्रमादित्वयोरसामानाधिकरण्येन विरोधः तं च चशब्द आवेदयति इह व्यासवाक्ये । इत्यतः अपिशब्दस्य इव तस्यापि चशब्दस्यापि तदर्थाभिधानसामर्थ्योपगमात् हेतोः विरोधस्य साक्षाच्छब्देन अप्रकाशितत्वम् असिद्धम् इति ।

"खं ये इति । दिनपतेः सूर्यस्य उभयेऽपि किरणरूपाः अङ्गुलीपार्ष्ण्याद्यवयवरूपाश्च ते पादाः वो युष्माकमध्येतॄणां श्रियै सन्तु । कीदृशास्ते ये खमाकाशम् अभ्युज्ज्वलयन्ति अथवा ये नखैरुद्भासिनः । ये सरोरुहश्रियं कमलशोभां पुष्णन्ति अथापि क्षिप्ता तिरस्कृता अम्बुजानां कमलानां भाः यैस्ते । ये क्षितिभृतां पर्वतानां मूर्धसु अवभासिनः ये अमराणां देवनां शिरांसि आक्रामन्ति । तत्र अनुमाने । अत्र रश्मिरूपाः पादाः खमुज्ज्वलयन्ति । अङ्गुल्याद्यवयवरूपास्तु न खमुद्भासयन्ति अपि तु नखैरुद्भासिनः इति व्यतिरेकः । विशेषणानां रश्मिपक्षे अङ्गुल्याद्यवयवपक्षे च भिन्नस्वरूपत्वम् ।

भक्तिप्रह्वेति । हरेर्मधुसूदनस्य नेत्रे तनुर्वा । वाशब्दः । समुच्चयार्थः । युष्माकमध्येतॄणां भवार्त्तिशमनं संसारबाधानिवर्त्तनं कुरुताम् । कुरुतामिति परस्मैपदद्विवचनम् आत्मनेपदैकवचनं च । कीदृशी नेत्रे तनुश्चेति उभयानुसन्धानि विशेषणानि अवचिनोति—भक्तीति । भक्त्या प्रह्वानां नम्राणां जीवानां विलोकने सदयावलोकने प्रणयोऽनुरागो ययोस्ते नेत्रे । भक्तिप्रह्वानां विलोकनस्य दर्शनस्य प्रणयो यस्यां सा तनुः । प्रणयिनीति नेत्रपक्षे नपुंसके द्विवचनम् । तनुपक्षे स्त्रियामेकवचनम् । नीलोत्पलं स्पर्धितुं शीलं ययोः यस्याश्च । एकत्र हितप्राप्तये नीते अपरत्र ईहितप्राप्तये नीता । अस्मिन् पक्षे नीतेहितेत्यत्र आद्गुणः । महानिधीति नेत्रपक्षे द्विवचनम् । यद्यपि नेत्रशब्दस्य

भिन्नविशेषणत्वे तु तेषामन्योन्यविशेषप्रतिपत्तिः । विशेषो हि न भेदमन्तरेण भवति स एव च व्यतिरेको नापर इति भिन्नविशेषणत्वानुमेय एवासौ न शब्दशक्तिमूलः ।

तदभिव्यक्तिनिबन्धनं क्वचिदन्यदीयं वचनमपि भवति । यथा वेणीसंहारे—

"रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ।"

इति शैलूषवचनाकर्णनक्रुद्धं भीमसेनं सान्त्वयितुं सहदेवस्य "आर्य ! अनुमतमेव नो भरतपुत्रस्य वचनम्" इति वचनम् ।

क्वचित् पुनः प्रतीयमानार्थस्तदभिव्यक्तिनिबन्धनं भवति यथा—

"आलिङ्गनादरचितस्थितिराबभौ या पत्युर्विकासिपरिखाजलनीविबन्धा ।
विस्तारिसालजघनं परिवर्त्तमाननक्षत्ररत्नरशनागुणमुद्वहन्ती ॥"

मधुसूदनी विवृतिः ।

क्लीबत्वं तथापि महानिधिशब्दस्य अजहल्लिङ्गत्वात् पुंस्त्वमेव । तनुपक्षे महानिधिरिति च्छेदः । ढ्रलोपे पूर्वस्येति दीर्घो रेफोत्तरत्वात् । तन्वतीति शत्रन्तस्य क्लीबे द्विवचनम् । तनुपक्षे स्त्रियामेकत्वम् । अत्र विशेषणानामुभयपक्षे प्रायः अभिन्नत्वम् ।

भिन्नाभिन्नविशेषणत्वस्य फलं दर्शयति । भिन्नेति । तेषां विशेषणानां भिन्नत्वे तु परस्परस्मिन् विशेषस्य आधिक्यस्य प्रतिपत्तिः । स एव विशेष एव । अपरः श्लेषो न । भिन्नविशेषणत्वेन अनुमेयः । असौ व्यतिरेकः । न शब्दशक्तिमूलः अनुस्वानाख्यो ध्वनिरिति शेषः ।

क्वचित् स्थलान्तरे । तदभिव्यक्तिनिबन्धनमिति । अत्र तत्पदेन श्लेषः परामृश्यते । अन्यदीयं परकीयं वचनं वाक्यमपि भवति । अत्र मुद्रितं तच्चेति पाठोऽशुद्धः ।

रक्तेति । रक्तेन रुधिरेण अनुरागेण च प्रसाधिता अलंकृता वशीकृता च भूर्यैस्ते । विग्रहो युद्धम् शरीरं च । स्वस्था स्वर्गस्थाः नीरुजाश्च । अत्र सहदेवस्य "भरतवाक्यमस्माकमनुमतमेवेति" वाक्यमावृत्तेः कारणम् ।

तदभिव्यक्तीति । अत्रापि तत्पदेन श्लेषः परामृष्टः ।

आलिङ्गनेति । अत्र नगरीवर्णनमुपक्रान्तम् । या नगरी पत्युः राज्ञः आलिङ्गनात् निरन्तरसम्बन्धात् । आलिङ्गनस्य मुख्यार्थबाधात् निरन्तरसम्बन्धे लक्षणा । आदरेण चिता युक्ता स्थितिरवस्थितिर्यस्याः सा । विकासि विस्तृतं परिखाजलमेव नीविबन्धो यस्याः सा । विसारी साल एव प्राकार एव । सालः पादपमात्रे स्यात् प्राकारे सर्जपादपे इति मदिनी । जघनं तत् । परिवर्त्तमानानि उपरि भ्रमन्ति नक्षत्राण्येव रत्नानि तन्निर्मितं रशनागुणं कटिसूत्रम् उद्वहन्ती आसमान्तात् बभौ शुशुभे । अत्र रूपकालङ्कारः ।

इत्यत्र तदुचितविशेषणसामर्थ्योपस्थापितो नायिकार्थः पत्युरालिङ्गनादरचितस्थितस्य श्लेषस्य ।

यत्र तु आवृत्तिनिबन्धनगन्धोऽपि न सम्भवति न तत्रार्थान्तरावगतिरिति वृथैव तत्र कवीनामुभयार्थपदोपनिबन्धप्रयासः वाच्यावचनदोषदुष्टत्वात् । तत्र शब्दश्लेषे यथा—

"क्ष्माभर्त्तुरस्य विकटः कटकः सपीलु-
पालीकुलस्सहरिसैन्यशतावमर्दः ।
लक्ष्मीं विलासघटनां नयति व्यपास्त-
नानाधिकामचरमागधराजितश्रीः ॥"

इति । यथा च—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्रिक्तभुजङ्गहारवलयो गङ्गां च योऽधारयत् ।

---

मधुसूदनीविवृतिः ।

अत्र तदुचितानां नायिकोचितानां विशेषणानां सामर्थ्येन उपस्थापितः नायिकार्थः । श्लेषस्य अभिव्यक्तिनिबन्धनमित्यन्वयः । नायिकापक्षे । पत्युर्नायकस्य । आलिङ्गनार्थम् आदरेण चिता स्थितिर्यस्याः सा । विकासिपरिखाजलवत् नीविबन्धो यस्याः सा । विस्तारि सालवत् जघनम् । परिवर्त्तमाननक्षत्रसदृशैरत्नैर्निर्मितं रशनागुणमुद्वहन्ती धारयन्ती ।

वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेष इति ध्वनिकारोक्तिं दूषयतुमाह—यथेति । तत्र आवृत्तिकारणाभावस्थले ।

क्ष्माभर्तुरिति । अस्य क्ष्माभर्त्तुः पर्वतस्य राज्ञश्च । विकटः भयङ्करः महांश्च । कटकः नितम्बप्रदेशः सेनानिवेशश्च । विलासघटनां विलासकरणार्थम् लक्ष्मीं नयति स्वीकरोति । अथवा लक्ष्म्यै शोभाय विलासघटनां क्रीडामित्यर्थः नयति धारयति । नयतिर्द्विकर्मकः । कीदृशः कटकः । पीलूनां हस्तिनाम् स्वनामाख्यातद्रुमाणाञ्च । पीलुः पुमान् प्रसूने स्यात् परमाणौ मतङ्गजे इति । मेदिनी । द्रुमप्रभेदमातङ्गकाण्डपुष्पाणि पीलव इत्यमरः । या पाली पङ्क्तिः तत्कुलेन सहितः । हरयः सिंह्या अश्वाश्च । अश्वसहितसैन्यकर्त्तृकच्छतावमर्देन सहितः । पर्वतपक्षे व्यपास्ता दूरीकृता नाना आधयो यस्यास्तां लक्ष्मीम् । अचरम प्रथमः अगः पर्वतः हिमालयः तस्य धरायाः पृथ्व्या जिता श्रीः शोभा येन स कटकः । राजपक्षे व्यपास्ताः दूरीकृता नाना आधयो येषां ते तथोक्ताः । अत एव कामचराः स्वेच्छाविहरणशीलाः ये मागधाः मगधदेशीयभटाः तैः राजिता शोभना श्रीर्यस्य स कटकः । अत्र कारणाभावान्न श्लेष इति भावः।

येन ध्वस्तेति । नास्ति भवो जन्म यस्य तेन येन माधवेन अनः शकटम् अर्थात् शकटासुरः ध्वस्तम् नाशितम् । बलिजित् कायो वामनावतारीयदेहः पुरा अमृ-

यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥"

इति । एवम्—

"कह णाम ण होसि तुमं भाअणमसमञ्जसस्स णरणाह ! ।
णिच्चं चेअ कुणन्तो जहिच्छमत्थाण विणिओअम् ॥"

इत्यादावपि द्रष्टव्यः । न ह्यत्र चाटौ निन्दायां वा निश्चयो निबन्धनाभावादिति । अर्थश्लेषे यथा—

"दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥"

मधुसूदनीविवृतिः ।

तपरिवेशनसमये स्त्रीकृतः मोहिनीमूर्त्या परिणमितः । यश्च उद्रिक्तम् उद्दण्डम् भुजङ्गं तद्रूपधारिणम् अघासुरं हन्तीति उद्दण्डभुजङ्गहा । आरम् अरिसम्बन्धिबलं यातीति तथा । यः अगं गोवर्द्धनपर्वतम् कृष्णावतारे गां पृथ्वीं वराहावतारे अधारयत् । अमरा देवा यस्य शशिनं मथ्नातीति शशिमत् तस्य शिरोहर इति स्तुत्यं प्रशंसनीयं नाम अभिधानम् आहुः । अन्धका यादवाः तेषां क्षयस्य गृहस्य करः द्वारिकापुरीनिर्माता सर्वदः अखिलाभिलाषापूरको माधवः त्वां पायात् । इति माधवपक्षे । उमाधवपक्षे । ध्वस्तः मनोभवः कामो येन तेन, येन उमाधवेन शिवेन पुरा त्रिपुरदाहसमये बलिजितः विष्णोः कायः शरीरः अस्त्रीकृतः । उद्रिक्ता भुजङ्गा एव हारो वलयं च यस्य सः । यः गङ्गामधारयत् । अमरा यस्य शशिमच्छिरः चन्द्रशेखरः हर इति च स्तुत्यं नामाहुः । स अन्धकासुरस्य क्षयकरो नाशकः उमाधवः त्वां सर्वदा पायात् । अत्रापि अर्थान्तरप्रतीतिनिबन्धनाभावाच्छ्लिष्टपदोपन्यासो वृथैवेति तत्वम् ।

"कह णाम" इति । कथं नाम न भवसि त्वं भाजनमसमञ्जसस्य नरनाथ ? नित्यमेव कुर्वन् यथेच्छमर्थानां विनियोगम् । इति छाया । असमञ्जसस्याकुलतायाः । अत्र अपव्ययकारित्वेन निन्दा वा दातृत्वेन प्रशंसा वेत्यस्य कारणाभावात् निश्चयो नास्ति ।

दत्तानन्दा इति । समुचितसमये अक्लिष्टं विना दुःखं सृष्टैः दत्तैः पयोभिर्जलैः दुग्धैश्च प्रजानां जलानां सन्ततीनां च दत्तानन्दाः । पूर्वाह्णे प्रातः काले दिशि दिशि विप्रकीर्णाः विस्तृताः गताश्च । विरमति अस्तमयति अह्नि दिवसे संहारभाजः सङ्कोचयुक्ताः स्वालयोद्देश्येन प्रतिनिवृत्तिभाजः । दीर्घम् उत्तरोत्तरं वृद्धिं गच्छदेव न कदाचिदपि क्षीणत्वमयद् यद् दुःखं तस्य प्रभवः उत्पत्तिस्थानं यो भवः संसारः तस्य भयरूपात् उदन्वतः समुद्रात् उत्तरहेतुका नावः दीप्तांशोः सूर्यस्य गावः किरणाः धेनवश्च पावनानां पवित्राणां वो युष्माकम् अपरिमिताम् अधिकाम् प्रीतिं परं उत्तरोत्तरम्

इति। अत्र हि गाव इत्यस्य विशेष्यवाचिन उपमानाभिमतार्थान्तरवृत्तित्वेऽपि विशेषणानाञ्चोभयार्थानुगुण्येऽप्युपमानस्य तत्सम्बन्धाभिधायिनश्चावश्यवाच्यस्यावचनं यत् स दोष इत्येतद्धितनिष्यते।

उभयश्लेषे यथा—

"सर्वैकशरणमक्षयमधीशमीशं धियां हरिं कृष्णम्।
चतुरात्मानं निष्क्रियमरिमथनं नमत चक्रधरम्॥" इति।

इहापि वाच्यावचनमवगन्तव्यं; यथा—

"पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषत इवाम्बुनिधौ।
अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे॥"

इति। अत्र नागयूथेन धर्मिणा साम्यं तमसां वक्तुमभिमतं कवेः न तद्धर्मेण मलिनत्वमात्रेण। मृगपतौ पतिते निष्प्रतिपक्षतया तस्यैव स्वेच्छाविहारित्वोपपत्तेः, न तद्वन्मलिनानां तमसां, पतङ्गस्य मृगराजरूपण-

---

मधुसूदनीविवृतिः।

यथा स्यात्तथा उत्पादयन्तु।

अत्र हि गाव इतीति। अत्र गोपदार्थस्य सुरभिरूपस्य उपमानत्वेऽपि विशेषणानां च तदनुयायित्वेऽपि यद् अवाच्यत्वकरणं सोऽयं दोष इति ग्रन्थकाराशयः। एतादृशेषु प्रस्तुताप्रस्तुतयोः सादृश्यं व्यज्यते इति ध्वनिकर्त्तुराशयः। उपमानत्वेन अभिमतम् अर्थान्तरं धेनुरूपम् तत्र वृत्तित्वेऽपि। उभयार्थयोः किरणधेनुरूपार्थयोः आनुगुण्यमन्वयः। तत्सम्बन्धाभिधायिनः उपमानसम्बन्धवाचकस्य च इवादेरित्यर्थः।

सर्वैकशरणमिति। सर्वेषाम् एकं शरणं गृहम् यस्तम्, न क्षयं गृहं यस्य तम् अक्षयं गृहरहितं कथमिति विरोधः। शरणं रक्षितारम्। क्षयो नाशस्तद्रहितम्। अक्षयम् अविनाशिनम्। इति तत्परिहारः। न धियामीश इत्यधीशस्तम् अधीशम् तथापि धियामीशमिति विरोधः। अधीशं स्वामिनम् वागीश्वरमिति तत्परिहारः। हरिं कपिलवर्णम् कृष्णं श्यामवर्णञ्चेति विरोधः हरिं पापनाशकम् कृष्णनामकं चेति तत्परिहारः। चतुरो विवेकशीलः आत्मा मनो यस्य स चतुरात्मा तम् निष्क्रियम् चेष्टारहितम् इति विरोधः सङ्कर्षणवासुदेवप्रद्युम्नानिरुद्धेति चतुर्व्यूहस्वरूपम् मायां विना स्वतः क्रियारहितमिति तत्परिहारः। अरीणाम् अरा येषां सन्तीति तेषाम् अरयुक्तानां चक्राणां मथनं नाशकम् तथापि चक्रधरम् चक्रायुधम् इति विरोधः शत्रुनाशकम् सुदर्शनाख्यचक्रधरमिति तत्परिहारः। अत्रापि पेकारणाभावे सर्वैकशरणादीनामावृत्तिः कर्तुं न शक्यते इति भावः।

इहापि पतित इति उच्यमाने पद्येऽपि अर्थान्तरप्रतिभोत्पत्तौ न निबन्धनं किञ्चिदिति वाच्यस्य तदभिव्यक्तिनिबन्धनस्य अवचनमवगन्तव्यम्।

पतित इति। पतङ्गः सूर्य एव मृगराट् सिंहः। अत्र रूपकम्। नागयूथः गजसमूहस्तेन सह तमसां साम्यं सादृश्यम् वक्तुं कवेरभिमतम् तद्धर्मेण नागयूथधर्मेण

वैयर्थ्यप्रसङ्गात् । न च तत् मलिनादिशब्दाः शक्नुन्ति वक्तुं हारिसुन्दरसुभगसदृशसन्निभादिशब्दानामेव तदभिधानसामर्थ्यदर्शनात् । अन्यथा—

"सरोजकर्णिकागौरीं गौरीं प्रति मनो दधौ ।"

इत्यादौ गौरादिशब्दा अपि धर्मिसाम्यमेवावगमयेयुः न धर्ममात्रसाम्यम् । तच्चानिष्टं गौरत्वमात्रसाधर्म्यकृतस्य गौर्याः सरोजकर्णिकासाम्यस्य वैवक्षिकत्वात् ।

अथोच्यते गौरादिशब्दा अपि सदृशादिशब्दवत् साक्षाद् धर्मिसाम्यमेवाभिदध्युः, सामर्थ्यात् तु धर्ममात्रसाम्यावगतिः कर्णिकाया गौरत्वाव्यभिचाराद् इति । तदयुक्तम् । तन्निबन्धनभूतायाः श्रुतहानेरश्रुतकल्पनायाश्चान्याय्यत्वात् । युज्येत पुनरेवं, यदि प्रतीतिः क्षमेतेति ।

यत् पुनर्धर्मयोरेकनिर्देशेऽन्यधर्मप्रतिपत्तिः साहचर्यादित्यन्ये मन्यन्ते,

---

मधुसूदनीविवृतिः ।

केवलमालिन्येन न । मृगपतौ सिंहे पतिते मृते सति निष्प्रतिपक्षतया निःसापत्न्येन तस्यैव नागयूथस्यैव । तद्वत् नागयूथवत् । न च तदिति । तदभिधानेत्यत्र तत्पदेन साम्यं परामृश्यते । अन्यथा हार्यादिष्वेव साम्याभिधानस्याऽस्वीकारात् । मलिनादिष्वपि च स्वीकारात् ।

सरोजेति । सरोजस्य कर्णिकावत् गौरो धर्मो यस्यास्ताम् ।

धर्मिसाम्यमिति । धर्मिणः देव्या गौर्याः । धर्मो गौरत्वम् । तच्चेति । गौरत्वधर्मद्वारा गौरीसरोजकर्णिकयोः साम्यमालोच्यते ततः धर्मस्यैव साम्यमत्र प्रतिभाति । इति भावः । कर्णिका बीजकोषः ।

ननु सदृशादिवत् गौरादिरपि धर्मिसाम्यमेव प्रतिपादयतु अर्थाच्च तन्नियतस्य धर्मस्य प्रतिपत्तिर्भविष्यति का क्षतिरित्याशङ्कते—अथोच्यते इति । समाधत्ते—तदयुक्तमिति । तन्निबन्धनभूतायाः गौरादीनां धर्मिसाम्याभिधानस्य सामर्थ्याच्च तत्र धर्ममात्रावगतेश्च कारणभूतायाः श्रुतहानेः शब्दतः प्रतीतस्य हानेः हेतोः अश्रुतस्य अर्थात् प्रतीतस्य कल्पनायाः उद्भावनाया अन्याय्यत्वात् । अयं भावः । सरोजकर्णिकागौरीमित्यादिस्थलेषु धर्मद्वारा उपमानोपमेययोः साम्यं विवक्षितं शब्दतः तथा प्रतिभाति च । इदानीं वैपरीत्यस्वीकारे तु श्रुतहानिरश्रुतकल्पना स्यात् या च अनुचितेति ।

युज्येतेति । एवं गौरादीनां धर्मिसाम्याभिधानं युज्येत स्यात् यदि तथा प्रतीतिः क्षमेत सहेत । अर्थात् तादृशी प्रतीतिः यदि स्यात्तदानुमन्तुं शक्येतेति ।

ननु मास्तु धर्मिधर्मयोर्मध्ये एकस्य धर्मिणो निर्देशे प्रतीतौ उभयप्रत्यायनरूपशक्त्यभावाद् अन्यस्य धर्मस्य प्रतिपत्तिः, परं धर्मयोरेकनिर्देशेऽन्यधर्मप्रतीतिः साहचर्या-

यथा—"निर्विष्टेऽपि बहिर्घने न विरमन्त्यन्तर्जरद्वेश्मनां
लूतातन्तुततिच्छिदो मधुपृषत्पिङ्गाः पयोबिन्दवः ॥"

इत्यत्र पयोबिन्दूनां मधुपृषत्पिङ्गत्वात् पिङ्गत्वसहचरितवृत्तत्वस्य प्रतिपत्तिरिति ।

तदनुपपन्नम् । माधुर्यादेरपि प्रतिपत्तिप्रसङ्गात् साहचर्याविशेषात् । या तु रूपादेस्सतो गतिः सा हेतुधर्मानुमानेनेष्यते ।

इह तु हेतुहेतुमद्भावस्तयोरसिद्ध इति साहचर्यासिद्धौ कुतोऽन्यधर्मप्रतिपत्तिसिद्धिः । सिद्धेऽपि वा तस्मिंस्तस्यैकस्य धर्मस्य साधनभावेनानिर्देशे कथमन्यधर्मप्रतिपत्तिसिद्धिः ।

---

मधुसूदनीविवृतिः ।

दस्तु–यथाहि वामनाचार्याः मन्यन्ते "धर्मयोरेकनिर्देशेऽन्यस्य संवित्साहचर्यादि"त्याशङ्कते–यत्पुनरिति । निर्विष्टेऽपीति ।

चूडावर्वरके निपत्य कणिकाभावेन जाताः शिशो-
रङ्गास्फालनभङ्गनिद्रगृहिणीचित्तव्यथादायिनः ॥

इत्युत्तरार्द्धम् । बहिराकाशे इत्यर्थः । घने मेघे । जात्यभिप्रायेण एकवचनम् । निःशेषेण वृष्टेऽपि वर्षयित्वा इतस्ततो दिक्षु प्रविष्टेऽपि अन्तः जरद्वेश्मनाम् जीर्णगृहाणां मध्ये तु लूता मकडीतिप्रसिद्धोः जन्तुः । तन्निर्मितानां तन्तुततीनां छिदो नाशकाः मधुपृषद्वत् मधुविन्दुवत् पिङ्गाः कपिलाः पयोविन्दवः न विरमन्ति शेषः । अत्र पयोविन्दूनां मधुपृषत्सदृशं पिङ्गत्वं प्रतीयते तत्र पिङ्गत्वस्य सहचरितम् अनुगतम् वृत्तत्वमपि वर्तुलत्वमपि प्रतीयते इति धर्मयोरेकस्य निर्देशे अन्यस्य साहचर्यात्प्रतिपत्तिः यथाऽस्ति तद्वत् गौरादिष्वपि धर्मिसाम्योक्तौ धर्मसाम्यं प्रत्येष्यति इति शङ्कार्थः ।

खण्डयति–तदनुपपन्नमिति । धर्मयोरेकनिर्देशे साहचर्यादन्यस्य प्रतिपत्तिरिति यदुच्यते तत् अनुपन्नम् न क्षोदक्षमसहम् । पिङ्गत्वसहचरितवृत्तत्ववत् साहचर्यस्य समानतया मधुपृषन्निष्ठस्य माधुर्यादेरपि आदिपदात् गाढत्वस्याऽपि प्रतिपत्तिप्रसङ्गात् प्रतीत्यापत्तेः । युक्तिरिक्तमिदं वचो भवतामिति भावः ।

हेतुधर्मेति । अनुमितिहेतुभूतस्य धर्मस्य अनुमानेन । इह तु माधुर्यादिस्थले तु तयोः पिङ्गत्वमाधुर्ययोः। कुत इति । धर्मयोरेकनिर्देशे अन्यधर्मप्रतिपत्तिसिद्धिः कुतः । मूलं नास्ति कुतः शाखेति भावः ।

ननु यत्र यत्र मधुबिन्दूनां सत्ता तत्र तत्र वर्तुलत्वं पिङ्गत्वं मधुरत्वं च नियतमिति तेषां नियतसाहचर्यमेवानुभूयते इत्यत आह—सिद्धेऽपीति । अपि वा अथवा तस्मिन् साहचर्ये सिद्धे तस्य मधुविन्दुनिष्ठस्य धर्मस्य साधनभावेन अनिर्देशे अन्यधर्मप्रतिपत्तिः कथम् । अयं भावः । यथा अग्निधूमयोः नियते साहचर्ये अग्निप्रतिपत्यर्थं धर्मस्य हेतुभावेन निर्देशः महानसम् अग्निमत् धूमादित्येवमावश्यकः क्रियते । अन्यथा हेतुभावेन निर्देशाभावे नानुमितिः स्यात्तद्वदत्रापीति ।

एवं हि—

"दुःखाभितप्तस्य जनस्य जाने तुषारशीतः प्रतिभाति वह्निः ।"

इत्यत्र वह्नावपि शीतत्वसाहचर्यात् पाण्डुत्वप्रतिपत्तिप्रसङ्गः ।

किञ्च सत्यामन्यधर्मप्रतिपत्तिसिद्धौ तद्धेतुः साहचर्यमन्यद्वा परिकल्प्येत । अत्र तु सैव न सिद्ध्येति व्यर्थस्तत्परिकल्पनप्रयासः ।

किं हि तत्परिकल्पनं विनात्र परिहीयेत । पयोविन्दूनां मधुपृषद्वृत्तत्वमिति चेत्, कामं परिहीयताम् । न च प्रयोजनवशात् प्रमाणव्यवस्था भवितुमर्हति ।

तस्मादनेकधर्मत्वेऽप्यर्थस्य यस्यैव धर्मस्य निर्देशस्तस्यैव प्रतिपत्तिर्न्याय्या नान्यस्येत्यत्र तमसां नागयूथसादृश्ये वाच्ये यत् तेषां मलिनत्वमुक्तं स वाच्यावचनं दोषः ।

एवं च पृषत्पदप्रयोगोऽत्रातिरिच्यमानोऽनुप्रासवृत्तपरिपूरणायैव पर्यवस्यति न विन्दूनां वृत्तत्वप्रतिपत्तये इति 'नागयूथसदृशानी' त्यत्र पाठो युक्त इति ।

यत्तु—

"करिकरभ! विमुञ्च लोलतां चर विनयव्रतमानताननः ।
मृगपतिनखकोटिभङ्गुरो गुरुरुपरि क्रमते न तेऽङ्कुशः ॥"

इत्यत्राङ्कुशस्य मृगपतिनखकोटिभङ्गुरत्वं दुस्सहत्वं चेति धर्मद्वयं वक्तुमभिमतम् । न तदुक्तनयेन भङ्गुरशब्द एवावगमयितुं क्षमते, तस्य कौटिल्यमात्राभिधायित्वेनैव प्रसिद्धेः । यत् तु तस्य दुस्सहत्वं तत् मृगपतिप-

---

मधुसूदनीविवृतिः ।

एवं हि साधनत्वेन अनिर्देशेऽपि अन्यधर्मप्रतिपत्तौ हि-"दुखाभितप्तस्ये" त्यत्रोदाहरणे तुषारे वर्त्तमानस्य पाण्डुत्वस्य वह्नौ अपि शीतत्वसाहचर्यात् प्रतिपत्तेः प्रसङ्गः ।

किञ्चेति । तद्धेतुः अन्यधर्मप्रतिपत्तिहेतुः । अन्यद्वा कार्यकारणभावादि । अत्र पयोविन्दुषु तु सैव अन्यधर्मस्य पिङ्गत्वापेक्षया भिन्नस्य धर्मस्य वर्त्तुलत्वादेःप्रतिपत्तिरेव । तत्परिकल्पनप्रयासः हेतुकल्पनश्रमः ।

तस्मादिति । अर्थस्य वस्तुनः अनेकधर्मत्वेऽपि । अन्यस्य निर्दिष्टादतिरिक्तस्य । अत्र "पतिते पतङ्गमृगराजि" इति पद्ये । तेषां तमसाम् ।

एवं चेति । एवं तमसो मलिनोक्तिवत् अत्र मधुपृषत्पिङ्गपदे । अतिरिच्यमानः अधिकः । वृत्तपूरणाय छन्दःपूरणाय । वृत्तत्वप्रतिपत्तये वर्त्तुलत्वप्रतीतये ।

करिकलभेति । आनताननः नम्रवदनः सन् । कोटिः अग्रभागः तद्वत् भङ्गुरो वक्रः । गुरुः दुर्जरः दुःसहः इत्यर्थः । गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि इति मेदिनी ।

यत्तु तस्येति । तस्य अङ्कुशस्य । तत् दुःसहत्वम् । मृगतिसम्बन्धेति

दसम्बन्धसामर्थ्यादेव प्रतीयते न भङ्गुरत्वसाहचर्यादिति ।

एवम्—

"प्रभवति च समरमूर्धनि नवनीरदनील एष तव खड्गः ।
विशति च मानसममलं सतां यशो हंसविसरसितम् ॥"

इत्यत्रापि खड्गस्य यशसश्च पूर्वोक्तेन नयेन नवनीरदहंसविसररूपत्वाप्रतीतौ तन्निबन्धनाया अर्थान्तरप्रतीतेरनुपपत्तिरिति भ्रान्तिमात्रकृतोऽसाविति मन्तव्यम् । तेन 'नवनीरदसुन्दरः कृपाणः' इति 'हंसविसरसम' मिति चात्रानुगुणौ पाठौ ।

धर्मिसाम्यविवक्षायां धर्ममात्राभिधायिनाम् ।
नेष्टः प्रयोगः शब्दानां समासोपमितौ बुधैः ॥ ६३ ॥

इति सङ्ग्रहश्लोकः ।

यथा च—

"तेनावरोधप्रमदासखेन विगाहमानेन सरिद्वरां ताम् ।
आकाशगङ्गारतिरप्सरोभिर्वृतो मरुत्याननुयातलीलः ॥"

इत्यत्रानुयातिक्रियापेक्षो राजमरुत्वतोः कर्तृकर्मभावोऽभिधातुमभिमतः कवेः ।

न चासौ तत्सम्बन्धस्तयोः साक्षादुक्तः जललीलासम्बन्धमुखेन राजसम्बन्धस्योक्तत्वात् । अतोऽत्र साक्षात् तत्सम्बन्धो वा वाच्यः, तदर्थमन्यत् क्रियान्तरं वा, येन कर्तृकर्मभावस्तयोर्घटनामियात् ।

न चोभययोरेकमप्युक्तमिति तस्य वाच्यस्यावचनं दोषः । तेन

---

मधुसूदनीविवृतिः ।

मृगपतरेवादो माहात्म्यं यन्नखानां दुःसहत्वमिति भावः ।

प्रभवतीति । पूर्वोक्तेन नयेन पतिते पतङ्गेत्यत्र उक्तेन मलिननीलादिपदानां धर्मिसाम्यप्रतिपादकत्वाख्यनयेन । तन्निबन्धना तद्रूपत्वप्रतीतिहेतुका अर्थान्तरस्य समरो युद्धम् मरेण मृत्युना सहितश्च समरः । मानसं चित्तं सरश्चेत्यस्य । असौ अर्थान्तरप्रतीतिः भ्रान्तिमात्रकृतेति मन्तव्यम् ।

धर्मीति । समासोपमितौ उपमानानि सामान्यवचनैरिति सूत्रकृतसमासस्थलीयोपमायाम् धर्मिणा नागयूथेन सह साम्यविवक्षायां धर्ममात्रस्य मलिनत्वादेः अभिधायिनां वाचकानां शब्दानां मलिननीलादीनां प्रयोगः न इष्टः ।

कर्तृकर्मभाव इति । सरिद्वारां तां गङ्गां विगाहमानः तत्राभिषेकं कुर्वाणः अवरोधप्रमदासखः अन्तपुरीयरमणीसहायः स राजा आकाशगङ्गारतिम् अप्सरोभिर्वृतम् मरुत्वन्तमिन्द्रं लीलया अनुययौ । इत्येवंरूपेण राजेन्द्रयोः कर्तृत्वं कर्मत्वं च क्रमशोऽभिधातुमभिमतः । असौ तत्सम्बन्धः कर्तृकर्मभावाख्यः सम्बन्धः तयोः राज-

वरमत्र पाठः श्रेयान् 'आकाशगङ्गारतिरप्सरोभिर्वृतोऽनुयातो मघवा विलासैः' इति ।

न चैवं क्रियान्तराकाङ्क्षाप्रसङ्गः । यथा वा—

"लच्छी दुहिआ जामाडुओ हरी तह घरल्लिआ गङ्गा ।
अमियमिअङ्का अ सुआ अहो ? कुडुम्बं महोअहिणो ॥"

इति । अत्र लक्ष्म्या दुहितृत्वममृतमृगाङ्कयोः सुतत्वं च विधीयमानं तेषां त्रैलोक्यैकस्पृहणीयतया तत्कुटुम्बस्य महोदधेः श्लाघाया आपस्पदत्वमुपपद्यत इति द्वयमेवोपादेयं द्रष्टव्यं नान्यत् ।

तत्र हि भगवतो हरेर्गङ्गायाश्च सकलत्रैलोक्यालङ्कारत्वेऽपि न तयोर्जामातृगृहिणीभावेन विधानमिति न महोदधेः श्लाघातिशययोगः यन्निबन्धनमत्यद्भुतास्पदत्वमस्य स्याद् इति तद्विधानस्य वाच्यस्यावचनं दोषः ।

अथ हरिर्जामाता गङ्गा गृहिणीत्येवं विपर्ययेणात्र सम्बन्धः करिष्यते तस्य पुरुषाधीनत्वात् । तथा च न यथोक्तदोषावकाशः इति ।

सत्यम् । किन्तु न सर्वविषयोऽयं सम्बन्धस्य पुरुषाधीनत्वोपगमः । तस्य हि विशेषणविशेष्यभाव एव विषयोऽवगन्तव्यः । यत्र स्वसौन्दर्यादेव तयोरन्योन्यापेक्षो विध्यनुवादभावः तत्र हि यथाश्रुतपदार्थसबन्धनिबन्धनोऽर्थप्रतीतिक्रम इति तत्रैव पदार्थपौर्वापर्यनियमोऽवगन्तव्यः । यथा—

---

मधुसूदनीविवृतिः ।

मरुत्वतोः । येन साक्षात्तत्सम्बन्धेन क्रियान्तरेण वा । उभयोः साक्षात्तत्सम्बन्धस्य क्रियान्तरस्येति च उभयोः ।

'लच्छी" इति । लक्ष्मीर्दुहिता जामाता हरिस्तथा गृहिणी गङ्गा । अमृतमृगाङ्कौ च सुतावहो कुटुम्बं महोदधेः । इत्यनुवादः । तेषां लक्ष्म्यमृतमृगाङ्कानाम् । तत्र लक्ष्म्यादि कुटुम्बं यस्य तस्य महोदधेः ।

विधानमिति । जामातृगृहिणीपदार्थयोः हरिगङ्गापदार्थाभ्यां पूर्वमुपस्थित्या सिद्धत्वप्रतीत्या न विधेयतायाः प्रतीतिरिति भावः ।

अथेति शङ्कते । अत्र वाक्ये सम्बन्धोऽन्वयः । तस्य पुरुषाधीनत्वादिति । अयं भावः । वक्त्रभिप्रायरूपो हि वाक्यार्थः ततः श्रोत्राप्यसौ वक्त्रभिप्रायानुसारं प्रत्येतव्यः अन्यथा प्रवृत्तिं वा निवृत्तिं वा कर्तुमसामर्थ्यमेव स्यादिति पदार्थानामन्वयस्य पुरुषाधीनत्वं प्राप्तं भवति इति ।

सत्यमिति स्वीकृत्योत्तरति । तस्य हीति सम्बन्धस्य अन्वयस्येत्यर्थः । तयोः विशेष्यविशेषणयोः ।

"त्वक् तारवी निवसनं मृगचर्म शय्या
गेहं गुहा विपुलपत्रपुटा घटाश्च ।
मूलं दलं च कुसुमं च फलं च भोज्यं
पुत्रस्य जातमटवीगृहमेधिनस्ते ॥"

इति । प्रत्युदाहरणं यथा—

"शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥"

इति । अत्रोदाहरणप्रत्युदाहरणप्रतीत्योर्यदन्तरं तन्मतिमतामेवावभासते अन्येषां तु शपथप्रत्येयमेव ।

अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ॥ ९४ ॥
विधेयोद्देश्यभावोऽयं रूप्यरूपकतात्मकः ।
न च तत्र विधेयोक्तिरुद्देश्यात् पूर्वमिष्यते ॥ ९५ ॥

इत्यन्तरश्लोकौ ।

---

मधुसूदनीविवृतिः ।

त्वगिति । अटवीगृहमेधिनः अरण्यगृहस्थस्य ते पुत्रस्य तारवी तरोरियं त्वक् निवसनम् । अत्र तरुत्वक् निवसनमिति स्थितं पदार्थक्रमं "निवसनं तरुत्वक्" इत्येवं विपरीतं कर्त्तुं न शक्यतेऽन्वयस्यासाधुत्वात् । अयं भावः । अत्र अटव्यां गृहमेधित्वस्य प्रकृतत्वात् यत्राटव्यां तरुत्वगेव निवसनम् इत्येवं तत्र अरण्योचिततरुत्वगुद्देश्येन निवसनादेः विधेयत्वमित्येव अन्वयः साधुरिति ।

शय्येति । वनं सर्वसुखकरम्, परं तत्रस्थैर्न पर उपकर्त्तुं शक्येत सुलभविभवतया अर्थिनोऽभावादिति भावः । अत्र वनस्य गुणदोषविवेचनप्रस्तावे तद्वस्तूनि उद्दिश्य तत्र निवसतामुपयोगिपदार्थानां विधेयत्वमुचितं परमिह विपर्ययेण पदार्थक्रम आहतः स नोचितः । इति रहस्यम् । शाद्वलः शादहरिते इत्यमरेण शाद्वलस्य पुंस्त्वप्रतीत्या शय्या शाद्वलमित्यत्र क्लीबप्रयोगश्चिन्त्यः । शीतं निर्झरवारि पानमित्यस्मिन् वाक्ये तु नास्ति विपर्ययः इति । अन्येषां खण्डिकोपाध्यायानाम् ।

रूप्यरूपकतात्मक इति । रूप्यरूपकभावसदृशः रूपकस्थले रूप्यं वस्तु पूर्वमुपस्थाप्य रूपकं उपस्थाप्यते यथा मुखं चन्द्रः इत्यत्र मुखोद्देश्येन चन्द्रत्वं विधीयते तद्वत् रूपकस्थलीया प्रक्रिया अत्राहतेति ।

उद्देश्यविधेयभावस्य रूप्यरूपकतात्मकत्वमित्युदाहृत्य दर्शयति—

यथा—

"स्पष्टोच्छ्वसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम्।
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि सञ्चकोच॥"

इत्यादौ केसरादेः।

पदानामभिसम्बन्धस्यान्यथाभावमात्रतः।
यत्रानिष्टप्रतीतिः स्याद् रचनां तां परित्यजेत्॥ ९६॥

यथा—

"तव कण्ठासृजासिक्ता करवाललता द्विषाम्।
प्रसूते समरारण्ये यशःकुसुमसम्पदम्॥"

इति। अत्र हि चाटुके युष्मदर्थस्य च पौर्वापर्यविपर्यये समासे वा वाच्ये यत् तयोरवचनं तदेवानिष्टार्थप्रतिपत्तिमूलमिति दोषतयावगन्तव्यम्।

यथा च—

"मधुश्च ते मन्मथ! साहचर्यादसावनुक्तोऽपि सहाय एव।

---

मधुसूदनीववृति।

**स्पष्टेति।** अत्र किरणा एव केसरा इत्येवं किरणोद्देश्येन केसराणां दिवसमेव अरविन्दम् इत्येवं दिवसोद्देश्येन अरविन्दस्य अष्टदिगेव दलकलापः इत्यष्टदिगुद्देशेन दलकलापस्य च रूपणा कृता इति केसरारविन्ददलकलापानां विधेयत्वम् प्रतीयते।

स्पष्टमुच्छ्वसन्तः प्रसरन्त किरण एव केसरा यस्य एवंभूतं यत्सूर्यस्य बिम्बं तेन विस्तीर्णा विकसिता कर्णिका यस्य तत्। श्लिष्टः सम्बद्धो यः अष्टदिग्रूपो दलकलापः तस्य मुखे अवतारेण अवतरणेन बद्धः अन्धकारो यया सा मधुपावलिर्यत्र तत्। दिवस एवारविन्दम्। अथवा श्लिष्टा सम्बद्धा अष्टदिगेव दलकलापो यत्र तत्। उषेत्यदन्तोपि ये सान्ता ते सर्वे अदन्ताः इति स्वीकारात् उषस्य प्रातःकालस्य अवतारे प्रारम्भे बद्धः कृतः अन्धकारो यया सा मधुपावलिर्यत्र तत् दिवसरूपमरविन्दम्। इदानीं सञ्चुकोच। समयमाहात्म्यमेतत्।

**पौर्वापर्येति।** "तव" इत्यस्य स्थाने द्विषामिति द्विषामित्यस्य स्थाने तवेति वाच्यम्। द्विषां कण्ठेति करवाललता तवेति च पठनीयमित्यर्थः। **समासे वेति।** द्विषत्कण्ठासृजासिक्ता त्वत्करवाललता वरेति वा वाच्यम्। तयोः पौर्वापर्यविपर्ययसमासयोः। तदेव अवचनमेव अनिष्टार्थस्य त्वत्कण्ठासृक्सिक्तं द्विषत्खड्गं यशः प्रसूते इत्येवं विरुद्धार्थस्य प्रतिपत्तिमूलम्।

**मधुश्चेति।** यद्यपि इहमधुमन्मथयोः समीरणहुताशनयोश्च विभिन्नविभक्तिकतया न अनिष्टार्थप्रतीतिः तथापि तेषां तद्विशेषणानाञ्च विशृङ्खलितरूपेणावस्थानं दूषणमि-

समीरणः प्रेरयिता भवेति व्यादिश्यते केन हुताशनस्य ॥”

इति । अत एव

“येन यस्याभिसम्बन्धो दूरस्थेनापि तेन सः ।
पदानामसमासानामानन्तर्यमकारणम्” ॥
इति प्रतीत्योर्वैचित्र्यमनालोच्यैव चर्चितम् ।
गुणदोषमपश्यद्भिर्दूरादूरोत्थयोस्तयोः ॥ ६७ ॥
स्वरूपेऽवस्थितिर्येषां शब्दानामिति नेष्यते ।
न ताननन्यव्यवहितान् प्रयुञ्जीत विचक्षणः ॥ ६८ ॥

इति सङ्ग्रहश्लोकाः ।

तेन “द्विषत्कण्ठासृजासिक्ता त्वत्कृपाणलता वरा ।” इत्येकत्र युक्तः पाठः, अपरत्र ‘व्यादिश्यते केन समीरणो वा हविर्भुजश्चोदयिता भवे’ति ।

अनन्वयोऽप्यभ्यूह्यार्थत्वाद्रसभङ्गहेतुरिति सोऽपि वाच्यावचनं दोषः ।

यथा—

“निर्घातोग्रैः कुञ्जलीनान् जिघांसुर्ज्यानिर्घोषैः क्षोभयामास सिंहान् ।
नूनं तेषामभ्यसूयापरोऽसौ वीर्योदग्रे राजशब्दे मृगाणाम् ॥”

इति । अत्र हि सिंहानां तावन्न राजशब्दसम्बन्धः सम्भवति तेषां तद्वाच्यत्वाभावात् तत्सम्बन्धाभावाच्च । तत्पर्यायस्य मृगराजशब्दस्य सन्नप्यसावनुपयुक्त एव तस्य प्रकान्तत्वाभावाद् मृगाणामित्यत्र मृगराजानमित्येवमनुक्तेश्च ।

किञ्च मृगेषु राजत्वं भवति सिंहानां नतु शब्द इति वीर्योदग्रत्वं

---

मधुसूदनीविवृतिः ।

त्यभिप्रायेणेह उदाहृतम् ।

येन यस्येति । इयं कारिका प्राचीना नास्य ग्रन्थकर्त्तुः, न्यायभाष्येऽस्याः समुपलम्भात् । अत एवाग्रिमकारिकायाम् “इति बुधैः चर्चितमि”ति पठ्यते । स्वल्पः पाठभेदस्तु अस्त्येव । असमासानां समासरहितानाम् । आनन्तर्यं व्यवधानम् । अत्र तस्येति पदमध्याहार्यम् । सः सम्बन्धः ।

इति प्रतीत्योरिति । इति येन यस्याभिसम्बन्ध इत्येवं बुधैः प्राच्याचार्यैः चर्चितम् अधीतम् । चर्च अध्ययन इत्यस्य क्तान्तं रूपम् । दूरादूरपदोत्थयोः प्रतीत्योः ।

अभ्यूह्यार्थेति । अर्थात् कल्प्यत्वादित्यर्थः ।

निर्घातोग्रैरिति स्पष्टार्थः । तेषां सिंहानाम् । तद्वाच्येति तत्पदेन राजा परामृश्यते राजार्थत्वाभावादित्यर्थः । तत्पर्यायेति तत्पदेन सिंहः परामृष्टः । सन्नपीति असौ सम्बन्धः सन्नपि । इति सङ्गतिः ।

किञ्चेति । तद्विशेषणं शब्दविशेषणम् । तस्य विशेषणस्य वीर्योदग्रत्वस्य अर्थ-

तद्विशेषणमनुपपन्नमेव तस्यार्थनिष्ठत्वेनोपपत्तेः। तेन न सिंहानां न मृगाणां न वीर्योदग्रत्वस्य च राजशब्दशब्देनान्वयः सङ्गच्छत इत्यवाच्य एवासौ । तेन राजभाव इति मृगेष्विति वा वाच्ये तदवचनं दोषः । यथा—

"तपेन वर्षाः शरदा हिमागमो
वसन्तलक्ष्म्या शिशिरः समेत्य च ।
प्रसूनक्लृप्तिं दधतः सदर्त्तवः
पुरेऽस्य वास्तव्यकुटुम्बितां दधुः ॥"

इति । अत्र हि तपर्त्तोर्लिङ्गविशेषानुमितपुरुषभावस्य कर्तृत्वात्प्राधान्यं वक्तुमुचितम्, वर्षाणां च स्त्रीत्वस्य सहभावेन निर्देशादप्राधान्यम्, यथान्येषां हिमागमादीनाम्, अन्यथा तेषां कुटुम्बिरूपतानुपपत्तेः । न च तथोक्तमिति तस्य वाच्यस्यावचनं दोषः ।

"किमवेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया ॥"

इत्यत्र महीयसामिति बहुवचनं वा वीप्सासमानफलं प्रयोक्तव्यम्, यथा—

"यावदर्थपदां वाचमेवमादाय माधवः ।
विरराम महीयांसः प्रकृत्या मितभाषिणः ॥"

इत्यत्रार्थान्तरन्यासे । सर्वादिशब्दो वा यथा—

"छायामपास्य महतीमपि वर्त्तमाना-
मागामिनीं जगृहिरे जनतास्तरुणाम् ।
सर्वो हि नोपनतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमप्युपैति ॥

इत्यत्र । अन्यथा समर्थकस्य प्रकृतिमहीयस्त्वस्य हेतोरन्यसमुन्नत्यस-

मधुसूदनीविवृतिः ।

निष्ठत्वेन उपपत्तेः । राजशब्देत्यनेन शब्देन ।

उचितमिति । तपर्त्तोः पुन्सः सहयुक्तेऽप्रधाने इति सूत्रेण "वृद्धो यूना" इति आचार्याभिप्रायात् विनापि सहयोगं विहितया तृतीयया अप्राधान्यं प्रतीयते तत् तेषां तपादीनामृतूनां कुटुम्बिरूपत्वानुपपादकत्वादुचितं नास्ति इति सारः । वर्षाणामिति वर्षाशब्दस्य नित्यबहुत्वात् बहुबचनम् । यथान्येषामिति । अन्येषां हिमागमादीनां पुंस्त्वं प्राधान्यञ्च शरदादीनां स्त्रीत्वमप्राधान्यञ्च यथा वर्त्तते तथा वक्तुमुचितमिति भावः ।

प्रार्थयते अभिमुखमाक्रामति । महीयसामिति । एकवचनत्वे हि एकस्य कस्या-ऽपि तादृशी प्रकृतिरित्यर्थतया न भावसामञ्जस्यं सङ्घटत इति तत्वम् ।

सर्वादिशब्दो वेति । प्रयोक्तव्यः । तत्रापि वीप्सासमानफललाभः स्यादित्याशयः ।

हिष्णुत्वलक्षणेन साध्येन सर्वोपसंहारव्याप्तिर्न प्रतीयते। तस्मादेवमत्र पाठः परिणमयितव्यः।

"प्रकृतिः खलु सा महीयसां न सहन्तेऽन्यसमुन्नतिं यया।" इति।

सर्वनामपरामर्शयोग्यस्यार्थस्य या पुनः।
स्वशब्देनाभिधा दोषः स वाच्यावचनाभिधः॥ ६६॥

यथा—

"निशि नान्तिकस्थितामपि चक्राह्वः सहचरीं विलोकयति।
चक्राह्वापि न सहचरमहो सुदुर्लङ्घता नियतेः॥"

इति। अत्र हि चक्राह्वासहचरौ न स्वशब्दपरामर्शविषयौ भवितुमर्हतः, तयोरुक्तनयेन सर्वनामपरामर्शविषयत्वोपपादनात्, अन्यथा तयोः पौनरुक्त्यं सर्वनाम्नां च विषयापहारः स्यात्। न चात्र तथा परामर्शो विहित इति वाच्यावचनं दोषः। तेन 'विरहविधुरा न सापि त'मित्यत्रानुगुणः पाठः। एवम्—

"परिपाति स केवलं शिशूनिति तन्नामनि मास्म विश्वसीः।"

इत्यादावप्ययं दोषो द्रष्टव्यः। तस्य हि शिशुपाल इति नाम प्रसिद्धं न तु शिशुपरिप इति। तेन 'स शिशून् किल पालयत्यभीः' इति युक्तः पाठः इत्यलं बहुभाषितेन।

अनेन च वाच्यावचनेन सामर्थ्यादवाच्यवचनमपि सङ्गृहीतं वेदितव्यम्। तस्यापीष्टार्थविपर्ययात्मकत्वात्। तद्यथा—

"सरित्समुद्रान् सरसीश्च गत्वा रक्षःकपीन्द्रैरुपपादितानि।
तस्यापतन्मूर्ध्नि जलानि जिष्णोर्विन्ध्यस्य मेघप्रभवा इवापः॥"

इति। अत्र ह्येकस्यैवार्थस्य यः पर्यायमात्रभेदेन भेदमुपकल्प्योपमा-

---

मधुसूदनीविवृतिः

सर्वोपसंहारेति। सर्वेषां महीयसाम् एषा प्रकृतिः अन्यसमुन्नत्यसहिष्णुत्वरूपा इति एवं सर्वत्वरूपार्थस्य प्रतीतिर्न भविष्यति अन्यथा बहुवचनाभावे केवलमेकवचनप्रयोगे सतीति सारः।

उक्तनयेनेति कमलमनम्भसीत्यत्रात्र चोक्तेन न्यायेन सर्वनामपरामर्शेत्यादिना। अन्यथा सर्वनामद्वारा उपादानाभावे तयोः चक्राह्वासहचरयोः। विषयापहारः सर्वत्र स्वीयशब्दै रेव स्वस्योपस्थापनात् सर्वनाम्नां वैयर्थ्यं स्यादिति भावः।

एवमिति। शिशून् परिपातीति विग्रहे सिद्धं शिशुपरिप इति स्यात्। परमनेन शिशुपालेति संज्ञाशब्दस्वरूपं नाश्यते इत्यनुचितमिति।

सरिदिति। तस्य रामस्य। पर्यायेति। जलस्य पर्यायः आप इति। तस्य उपमानोपमेयभावस्य।

नोपमेयभावो निबद्धः सोऽवाच्यवचनं दोष, तस्य भिन्नार्थनिष्ठत्वात् । तद्यमत्र पाठो युक्तः 'विन्ध्यस्य मेघप्रभवानि यद्वत्' इति । अस्मिँश्च पाठे भिन्नलिङ्गत्वमुपमादोषोऽपि परिहृतो भवति ।

पर्यायमात्रभिन्नस्य यदेकस्यैव वस्तुनः ।
उपमानोपमेयत्वमवाच्यवचनं च तत् ॥ १०१ ॥

इति सङ्ग्रहश्लोकः । यथा च—

"इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो-
रसावस्यास्स्पर्शो वपुषि बहलश्चन्दनरसः ।
अयं कण्ठे बाहुः शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥"

इति । अत्र यत् साक्षान्नायिकावर्णनं तदवाच्यमेव । तत्सम्बन्धिनामेव स्पर्शादीनामिव रम्याणामर्थानां विरहव्यतिरेकेणाङ्गभावोपगमाद् । न । तस्या एव विरहस्य तत्सम्बन्धित्वेऽप्यसह्यत्वाभिधानादिति तस्या वचनं दोषः। तेन 'मुखं पूर्णश्चन्द्रो वपुरमृतवर्त्तिर्नयनयो'रित्यत्र युक्तः पाठः ।

यथा च—

"शोकानलधूमसम्भारसम्भृताम्भोदभरितमिव वर्षति
नयनवारिधाराविसरं शरीरम् ।"

इति । अत्र हि शोकस्य केनचित् साधर्म्येण यदनलत्वेन रूपणं तत् तावद्रूप्यस्य सद्भावाद्युक्तमेव । धूमस्य पुनर्न किञ्चिद् रूप्यमस्तीत्यवाच्य एवासौ । यथा 'शोकानलदाहभीतेव न हृदयमवतरती'त्यत्र ।

रूप्यान्तरसद्भावे तु न कश्चिद् दोषः । यथा—

---

मधुसूदनीविवृतिः ।

इयं गेहे इति । इदं प्रागुक्तसर्वस्वम् । विरहव्यतिरेकेण विरहेण विना । विरहो नाङ्गभावमुपगन्तुमीहत इति तत्वम् । तस्या इति । तस्या नायिकाया वचनं वर्णनं दोष इत्यन्वयः । अत्र नञ्घटितपाठः अशुद्धः । अथवा एवमभ्यूह्यान्वयोऽभ्युपेयः । ननु विरहस्याप्यङ्गत्वमस्त्विति चेत् । न । अर्थात् विरहस्याङ्गत्वं नास्तीत्यर्थः । तत्कुत इत्याह तस्या इति । असह्यत्वेति । यदि परमसह्यस्तु विरह इत्यनेन विरहस्यासह्यत्वाभिधानात् ।

शोकानलेति । शोक एव अनलः तस्य धूमसम्भारेण सम्भृतः उत्पादितो य अम्भोदः तद्वद् भरितमिव पूरितमिव शरीरं नयनवारिधारायाः विसरं समूहं वर्षति । भरितमिवेत्युत्प्रेक्षा । यथा शोकानलदाहेत्यत्र धूमो नोपात्तः ।

रूप्यान्तरेति । यथा तस्या इति पद्ये अश्रूणां कज्जलमलिनत्वात् साम्याय धूमलेखेति पदमुपात्तमुचितमेव ।

"तस्या धौताञ्जनश्यामा हृदयं दहतोऽनिशम् ।
शोकाग्नेर्धूमलेखेव गलत्यश्रुकणावलिः ॥"

इति । अनलकार्यत्वात् तस्य वाच्यत्वमदुष्टमिति चेत् । न; अनवस्थापत्तेरतिप्रसङ्गाच्चेति तस्य वचनं दोष एव । यथा च—

"तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरं स्तनतटे हृदये प्रियायाः ।" इत्यादि ।

उपचारसहैकैव रूपकस्येष्यते क्रिया ।
यथानलस्य दाहादिर्न कार्यादिरसम्भवात् ॥ १०२ ॥

इति सङ्ग्रहश्लोकः ।

"दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य ।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥"

इति । अत्र कृपणकृपाणयोराकारमात्रतो व्यतिरेक उक्तः । स चायुक्तः, द्विविधो ह्याकारार्थः सन्निवेशलक्षणोऽक्षरविशेषलक्षणश्च ।

तत्राद्यस्तावदिहानुपादेय एव, सहानवस्थानवतोरर्थयोस्तद्व्यभिचाराभावादिति नासौ सचेतसां चमत्कारमावहति। द्वितीयस्तु न सम्भवत्येव, अक्षरकृतविशेषस्य शब्दैकविषयत्वात् । यद्यपि हि स्वरूपमपि शब्दस्यार्थ एव । यदाहुः—

"विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते ।
न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः ॥" इति ।

तथापि तस्य तात्पर्येणाविवक्षितत्वात् न तदपेक्षमर्थविषयत्वमस्य शक्यं वक्तुम् । वाच्यदशापत्तावपि तस्य शब्दस्वरूपतानपायादिति ।

---

मधुसूदनीविवृतिः ।

तप्ते इति । अत्र शिखावलीति नोपादेयम् । मुष्टिः अङ्गुल्यादिबन्धः, खड्गे तद्ग्रहणस्थानं च । कोशो धनखड्गयोर्गृहम् । मलिनो वर्णतः चित्तवृत्तितश्चेति । आकारतः वर्णतः स्वरूपतश्च ।

तत्राद्य इति । आद्यः सन्निवेशलक्षणः भेदः । तद्व्यभिचाराभावादिति । यौ द्वौ पदार्थौ सह न तिष्ठतः तयोः । तस्य अनवस्थानस्य व्यभिचाराभावः अर्थात् अनवस्थानमस्त्येवेति तत्वम् ।

विषयत्वमिति । बुद्धिविषयत्वमनापन्नैः अप्राप्तैः शब्दैः अर्थो न प्रकाश्यते । यतस्ते शब्दाः अगृहीताः स्वरूपतोऽज्ञाताः सन्तः सत्तयैव शब्दत्वेनैव अर्थात् शब्द इत्येव अर्थानां प्रकाशका न अभिमताः ।

तथापि तस्येति । तस्य स्वरूपस्य । तदपेक्षम् स्वरूपापेक्षम् । अयं निर्यासः । यद्यपि स्वस्वरूपमपि शब्दार्थः परं नात्र तत्तात्पर्येण वक्तुमिष्टम् । अस्तु वा तात्पर्येण

यथा च—

"येनालङ्कृतमुद्यानं विहारेणामुना तव ।
तेनैव निर्विकारेण करिकुम्भनिभौ कुचौ ॥" इति ।

इह तु युक्त एवासौ—

अक्षराणामकारोऽहमिति यः स्वयमभ्यधात् ।
सोऽपि त्वयामुना स्वामिन्नाकारेण लघूकृतः ॥" इति ।

तेनाक्षरविशेषात्मकाकारभेदलक्षणस्य शब्दधर्मस्यार्थविशेषण भावेनावाच्यस्य यद्वचनं सोऽपि दोष एवेति द्रष्टव्यम् ।

यद्यप्यर्थावुभौ शब्दः क्रमेणाभिदधात्ययम् ।
स्वरूपञ्चार्थरूपं च तथाप्यस्याभिधा क्रिया ॥ १०३ ॥
तत्परत्वाद्विवक्षाया विश्राम्यत्यर्थ एव हि ।
भिन्नधर्मतया तेन भिन्नकक्ष्यतयापि च ॥ १०४ ॥
नार्हतो जातुचिदिमौ श्लिष्टमेकं विशेषणम् ।
मा भूदेकात्मतापत्तिदोषोऽसावेतयोरिति ॥ १०५ ॥

इति सङ्ग्रहश्लोकाः ।

---

मधुसूदनीवृत्तिः ।

विवक्षितम् स्थानान्तरे अक्षराणामकारोऽहमित्यादौ तथापि प्रकृते स्वरूपमेवार्थं इति वक्तुं न शक्यते । यदि स्वरूपमेवार्थः तर्हि स अर्थः शब्दरूप एव । शब्दमात्रेण भेदे च दृढतरेत्यादिविशेषणानामसङ्गत्या वैयर्थ्यमेवेति ।

येनेति । येन अमुना तव विहारेण उद्यानमलंकृतम् निर्विकारेण वि इति पदशून्येन तेनैव अर्थात् हारेण करिकुम्भनिभौ कुचौ अलंकृतौ । अत्र विहारपदार्थः विलासेन भ्रमणम् । तत्र विहारेति पदाद् विनिष्कास्यते चेत्तर्हि हारेति अवशिष्यते । तेन हारेण च कुचयोः शोभा इति विवक्षितार्थः । परं विहारपदात् विपदोत्सारणे हारेति पदमवशिष्यते । तेन पदेन च कुचयोः शोभा कर्त्तुं न पार्यते इति वाच्यस्य अर्थस्य अवचनं दोषः इति भावः ।

इहत्विति । इह उदाह्रियमाणे पद्ये तु असौ अक्षरविशेषलक्षणः आकारार्थः युक्त एव सङ्गच्छत एवेति ।

अक्षराणामिति । अहम् अक्षराणां मध्ये अकारः इति योऽर्थः स्वयं गीतायामभ्यधात् कथितवान् । त्वया अमुना त्रिविक्रमेण सोऽपि आकारेण स्वरूपेण आकारवर्णेन च लघूकृतः तुच्छीकृतः । अत्र आकारपदेन अक्षरविशेषलक्षणः आकारार्थो गृह्यते अक्षरस्य प्रस्तुतत्वात् ।

तत्परत्वादिति । विवक्षायाः तत्परत्वात् अर्थपरत्वात् । भिन्नधर्मतयेति शब्दत्वेन अर्थत्वेन च । भिन्नकक्ष्यतयेति भिन्नश्रेणितया अर्थात् एकस्य कार्यकारित्वम् अपरस्य अतथात्वम् । एकात्मतापत्तिदोष इति शब्दार्थयोरेकस्वरूपतापत्तिदोषः ।

"यमिन्द्रशब्दार्थनिषूदनं हरेर्हिरण्यपूर्वं कशिपुं प्रचक्षते ॥"

इति। अत्र हिरण्यकशिपुमिति वक्तव्ये हिरण्यपूर्वं कशिपुमित्युक्तं सोऽवाच्यवचनं दोषः।

यतोऽत्र हिरण्यशब्दः कशिपुशब्दश्चाभिधेयप्रधानौ वा स्यातां स्वरूपमात्रप्रधानौ वा। तत्र न तावदभिधेयप्रधानौ अनभ्युपगमाद्, अर्थस्यासमन्वयात्; कशिपुशब्दस्य नपुसंकलिङ्गतापत्तेश्च। नापि स्वरूपप्रधानौ। नह्येवमसुरविशेषस्य हिरण्यकशिपोरभिधानानुकारः प्रख्यानक्रियाकर्मभावेनाभिहितो भवति।

द्विविधो हि शब्दानुकारः शाब्दत्वार्थत्वभेदात्। तत्रेतिना व्यवच्छेदे शाब्दः प्रसिद्ध एव। अर्थावच्छेदभावादार्थः यथा 'महदपि परदुःखं शीतलं सम्यगाहुः' इति।

इह चायमार्थोऽनुकारः, इतिनानवच्छेदात्। केवलं यत् तस्याभिधानमनुकार्यं तन्नानुकृतं, यच्चानुकृतं तत् तस्याभिधानमेव न भवति। लोके हिरण्यकशिपुरिति तस्याख्यानं न हिरण्यपूर्वः कशिपुरित्यतस्तस्यावाच्यस्य वचनं दोषः। यथा वा—

"क्षुण्णं यदन्तःकरणेन वृक्षाः फलन्ति कल्पोपपदास्तदेव।"

इत्यत्र।

---

मधुसूदनीविवृतिः।

अभिधेयेति। अभिधेयप्रधानौ अर्थप्रधानौ। स्वरूपमात्रप्रधानौ हत्वोत्तरेत्वोत्तरत्वादिरूपमात्रप्रधानौ। अर्थस्य असमन्वादित। हिरण्यशब्दस्य स्वर्णार्थत्वात् कशिपुशब्दस्य शय्यार्थकत्वात् असुरविशेषरूपार्थस्य अलाभात् प्रकृतार्थाऽसङ्गतिरित्यर्थः। नपुंसकलिङ्गतापत्तेः पार्थक्येन कशिपुपदोपादाने कशिपुत्वन्नमाच्छादनं द्वयमिति कोषात् कशिपुनि क्लीबत्वं स्यात्तथा च कशिपु प्रचक्षते इति पाठः स्यादिति भावः।

नहीति। एवं स्वरूपस्य प्रधाने। अभिधानानुकारः संज्ञानुकारः। आख्यातवाच्यप्रख्यानक्रियायां कर्मभावेन अभिहितो न भवति। हत्वोत्तरेत्वोत्तरत्वादिरूपस्य शब्दस्वरूपस्य इन्द्रशब्दार्थनिषूदकत्वेन प्रख्यानाभावादिति भावः।

अर्थावच्छेदभावादिति। अर्थादेव अवच्छेदो व्यवच्छेदः तद्भावात्। महदपीति। परदुःखं शत्रुकष्टं महदपि शीतलं भवति इति सम्यगाहुः। अत्र अर्थादेव व्यवच्छेदलाभादितिपदं नोपात्तम्।

इह चेति। इह हिरण्यपूर्वं कशिपुमित्यत्र। इतिनानवच्छेदादिति नञ्घटितः पाठः। तन्नानुकृतमिति अर्थस्यासमन्वयादित्यर्थः।

क्षुण्णमिति। इतिनानवच्छेदात् आर्थोऽनुकारः। कल्पवृक्षेति कल्पद्रुमेति वा

"क्षुण्णं यदन्तकरणेन नाम तदेव कल्पद्रुमकाः फलन्ति।"

इति युक्तः पाठः। अस्मिंश्च पाठे क्षुण्णस्यार्थस्य कल्पद्रुमाणां चात्रज्ञावगतौ गुणान्तरलाभः। एवम्

"दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं प्रचक्षते।"

इत्यादौ द्रष्टव्यम्।

"या घर्मभासस्तनयापि शीतलैः
स्वसा यमस्यापि जनस्य जीवनैः।
कृष्णापि शुद्धेरधिकं विधातृभि-
र्विहन्तुमंहांसि जलैः पटीयसी॥"

इति। अत्र घर्मभासस्तनयत्वादीनां शीतलत्वादीनां च धर्माणामेकाश्रयेत्वेन विरोधो वक्तुं युक्तो, न भिन्नाश्रयत्वेन, तस्य तथानुपपत्तेः। नचासौ तथोक्तः, एकेषां यमुनाश्रयत्वेन अन्येषां जलाश्रयत्वेनोपादानात्।

यद्यपि यमुनायास्तज्जलानां च तात्त्विकमेवैक्यं, तथापि तेषां शब्देन कर्तृकरणतया निर्देशाच्छाब्दं भिन्नत्वमस्त्येव। शाब्द एव विरोधो वक्तुमिष्टः कवेरिति तस्यावाच्यस्य वचनं दोषः। तेनायमत्र पाठः श्रेयान्।

"या घर्मभासस्तनयापि शीतला
स्वसा यमस्यापि जनस्य जीवनी।
कृष्णापि शुद्धेरधिकं विधायिनी
विहन्तुमंहांसि जलैः पटीयसी॥"

---

मधुसूदनीविवृतिः।

वृक्षविशेषस्य संज्ञा न तु कल्पपदो वृक्ष इति द्रुम इति वा काचित्।

अवज्ञेति। कल्पद्रुमका इति तिरस्कारार्थेन कना अवज्ञार्थस्य बोधनात् गुणान्तर लाभः। अर्थात् भवाँस्तु मनसाऽसम्भावितमपि अर्थं ददाति सतु चिन्तिमेव इति कल्पद्रुमापेक्षया भवान् महान्। इति।

एकाश्रयत्वेनेति। एकाश्रयतया "घर्मभासस्तनयाऽपि शीतला" इत्येवमेकाधिकरणगतत्वेन विरोधः वक्तुं युक्तः। भिन्नाश्रयतया घर्मभासस्तनयात्वं यमुनायां, शीतलत्वं जले इति अधिकरणभेदेन वक्तुं न युक्तः। तथा भिन्नाश्रयत्वेन तस्य विरोधस्य अनुपपत्तेः। असौ विरोधः। तथा एकाश्रयत्वेन न उक्तः। एकेषाम् घर्मभासस्तनयात्वयमस्वस्तृत्व- कृष्णत्वानाम्। अन्येषाम् शीतलत्व-जीवनत्व-शुद्धविधातृत्वानाम्।

तात्विकं। वास्तवम् अयं भावः। यज्जलं तदेव यमुना या यमुना तदेव जलमिति अर्थतः यमुनाजलयोः तात्त्विकैक्यात् अधिकरणभेदेनोक्तो विरोधः आस्पदं न लभते एकाश्रये तु शाब्दविरोधः सम्भाव्यत एवेति स चात्र तेषां कर्तृकरणभावेन निर्देशाद् भेदं नीतः।

यथा च—

"रुरुचे हिमाचलगुहामुखोन्मुखः पयसां प्रवाह इव सौरसैन्धवः"

अत्र हि पयसामिति यत्प्रवाहस्य सम्बन्धितया विशेषणं तदवाच्यमेव तस्य हि तत्सम्बन्धिताव्यभिचारात्। यच्चात्र सौरसैन्धव इति विशेषणं तत्र तद्धितनिर्देशोऽप्यवाच्य एव षष्ठीनिर्देशेनैव तदर्थावगतिसिद्धेः। तेन 'सुमहान् प्रवाह इव जन्हुजन्मनः' इत्यत्र युक्तः पाठः। यथा च—

"लक्ष्यीकृतस्य हरिणस्य हरिप्रभावः
प्रेक्ष्य स्थितां सहचरीं व्यवधाय देहम्।
आकर्णकृष्टमपि कामितया स धन्वी
बाणं कृपामृदुमनाः प्रतिसञ्जहार॥"

"रहयिष्यति तं लक्ष्मीर्नयविमुखो नापदां पदं क इव।
स च तव रिपुरेवमतो भावी तस्यापि तद्विरहः॥"

इति। अत्र प्रतिज्ञानिगमनयोः पौनरुक्त्यम्। प्रसिद्धव्याप्तिकस्य हेतोर्धर्मिण्युपसंहारवचनेनैव तदुभयार्थसिद्धेरिति। यदुक्तं 'प्रतिज्ञाया एव तावद्गम्यमानार्थाया वचनं पुनर्वचनं किं पुनरस्याः पुनर्वचनमित्यपार्थकं निगमनम्' इति।

इह तु न दोषः—

"यो यत्कथाप्रसङ्गे छिन्नच्छिन्नायतोष्णनिश्वसितः।
स भवति तं प्रति रक्तस्त्वं च तथा दृश्यसे सुतनु!॥" इति।

यत्राप्रस्तुतादेव प्रस्तुतस्यार्थस्य प्रतिबिम्बादिव बिम्बस्य साम्यावगतिर्न तत्रासौ वक्तव्यतामवतरति तदभिधानसामर्थ्यादेव तदवगमाद् उक्ताववाच्यवचनदोषानुषङ्गात्। यथा—

"आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्यते
मध्येवारिधि वा वसंस्तृणमणिर्धत्ते मणीनां पदम्।

---

मधुसूदनीविवृतिः।

सौरसैन्धवः। सुरसिन्धुः मन्दाकिनी। तस्या भवः। उभयपदवृद्धिः। तद्विशेषणम् अवाच्यमेव। तस्य प्रवाहस्य तत्सम्बन्धितया पयः सम्बन्धितया सह अव्यभिचारः। पयसामेव प्रवाह इति वस्तुस्थितिः। तद्धितनिर्देशः भावार्थकाणो निर्देशः।

लक्ष्यीकृतस्येति। हरिरिन्द्रः तद्वत् प्रभावो यस्य स दशरथः लक्ष्यीकृतस्य वेधनार्थमनुसंहितस्य हरिणस्य मृगस्य देहं व्यवधाय अन्तर्धाय स्थितां सहचरीं मृगीम् प्रेक्ष्येत्याद्यन्वयः सुगमः। अत्र कृपामृदुमना इत्यत्र मनस उपादानं न कर्तव्यम्। कृपाया मनोधर्मत्वात्। चेतनसम्बन्धाच्च चेतनधर्मस्यावगतिः सुलभैव।

रहयिष्यतीति। अत्र प्रतिज्ञायाः एवमित्यन्तायाः। निगमनस्य अतो-

खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥"

इत्यत्र प्रभुमिवेत्युपमानभावः प्रभोः । यथा च—

"द्रविणमापदि भूषणमुत्सवे शरणमात्मभये निशि दीपकः ।
बहुविधार्थ्युपकारभरक्षमो भवति कोऽपि भवानिव सन्मणिः ॥"

इति । अत्र भवदर्थस्योपमानभावः । प्रस्तुतात्तु तदन्यस्य प्रतीतिरनिबन्धना न सम्भवत्येवेति तत्र तस्योक्तिरुपपद्यत एव ।

"निम्नमुन्नतमवस्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ् महत्त्वमसतां हतान्तरम् ॥"

इति । अत्र तमसः प्रस्तुतत्वात्तदुक्तेरसत्पुरुषमहत्त्वप्रतीतावसामर्थ्यमिति तद्वक्तव्यमेव भवतीति न तत्रावाच्यवचनदोषानुषङ्गः ।

अप्रस्तुतोक्तिसामर्थ्यात् प्रस्तुतं यत्र गम्यते ।
प्रतिबिम्बाद्यथा बिम्बं तस्योक्तिस्तत्र नेष्यते ॥ १०६ ॥
प्रस्तुतात्तु तदन्यस्य प्रतीतिरनिबन्धना ।
न सम्भवत्येव ततस्तदुक्तिस्तत्र शस्यते ॥ १०७ ॥

इति सङ्ग्रहश्लोकौ ।

किञ्च यत्राप्रस्तुतप्रशंसायामप्रस्तुतस्यार्थस्य श्लेषमुखेनासन्नेवोत्कर्षोऽपकर्षो वा तदितरस्य तथाप्रतिपत्तयेऽभिधीयते नासौ तात्त्विक इति न तत्र तामाधातुमुत्सहते तयोर्बिम्बप्रतिबिम्बभावेनावस्थानोपगमादित्यवाच्य एवासौ । तस्य वचनं दोषः । तत्रोत्कर्षे यथा—

"सद्वृत्ते महति स्वभावसरले बद्धोऽसि यस्मिन् गुणै-
र्युक्ते संयमहेतुतामुपगते यत्रापि विश्राम्यसि ।

---

मधुसूदनीविवृतिः

भावीत्यादेः ।

हतान्तरमिति । भेदरहितम् । अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये इत्यमरकोषः ।

किञ्चेति । तदितरस्य प्रस्तुतस्येत्यर्थः । तथाप्रतिपत्तये उत्कर्षापकर्षप्रतिपत्तये । असौ उत्कर्षोऽपकर्षो वा । तत्र प्रस्तुते तामुत्कृष्टामपकृष्टां वा प्रतीतिम् । तयोः प्रस्तुताप्रस्तुतयोः ।

सद्वृत्ते इति । सद्वृत्ते सदाचारवति सद्वर्तुले । महति उन्नते विशिष्टे । स्वभावेन स्वधर्मतः चित्तवृत्त्या च सरले यस्मिन् वृक्षे बद्धोऽसि निगडितोऽसि । कृतदृढालम्बनोऽसि महापुरुषपक्षे । गुणैः रज्जुभिः वैदुष्यादिभिश्च युक्ते संयमहेतुताम् बन्धनकारणतामुपगते यत्राऽपि विश्राम्यसि । आक्षेपपरम्पराभिः आघातस

तस्याक्षेपपरम्पराभिरभितो दोलायमानस्थिते-
रालानस्य मतङ्गजैष कतमो निर्मूलने दुर्ग्रहः ॥"

इति । अत्र सद्वृत्तादिभिर्विशेषणैररुन्तुदस्यालानस्याप्रस्तुतस्य श्लेषबलोपकल्पितेन सदाचारत्वादिधर्मसम्बन्धेनोत्कर्षोऽभिहितः, न चासौ वास्तव इति तदुन्मूलनग्रहो गजस्योचित एव न दुष्ट इत्युपालम्भयोग्यत्वं तत्रासिद्धमेव ।

यच्च बिम्बभूते तस्मिन्नसिद्धं, तत् कथं प्रस्तुतेऽर्थे दर्पणप्रतिमे प्रतिबिम्बीभवेदिति श्लेषोत्कर्षस्यावाच्यस्य वचनं दोषः । तस्माच्छ्लेषमनादृत्यैव निराकाङ्क्षकाकुक्रमेण किंशब्दस्यार्थो व्याख्येयः ।

तेन 'कतमो निर्मूलने दुर्ग्रह' इत्यत्र "न खलु कश्चिदित्युचित एवायं निर्मूलनेऽभिनिवेशस्तव" इत्ययमर्थोऽवतिष्ठत इति । एवमपकर्षेऽपि द्रष्टव्यम् ।

सर्वनाम्ना परामृष्टस्यात्यर्थस्य यत्पुनः स्वशब्देन वचनं सोऽवाच्यवचनं दोषः यथा 'उदन्वच्छिन्ना भूस्स च निधिरपां योजनशतम्, इत्यत्र निधिरपामिति ।

यस्यार्थस्य समासोक्तित एवोपमानभावोऽवसितो न तस्यासौ पुनर्वाच्यो भवति अवाच्यवचनदोषानुषङ्गात् । यथा—

"आलभिरञ्जनबिन्दुमनोहरैः कुसुमपङ्क्तिनिपातिभिरङ्कितः ।
न खलु शोभयति स्म वनस्थलीं न तिलकस्तिलकः प्रमदामिव ॥"

---

मधुसूदनीविवृतिः ।

समूहैः निन्दाविसरैश्च अभितः परितः दोलायमानस्थितेः चञ्चलस्थितेः तस्य आलानस्य लक्षणया बन्धनाश्रयस्य निर्मूलने हे मतङ्गज ? तव कतमो दुर्ग्रहः ।

श्लेषबलेति । अर्थश्लेषबलात् । सम्बन्धेनेति सम्बन्धद्वारा । असौ उत्कर्षः । तदुन्मूलनग्रहः आलानोच्छेदनग्रहः । तत्र गजे । यच्च उपालम्भयोग्यत्वम् । बिम्बभूते तस्मिन् गजे असिद्धम् । तत् उपालम्भयोग्यत्वम् । यद्यपि पूर्वं अप्रस्तुतात् प्रस्तुतार्थस्य प्रतिबिम्बादिव बिम्बस्येत्युक्त्या अप्रस्तुतस्य प्रतिबिम्बत्वं प्रस्तुतस्य बिम्बत्वमभिहितं भवति । अत्र च बिम्बभूते तस्मिन्नित्याद्युक्त्या विपर्ययो दृश्यते तथापि पूर्वम् वास्तवतद्भावापेक्षया अभिहितम् उत्तरत्र श्लोकोपात्ततद्भावापेक्षयोक्तमिति आश्रयभेदान्न विरोधः ।

व्याख्येयः इति । व्याख्या तु तेनेत्यादिना स्वयमेव ग्रन्थकृता कृता । निर्मूलने कतमो दुर्ग्रहः अर्थात् न खलु कश्चिदित्यादि अभिहितमपि शिष्यबुद्धिवैशद्याय पुनः पुनः स्पष्टयति ।

सर्वनाम्नेति । नमस्तेभ्यः कविवरेभ्यः इति कविवरान् प्रति सोल्लुण्ठं वाक्यम् ।

इति । अत्र तिलकप्रमदयोरेकतरस्मिन् वाच्ये यदुभयोर्वचनं तदवाच्यवचनं दोषः ।

ये तु गण्डस्योपरि पिटकोद्भेदमिव तत्राप्यार्थमेव तस्योपमानत्वमुपरचयन्ति, नमस्तेभ्यः कविवरेभ्यः । तद्यथा—

"जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्स्वच्छलावण्यवापी-
सम्भूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः" ॥ इति ।

अत्र हि समासोक्त्यैव दण्डपादस्याम्भोजतुल्यत्वेऽवगते यत् तस्याम्भोजशोभां विदधदिति पुनर्वचनं तदवाच्यवचनदोषतां नातिपतति ।

यत् पुनस्तत्राप्यम्भोजस्यार्थमुपमानत्वमुपात्तं तदप्ययुक्तमेव, तस्योरुनालत्वादिधर्मसम्बन्धोपगमयोग्यतानुपपत्तेः । केवलमेकेनैव समासा-

मधुसूदनीविवृतिः ।

जङ्घाकाण्डेति । जङ्घाकाण्डमेव उरु महन्नालं यस्य । नखकिरण एव लसन्ती केसराली तया करालः । प्रत्यग्राया अलक्तकस्य आभायाः प्रसरा उद्गमा एव किसलयानि पर्णा यस्य । मञ्जुर्मनोहरः मञ्जीर एव भृङ्गो यत्र । निजा तनुरेव स्वच्छा लावण्यस्य जलस्थानीयस्य वापी तस्याः सम्भूतस्य अम्भोजस्य शोभां विदधत् विशेषेण धारयत् अर्थात् अम्भोजसदृशः अभिनवः नवीनः भवान्याः भर्तुर्नृत्यानुकरणकालिको दण्डपादो जयति सर्वोत्कर्षेण वर्तते ।

अत्र हि समासोक्त्यैवेति । अयं भावः । जङ्घाकाण्डमेव उरुनालमिति नखकिरण एव लसत्केसरालीति प्रत्यग्रालक्तकाभाया प्रसरा एव किसलयानीति मञ्जुमञ्जीरमेव भृङ्ग इति रूपकचतुष्टयेन अम्भोजरूपोपमानधर्मः शोभा दण्डपादे समारोप्यते । तत्र धर्मादिसमारोपजीवातुरेव समासोक्तिर्भवति । समारोपोपि स्वसदृश एव भवतीति समासोक्त्यैव दण्डपादस्य अम्भोजतुल्यतावगतिरिति यत् तस्य तुल्यस्य अम्भोजशोभां विदधदित्यादिना पुनर्वचनं तद्वचनम् दुष्टम् ।

यत् पुनरिति । आर्थमिति । यः कोपि यस्यान्यस्य शोभां धारयति स स्वदृशस्य एवेति स्वसदृशस्यैव शोभाधारणात् दण्डपादः अम्भोजसदृश इत्यर्थसामर्थ्याक्षिप्तमम्भोजस्योपमानत्वं शब्देनोपात्तं तदपि अयुक्तमेव । तस्य उपमानस्य अम्भोजस्य समासपिहिततया उरुनालत्वादिभिः धर्मैः सह विशेष्यविशेषणभावरूपसम्बन्धप्राप्तियोग्यताया अनुपपत्तेः । वृत्तस्य विशेषणयोगो न अर्थात् वृत्तिच्छन्नस्य पदार्थैकदेशतया पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेनेति नियमविरोधात्सम्बन्धो न भविष्यति । केवलम् समासान्तर्भावात् अर्थात् समासेन ऐकपद्यात् तदेकप-

न्तर्भावाद् वापीसम्भूतत्वेनास्य विशेषणविशेष्यभावः सङ्गच्छते। किन्तु समास एवात्रोक्तनयेनानुपपन्न इवावभासते सचेतसां प्रक्रमभेदप्रसङ्गादित्युक्तम्।

न च दण्डपादस्य तत्सम्बन्धो घटिष्यत इति शक्यते वक्तुं, तस्य तद्धर्मसम्बन्धासंभवात्। तेनात्राम्भोजस्य शाब्दमुपमानत्वं वा, दण्डपादस्य वाम्भोजत्वेन रूपणं कर्तव्यम्, येनास्य प्राधान्ये सति विशेषणसम्बन्धोपगमयोग्यता स्यात्।

किञ्च भर्तुर्नृत्तस्योद्धतस्य ताण्डवात्मनो योऽनुकारस्तस्य दण्डपादविषयभावेनोपादानाज्जङ्घाकाण्डनालत्वविशिष्टतया संस्थानविशेषवशाच्च पादस्य दण्डाकारताभिनवत्वं चेत्युभयमप्यवगतमिति न तत्पुनरुपादेयतामर्हति। अतो वरमयमत्र पाठः श्रेयान्—

---

मधुसूदनीविवृतिः।

दान्तर्गतेन एकेन वापीसम्भूतत्वेन अर्थेन सह अस्य अम्भोजस्य उपमानस्य विशेष्यविशेषणभावः सम्बन्धः सङ्गच्छते। किन्तु अत्र अम्भोजपदे समास एव उक्तनयेन प्रक्रमभेदोक्तन्यायेन अनुपपन्न इव सचेतसामवभासते प्रक्रमभेदप्रसङ्गात्। प्रक्रान्तं शाब्दक्रमं परित्यज्य शोभापदेन सह समासे पिहितेन आर्थान्वयस्य करणात् प्रक्रमभेदः प्रसज्यते इति भावः।

ननु उरुनालत्वादीनां अम्भोजेन सह वृत्तिच्छन्नतया अन्वयो न भवति चेन्मा भवतु दण्डपादेन सह तेषामन्वयो भविष्यत्येवेत्याशङ्क्ते—नचेति। दण्डपादस्य तैः उरुनालादिभिः सह सम्बन्धो घटिष्यते इति वक्तुं न शक्यते।

समाधत्ते—तस्येति। तस्य दण्डपादस्य तद्धर्मैः अम्भोजधर्मैः उरुनालत्वादिभिः सह सम्बन्धस्य विशेषणविशेष्यभावस्य असम्भवात्। तेन हेतुना। शाब्दमुपमानत्वम् अम्भोजमिव इत्यादिरीत्या। वा अथवा दण्डपादस्य अम्भोजत्वरूपणं यथाग्रे ग्रन्थकृता दर्श्यते पादपद्म इत्यादिरीत्या कर्त्तव्यम्। येन अस्य अम्भोजस्य प्राधान्ये सति विशेषणैः उरुनालत्वादिभिः सम्बन्धोपगमस्य योग्यता स्यात्।

किञ्चेत्यनेन दूषणान्तरमुद्घाटयति—तस्य दण्डपादविषयत्वेनेति। तस्य अनुकारस्य। भगवान् शिवः पादं दण्डाकारं कृत्वा ताण्डवमभिनयति तत्र यदि पार्वती अपि पादं दण्डाकारमकृत्वा ताण्डवमभिनयेत्तर्हि तदनुकारो तत्पादे कथं स्यादिति पादस्य स स्वतः प्राप्त इति दण्डपदं नोपादेयम्। अथ च पादस्य दण्डाकारेण असम्पादने जङ्घाकाण्डोरुनालत्वरूपं वैशिष्ट्यमपि नाधिगम्येत इति तद्विशिष्टतया संस्थानकृतं सौष्ठवम् स्वतः प्राप्तं भवति। ततश्च पादस्य दण्डाकारतानिष्ठम् अभिनवत्वं च नोपादेयमिति।

"स्वच्छलावण्यवापीसम्भूतो भक्तिभाजां भवदवदहनः पादपद्मो भवान्याः" इति ।

एवञ्च धारणमात्रविवक्षायां विपूर्वस्य दधातेः प्रयोगः परिहृतो भवति, स हि विपूर्वः करोत्यर्थे वर्त्तते न धारण इति ।

यत्रार्थस्योपमानत्वं समासोक्त्यैव गम्यते ।
न तत् तत्र पुनर्वाच्यमुक्तौ वा शाब्दमस्तु तत् ॥ १०८ ॥
अन्यथा त्वन्यधर्मैः कः सम्बन्धोऽन्यस्य वस्तुनः ।
तेन वाच्यत्वमार्थत्वं चेत्यस्य द्वयमप्यसत् ॥ १०९ ॥

इति सङ्ग्रहश्लोकौ ।

"पत्ता णिअंबफंसं ह्लाणुत्तिण्णाए सामलङ्गीए ।
चिहुरा रुअन्ति जलविन्दुएहिं बन्धस्स व भएण ॥"

इत्यत्र रोदनं बन्धनभयश्चेति यद् द्वयमुत्प्रेक्षितं वर्तते, तत्र प्राधान्याद्रोदनाभिधायिन एव पदादनन्तरमुत्प्रेक्षावादिनि पदे वाच्ये यत् तस्यान्यतोवचनं सोऽवाच्यवचनं दोषस्तस्य तादर्थ्येनाप्राधान्यात् । प्रधाने चोत्प्रेक्षिते तदितरदर्थादुत्प्रेक्षितमेव भवति । यथा—

"ज्योतीरसाश्मभवनाजिरदुग्धसिन्धुरभ्युन्मिषत्प्रचुरतुङ्गमरीचिवीचिः ।
वातायनस्थितवधूवदनेन्दुबिम्बसन्दर्शनादनिशमुल्लसतीव यस्याम् ॥"

---

मधुसूदनीविवृतिः ।

एवञ्चेति । एवमुपरि दर्शितपाठेन च धारणमात्रस्य विवक्षायां विपूर्वस्य दधातेः प्रयोगेण सम्भवन् अवाच्यवचनत्वाख्यः अवाचकतापरपर्यायः दोषः परिहृतो दूरीभूतो भवति । सहि दधातिर्हि ।

तेन वाच्यत्वमिति । तेन उरुनालत्वादीनां अन्यधर्माणामन्येन दण्डपादेन सह अनन्वयेन हेतुना । साम्यस्य वाच्यत्वमसत् । अम्भोजस्य आर्थत्वमुपमानत्वमपि असत् ।

"पत्ता" इति । प्राप्ता नितम्बस्पर्शं स्नानोत्तीर्णायाः श्यामलाङ्ग्याः ।
चिकुरा रुदन्ति जलविन्दुभिर्बन्धस्येव भयेनेति छाया ॥

रोदनाभिधायिनः रुअन्तीति पदस्य अनन्तरम् । उत्प्रेक्षावादिनि इवादिपदे । तस्य इवस्य । अन्यतो बन्धस्स व इति बन्धस्य पार्श्वे । तस्य अन्यस्य बन्धस्येति पदस्य । तादर्थ्येन रुअन्ति इत्याख्यातोपोद्बलकत्वेन अप्राधान्यात् विशेषणत्वादित्यर्थः । तदितरत् प्रधानातिरिक्तम् ।

ज्योतीरसेति । ज्योतिरेव रसो यस्य एवम्भूतं यदश्म पाषाणं चन्द्रकान्ताख्यम् तेन निर्मितस्य भवनस्य अजिरे प्राङ्गणे दुग्धसिन्धुः । यस्यां पुर्याम् अनिशमुल्लसतीवेत्युत्प्रेक्षा । कीदृशः । अभ्युन्मिषन्त्यः प्रादुर्भवन्त्यः प्रचुराः तुङ्गा मरीचयः

इत्यत्रेन्दुबिम्बसन्दर्शनम् । तेन 'जलबिन्दुएहि रुअइव चिहुरचयो बन्धणभएण' इत्यत्र युक्तः पाठः ।

एकत्रोत्प्रेक्षितत्वेन यत्रार्था बहवो मताः ।
तत्रेवादिः प्रयोक्तव्यः प्रधानादेव नान्यतः ॥ ११० ॥

इति सङ्ग्रहश्लोकः ।

"तव वदनपदार्थश्चन्द्रशब्दार्थतुल्यो
हृदयकुमुदवस्तूज्जृम्भयत्येष यन्मे"

इत्यत्र समासान्तर्गतेन वदनशब्देनैकेनैव वदने वाच्ये यद् बहुभिः शब्दैस्तस्य वचनं सोऽवाच्यवचनं दोषः ।

तथा हि वदनं च तत् पदार्थश्चासाविति कर्मधारयो वा कल्प्येत, वदनपदस्यार्थ इति तत्पुरुषो वा । तत्राद्यस्तावदर्थयोरन्योन्यव्यवच्छेद्य-व्यवच्छेदकभावाभावादनुपपन्नः, द्वितीयोऽपि प्रयोजनाभावात् । न हि समासे सत्यसति वार्थस्य कश्चिद्विशेषोऽवगम्यते अन्यत्र प्रतिपत्तिगौरवादित्यवाच्यवचनप्रकार एवायमिति ।

यथा च-"कुशं द्विषामङ्कुशवस्तु विद्वान्" इति

यत्स्वरूपानुवादैकफलं फल्गु विशेषणम् ।
अप्रत्यक्षायमाणार्थं स्मृतमप्रतिभोद्भवम् ॥ १११ ॥

---

मधुसूदनीविवृतिः ।

एव वीचयस्तरङ्गा यत्रासौ । तत्कुतः इत्याह—वातायने गवाक्षे स्थितानां वधूनां वदनेन्दुबिम्बस्य सन्दर्शनात् । अत्र वाक्ये क्रियायाः प्राधान्यात् उल्लसतीवेति क्रियोत्प्रेक्षया तदुपोद्बलकस्य इन्दुबिम्बसन्दर्शनस्य अर्थादुत्प्रेक्षाऽवगम्यते । जलबिन्दुभी रुदतीव चिकुरचयो बन्धनभयेनेति संस्कृतम् ।

बहुभिः शब्दैः वदनेति पदेति अर्थेति त्रिभिः शब्दैः ।

अनुपपन्न इति कर्मधारयसमासस्य विशेषणविशेष्यभावविषयत्वादिति भावः । अवच्छेद्यं विशेष्यम् अवच्छेदकम् विशेषणम् । प्रयोजनाभावादिति तादृशसमासेन चमत्कारानुपलम्भादनुपपन्न इति भावः । ननु समासे सत्यसति वार्थस्य न कश्चिद्विशेषो लक्ष्यते तर्हि पूर्वप्रघट्टे रामस्य पाणिरसीत्यादौ किमर्थमियान् ताण्डवाडम्बरो दर्शित इत्यत आह—अन्यत्र प्रतिपत्तिगौरवादिति । प्रतिपत्तिः प्रतीतिः क्वचिदुत्कृष्यते क्वचदपकृष्यते चेति तां विहाय समासस्य करणाकरणयोश्चिन्ता नास्तीति भावः ।

यथा च कुशमिति । अत्र वस्तुपदोपादानं दुष्टमेव ।

यत्स्वरूपेति । यद्विशेषणं स्वरूपानुवादैकफलम् । अप्रत्यक्षायमाणार्थं चमत्कारकतया प्रत्यक्षमिव लक्ष्यमाणार्थं च न भवेत् तत् फल्गु निःसारम् अत एव अप्रतिभोद्भ-

तदवाच्यमिति ज्ञेयं वचनं तस्य दूषणम् ।
तद् वृत्तपूरणायैव न कवित्वाय कल्पते ॥ ११२ ॥

यथा—

"ककुभां मुखानि सहसोज्ज्वलयन् ददाकुलत्वमधिकं रतये ।
अदिदीपदिन्दुरपरो दहनः कुसुमेषुमत्रिनयनप्रभवः ॥" इति ।

अत्र हि यदत्रिनयनप्रभवत्वमिन्दोर्विशेषणं तत् स्वरूपमात्रानुवादफलमित्यवाच्यमेव तस्य तदव्यभिचारात् ।

न चाव्यभिचारिणोऽपि ततस्तस्योत्कर्षः कश्चिद्विवक्षितः कवेः, यथा—

"अत्रेर्लोचनशुक्तिमौक्तिकमणेर्देवात्सुधादीधिते-
र्गोत्रं हेहयभूभुजां यदुदगात् तस्मिन्नभूदर्जुनः"

इत्यत्र सुधादीधितेरिति तस्यावाच्यस्य वचनं दोषः । यश्चात्र दहनस्यापर इति व्यतिरेकप्रतीतिफलदं विशेषणं तदवाच्यमेव तस्यात्रिनयनप्रभव इति नञ्समासेनैव प्रतिपादितत्वात् । तस्मादुदित इति तत्रानुगुणः पाठः । यथा च—

"नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन" इति ।

अत्र हि तच्छब्दपरामर्शो गौतमस्यावाच्य एव तमन्तरेणाप्युपकारस्य तद्विषयभावावगतेः । तेन परमपकृतवानिति वरमत्र युक्तः पाठः । यथा च—

'कटस्थलप्रोषितदानवारिभि'रिति । अत्र हि दानवारिप्रवासस्य यदेतत् कटस्थलमवधिभावेन विशेषणमुपात्तं तन्न वाच्यमव्यभिचारात् ।

---

मधुसूदनीविवृतिः ।

वम् प्रतिभाप्रादुर्भूतिरहितं स्मृतम् । एतादृशं विशेषणं वृत्तपूरकतया अवकरप्रायमप्रयोगार्हं च ।

नचेति । अव्यभिचारिणोऽपि असाधारणादपि ततो विशेषणात् तस्य इन्दोः कश्चिदुत्कर्षो न विवक्षितः । यथा अत्रेर्लोचनेत्यत्र सुधादीधितेरिति इन्दोरसाधारणादपि विशेषणादुत्कर्षस्य अनवगतेरिति ।

अपर इतीति । अत्र यद्यपि स अपरः पाकशासन इतिवत् अपरपदेन अत्र दहने प्रसिद्धेन्द्वपेक्षया आधिक्यं प्रतीयते इति व्यतिरेकालङ्कारस्य विषयो भवति । तथापि प्रसिद्धः इन्दु अत्रिनयनप्रभवः त्रिनयनप्रभवो न तथा अत्रेर्मुनेः नयनप्रभवः । अयं दहनाख्यः इन्दुः त्रिनयनप्रभवः हरनेत्रजन्मेति निषेधानिषेधयोः तथा अत्रेः मुनेश्च प्रतीत्या विशेषणेनैव तदपेक्षया आधिक्यप्रतीतेः अपरपदोपादानं दुष्टमेवेति ।

नाडीजङ्घ इति । गौतमेन यत्कृते कृततदुपकृतिः नाडीजङ्घः काकः निजघ्ने

एवम्—

"उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ! ।
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥"

इत्यत्रापि द्रष्टव्यम् । उत्फुल्लकेसरगौरशब्दानां पौनरुक्त्यात् ।

कथं तर्हि स्वभावोक्तेरलङ्कारत्वमिष्यते ।
न हि स्वभावमात्रोक्तौ विशेषः कश्चनानयोः ॥ ११३ ॥
उच्यते वस्तुनस्तावद्द्वैरूप्यमिह विद्यते ।
तत्रैकमत्र सामान्यं यद्विकल्पैकगोचरः ॥ ११४ ॥
स एव सर्वशब्दानां विषयः परिकीर्त्तितः ।
अत एवाभिधेयं ते सामान्यं बोधयन्त्यलम् ॥ ११५ ॥
विशिष्टमस्य यद्रूपं तत् प्रत्यक्षस्य गोचरः ।
स एव सत्कविगिरां गोचरः प्रतिभाभुवाम् ॥ ११६ ॥

यतः—

रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः ।

---

मधुसूदनीविवृतिः ।

मारितः । अत्र कृततदिति तच्छब्देन गौतमस्य परामर्शः । अवधिभावेनेति । कटस्थलात् प्रोषितः इति अवधौ पञ्चम्याः विधानात् ।

उत्फुल्लेति । उत्फुल्लकेसरगौरशब्दानाम् पौनरुक्त्यात् कमलपरागद्युते इति वाच्यम् । कमलस्य अनुत्फुल्लतया अकेशरतया च परागस्यालाभात् । परागस्वीकारेण च तयोरर्थाल्लाभः । सम्बोध्यस्य हे गौरि ? इति सबोधनतया गौरत्वस्य अर्थादेव लाभ इति तेषां पुनरुक्तिरिति भावः ।

ननु उत्फुल्लादिपदैः कमलस्य उत्फुल्लत्वादिकं स्वो भावो निरूप्यते तस्य च अर्थालभ्यत्वमिति वस्तूनां स्वभावमात्रोक्तौ वैचित्र्यं नोपलभ्यते तदलाभे च कथमन्यैस्तस्या अलङ्कारत्वं प्रदर्शितं यतः वैचित्र्यस्यैवालङ्कारबीजत्वादित्याशङ्कते । कथं तर्हीति ।

समाधत्ते । उच्यते इति । अत एवेति । अयं भावः । वस्तुनः सामान्यं विशिष्टञ्च रूपद्वयम् । तत्र सामान्ये विकल्पाः भवन्ति । विशिष्टस्य तु प्रत्यक्षत्वाद्विकल्पागोचरत्वम् । तत्र सामान्यार्थस्य सर्वशब्दविषयत्वात् ते शब्दाः सामान्यम् सामान्यरूपमर्थम् अलम् बोधयन्ति । यदस्य अर्थस्य विशिष्टं रूपं तत् प्रत्यक्षस्य गोचरं विषयः । अत्रैव कवयः स्वप्रतिभां प्रतिभासयन्तीति । यथा कमलपरागद्युते इति सम्बोधने कमलपरागवत् द्युतिर्यस्याः इत्युक्तौ तद्वत् कीदृशी द्युतिरिति गवेषणायां ते कमलपरागद्युतिशब्दाः सामान्यमर्थात् गौरत्वादिरूपमभिधेयमर्थम् अलं बोधयन्ति । अत्र सामान्यमिति पाठ इति गुरुचरणाः । श्यामलमिति मुद्रितस्त्वशुद्धः । इति बोध्यम् ।

स्तिमितेति । स्तिमितत्वं सावधानत्वम् । स्वरूपस्य स्पर्शेन उत्था प्राप्तप्रसरा

क्षणं स्वरूपस्पर्शोत्था प्रज्ञैव प्रतिभा कवेः ॥ ११७ ॥
सा हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्त्तिनः ॥ ११८ ॥
इत्यादि प्रतिभातत्त्वमस्माभिरुपपादितम् ।
शास्त्रे तत्त्वोक्तिकोशाख्य इति नेह प्रपञ्चितम् ॥ ११९ ॥
अर्थस्वभावस्योक्तिर्या सालङ्कारतया मता ।
यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः ॥ १२० ॥

यथा—

"ऋजुतां नयतः स्मरामि ते शरमुत्सङ्गनिषण्णधन्वनः ।
मधुना सह सस्मिताः कथा नयनोपान्तविलोकितं च तत् ॥"

इति । यथा च—

"कुर्वन्नाभुग्नपृष्ठो मुखनिकटकटिः कन्धरामातिरश्चीं
लोलेनाहन्यमानस्तुहिनकणमुचा चञ्चता केसरेण ।
निद्राकण्डूकषायं कषति निबिडितश्रोत्रशुक्तिस्तुरङ्ग-
स्त्वङ्गत्पक्ष्माग्रलग्नप्रतनुबुसकणं कोणमक्ष्णः खुरेण ॥"

इति । यथा वा—

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥"

---

मधुसूदनीविवृतिः

विशेषविषयिणी प्रज्ञा एव ।

साहीति । सा हि प्रतिभा हि भगवतः चन्द्रमौलीश्वरस्य ।

तत्रेति । तत्र स्वभावे प्रतिभया अर्पिता उद्भाविताः । अयं भावः । अहर्निशम् अनुक्षणम् अनुभूयमानाः त एव पदार्थाः कविप्रतिभया उट्टङ्किताः कामपि कमनीयतामासादयन्ति । यथा ऋजुतां नयत इत्यादिषु मित्रेण सहालापस्य तुरङ्गावस्था-निरूपणस्य च विच्छित्तिरास्वाद्यत इति कविप्रतिभयोट्टङ्कनायां वैचित्र्यस्य लाभात्स्वभावोक्तेरप्यलङ्कारत्वमिद्धं भवतीति परमार्थः ।

ऋजुतामिति । शरम् ऋजुतां नयत इत्याद्यन्वयः सरलः ।

कुर्वन्निति । कन्धरायाः ग्रीवायाः तिर्यक्करणात् पृष्ठस्य च आमुखे भुग्नीकरणात् मुखनिकटे कट्याः सम्भवो वर्ण्यते । तुहिनेति । रात्रौ निरावृतप्रदेशे स्थित्या हिमसम्पर्कः । केसराः सटाः । इदम् अश्वस्य निद्रातन्मोचनकालीनावस्थाया निरूपणम् ।

ग्रीवाभङ्गेति । इदं शाकुन्तलम् पद्यम् । अत्र अश्वस्य, जवेन धावनमनुवर्ण्यते ।

समान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचरः ।
श्लिष्टमर्थमलङ्कर्तुमन्यथा को हि शक्नुयात् ॥ १२१ ॥
वस्तुमात्रानुवादस्तु पूरणैकफलो मतः ।
अनन्तरोक्तयोरेव यद्वान्तर्भावमर्हति ॥ १२२ ॥
यथायोगमयं दोषस्तेन पञ्चैव ते मताः ।

इत्यन्तरश्लोकाः ।

ता एता दोषजातयो महाकवीनामपि दुर्लक्षा इत्यवसीयन्ते । यथा—

"उमावृषाङ्कौ शरजन्मना यथा यथा जयन्तेन शचीपुरन्दरौ ।
तथा नृपः सा च सुतेन मागधी ननन्दतुस्तत्सदृशेन तत्समौ ॥"

इत्यत्र यथातथाशब्दाभ्यामेव मागधीनृपयोरुमावृषाङ्कसाम्यं शचीपुरन्दरसाम्यं च, सुतस्य च शरजन्मजयन्तसादृश्यमवगमितमिति यत् तयोस्तस्य च पुनस्तत्सादृश्यवचनं तत् पुनरुक्तम् ।

तथोपमानयोर्यो निर्देशक्रमः प्रक्रान्तः स उपमेययोः क्रमे भेदं नीत इति निर्देशप्रक्रमभेदो दोषः; तत एव च तत्समावित्यत्रावाच्यवचनदोषोऽपि तावत् स्फुट एव उपमानयोग्यत्वानुपपत्तेः ।

किञ्च तथा शब्दस्य यद्वचनं सोऽवाच्यवचनं दोषः, तद्व्यतिरेकेणा-प्यर्थयोर्विपर्यासमात्रेण तदर्थावगतिसिद्धेः । तस्मादेवमत्र पाठः श्रेयान् 'सुजन्मना तेन सुतेन तावुभौ ननन्दतुः सा च विशांपतिश्च सः' इति । यतो वस्तुमात्रोपनिबद्धप्रायेऽपि पदसमुदाये दृश्यन्त एव ते ।

---

मधुसूदनीविवृति ।

श्लिष्टम् अविस्पष्टम् ।

दोषाणां महाकवीनामपि दुर्लक्षत्वप्रकटनाय महाकवेः कालिदासस्य सदूषणं पद्य-मुदाहरति— उमावृषाङ्काविति । स्पष्टम् । वृषाङ्कः शिवः । शरजन्मा कार्तिकेयः । जयन्तः इन्द्रपुत्रः । तयोः मागधीनृपयोः । तस्य सुतस्य । तत्सदृशेनेत्यादिना सादृश्यमुक्तम् ।

तथोपमानयोः । उमावृषाङ्कयोः शचीपुरन्दरयोर्मध्ये पूर्वं उमायाः शच्याश्चेति स्त्रियाः वृषाङ्कस्य पुरन्दरस्य च पुंसः पश्चादिति यः निर्देशक्रमः स प्रक्रमः उपमेयनिर्देश-क्रमे पूर्वं नृपस्य पश्चात् मागध्या निर्देशाद् भेदं नीतः । अर्थात् पूर्वं स्त्रिया सह पश्चात् पुरुषेण सह साम्यमुपक्रान्तम् परमुपमेयपदार्थनिर्देशसमये स क्रमोऽन्यथा कृत इति निर्देशप्रक्रमभेदः दोषः । तत एव निर्देशप्रक्रमभेदादेव अर्थात् उपमानभूतपदार्थेषु निर्दि-ष्टस्य क्रमस्य उपमेयपदार्थनिर्देशे विपरीतीकरणादेव उपमानैः सह योग्यत्वस्य अनुपपत्तेः हेतोः तत्समावित्यत्र अवाच्यवचनदोषोऽपि स्फुट एव ।

अन्येषां यथा—

"काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्व-
स्तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये ।
केचिद् वाचां स्थितमविषये तत्त्वमूचुस्तदीयं
तेन ब्रूमः सहृदयमनः प्रीतये तत्स्वरूपम् ॥"

इत्यत्र काव्यस्यात्मा ध्वनिरितीतिशब्दस्य तावत् प्रक्रमभेदः । स हि काव्यात्मपदानन्तरं प्रयोक्तव्यः काव्यस्यात्मेतीति । अन्यथा ध्वनिनैवास्य सम्बन्धे विज्ञायमाने तस्य सर्वनामपरामर्शाभावे अभावो भाक्तत्वं वागविषयत्वं च न प्रतीयेत ।

तस्याभिधानात्मन इतिना व्यवच्छेदाद् अन्यस्य च ध्वनेरनुपादानात् ।

स ह्यभावादिधर्माधिकरणभावेन सर्वनामपरामर्शयोग्योऽवश्यमुपादेयः, नचोपात्तः । यश्चोपात्तः सतदभिधानानुकारस्वरूपमात्रप्रधानो नार्थाभिमुख इति काव्यात्मन एवार्थस्य तदधिकरणभावो विज्ञायते न ध्वनेः ।

स हि तत्र संज्ञामात्रम् । यत् स एवाह 'काव्यस्यात्मा ध्वनिसंज्ञित' इति ।

---

मधुसूदनीविवृतिः ।

तद्व्यतिरेकणापि। तथाशब्दाभिधानं विनाऽपि । अन्येषाम् ध्वनिकाराणाम्।

अन्यथेति । अन्यथा काव्यात्मेतीत्येवंरूपेण इतिशब्दस्य काव्यात्मपदानन्तरं प्रयोगाभावे ध्वनिपदोत्तरं च प्रयोगे अस्य इतिशब्दस्य ध्वनिना एव सह सम्बन्धे अन्वये विज्ञायमाने बोध्यमाने तस्य ध्वनेः सर्वनाम्ना परामर्शाभावे तस्याभावं जगदुरित्युक्तः अभावः भाक्तमाहुस्तमिति निर्दिष्टं भाक्तत्वम् वाचां स्थितमविषये इत्यादिनोक्तम् वागविषयत्वं च न प्रतीयते ।

कुतो न प्रतीयते इत्याह—तस्येति । अभिधानात्मनः शब्दात्मनः तस्य ध्वनेः इतिना इतिशब्देन व्यवच्छेदाद् स्वरूपमात्रेऽवस्थापनात् अन्यस्य ध्वनेः अनुपादानात । स हि ध्वनिर्हि अभावादेर्धर्मस्य । आदिपदात् भाक्तत्वस्य वागविषयत्वस्य च धर्मस्य । अधिकरणभावेन आश्रयभावेन सर्वनाम्ना परामर्शयितुं योग्योऽवश्यमुपादेयः । किन्तु स ध्वनिर्नोपात्तः । यश्च ध्वनिरुपात्तः स ध्वनिः । तदभिधानस्य ध्वनिशब्दस्य अनुकारः रूपमात्रं च प्रधानं यत्र स तथाभूतः । तदधिकरणभावः । अभावाद्यधिकरणभावः । स हि ध्वनिर्हि । तच्च संज्ञाभिधानं च । तदभावे रसाद्यभावस्थले ।

अयं भावः । काव्यस्यात्मा ध्वनिरित्यत्र ध्वनिरित्युक्तः इतिशब्दः अस्थाने

तच्चानिष्टमेव। न हि केचित् काव्यात्मनो रसादेरभावं भाक्तत्वं वाभ्युपगच्छन्ति। मुख्यवृत्त्या च काव्यात्मशब्दवाच्यो रसादिरेव युक्तो नापरः। तदभावे प्रतीयमानार्थान्तरसंस्पर्शेऽप्यर्थापत्त्यादिवाक्यवत् काव्यस्य निर्जीवतापत्तेः।

एतच्च रसस्वरूपमुपक्रम्य स एवाह—

"काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥" इति।
इतिनार्थो व्यवच्छिन्नः शब्दमात्रेऽवतिष्ठते॥ १२३॥
सर्वनामपरामर्शयोग्योऽसौ न भवेत् ततः।
यथा घटः कुट इति ज्ञेयो यस्स पृथूदरः॥ १२४॥
'यथा नृपो नृग इति ख्यातो यः स महामतिः।'
ततोऽर्थ एव काव्यात्मा तत्परामर्शनोचितः।
न ध्वनिस्तदभावादिसम्बन्धोऽस्य कथं मतः॥ १२५॥
इत्यन्तरश्लोकाः।

एवन्तर्हि

"अस्त्युन्नते सुरसरिज्जलधाव्यमान-
भागे नवार्करुचि मन्दरशैलशृङ्गे।
ज्योत्स्नावतीति नगरी भुवनत्रयैक-
भूषा वृषाङ्कशिरसीव शशाङ्कलेखा॥

---

मधुसूदनीविवृतिः।

निवेशितः। यतो हि यत्र इतिशब्दो योज्यते स शब्दमात्रेऽवतिष्ठते। अर्थात् इतिपदप्रयोगे शब्दस्योपस्थितिर्भवति। ततश्च अर्थपरामर्शकेन सर्वनाम्ना शब्दस्यापरामर्शात् प्रकृतार्थासङ्गतिः। इति ध्वनिना सह इतिपदस्य योजनया शब्दस्योपस्थानात्। तस्याभावमित्युक्तेन भाक्तमाहुस्तमित्युक्तेन तदीयमित्युक्तेन च तदा तस्य शब्दस्य अपरामर्शादनिष्टमेव स्यात्। अतः अभावाद्यन्वयार्थं तदधिकरणभावेन सर्वनामपरामर्शार्हमन्यत्पदमुपादेयं स्यात्। उपात्तस्य च अभिधानानुकारस्वरूपमात्रप्रधानत्वात् नार्थाभिमुखत्वमिति तदा परामर्शायोग्यत्वात्। काव्यस्यात्मेति पदे च अभावाद्यन्वयस्य कर्तुमयोग्यत्वाच्च इतिशब्दः प्रक्रमभेददुष्टः। इति।

यथा घट इति। यथा घट इति, यथा नृप इति च उदाहरणद्वयम्। इतिव्यवच्छिन्नोऽर्थः शब्दमात्रेऽवतिष्ठते अतः सर्वनाम्ना परामर्शार्हो न भवतीति दर्शनार्थम्। अत्र मुद्रितपाठस्तु कारिकागर्भे अन्यकारिकापाठपाताद्विकलः अतस्तं निःसार्य यथाऽस्माभिः शोधितं तथा पठनीयम्।

ततोऽर्थ इति। ततो हेतोः अर्थ काव्यात्मैव तेन इतिना परमार्शनाऽर्हः, न ध्व-

इत्यत्र शशाङ्कलेखाया ज्योत्स्नावतीत्वेन यद्विशेषणं तदनुपपन्नमेव स्याद् । इतिशब्दव्यवच्छेदादिति । बाढम् । को वा नानुमन्यते । केवल मितिशब्दार्थानवधारणमूलो मोह एवासौ व्याख्यातॄणामिति ।

अथ काव्यात्मानुवादेन विहितस्य ध्वनेः समाम्नानक्रियाकर्मभावावच्छेदेन समुदायादयमितिशब्दः प्रयुक्त इत्यर्थप्रधान एवायं ध्वनिशब्दो न स्वरूपप्रधान इति तस्य सर्वनामपरामर्शयोग्यस्याभावादिसम्बन्धो घटत एव इत्युच्यते ।

तदयुक्तम् । एवं हि वाक्यार्थावच्छेदः प्रतीयेत, ततश्च तत्परामर्शिनः सर्वनामपदादेर्नपुंसकलिङ्गनिर्देशप्रसङ्ग इति । यथा-

'तदवितथमेव मन्ये विषया आशीविषा इति यदाहुः ।'

तस्मादात्मशब्दानन्तरमेवायमितिशब्दः प्रयोक्तव्यः । स च हेत्वर्थवृत्तिः, यथा—

मधुसूदनीविवृतिः ।

निः । ध्वनेरितिना सह सम्बन्धे सति तेन ध्वनिना सह अभावादेः सम्बन्धः कथं मतः स्यात् ।

इतिशब्दार्थेति । इतिशब्दस्य येऽर्थाः ।

इति प्रकरणे हेतौ प्रकाशादिसमाप्तिषु ।
निदर्शने प्रकारे स्यादनुकर्षे च सम्मतम् ॥ इत्यादयः ।

तेषाम् अनवधारणमूलः एषु कोऽर्थोऽत्र प्रसक्तो भवत्येवं निश्चयाकरणहेतुकः व्याख्यातॄणां मोह एवासौ । अयं भावः । यत्र निदर्शनार्थक इतिशब्द उपस्थाप्यते तत्रैव तस्य स्वरूपप्रधानत्वम् अन्यत्र तु न । अत एवात्र ज्योत्स्नावती' इति प्रकृता । इत्येवम् इतिशब्दोऽत्र प्रकरणार्थकः । इति ।

समाम्नानक्रियाकर्मभावावच्छेदेनेति । बुधैः पूर्वम् यः काव्यस्यात्मा ध्वनिरिति समाम्नात इत्येवं समाम्नानक्रियायाः कर्मत्वं तेन वाक्यार्थस्य एवावच्छेदस्तेन । अयमाशयः । काव्यस्यास्यात्मा ध्वनिरिति पदसमुदायरूपवाक्यस्य वर्त्तते इति समुदायान्तः पातिनां पदानां तु अर्थपरत्वमेव ततो न किमपि दूषणमिति भावः ।

सर्वनामपदादेरिति । भाक्तमाहुस्तमन्य इत्यत्र भाक्तमाहुस्तदन्य इति पठनीयं स्यात् । तस्य तदीयमित्यत्र च पुन्नपुंसकस्य न भेद परिचय इति भाक्तमाहुरित्येवाऽस्माभिर्निरूपितम् ।

यथेत्यनेन वाक्यपरामर्शिनस्तदः नपुंसकत्वं भवतीत्युदाहरणेन साधयति—

तदवितथमेवेति । इति यदाहुः तत् । अत्र तदो वाक्यपरामर्शित्वात् सामान्ये नपुंसकत्वम् ।

स च हेत्वर्थवृत्तिरिति । स च इतिशब्दः । यथा रम्या इतीत्यत्र इतिशब्दः

"रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः"

इत्यत्र। तेनायमर्थः–यतः काव्यस्यात्मा जीवितभूतस्ततो बुधैर्यो ध्वनिर्नाम समाम्नातपूर्वं इति। एष एवार्थोऽभिमतः कवेरिति विज्ञायते यदयं तत्र तत्र ध्वनेः काव्यैकजीवितत्वमाह।

किञ्च समाम्नातेर्धातोः कर्मणि भूते च क्तप्रत्ययोत्पत्तौ कर्मण एव प्राधान्ये तस्यैव निर्देशो न्याय्यो न कर्तुर्नापि पूर्वशब्दस्य, अव्यभिचारात् प्रयोजनाभावाच्चेति यदेतयोरुपादनं तत् पुनरुक्तमेव।

किञ्च 'भाक्तमाहुस्तमन्ये' इत्यत्रापि पूर्ववदितिशब्दः प्रयोक्तव्यः उत्तरत्र च। अन्यथा अन्येषां केषाञ्चिच्चोक्तिर्नानुक्तता स्यात्।

ततश्च भाक्तो यो ध्वनिस्तमाहुरन्य इति, वाचामविषये स्थितं यत् तदीयं तत्त्वं तत् केचिदूचुरिति प्रतीतौ ध्वनेर्भाक्तत्वोक्तिः, अन्येषां केषाञ्चिच्च वाचामविषये स्थितत्वं यत् तदीयस्य तत्त्वस्य तदुक्तिर्नानुक्तता स्याद् इतिना व्यवच्छेदाभावाद् इति वाच्यावचनं दोषः।

सामर्थ्यादुक्तेरनुकारानुगमे वा पूर्वत्रेतिशब्दस्य पौनरुक्त्यप्रसङ्गः।

किञ्चात्र वचनार्थो गदतिः प्रयुक्त एवेति तस्यैवादिदीपकन्यायेनानुवृत्तियुक्ता न तु तदभिन्नार्थस्य ब्रवीतेरुपादानमित्युभयत्राप्युक्तदोषद्वयानतिवृत्तिः।

कालविशेषप्रक्रमभेदश्चात्रावगन्तव्यो जगदुरित्यूचुरिति च कालविशेषस्य प्रक्रान्तस्यानिर्वाहात्।

किञ्च ध्वनेस्तत्त्वं ध्वनिरेव वा स्याद् अन्यदेव वा। तत्र ध्वनिरूपत्वे तत्त्वमूचुस्तदीयमिति त्रितयमपि पुनरुक्तं स्यात्। केचिद् वाचां स्थितमविषये जगदुरित्येतावद्भिः प्रयुक्तान्तर्गतैरेव पदैस्तदर्थावगतिसिद्धेः। यथोक्तं प्राक्—

"प्रयुक्तान्तर्गतैरेव यत्र सोऽर्थः प्रतीयते।
प्रयोगस्तत्र शेषाणां पदानां पौनरुक्त्यकृदिति॥"

---

मधुसूदनीविवृतिः।

हेत्वर्थः। रम्या इति हेतोरित्यर्थकरणात्।

तस्यैव कर्मण एव। कर्तुः बुधैरित्यस्य। अव्यभिचारात् कर्त्तारं विना क्रियाया अनिष्पत्तेः कर्तुरावश्यकत्वम्। प्रयोजनाभावात् विशेषणस्य उपादाने प्रयोजनं नास्तीति भावः। पूर्ववत् काव्यात्मेतीतिवत् "भक्तिरिति" "वाचां स्थितमविषय इति" इत्येवं प्रयोक्तव्यः इतिशब्दः।

तदभिन्नार्थस्येति। तदभिन्नार्थस्य गदत्यभिन्नार्थस्य ब्रवीतेः आहुरित्यादिना उपादानम्। अनिर्वाहादिति आहुरिति लटः प्रयोगतया अनिर्वाहात्। जगदुरूचु-

अन्यरूपत्वे त्वन्यस्य वागविषयत्वाभावे ध्वनेस्तद्विषयत्वं नोक्तं स्यात् तयोर्भेदात् ।

किञ्च भक्तेरेव ध्वनिरूपतामन्ये मन्यन्ते न तत्सम्बन्धिनोऽन्यस्य व्यापारादेरिति व्यर्थस्तद्धितनिर्देशः। यत् स एवाह भक्तिर्ध्वनिरिति—

"भक्त्या बिभर्त्ति नैकत्वं रूपभेदादयं ध्वनिः।" इति।

युक्तं चैतत्, तथा हि—

"कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम्"

इत्यत्र वदत्यर्थाद्वाच्यादन्यस्य व्यक्तिलक्षणस्यार्थस्य तात्पर्येण प्रकाशनमिति ध्वनिलक्षणानुगमात् भक्तेरेव तत्त्वमुपपद्यते नान्यस्येति व्यर्थस्तद्धितनिर्देशः।

सहृदयमनःप्रीतय इत्यत्र च मनश्शब्दः पुनरुक्तः प्रीतेर्मनोधर्मतया तदधिकरणभावाव्यभिचारादित्येतत प्रपञ्चितमेव प्राक्।

तेन वरमयमत्र पाठः श्रेयान् अल्पदोषत्वात्।

"काव्यस्यात्मेत्यमलमतिभिर्यो ध्वनिर्नाम गीत-
स्तस्याभावं जगदुरपरे भक्तिरित्येवमन्ये।
केचिद्वाचामविषय इति प्रस्फुरत्तत्त्वमन्त-
स्तेन ब्रूमः सहृदयजनप्रीतये तत्स्वरूपम्॥" इति।

---

मधुसूदनीविवृतिः।

रित्यनयोः परोक्षार्थकत्वम् आहुरित्यस्य वर्त्तमानार्थकत्वमिति प्रकान्तकालनिर्वाहो न कृत इति भावः।

अन्यरूपत्वे त्विति। तत्त्वस्य अन्यरूपत्वे तु अन्यस्य तत्त्वस्य वागविषयत्वाभावे अर्थात् वाग्विषयत्वे ध्वनेः तदविषयत्वं वागविषयत्वं न उक्तं स्यात्। तयोः वागविषयत्वाविषयत्वयोः भेदात्।

अयं भावः। यदि ध्वन्यपेक्षया अन्यस्य तत्त्वपदव्यवहार्यम् तस्य च वाग्विषयत्वं तर्हि अन्यरूपस्य ध्वनेः वागविषयत्वं कथमुक्तं स्यात् वाग्विषयत्वाविषयत्वयोर्भेदात्। इति।

भक्तेरेवेति। भक्तिर्ध्वनिरित्युक्तेः। तद्धितस्य अणः भक्तेरिदमितीदमर्थकस्य निर्देशः।

युक्तं चैतदिति। एतत् भक्तेरव ध्वनित्वं युक्तमपि। तथाहीति उदाहरणेन भक्तेर्ध्वनित्वं साधयति। कृशाङ्ग्या इति। अत्र विसिनीपत्रशयनस्य जडस्य वदनक्रियाया अभावात्तत्र भक्तिराश्रीयते तथा च व्यञ्जयति पकाशयतीत्यर्थो बुध्यते इत्येवमर्थान्तरज्ञानात् ध्वनिलक्षणानुगतिः।

अल्पदोषत्वादिति। जगदुरित्यस्य पूर्वार्द्धोपात्तस्य उत्तरार्द्धेऽन्वयकरणादल्प-

यद्वा

इदमद्यतनानां च भाविनां चानुशासनम् ।
लेशतः कृतमस्माभिः कविवर्त्मारुरुत्सताम् ॥ १२६ ॥

इत्यलमप्रस्तुवस्तुविस्तरेण। तस्मात् स्थितमेतद् यथा शब्दस्यार्थाभिधानमन्तरेण न व्यापारान्तरं सम्भवतीति ।

गमयन्त्यर्थमुखेन हि सुप्तिङ्वचनादयोऽपरानर्थान् ।
तेन ध्वनिलक्षणविधौ शब्दग्रहणं विफलमेव ॥ १२७ ॥

इति सङ्ग्रहार्या।

इति श्रीराजानकमहिमभट्टविरचिते व्यक्तिविवेकाख्ये काव्याऽलङ्कारे शब्दानौचित्यविचारो नाम द्वितीयो विमर्शः ।

---

मधुसूदनीविवृति ।

दोषत्वमिति । वाचामविषय इति केचिज्जगदुरित्यन्वयस्य पन्थाः ।

उक्तमुपसंहरन्नाह—तस्मादिति ।

प्रासूत रामो विदुषां वरेण्यो यं पार्वती दानदयाप्रसिद्धा ।
महात्मनस्तस्य कृतौ विमर्शौ मध्यो ययौ व्यक्तिविवेकवृत्तौ ।

इति श्रीमन्मण्डलधराधीशचक्रचर्चितपदपाथोज-सर्वतन्त्रस्वतन्त्र-पदवाक्यप्रमाणाब्धिसदिदवगाहननिर्मलप्रज्ञ-महामहोपाध्याय-पण्डितप्रकाण्ड-श्रीरामजीलालशास्त्रिणां तनूजन्मना सहित्यार्णवकर्णधारेण राजस्थानकेसरिणा साहित्याचार्येण आहिताग्निना श्रीमधुसूदनशर्मशास्त्रिणा विरचितायां मधुसूदनीविवृतौ द्वितीयो विमर्शः ।



# अथ तृतीयो विमर्शः ।

तदेवं ध्वनिलक्षणस्य तद्भेदानां चानुमानेऽन्तर्भावमुपपाद्य सम्प्रति तदुदाहरणानां यथायोगं क्रमेणासावुपदर्श्यते । तत्र वस्तुमात्रस्य तावत्—

"भम धम्मिअ ! वीसद्धो सो सुणओ अज्ज मारिओ देण ।
गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥

इत्यत्र केनचित् सुकृतिना यूना सह विस्रम्भसम्भोगसुखास्वादलालसया विजने वने विविधकुसुमामोदमुदितमधुकृति कृतसङ्केतया कयाचित् कुसुमापचिचीषया भ्रमतो धार्मिकस्य मनोरथपरिपन्थि तद्देशासादनं विघ्नमिव मन्यमानया जानानयापि केसरिकिशोरकस्य क्रौर्यातिरेकं कुक्कुरमारणमात्रत्रासोपन्यासेनास्य प्रियमावेदयितुकामया विद-

---

मधुसूदनीविवृतिः

॥ श्रीः ॥

स्वाभाविकदीप्तिभरैः सद्यः प्रत्यूहसंहन्त्रीम् ।
इच्छितफलस्य दात्रीं कलये देवीं शिवाय धृतदेहाम् ॥

तदेवं प्रथमविमर्शोक्तप्रकारेण सम्प्रति तृतीयविमर्शे । तदुदाहरणनाम् ध्वनितद्भेदोदाहरणानाम् । असौ अन्तर्भावः ।

"भम धाम्मिअ ?" । इति भ्रम धार्मिक विस्रब्धः स शुनकोऽद्य मारितस्तेन । गोदानदीकच्छकुहरवासिना दृप्तसिंहेनेति ॥ अनुवादः । स्पष्टेयमार्या ।

इयं कस्याश्चित् सम्भोगान्तरायभूतधार्मिकस्यभयोत्पादनाय प्रतारणोक्तिः । तत्र स्वतसिद्धस्यापि कौलेयकभयेन निषिषित्साविषयस्य भ्रमणस्य दृप्तसिंहकृततद्धननेन विधिः प्रतिप्रसवरूपा । तत्र भावाभावयोर्विरोधात् न युगद्वाच्यता । नापि क्रमेण, शक्तेः शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति सिद्धान्तेन विरामात् । नापि तात्पर्यशक्त्या तस्या आकाङ्क्षायोग्यतासन्निधिरूपायाः विशकलितपदार्थानां परस्परं सम्बन्धरूपत्वात् । नापि लक्षणया प्रतीतिः, मुख्यार्थबाधाद्यभावादतः चतुर्थकक्षान्तःपातिपदार्थबोधनाय व्यञ्जनावश्यं स्वीकार्या तयैवात्र "मा भ्रमीः" इति निषेधो बोध्यते इति ध्वनिप्रस्थापयितुराशयः ।

विविधाना कुसुमानामामोदेन मुदिता मधुकृतो यस्मिन् । तद्देशासादनमिति । धार्मिककर्तृकं तस्य संकेतितस्य विजनवनरूपदेशस्य आसादनम् । मनोरथपरिपन्थीति तद्देशेत्यस्य विशेषणम् । धार्मिकस्य संकेतितदेशासादने सम्भोगरूपो मनोरथो हतो भवतीति मनोरथपरिपन्थि । प्रियमिति । यद्भयान्निःशङ्कं भ्रमणं नाचरसि

ध्ययापि मुग्धयेव विधिमुखेन भ्रमणस्य प्रतिषेधो विहितः ।

अत्र हि द्वावर्थौ वाच्यप्रतीयमानौ विधिनिषेधात्मकौ क्रमेण प्रतीतिपथमवतरतः, तयोर्धूमाग्न्योरिव साध्यसाधनभावेनावस्थानात् । तत्राद्यस्तावदविवेकसिद्धः स्पष्ट एव भ्रमणविधिलक्षणस्य साध्यस्य तत्परिपन्थिक्रूरकुक्कुरमारणात्मनः साधनस्य चोभयोरप्युपादानात् ।

द्वितीयस्त्वत एव हेतोः पर्यालोचितणिजर्थस्य विवेकिनः प्रतिपत्तुः प्रयोजकस्वरूपनिरूपणेन सामर्थ्यात् प्रतीतिमवतरति । तच्च सामर्थ्यं मृतेऽपि कौलेयके क्रूरतरस्य सत्त्वान्तरस्य तत्र सद्भावावेदनं नामापरम् । तदेव च साधनम् । तयोश्च साध्यसाधनयोरविनाभावनियमो विरोधमूलः । स चानयोर्लोकप्रमाणसिद्ध इत्युक्तम् ।

ननु यद्यतो वाक्यादर्थद्वयावगमस्तत् कथमुत्तरस्मिन्नेव नियमेन विश्रान्तिर्न पूर्वस्मिन् उभयत्रापि वा, तयोः प्राकरणिकत्वेन विशेषाभावात् ।

उच्यते । न तावदत्र वाच्यानुमेययोरर्थयोः समुच्चयेन अवगतिरुपपद्यते भ्रम मा च भ्रमीरिति विधिनिषेधयोरेकाश्रयत्वविरोधात् ।

नापि विकल्पेन, भ्रम वा मा वा भ्रमीरिति वचनोच्चारणानर्थक्यप्रसङ्गात् ।

मधुसूदनीविवृतिः ।

स मारित इति प्रियम् ।

तत्राद्य इति । आद्यो विधिरूपः । अविवेकसिद्धः अविचारेण आपाततो ज्ञातः । द्वितीयः निषेधरूपः । णिजर्थस्य "मारित" इत्यत्रस्थणिच्प्रत्ययार्थस्य । प्रयोजकेति । प्रयोजकस्य कामुक्याः स्वरूपनिरूपणेन स्वरूपगवेषणेन । तत्र देशे सद्भावस्य सत्ताया आवेदनं निवेदनमेव अपरं सामर्थ्यं न । तदेव सद्भावावेदनमेव साधनं हेतुः ।

नन्वित्याशङ्कते यद् यतो यस्मादेकस्मात् "भम धम्मिअ" इत्यादेर्वाक्यात् अर्थद्वयस्य विधिनिषेधरूपस्य अवगमो ज्ञानम् तत् तदा उत्तरस्मिन् पश्चात्प्रतीतेऽर्थे निषेधे नियमेन अवश्यं कथं विश्रान्तिः । पूर्वस्मिन् प्रथमप्रतीतेऽर्थे अथवा उभयत्र विधिनिषेधयोः पूर्वोत्तरयोः अर्थयोः विश्रान्तिः कथं न । तयोः उभयोः विधिनिषेधयोः प्राकरणिकत्वेन प्रकरणोद्भूतत्वेन विशेषाभावात् समानत्वात् ।

समाधत्ते—उच्यते । इति । एकाश्रयत्वविरोधादिति । सामानाधिकरण्येन विरुद्धयोः समुच्चयस्यासम्भवादित्यर्थः ।

विकल्पेनाऽपि अवगतिर्नोपपद्यते इत्यन्वयः । वचनोच्चारणेति । अयं भावः । यदि "भम धम्मिअ" इत्यत्र विनाऽपि भ्रम वा मा वा भ्रमीरित्येवमुक्ति विकल्पोऽवबुध्येत तर्हि भ्रम वा मा वा भ्रमीरिति वचनेन विकल्पोच्चारणस्य आनर्थक्यप्रसङ्गः स्यादिति ।

नाप्यङ्गाङ्गिभावेन, विधिनिषेधयोस्तदसम्भवात् ।

केवलं योऽसौ भ्रमणविधौ हेतुभावेन दृप्तपञ्चाननव्यापारस्तत्रोपात्तः स एव विमृश्यमानः परम्परया धार्मिकस्य तन्निषेधे पर्यवस्यति तयोर्बाध्यबाधकभावेनावस्थानात् ।

को ह्यनुन्मत्तः कुक्कुरमात्रसद्भावभयात् परिहृतभ्रमणस्तत्रैव दृप्तसिंहसद्भावाशङ्कायामपि सविस्रम्भं भ्रमेदित्यनुमेयार्थविश्रान्तिनियमहेतुर्बाध्यबाधकभावोऽस्त्येवात्र विशेषः ।

अवश्यं चैतदभ्युपगन्तव्यम् । अन्यथा शुक्तिकारजतप्रतीत्योरपि क्रमभाविन्योरेतत्पर्यनुयोगप्रसङ्गः केन वार्यते । तस्माद् बाध्यबाधकभावावसायकृत एवात्रोत्तरार्थविश्रान्तिनियम इति स्थितम् ।

तत्र 'भम धम्मिअ ! वीसद्धो' इति वाक्यार्थरूपो भ्रमणविधिर्वाच्यः तस्य 'सोसुणओ अज्ज मारिओ देण' इत्यादिना क्रूरकुक्कुरमारणं दृप्तसिंहविहितं वाक्यार्थरूपमेवार्थो हेतुः । तत्प्रतिषेधस्त्वनुमेय एव न वाच्यः तस्योक्तनयेनाक्षेपात् ।

तत्र 'गोलाणईकच्छकुडङ्गवासिणा' इति गोदावरीकच्छकुहरस्य

---

मधुसूदनीविवृतिः ।

अङ्गाङ्गिभावेनाऽपि अवगतिर्नोपपद्यते इत्यन्वयः । तदसम्भवादिति । अत्र तत्पदेन अङ्गाङ्गिभाव आमृश्यते ।

पञ्चाननव्यापारः शुनकमारणाख्यः । परम्परया शुनकनिवारणद्वारा धार्मिकनिवारणात् । तन्निषेधे भ्रमणनिषेधे । तयोः भ्रमणविधिनिषेधयोः ।

भ्रमणविधिनिषेधयोः बाध्यबाधकभावं दर्शयति–को ह्यनुन्मत्त इति । अवश्यं चैतदिति । एतत् बाध्यबाधकभावेन अवस्थानम् ।

एतत्पर्यनुयोगेति । अयं भावः । शुक्तिकायां पूर्वं चाकचिक्यवशाद्रजतत्वप्रतीतिभ्रमो भवति पश्चात् यथार्थप्रतीत्या सा प्रतीतिर्बाध्यते इति शुक्तिरजतप्रतीत्योः बाध्यबाधकभावोऽवसीयते । अन्यथा एतादृशस्थले बाध्यबाधकभावाऽस्वीकारे शुक्तिकारजतप्रतीत्योरपि एतस्य पर्यनुयोगस्य ( कथमुत्तरस्मिन्नेव नियमेन विश्रान्तिः पूर्वत्र उभयत्राऽपि वा कुतो नेति ) प्रश्नस्य प्रसङ्गो भवितुं शक्येतेति । तस्मात् बाध्यबाधकभावस्य अवश्याभ्युपगमनीयत्वात् बाध्यबाधकभावस्य अवसायेन निश्चयेन कृतः एव अत्र "भम धम्मिअ" इतिपद्ये उत्तरस्मिन्नर्थे विश्रान्तेः नियमः इति स्थितं सिद्धमिति ।

ननु मा भूत् पूर्वस्मिन् विश्रान्तिः परमुभयत्राविश्रान्तौ को हेतुरित्याह–तत्रेति । आर्थः हेतुत्वबोधकस्य पञ्चम्यादेरनुपादानात् । अस्य प्रतिषेधस्य उक्तनयेन सामर्थ्यादित्यर्थः । धर्मित्वनिर्देशः पक्षनिर्देशः । गोदानदीकच्छकुहरस्यैव "अयं देशः भीरु-

धर्मित्वनिर्देशः। 'दरिअसीहेणे'ति श्वमारणकारणाभिधानद्वारेणोपात्तस्य दृप्तसिंहसद्भावस्य हेतुभावः। कुडुङ्गवासिणेति तद्विशेषणेन तस्य धर्मिणि सद्भावोपपादनम्।

तस्यास्य हेतोः साध्यस्य च निर्भयभ्रमणविधिलक्षणस्य सहानवस्थानलक्षणो विरोधः प्रसिद्ध एवेत्येकस्य सद्भावावेदनेनापरस्य स्वभावविरुद्धोपलब्ध्या प्रतिषेधे विज्ञायमाने सति समशीर्षिकयोभयार्थप्रतीतिरेवात्र न समस्तीति तद्विश्रान्तिपर्यनुयोगो निरवकाश एव।

तेनानुमेय एव भ्रमणस्य निषेधो न व्यङ्गय इत्यवसेयं यथा नात्र शीतस्पर्शोऽग्नेरित्यतः शीतस्पर्शस्य।

यदि वा प्रेक्षावतां प्रवृत्तिरर्थसंशयाभावनिश्चयेन व्याप्ता, तद्विरुद्धश्चात्रानर्थसंशयोऽस्माद्विधिवाक्यारिणजर्थपर्यालोचनयावसीयत इति व्यापकविरुद्धोपलब्ध्या यथा नात्र तुषारस्पर्शोऽग्नेरित्यतः तुषारस्पर्शस्य।

अपि चास्मिन्नुदाहरणे दारुणतरानितरानृक्षप्रभृतीन् प्रसिद्धतद्व्यापारानपास्य यदेतत् करिकलभकुम्भनिर्भेदैकहेवाकिनः केसरिणः कौलेयकवधाभिधानमौचित्यैकनिकेतनस्य कवेस्तत्र चिरं चिन्तयन्तोऽप्यभिप्रायं न विद्मः।

न हि दृप्ततया यत्किञ्चनकारिणोऽन्यस्यापि स्वजातिसमुचितं चरितमपहायाप्रसिद्धमेव किमपि रसभङ्गभीरवः कवयो वर्णयितुमाद्रि-

---

मधुसूदनीविवृतिः।

भ्रमणायोग्यः दृप्तसिंहसद्भावादि'ति दृप्तसिंहसद्भावेन भीरुभ्रमाणायोग्यत्वस्य साधनात्। तद्विशेषणेन सिंहविशेषणेन तस्य हेतोः सिंहस्य धर्मिणि देशे पक्षे सद्भावोपपादनम्। तस्यास्य हेतोः सिंहस्य।

विरोध इति। सिंहवद्देशे निर्भयभ्रमणस्यासुकरत्वात् साध्यहेत्वोः निर्भयभ्रमणसिंहसद्भावयोरसामानाधिकरण्याद्विरोध इति भावः।

एकस्य दृप्तसिंहस्य सद्भावावेदनेन स्वभावविरुद्धया उपलब्ध्या साध्यहेत्वोः सहानवस्थितिरूपया अर्थापत्त्या अपरस्य निर्भयभ्रमणविधेः प्रतिषेधे मा भ्रमीरिति निषेधे विज्ञायमाने सति समशीर्षिकया तुल्यत्वेन उभयार्थयोः विधिनिषेधयोः प्रतीतिरेव न समस्ति इत्यतः तद्विश्रान्तेः उभयत्र विश्रान्तेः पर्यनुयोगः प्रश्नः निरवकाशः अवसरशून्यः।

तेन उभयथा पर्यनुयोगाभावेन। शीतस्पर्शस्येति। शीतस्पर्शस्य निषेधोऽनुमेय एव न व्यङ्गः इत्यर्थः।

यदि वेति पक्षान्तरमुपन्यस्यति। व्यापकविरुद्धोपलब्ध्या प्रतिषेधे विज्ञायमाने

यन्ते किमुत जगद्विदितव्यापारस्य केसरिणः ।

अनौचित्यनिबन्धो हि परं रसभङ्गकारणं कवयो वदन्ति । यत् स एवाह—

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा ॥"

इति । तस्माद्दरिअरिक्खेणेत्यत्र पाठः श्रेयान् ।

"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि ।
मा पहिअ ! रत्तिअंधअ सेज्जाए महँण मज्जहिसि ॥"

अत्र हि चलितचारित्रमुद्रा प्रोषितपथिकयुवतिः कश्चिद्युवानं वासरावसाने वसतिं प्रार्थयमानमुद्दिश्योत्पन्नमन्मथव्यथावेशा श्वश्रूसन्निधौ तस्मै शयनस्थानं विविक्तमुपदिश्य निशान्धताध्यारोपेण स्वशयनसंस्पर्शप्रतिषेधमुखेन श्वश्रूशय्यासन्निवेशदेशं दर्शयन्ती रात्रावत्र मदीय एव

---

मधुसूदनीविवृतिः ।

सतीत्यादि समानं पूर्वेण ।

उपसंहरति—तस्मादिति । तस्मात् सिंहस्य कुक्कुरमारणे अनौचित्याद्धेतोः अत्र दृप्तसिंहेनेति पदस्य स्थाने दरिअरिक्खेणेति दृप्तऋक्षेणेति पाठः श्रेयान् ।

अत्ता एत्थेति । श्वश्रूरत्र निमज्जति अत्राहं दिवसकं प्रलोकय ।
मा पथिक ? रात्र्यन्ध ? शय्यायामावयोर्मांङ्क्षीः । इति छाया ॥

अत्र प्रोषितपतिकया तरुण्या स्वामवलोक्य प्रवृद्धमदनः कश्चित्पान्थो युवाऽनेन निषेधद्वारेणाभ्युपगम्यते इति निषेधाभावो विधिर्न तु निमन्त्रणरूपोऽप्रवृत्तप्रवर्त्तनास्वभावः सौभाग्याभिमानखण्डनाप्रसङ्गात् ।

अत्तेति सम्भोगस्य प्रयत्नसाध्यत्वम् तेन प्रमादपरिहारः । अर्थात् अनिभृतसम्भोगपरिहारः प्रकाश्यते । निमज्जतीति । यद्यपि सम्भोगस्य प्रयत्नसाध्यत्वं तथापि खट्वायां पतनोत्तरं जलनिमग्नवत् न किमपि वेत्ति अतो न नैराश्यमुपगन्तव्यमिति द्योत्यते । दिवसकमिति । यद्यपि भवान् मदनशरासारदीर्यमाणहृदय उपेक्षितुं न युक्तस्तथाऽपि किं करोमि पापो दिवसकोऽयमनुचितत्वात् कुत्सितोऽयमित्यर्थः । न च सर्वथा समुपेक्ष्यः । यतोऽत्रैवाहं तत्प्रलोकय नान्यतो गच्छामि । तदन्योन्यविलोकनविनोदेन दिवसं तावदतिवाहयावः । रात्रावपि प्रतिपन्नमदनो मा अन्धीभूतो मदीयशय्यां श्लिक्षः । अपि तु निभृतनिभृतं दत्तावधानो निकटकण्टकान्वेषणपूर्वकमुपस्थातव्यमिति सूच्यते । रात्र्यन्धेति । समुचितसमयसम्भाव्यमानविकाराकुलितत्वं प्रकाश्यते ।

अत्राऽपि पूर्ववत् भावाभावयोः युगद्वाच्यत्वाभावादि समानमिति ध्वनिकाराशयः । वासरावसाने सायंकाले । तद्वशाद्धि तस्य अव्यभिचारिसाधनस्य अकस्मात् प-

शयनीये त्वया निभृतमुपस्थातव्यमिति तैस्तैराकारैः प्रतिषेधमुखेन स्वाभिप्रेतमर्थमस्मै निवेदयते ।

तत्र च केचिद्विदितस्वरूपस्यैव पथिकस्य।कस्मान्निशान्धतोपक्षेपः स्वशयनीयोद्देशदर्शनं चेत्युभयमव्यभिचारि साधनमिति मन्यन्ते । तद्वशाद्धि तस्य नायिकाशयनोद्देशोपसर्पणमपि कल्पनीयं स्यात् । श्वश्रवाश्च तस्याविनयदोषाशङ्कानिरास इत्युभयमभिमतं सिध्यति ।

यत्त्वत्र श्वश्रूशयनदर्शनं तत् तदाशङ्कानिरासार्थमेव न पथिकप्रवर्त्तनाङ्गतां गच्छति । आत्मन एव शयनोद्देशदर्शने हि तस्याः शङ्का स्यात् ।

यद्वा शयनयोर्विप्रकर्षप्रकाशनपरं तदिति तत्प्रवृत्त्यङ्गमेवास्तु तदिति च तच्चायुक्तत् । अत्र हि श्वश्रूः प्रत्याय्या वर्त्तते नान्यः। न चायं चिरपरिशीलनावसेयो निशान्धताख्यो हेतुस्तां प्रति सिद्धः । तथाविधश्चोपादीयमानः प्रत्युत तस्याः शङ्कामुपजनयेत् । उभयार्थकारी ह्यत्र हेतुरुपादेयो भवति यो न श्वश्र्वाः शङ्कामाधत्ते पथिकं च प्रवर्त्तयति । नचायं निशान्धताख्यो हेतुस्तथेति व्यर्थस्तदुपन्यासः ।

---

मधुसूदनीविवृतिः

थिकगतनिशान्धतोपक्षेपपूर्वकस्वशयनीयोद्देशदर्शनस्य वशात् बलात् । तैस्तैराकारैरिति । अत्राहमित्यत्र अहमित्यादिना अभिनयविशेषेण आत्मदशावेदनेनाकाराणामपि शाब्दत्वमित्याशयः । शयनोद्देशेति । उद्देशः खट्वास्थापनस्थानम् । उपसर्पणं गमनम् । कल्पनीयम् अनुमेयमित्यर्थः ।

श्वश्र्वाश्च तस्येति । श्वश्रूकर्त्तृकायाः तस्य पथिकस्य अर्थात् पथिकगतायाः अविनयरूपदोषविषयकाशङ्कायाः निराशः ।

तदाशङ्केति । तदाशङ्कायाः पथिकगताविनयरूपदोषविपयिण्याः निरासार्थमेवेति । पथिकप्रवर्त्तनस्य मदीय एव शयनीये निभृतमुपस्थातव्यमित्यस्याः प्रेरणाया अङ्गतां साधनभावं गच्छति । आत्मनो नायिकाया एव । तस्याः श्वश्र्वाः अविनयस्येति शेषः ।

यद्वेति पक्षान्तरमाश्रीयते । तत् श्वश्रूशयनदर्शनं शयनयोः स्वश्वश्रूशयनयोः विप्रकर्षप्रकाशनपरं दूरत्वबोधनपरं तेन अन्योन्यदर्शनस्यालक्षितत्वं तेन च त्वया निर्भयमुपस्थातव्यमिति प्रकाश्यते इति । तत् श्वश्रूशयनदर्शनं तस्य पथिकस्य प्रवृत्त्यङ्गमेवास्तु ।

प्रत्याय्या बोद्धव्या । चिरपरिशीलनेन अवसेयः कतिचिद्दिवससहवासेन परिचेतुं शक्यः । तां प्रति श्वश्रूं प्रति न सिद्धः । तथाविधः असिद्धावस्थः । तस्याः श्वश्र्वाः । तथा उभयार्थकारी । तदुपन्यासः निशान्धताख्यहेतूपन्यासः ।

किञ्चायं निशान्धतोपक्षेपः पक्षद्वयेऽप्यप्रयोजक एव शयनसन्निवेशदर्शनसंस्कारादेव तदुभयसिद्धेः ।

ये तु शयनीययोर्विप्रकर्षदर्शनेनान्योन्यदर्शनस्यास्फुटत्वमनुमीयमानं हेतुतया मन्यन्ते अत एव च 'अत्ता एत्थ णिमज्जइ' इति पठन्ति तेऽप्ययुक्तवादिनः । अनैकान्तिकत्वात् । दृश्यन्ते ह्यचलितचारित्राणामपि युवतीनामेवंविधाः सद्भावगर्भाः भणितयः ।

आकारविशेषाणां हेतुत्वपरिकल्पनमुपहासायैव तेषां वाच्यत्वाभावात् वाच्यस्यैव व्यञ्जकत्वेन प्रकृतत्वात् ।

किञ्चात्र निरूप्यमाणो हेतुरेव न लभ्यते । स हि विधेयानुगुणो वा स्यात् प्रतिषेध्यानुगुण उभयानुगुणो वा । तत्राद्यः श्वश्र्वाः शङ्कामेव ज-

मधुसूदनीविवृतिः ।

पक्षद्वयेऽपीति । श्वश्रूकर्तृकशङ्कानिरासे पथिकप्रवर्त्तने च शयनसन्निवेशः शयनस्थानं शयनप्रकारो वा । तदुभयसिद्धेः शङ्कानिरासप्रवर्त्तनयोः सिद्धेः ।

अनैकान्तिकत्वादिति । व्यभिचारित्वाद्धेतोः । अर्थात् अचलितचारित्रोक्तिष्वपि तथाविधशयनीयदर्शनाचारस्य सम्भाव्यमानत्वात् शयनीयविप्रकर्षदर्शनेन हेतुना अनैकान्तिकेन अत्ता एत्थेत्यादिना इहस्था सा मां न निरीक्षितुं शक्नोति नचाहं तामिति परस्परस्य अलक्षितत्वमित्यनुमातुं न शक्यते । इति । वाच्यत्वाभावादिति । आकाराणां साक्षादहमर्थाभावात् काक्वा तादृशार्थबोधनाद् व्यङ्ग्यत्वमेवेति वाच्यत्वाभाव एव तेषाम् ।

वाच्यस्यैव व्यञ्जकत्वेनेति ।

आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः ।
तदुपायतया तद्वदर्थे वाच्ये तदाहतः ॥
यथा पदार्थद्वारेण वाक्यार्थः सम्प्रतीयते ।
वाच्यार्थपूर्विका तद्वत्प्रतिपत्तस्य वस्तुनः ॥ इत्युक्तेः ॥

किञ्चेत्यनेन हेतोराभासान् सङ्गृह्य दर्शयति—अत्र निरूप्यमाण इति । अत्र पद्ये निरूप्यमाणः आलोच्यमानः हेतुरेव न लभ्यते साध्यस्य साधकतया न व्यवतिष्ठते आभासादित्यर्थः ।

सहीति । स हि यथोक्तरूपो हेतुः विधेयस्य "अत्र मदीय एव शयनीये निभृतमुपस्थातव्यमि"त्यस्य अनुगुणः अनुकूलः साधको वा स्यात् । वा अथवा प्रतिषेध्यस्य त्वं निशान्धोऽसि अतोऽदर्शनात् नावयोः शय्यायां निमज्जनं कर्त्तव्यं त्वयेत्यस्य अनुगुणः स्यात् । वा अथवा उभयोः श्वश्रूशङ्काराहित्यस्य पथिकप्रवर्त्तनस्य चेत्युभयोरनुगुणः स्यात् । ननु हेतुरेव न लभ्यते इति किमुच्यते पथिकस्याकस्मान्निशान्धत्वोपन्यासः शयनीयोद्देशदर्शनं च हेतुरस्त्येवेत्यत्र आह—तत्राद्य इति । तत्र त्रिषु आद्यः विधेया-

नयेदसिद्धत्वाच्चाक्षुषत्वादिवत् ।

द्वितीयो न विवक्षितार्थसिद्धिहेतुर्विरुद्धत्वात् कृतकत्वमिव नित्यत्वे ।

तृतीयस्तु सन्देहमेव जनयत्यनैकान्तिकत्वात् । प्रमेयत्वादिवदिति ।

यदाहुः—

---

मधुसूदनीविवृतिः ।

नुगुणो हेतुः श्वश्वाः शङ्कामेव जनयेत् । चाक्षुषत्वादिवदसिद्धत्वात् । यथा शब्दो गुणः चाक्षुषत्वादित्यनुमितौ पक्षे शब्दे हेतोः चाक्षुषत्वस्य अभावः शब्दस्य श्रावणत्वादिति । स्वरूपासिद्धः तथैव प्रकृतेऽपि ।

अयम्भावः । निशान्धत्वादयं रात्रौ अन्यत्र गन्तुमसमर्थः अतोऽत्र गृहे निवास्यते इति त्वयाऽस्मिन् पथिके अविनयादिशङ्का न करणीया इति प्रकाश्यते पुंश्चल्या वृद्धां प्रति । तत्र पथिकः अविनयदोषरहितः निशान्धत्वात् । इत्यनुमानं चाक्षुषत्वहेतुवत् निशान्धत्वस्य हेतोः पक्षे पथिके असिद्धत्वं चिरपरिशीलनावसेयत्वात्तस्य । यश्चात्र अकस्मादुपक्षेपः स शङ्कास्पद इति श्वश्वाः शङ्कामेव जनयेदित्युक्तमिति ।

द्वितीयः प्रतिषेध्यानुगुणो हेतुः विवक्षितार्थस्य मदीय एव शयनीये निभृतमुपस्थातव्यमित्यस्य सिद्धौ साध्ये हेतुः कारणं न भवति । नित्यत्वे साध्ये कृतकत्वहेतुरिव विद्धत्वात् । यथा शब्दो नित्यः कृतकत्वादित्यनुमितौ हेतुः कृत्वकत्वं साध्यस्य नित्यत्वस्य अभावेन अर्थात् अनित्यत्वेन यत्र यत्र कृतकत्वं तत्रानित्यत्वं नियतमिति व्याप्तत्वाद्विरुद्धः तथैव प्रकृतेऽपि बोध्यम् ।

अयं भावः । पथिकः शय्यानिमज्जनाभाववान् निशान्धत्वात् इत्यनुमितौ निशान्धत्वं हेतुः साध्यस्य शय्यानिमजनाभावस्य अभावेन शय्यानिमज्जनेन यत्र यत्र निशान्धत्वं तत्र तत्र शयानिमज्जनमिति व्याप्तत्वाद्विरुद्धः इति पतनभयस्य जागरूकत्वेन निवासानर्हत्वम् । निवासाभावेन च मदीय एव शयनीये निभृतमुपस्थातव्यमित्यस्य अभिप्रेतार्थस्यासिद्धिरेव ।

तृतीय उभयानुगुणस्तु प्रमेयत्वादिवत्-अनैकान्तिकत्वात् व्यभिचारित्वात् विधिर्वा निषेधो वेति सन्देहमेव जनयति । यथा पर्वतो वह्निमान् प्रमेयत्वादिति प्रमेयत्वेन वह्निसाध्यकस्थले हेतोः प्रमेतत्वस्य साध्यस्य वह्नेरभाववति ह्रदे विद्यमानत्वात् अनैकान्तिकत्वं तथैव प्रकृतेऽपि ज्ञेयम् ।

अयं भावः । निशान्धत्वस्य हेतोरप्रयोजकतया शयनीयोद्देशदर्शनमेव हेतुः । तेन श्वश्रूशङ्कानिरासस्य पथिकप्रवर्त्तनस्य च सिद्धिः । तथा च पथिकः सम्भोगविषयकसङ्केतवान् नायिकाकर्त्तृकशयनीयोद्देशदर्शनात् इत्यत्र नायिकाकर्तृकशयनीयोद्देशदर्शनस्य हेतोः सम्भोगविषयकसंकेताभावे पतिव्रताकर्तृकवस्तुस्थितिदर्शने विद्यमानत्वादनैकान्तिकत्वमिति विधिर्वा निषेधो वा इति सन्देहमेव जनयति । इति ।

"नासिद्धो भावधर्मोऽस्ति व्यभिचार्युभयाश्रयः ।
धर्मो विरुद्धो भावस्य सा सत्ता साध्यते कथम् ॥" इति ।

अपि च तत्र यथाद्य उदाहरणे भ्रमणविधिहेतुरेव निरूप्यमाणः प्रतिषेधे पर्यवस्यति न तथेह प्रतिषेधहेतुरेव विधाविति कुतो विधिरूपार्थान्तरप्रतीतिसिद्धिः । तस्माद्विधेयस्यार्थान्तरस्य निबन्धनाभावात् प्रतीतिरेव नास्तीति कुतस्तस्य व्यङ्ग्यत्वमित्ययुक्तमेवेदमुदाहरणम् ।

"वच्च महच्चिअ एक्काए होन्तु णीसासरोइअव्वाइं ।
मा तुज्झ वि तीए विण दक्खिण्णहअस्स जाअन्तु ॥"

अत्र कयाचित् खण्डितयान्तर्ज्वलितेर्ष्याप्रकोपया सावहित्थं सोल्लुण्ठनं सप्रणयौचित्यं च यः प्रियं प्रति भेदो विहितस्तत्र तस्यामेव भवान्निर्व्याजमनुरक्तहृदयो मयि तु कितव ! तव कृतकोपचारवचनरचनामात्रमेतदिति नायकस्यान्यत्रानुरागातिशयः साध्यः ।

तत्र च गच्छ त्वद्विरहविहितानि निश्वासरोदितव्यानि ममैव एकस्या भवन्तु मा तवापि दाक्षिण्यमात्रविवशस्य तया विना तानि भूवन्निति तत्र तस्य प्रस्थानानुमतिर्हेतुः । प्रस्थाने हि तस्य तद्विरहविरतिः । तद्विरतौ च तद्धेतुकानां निःश्वासरोदनादिदुःखानामपि विरतिः ।

स्नेहोत्कर्षानुविधायिनो हि प्राणिनां विरहव्यथावेशा भवन्ति तेषां तत्कार्यत्वात् कार्यकारणभावश्चैषामध्यात्मप्रमाणसिद्धः । धर्मिणि सद्भावसिद्धिश्चास्य हेतोस्सतोऽसत एव वा प्रतिषेधसामर्थ्यादवसीयते, प्रा-

मधुसूदनीविवृतिः ।

नासिद्ध इति । असिद्धेन, उभयाश्रयेण व्यभिचारिणा, विरुद्धेन च भावधर्मेण सा सत्ता कथं साध्यते अर्थात् न साधयितुं शक्या । अतः असिद्धः व्यभिचारी विरुद्धश्च भावधर्मो नास्ति अर्थान्न भावधर्मयोग्यः ।

आद्य उदाहरण इति । "भ्रम धाम्मिअ" इत्यत्र आद्ये । प्रकृतमुपसंहरन्नाह-तस्मादिति । अर्थान्तरस्य मदीय एव शयनीये निभृतमुपस्थातव्यमित्यस्य ।

"वच्च महाच्चिअ" इति । व्रज ममैवकस्याः भवन्तु निःश्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जनिषत । इत्यनुवादः ॥

सावहित्थं साकारगोपनम् । सोल्लुण्टनम् सोत्प्रासम् । सोल्लुण्टनं तु सोत्प्रासं चटु चाटु प्रियोदितमिति शब्दकल्पद्रुमोद्धृता शब्दरत्नावली । भेदः पार्थक्यम् निराकरणमिति यावत् । तत्र तस्येति । तत्र अन्यनायिकासविधे । तस्य नायकस्य । तद्विरहेत्यत्र तत्पदेन नायिका परामृश्यते । तेषां विरहव्यथावेशानां तत्कार्यत्वात् स्नेहोत्कर्षकार्यत्वात् ।

धर्मिणि सद्भावसिद्धिरिति । नायके निःश्वासरोदितव्यानि सन्ति न

प्तिपूर्वका हि प्रतिषेधा भवन्तीति ।

तस्य च सत्यासत्यत्वविचारो निरुपयोग एव प्रतीतिमात्रपरमार्थत्वात् काव्यनाट्यादीनामिति विरहव्यथावसितोऽनुरागातिशयः कान्तस्यानुमेय एव भवति न व्यङ्ग्य इत्यवसेयम् ।

"दे आ पसिअ णिअत्तसु मुहससिजोह्णाविलुत्ततमणिवहे ? ।
अहिसारिआणं विग्घं करेसि अण्णाण वि हआसे! ॥" इति ।

अत्र काचित् कामपि निशान्धकाराभिसरणसमुद्यता सहजसौन्दर्यकान्तिकमनीयमुखीं सखीमालोक्य मुदितान्तःकरणा प्रणयोपालम्भनिभेन तस्यास्तां रूपसम्पदमित्थमुपवर्णयतीति चाटुकार्थोऽत्र प्रतीयमानाऽनुमेयः ।

तत्र च वाच्यस्य प्रतिषेधानुपपत्तिरेव हेतुः । तदनुपपत्तिश्च सम्बोधनद्वारेणोपात्तस्य मुखशशिज्योत्स्नाविलुप्ततमोनिवहत्वस्य हेतोरार्थस्यासिद्धेः, परमार्थतो मानुषीमात्रस्य तथाविधाया वदनेन्दुकान्तेरसम्भवात् ।

अतस्तस्यास्तदन्यासां चाभिसारिकाणामभिसरणविघ्न एव न सम्भवतीति तत्प्रतिषेधप्रणयप्रयासस्सख्यास्तस्यामनर्थक एवेति प्रतिषेधविधेरनुपपत्तिसिद्धिः ।

अतो वदनेन्दुकान्तेर्यदेतद्विलुप्ततमोनिवहत्वमुपात्तं तदन्यथानुपप-

---

मधुसूदनी विवृति ।

वेति कालादिविप्रकर्षाज् ज्ञातुं न पार्यन्ते परं नायिकाकृतप्रतिषेधसामर्थ्यात् न स्युस्तानि तर्हि मा तवाऽपि तया विना जनिषत इति निषेधः कथं स्यात् सन्तीत्येव निषिध्यते प्राप्तिपूर्वका हि प्रतिषेधाः भवन्तीत्युक्तेरिति एतसामर्थ्यादवसीयते इति भावः । कान्तः अन्यनायिकानुरागातिशयवान् तद्विषयकविरहव्यथायुक्तत्वदर्शनेन नायिकाकर्तृकप्रस्थानानुमोदनवत्वादित्यनुमानम् ।

देआ इति । प्रार्थये तावत् प्रसीद निवर्त्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे ?
अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ? । इति छाया

तत्र च वाच्यस्येति । अयं भावः । यस्या वदनेन्दुकान्त्या सकलजगदन्तरालवर्त्ती तमोनिवहो विलुप्तो भवति सा सहजसौन्दर्यकान्तिकमनीया नायिका मुदितान्तःकरणया सख्या निवर्त्तस्वेति निवार्य्यते । स च प्रतिषेधो वास्तविकतादृशकान्त्यभावेन अभिसरणविघ्नाभावादनुपपत्तिं गाहते अनुपपन्नश्च चाटुकार्थे हेतुरिति ।

तदनुपपत्तिश्च प्रतिषेधानुपपत्तिश्च । आर्थस्य पञ्चम्यन्तादिपदानुपादानादशाब्दस्य हेतोरसिद्धेः । सम्बोधनद्वारोपात्तस्य मुखेत्यादिपदप्रतिपाद्यस्य । असिद्धिरपि

द्यमानं वदनस्य कान्त्यतिरेकलक्षणमर्थान्तरमेव चाटुरूपमनया भङ्ग्यानुमापयति कान्त्यतिरेकमन्तरेण निर्मूलस्य तदतिशयारोपस्य लोकैरनादृतत्वादिति तत्प्रमाणसिद्ध एवानयोः सम्बन्धो बोद्धव्यः ।

मधुसूदनीविवृतिः ।

परमार्थतः वस्तुतः मानुषीमात्रस्य तथाविधायाः तमोनिवहविलोपिकायाः वदनेन्दुकान्तेरसम्भवात् । अतः तथाविधवदनकान्तेरसम्भवात् तस्याः प्रकृतनायिकायाः तदन्यासां प्रकृतेतरासाम् तत्प्रतिषेधरूपस्य अभिसरणोद्योगनिषेधात्मकस्य प्रणयस्य प्रयासः तस्यां प्रकृतनायिकायाम् । अतः प्रतिषेधानुपपत्तिसिद्धेः । तत् उपादानम् अन्यथा कान्ति विना अनुपपद्यमानं वदनस्य नायिकामुखस्य । तत्प्रमाणेति तत्पदेन लोकः परामृश्यते । अनयोः कान्त्यतिरेकतदतिशयारोपयोः ।

अनन्तरोपात्तयोरार्ययोरयमाशयः ध्वनिमन्तृमते । व्रजेति । अहमेव एतादृशी या क्रियासमभिहारेण विराध्यन्तं त्वामनुवर्त्तयामि । अद्य च अन्यादृशमुखरागगोत्रस्खलनादिभिः स्पष्टमुपलक्षितोऽसि । न ते प्रमादादेव नायिकान्तरसङ्गमनं जातम् अपि तु गाढानुरागात्त्वया तत्सम्पादितम् । अत्र तु केवलं पूर्वस्वीकृतानुपालनात्मना दाक्षिण्येन एकरूपताभिमानेनैव आगतोऽसि मनसा तु तत्रैवाऽसि । तत् सर्वथा शठोऽसीति वारं वारं क्षान्तेऽप्यपराध्यति कस्मिँश्चिदतिशयप्रियतमे गाढमन्युरूपः खण्डितनायिकाभिप्रायोऽत्र प्रतीयते । ततश्च सम्भोगादिना स्वान्तस्यातिशयतर्पकतया पुनरपि अनुसन्धित्साया हृदयनिहितत्वात् सर्वथात्यागसूचकस्य व्रजेति प्रयोगस्य अनर्हत्वात् न व्रजनविधिरिष्टः । न च व्रजनाभावरूपः स्थित्यात्मा निषेधः; तदानीं तस्य दर्शनेन मन्योरुद्रिच्यमानत्वात् । इति वाच्ये विधिरूपेऽपि अनुभयरूपं व्यङ्ग्यमिहास्तीति ।

प्रार्थये तावत्प्रसीदेति । बहुतरनायिका अभिसारयतः सर्वा अपि समयभेदेनानुरञ्जयतः स्वसङ्केतितसमयं व्यपोह्य अन्यदीयसमये समागच्छन्तीम् अत एव सविस्रम्भसम्भोगसुखास्वादाऽलाभाद् हताशत्वेन व्यपदेश्यां काञ्चन नायिकां वीक्ष्य सर्वथा त्वमेव मे वल्लभा नान्येति बहुशः कथितवाक्यतया रहस्याभेदाय तन्निवर्त्तनमपीहमानस्य परं तद्विलक्षणकान्तिपरिमुषितस्वान्ततया उत्थितमन्मथव्यथस्य अत एव अनिवर्त्तनं वाञ्छतः निवर्त्तनाविर्त्तने किङ्कर्त्तव्यविमूढस्य कस्यचित्कामुकस्य सखी तस्याः प्रसत्यै चाटु करोति । अतो निवर्त्तस्व अर्थात् प्रतिगच्छेति निषेधो नास्ति तद्विलक्षणकान्तिपरिमुषितस्वान्ततया उत्थितमन्मथव्यथत्वात्तथा वक्तुमशक्यत्वात् । न च मा निवर्त्तस्व अर्थात् आगच्छेति निवर्त्तनाभावो विधिरपि; रहस्यभेदभयात् । यदीमां गृहाभ्यन्तरीकरवाणि तर्हि यस्या आगमनवेला सा रुष्येत् । अथ च इयमपि अन्यासक्तं मां ज्ञात्वा रुष्येदिति ।

ग्रन्थकाराशयस्तु । यस्या वदनेन्दुकान्त्या तमोनिवहो विलुप्यते यां वीक्ष्य

"कस्स व ण होइ रोसो दट्ठूण पिआए सव्वणं अहरम् ।
सब्भमरपदुमाघाइणि वारिअवामे सहसु एह्णिम ॥"

मधुसूदनीविवृति ।

सखी मुदिता भवति यां प्राप्य नायकः कृतार्थतामनुभवति स्वजन्मनः सा सख्या निवार्यत इत्यनुचितम् । अन्यच्च वदनेन्दुकान्तेः तमोनिवहनाशकत्वं, तमस्येव च विधीयतेऽभिसरणमिति तद्विघ्नशङ्कया निवार्यते चेत् । न । मानुषयोनौ तादृशवदन कान्तेरसम्भवात् । ततश्च विलुप्ततमोनिवहत्वरूपार्थहेतोरभावेन निवारणमनुपपन्न-मेव । परं यदेतद् वदनेन्दुकान्तेः तमोनिवहविलोपकर्तृत्वमुक्तम्, तत्कथनं कान्ति विनाऽनुपपन्नम् । अर्थात् कारणं विना तादृशारोपोऽसम्भवः इत्यनुपपद्यमानं तत्कथनं वदनस्य कान्त्यतिरेकमनुमापयति । नायिकावदनेन्दुः विलक्षणकान्तिमान् ; असम्भा-वितविलुप्ततमोनिवहत्वोक्त्याभिसरणविघ्नशङ्कया सखीकर्तृकायुक्तप्रतिषेधप्रयोजकत्वादि-त्यनुमानम् । यत् पूर्वमुक्तम्—इति चाटुकार्थोऽत्र प्रतीयमानोऽनुमेयः । तत्र च वाच्यस्य प्रतिषेधस्यानुपपत्तिरेव हेतुरिति, तस्य व्याख्यानं यथा—इत्यत्र रूपसम्पद्वर्णनप्रस्तावे चाटुकार्थः नायिकावदनेन्दुः विलक्षणकान्तिमानितिरूपः प्रतीयमानोऽनुमेयः साध्यः । तत्र साध्ये च हेतुः वाच्यस्य निवर्तस्वेतिपदप्रतिपाद्यस्य प्रतिषेधस्य अनुपपत्तिः अस-ङ्गतिरिति । अत्र मुद्रितपाठस्तु अशुद्धः अतः "तत्र च वाच्यस्य प्रतिषेधस्य अनुप-पत्तिरि"ति असमस्तः पाठः अर्हः । समस्तस्तु विकल एवेति ।

भम धम्मिएति अत्ता एत्थेति वच्च महव्विएति देआ पसिएति च वाच्यव्यङ्ग्ययोः धार्मिकपान्थप्रियतमाभिसारिकाविषयैक्येऽपि स्वरूपभेदाद्भेद इति ध्वनिकारोदाहृतानि चत्वारि पद्यानि विविच्य अधुना विषयभेदादपि व्यङ्ग्यस्य वाच्याद् विभिन्नविषयता भवतीत्याशयेनोदाहृतं विवेक्तुमवतरति—

कस्स व" इति । कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि ? वारितवामे ? सहस्वेदानीम् ॥ इति छाया ।

कस्य वेत्यनीर्ष्यालोरपि । न भवति रोषो दृष्ट्वेति स्वयमेव कुतश्चित्कृत्वाऽपि अधरक्षतेः अपूर्वतया रोषः सम्भाव्य एव । पद्माघ्राणशील इति । शीलं हि कथञ्चि-दपि वारयितुं न शक्यम् । वारितेति भावे क्तः । वारिते वारणायां कृतायामपि वामे ? तदनङ्गीकारिणि सहस्वेदानीम् ।

अत्र काचिदविनीता उपपतिप्राप्ताधरखण्डना अत एव भर्त्रा भर्त्स्यमाना भर्तुः स-न्निधाने तं भर्तारमनवलोकमानया एव कयाचिद्विदग्धसख्या तन्निन्दापरिहाराय एव-मुच्यते । तत्र सहस्वेदानीमुपालम्भपरम्परामिति वाच्यस्य अविनीता विषयः । व्यङ्ग्यं पुनः नास्या अपराधः किन्तु सौरभलोभाकृष्टेन भ्रमरेण पद्माघ्राणसमये दंशि-तमेतदधरमिति भर्तृविषयम् । ममैवं वैदग्ध्यम् अविनयप्रच्छादानरूपमिति तस्यां प्रिय-तमेन गाढमुपलभ्यमानायां तद्व्यलीकशङ्कितप्रतिवेश्मीकलोकविषयम् । तदन्यपत्न्यां

अत्र काचिद् विदग्धा सखी कामपि कामुकान्तिके परपुरुषपरिक्षताधरपल्लवामालोक्य तदसहनस्वभावं च तं कामुकमाकलय्य तस्या परपरिभोगशङ्काकलङ्कमपाकर्त्तुमधरक्षतस्यान्यथासिद्धत्वमुपालम्भनिभेन तामाह ।

तत्र सव्रणवल्लभाधरदलदर्शनं सर्वस्यैव कामुकलोकस्येर्ष्याप्रकोपकारणं भवतीति व्याप्तिवचनम् । तव च वारितवामाया सभ्रमराम्भोजाघ्राणशीलायास्तन्निबन्धनमिदमधरस्य सव्रणत्वमिति पक्षधर्मोपसंहारः । सह्यतामिदानीं तस्य निजस्याविनयस्य विपाकः प्रियतमप्रकोपरूपस्त्वयेति नि-

मधुसूदनीविवृतिः ।

च तदुपलम्भतदविनयप्रहृष्टायां प्रियाया इति शब्दबलात् सौभाग्यातिशयख्यापनमिति सपत्नीविषयम् । "सपत्नीमध्ये इयत्स्खलीकृतास्मि" इति लाघवमात्मनि ग्रहीतुं न युक्तं प्रत्युतामुं बहुमानं सहस्व शोभस्वेदानीमिति सौभाग्यप्रख्यापनेन न मत्सखर्थं त्वया कदाऽपि परिहार्यमिति सखीविषयम् । अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभा इत्थं रक्षिता न पुनः प्रकटं रदनदंशनादिविधिर्विधेयः इति तच्चौर्यकामुकविषयम् । सरलतरेयं न किञ्चित्प्रपञ्चं जानाति इति साध्वीविषयम् । नान्यथा शङ्किष्ठा इति श्वश्रूविषयम् । अनया विना त्वत्पतिर्न जीवति इति विदितमेव तदस्मत्समवाये भेदो माऽस्थेय इति उपपतिभार्याविषयम् । इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यप्रख्यापनं तटस्थलोकविषयमिति बहुविधमस्ति ।

काचिदिति । अत्र पद्ये काचित् विदग्धा चतुरा सखी । "सती" इति मुद्रितपाठस्तु परमाशुद्धः । तस्य परपरिभोगेति । इयं परेण परिभुक्तेति यत् तस्य कामुकस्य शङ्का तद्रूपं कलङ्कमपाकर्त्तुम् । तस्या इति पाठे तु परपरिभोगविषयकशङ्काहेतुकं तस्या नायिकायाः कलङ्कमपाकर्त्तुम् । उभयोर्यत्र सहृदयानुग्रहः स सनाथीकरणीयः । तस्येति पाठे तत्पदस्य शङ्कापदे कलङ्कपदगुणीभूतेऽन्वयः । तस्या इति पाठे तत्पदस्य कलङ्कपदे साक्षात् अन्वयः इतीयान् विशेषः ।

अन्यथासिद्धत्वमिति । अधरक्षतस्य अन्यथा परपरिभोगं विना भ्रमरदंशनेन सिद्धत्वं निष्पन्नत्वम् । दर्शयितुमिति शेषः । अथवायं भावः । नायिका मुग्धा वर्त्तते अतः सा सपत्नीनां मध्ये अहमियत्स्खलीकृतेति वैवर्ण्यमेवानुभवन्ती प्रकारान्तरेणापि समाधातुं शक्योऽयं विषय इत्यजानाना तिष्ठति तामधरक्षतेः भ्रमरदंशने न सिद्धत्वं कथयति ।

इति व्याप्तिवचनमिति । यत्र यत्र सव्रणवल्लभाधरदर्शनं तत्र तत्र कामुकमात्रस्य ईर्ष्यया प्रकोपः इति व्याप्त्यभिलापकं वाक्यम् । तन्निबन्धनं सभ्रमराम्भोजाघ्राणस्वभावहेतुकम् । पक्षधर्मोपसंहारेति । पक्षः नायिका । तन्निष्ठस्य धर्मस्य सभ्रमरपद्माघ्राणशीलस्य उपसंहारः सङ्ग्रहः ।

अविनयस्येति । वारणे कृतेऽपि वामाचरणं कृतं तस्मात् प्रकोपमनुभवेति निग-

गमननिर्देशः। इति वाच्यार्थविषयः साध्यसाधनभावस्तावत् स्पष्ट एव।

अनुमेयार्थविषये तु तस्मिन् परपुरुषपरिभोगशङ्कानिरासः साध्यः। तस्य सभ्रमराम्भोजाघ्राणशीलत्वेन सम्बोधनसमर्पितेनानुमितमधरपल्लवपरिक्षतेरन्यथासिद्धत्वमार्थो हेतुः। तयोश्चाविनाभावनियमोऽनुरागिणामध्यात्मप्रमाणसिद्ध एवेति सिद्धम्।

अत्र वाच्यानुमेययोरर्थयोरपि प्रतीतावनुमेय एव विश्रान्तिर्न वाच्ये तस्य तदङ्गतया प्राधान्याभावाद्, इत्युक्तमेव।

"सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्" ॥ इति।

अत्र शूरादीनां त्रयाणां सर्वत्रैव स्वाधीनाः सम्पदो भवन्तीति साध्यम्। तत्र सुवर्णपुष्पपृथिवीचयने कर्तृत्वाभिधानं तेषां हेतुः।

तद्धि मुख्यमनुपपद्यमानं वाक्यार्थोपचारवृत्त्या तत्सदृशमेव सर्वत्र सुलभविभवत्वमनुमापयति यथा पदार्थोपचारे गङ्गायां घोष इत्यत्र गङ्गाशब्दो गङ्गासमीपवर्त्तिनं तटम्।

---

मधुसूदनी विवृतिः।

मनस्वरूपम्। ततश्च नायके प्रकोपः सव्रणवल्लभाधरदर्शनात् इत्यनुमानेन वाच्यार्थविषयः साध्यसाधनभावः स्पष्टः।

अनुमेयार्थविषये ध्वनिमन्तृभाषायां व्यङ्ग्यार्थविषये तस्मिन् नायके परपरिभोगविषयकशङ्कायाः निरासः दूरीकरणं साध्यम्। तस्य साध्यस्य सम्बोधनद्वारासमर्पितेन सभ्रमराम्भोजाघ्राणशीलत्वेन हेतुना अनुमितं अनुमित्या ज्ञातम् अधरपल्लवक्षतेः अन्यथासिद्धत्वं सम्भोगं विना सभ्रमरपद्माघ्राणेन निष्पन्नत्वं तत् आर्थो हेतुः। तयोश्च साध्यसाधनयोः अविनाभावनियमः व्याप्त्याख्यसम्बन्धनिश्चयः अनुरागिणां रसिकानाम् अध्यात्मप्रमाणेन मानसेन सिद्ध एवेति। ततश्चानुमानम् इयं, परपरिभोगवती न; सभ्रमरपद्माघ्राणशीलत्वात्।

अविवक्षितवाच्यध्वन्युदाहरणं विवेचयितुं प्रस्तौति–सुवर्णपुष्पेति। सुवर्णानि पुष्यतीति सुवर्णपुष्पा तां सुवर्णपुष्पाम्। सर्वत्रैवेति। सर्वत्रैव विषमपरिस्थितावपि क्रूरपुरुषसविधेऽपि सकले जगत्यपि। तत्रेति। तत्र साध्ये। तेषां शूरादीनाम्।

तद्धि शूरादीनां पृथिवीचयनकर्मणि कर्तृताभिधानं हि मुख्यम् साक्षाद् अनुपपद्यमानम् पृथिव्याः चयनकर्मत्वस्य बाधात् कर्तृत्वमपि असङ्गतमेवेत्यर्थः। वाक्यार्थोपचारवृत्त्या वाक्यार्थनिष्ठगौणीलक्षणया तत्सदृशमेव चयनतुल्यमेव सर्वत्र सुलभविभवत्वमनुमापयति। चयनं यथा साधारणस्याऽपि सर्वत्र सुखेन लभ्यं तथैव शूरादीनामपि सर्वत्र विभवः सुलभ इति सादृश्यं चयनविभवयोः।

द्विविधो ह्युपचार इष्टः पदार्थवाक्यार्थविषयत्वाद् उपचारे च वाच्यस्योपायत्वात्। अप्राधान्ये सत्यविवक्षितत्वमेव भवति, उपचारविषयस्यैवोपेयतया प्राधान्यात्। तयोश्च प्रसिद्धिकृत एवाविनाभावनियमोऽवगन्तव्यः, साध्यश्चानुमेय एव, न वचनगोचरतां गच्छतीत्युक्तम्।

"शिखरिणि क नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः।
तरुणि! येन तवाधरपाटलं दशति बिम्बफलं शुकशावकः॥"

इत्यत्र त्वदधरपल्लवपरिचुम्बनामृतं नाल्पपुण्यः पुमानासादयतीति चाटुकरूपोऽर्थः साध्यः। तत्सादृश्यलवावलम्बिनो बिम्बफलस्यापि परिखण्डनविधौ शुकशावकस्य लोकोत्तरतपःपरिणामशालित्वसमारोपो हेतुः।

यत्र खलु यत्सादृश्यसद्भावमात्रभाजो भावस्य पुण्योपचयपरिश्रमपरिप्रापणीयत्वमाशङ्क्यते तत्र तस्य तत्सम्बन्धिनो मुख्यस्यैव तत् कथं नावगम्यते। तस्मादत्रापि साध्यसाधनभावगर्भतैवोपपन्नेति सिद्धम्।

मधुसूदनीविवृतिः।

तयोश्च वाच्यस्य उपचारविषयस्य लक्ष्यस्य चेत्युभयोः। अत्र मते लक्षणायाः प्रयोजनं कथं केन प्रतीयते इति न सूचितम्। शूरकृततविद्यसेवकाः, सर्वत्र स्वाधीनसम्पदः, सुवर्णपुष्पपृथिवीचयनकारित्वात्। इत्यनुमानम्।

विवक्षितान्यपरवाच्यध्वन्युदाहरणं विवेक्तुं प्रस्तौति। 'शिखरिणि" इति। शिखरिणि शिखरवति यत्र समप्रदेशाभावेन सुखेन स्थातुं दुःशकम्। कनु कुत्र पर्वते न हि निर्विघ्नोत्तमसिद्धयोऽपि श्रीपर्वतादय इमां सिद्धिं व्यदध्युः। कियत् चिरम् गणनाविरहितं कालं यावत् गणनायां तु दिव्यसहस्रादित्वेन परमेयः स्यात्। किमभिधानन् अश्रुतपूर्वम् यद्यपि पञ्चाग्निप्रभृति उत्कृष्टं तपः श्रुतम्। परं नैवंविधोत्तमफलजनकत्वं तस्य। तव लोकोत्तरसहजसौन्दर्यकमनीयाया नान्यस्याः। अधरवत् पाटलं बिम्बफलम्। अधरसदृशस्य प्राप्तौ इयत्तपः अपेक्ष्यते मुख्यस्य तवाधरस्य प्राप्तौ न जाने कियत्तपसः आवश्यकत्वम्। दशति आस्वादाय दंशनमात्रं तनुते न त्वौदरिकत् अनवच्छिन्नप्रबन्धतया परं भुङ्क्ते अपि तु आस्वादनविषये रसज्ञः। शुकशावकः य इदानीमेव समये तरुणिमानमनुप्रविष्टः। इति सर्वमिदं तपसां प्रभावः। इत्येवं कविनिबद्धेन वक्त्रा नायिकाविषयः स्वानुरागः प्रकाश्यते इति व्यङ्ग्यम्। इति ध्वनिमन्तुराशयः। ग्रन्थकाराशयस्तु। त्वदधरचुम्बनामृतम् नाल्पपुण्यवत्पुरुषप्राप्यम् त्वदधरसदृशबिम्बफलदशनविधौ शुकशावकस्य असाधारणतपःसम्पज्जन्यत्वकल्पनात्। इत्यनुमानम्।

यत्र खल्विति। यत्र स्थले यस्य अधरस्य केवलं सादृश्यसद्भावयुक्तस्य भावस्य पदार्थस्य बिम्बफलात्मकस्य। प्रण्योपचये पुण्यसङ्ग्रहे यः परिश्रमः तत्प्रापणीयत्वम् आशङ्क्यते तत्र स्थले तत्सम्बन्धिग्रहः मुख्यस्य प्रधानस्य तस्य भावस्य अधर-

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि ! धीरा भव ॥"

इत्यत्र मदनदहनोद्दीपनचन्द्रोदयोद्यानादिदारुणपदार्थसार्थदर्शनदुःखसहिष्णुत्वं नाम रामस्य साध्यम् । तत्र च रामत्वमेवार्थो हेतुः ।

रामशब्दो ह्ययं स्वेच्छापरिकल्पितप्रकरणाद्यवसेयसकलक्लेशभाजनत्वलक्षणधर्मविशिष्टं संज्ञिनं प्रत्याययति न संज्ञिमात्रम् । तयोश्च व्याप्यव्यापकभावलक्षणः सम्बन्धः प्रसिद्धिकृतोऽध्यात्मप्रसिद्ध एवावगन्तव्यः यथा वृक्षशिंशपयोः ।

यश्च तदनुमितं धर्मान्तरं तत् सर्वंसहत्वस्योपात्तस्य साधनं न रामत्वमेवेत्यनुमितानुमेयं तत् । एवमस्मीत्यस्मदर्थे धर्मिणि रामत्वमात्रनिबन्धनायां सकलक्लेशभाजनत्वलक्षणसाध्यधर्मसिद्धौ स्फुट एवास्या-

मधुसूदनीविवृतिः

स्य तत् पुण्योपचयपरिश्रमप्रापणीयत्वं कथं कुतो नावगम्यते । तस्मात् मुख्ये अवश्यं तत्प्राप्यत्वस्वीकारात् अत्रापि पद्ये साध्यसाधनभावगर्भता एव उपपन्ना सङ्गतेति सिद्धम् ।

अविवक्षितवाच्यस्योदाहरणान्तराणि विवेक्तुमवतरति—स्निग्धश्यामलेति । तत्र चेति । तत्र दुःखसहिष्णुत्वे साध्ये । रामशब्दो हीति । स्वेच्छया परिकल्पितं स्वीकृतं प्रकरणादिभिरवसेयं च तत् सकलक्लेशभाजनत्वं तल्लक्षणेन तत्स्वरूपेण धर्मेण विशिष्टं युक्तं सञ्ज्ञिनं रामं न संज्ञिमात्रं न सामान्यं रामम् रामशब्दः प्रत्याययति । तयोः सामान्यविशिष्टरामयोः व्याप्यव्यापकभावलक्षणः सम्बन्धः प्रसिद्धिकृतः अध्यात्मप्रमाणसिद्ध एव बोध्यः । यथा वृक्षशिंशपयोः ।

अयं भावः । यथा शिंशपात्वेऽवगते वृक्षत्वमर्थादवगतं भवति सामान्यं विशिष्टान्नातिरिच्यते इ तिन्यायात् । शिंशपात्वं विशिष्टो व्याप्यो धर्मः वृक्षत्वं सामान्यं व्यापको धर्मः तथैवदुःखसहिष्णुरामेऽवगते विशिष्टे सामान्यो रामोऽर्थादवगम्यते । इति । यच्च तेन सामान्यरामेण अनुमितं अनुमित्या ज्ञातं धर्मान्तरं दुःखसहिष्णुत्वरूपम् विशिष्टं तत्र धर्मान्तरमेव उपात्तस्य रामोस्मि सर्वं सहे इति प्रतिपादितस्य सर्वंसहत्वस्य साधनं हेतुः, न रामत्वं सामान्यमिति । तत् धर्मान्तरम् अनुमितानुमेयम् ।

अनुमितानुमेयमिति । पूर्वं सामान्यरामात् दुखसहिष्णुत्वरूपो धर्मोऽनुमीतते तस्माच्च सर्वंसहत्वं धर्मान्तरमनुमीयते । अहं क्लेशसहिष्णुः रामत्वात् । अहं सर्वंसहः क्लेशसहिष्णुत्वात् इत्यनुमितादनुमितिः । एवमस्मीति । अस्मदर्थे धर्मिणि रामत्वमात्रेण हेतुना सकलक्लेशभाजनत्वलक्षणस्य साध्यधर्मस्य सिद्धौ

नुमानान्तर्भावः । ततश्च रामस्य यत् कठोरहृदयत्वाभिधानं तत् पुनरुक्तमेव अनुवादपक्षस्यातितुच्छत्वात् ।

"ताला जाअन्ति गुणा जाला दे सहिअएहिं घेप्पन्ति ।
रइकिरणाणुग्गहिआइ होन्ति कमलाइ कमलाइ ॥"

इत्यत्राद्यस्तावत् कमलशब्दः सामान्यवृत्तिर्द्वितीयो विशेषवृत्तिः । स चास्य विशेषो निरतिशयशोभासौरभाभिरामतालक्षणोऽर्थः प्रकरणादिगम्यो रविकिरणानुग्रहकृतः प्रमाणान्तरसिद्धस्सामान्यनिष्ठोऽनुमेयः । तत्र च तयोः सामान्यविशेषार्थयोर्विजातीययोरिव सजातीययोरप्यारोप्यारोपकभाव एव हेतुः यथा सिंहो माणवक इति ।

न च भिन्नजातीयत्वमेवार्थानामारोपनिबन्धनमिति नियमः सम्भवति येनात्र सजातीयत्वादसौ न स्यात् तस्य भिन्नार्थमात्रप्रयुक्तत्वात् । तच्चानयोरुक्तनयेनास्त्येवेति नासिद्धो हेतुः ।

सामान्यविशेषवृत्तित्वं चेदं शब्दानां विवक्षामात्रनिर्मितमिति न तस्य पूर्वपश्चाद्भावनियमः कश्चित् । ततश्च—

"पमेअ जणो तिस्सा देउ कवोलोपमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दो विअ वराओ ॥"

इति विपर्ययेणापि तदुपपद्यत एव । एवञ्चास्याप्यनुमानान्तर्भाव एवावगन्तव्यः ।

---

मधुसूदनीविवृतिः ।

सत्याम् अनुमानान्तर्भावः अस्य ध्वनेः स्फुट एव ।

पुनरुक्तमेवेति । रामस्य सर्वं सहे इत्युक्त्या सर्वाधारतायाः प्रतीतौ कठोरहृदयो रामः सर्वं सह इत्येवम् अनुवादतावच्छेदककुक्षौ कठोरहृदयत्वस्य प्रवेशे पुनरुक्तिः स्यात् । अर्थात् सिद्धस्य कथने चर्वितचर्वणा स्यादिति अनुवादपक्षस्य अतितुच्छत्वम् ।

"ताला" इति। प्रागुक्तार्था । रविकिरणानुग्रहेति । रविकिरणसम्पर्कात् कमलस्य विकचत्वं तेन च तत्र शोभाढ्यत्वे भवतः त एवात्रानुमेये । तत्र अनुमेयये सामान्यविशेष्यार्थयोरारोप्यारोपकभावो हेतुः । प्रमाणान्तरेति । प्रमाणपदेन प्रत्यक्षप्रमाणं गृह्यते । कमलं रविकिरणानुग्रहासनिरतिशयशोभासौरभाभिरामताविशिष्टकमलम् । इत्यनुमानम् ।

तस्य भिन्नार्थेति । तस्य आरोपस्य भिन्नार्थमात्रे न तु भिन्नजातीयत्वे प्रयुक्तत्वात् कृतत्वात् । तच्च भिन्नार्थत्वं च अनयोः सामान्यविशेषार्थयोः उक्तनयेन आद्यः सामान्यवृत्तिर्द्वितीयो विशेषवृत्तिरिति कथितरीत्या ।

विपर्ययेणापीति । पूर्वत्र ताला इत्यत्र पद्ये कमलयोः समान्यविशेषतया

'निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इत्यत्रादर्शस्य विच्छायत्वमनुमितमुपमानम्। तदनुमितौ चादर्शस्यान्ध्याभिधानं साधनम्। तद्धि तत्र मुख्यं न सम्भवति प्राणिधर्मत्वात्।

अतस्तत्सामर्थ्यात् पटलपिहितस्येव नयनस्य निःश्वाससमर्पितं दर्पणस्य विच्छायत्वमेवानुमापयतीति। अत्यन्ततिरस्कृतवाच्योऽपि सिंहो माणवक इत्यादिवत् पदार्थोपचार एव। तस्य चानुमानान्तर्भावः समर्थित एव प्राक्। एवम्—

"गअणं च मत्तमेहं धारालुलिअज्जुणाइ अ वणाइ।
णिरहङ्कारमियङ्का हरन्ति णीलाओ वि णिसाओ॥"

इत्यत्र मत्तनिरहङ्कारशब्दयोरपि द्रष्टव्यम्।

मधुसूदनीविवृतिः।

पौर्वापर्यम्। उत्तरत्र एमेअ जणो इत्यत्र चन्द्रयोः विशेषसामान्यभावेन पौर्वापर्यम्। अन्यच्चात्र पूर्वमुक्तम्।

निश्वासान्ध इत्यत्र पद्ये आदर्शस्य अन्धत्वेन बाधितमुख्यार्थेन हेतुना विच्छायत्वं मलिनत्वमनुमितम्। तच्च उपमानम् चन्द्रनिष्ठविच्छायत्वरूपोपमेयनिरूपितं बोध्यम्। तद्धि आन्ध्यं हि। प्राणिधर्मत्वादिति। अन्धत्वं नाम दर्शनशक्तिराहित्यम्। तच्च प्राप्तिपूर्वकत्वान्निषेधस्य सति दर्शने स्यात। दर्शनं च प्राणिन एव प्राणरहितस्य जडस्य तदभावात। तदेतदुक्तं भवति तत आन्ध्यं तत्र आदर्शे मुख्यं वास्तवं न सम्भवति तस्यान्ध्यस्य प्राणिधर्मत्वात्। आदर्शश्च जड इति। आदर्शो; विच्छायः; निश्वासान्धत्वात्।

गअणं चेति। गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः। इति छाया।

अयं वर्षर्तुः केनाऽपि वर्ण्यते। चशब्दः अपिशब्दार्थकः। गगनं न केवलं तारकितं किन्तु मत्ताः मेघा यत्र तत् मत्तमेघमपि। तथा वनानि न केवलं मलयमारुतान्दोलितसहकाराणि किन्तु धाराभिः लुलिताः आलोडिताः अर्जुनाः वृक्षा यत्र तानि धारालुलितार्जुनान्यपि। निशा न केवलं सितकरकरधवला किन्तु निरहङ्कारः जलदैराच्छादितत्वात विच्छायः मृगाङ्को यासु ता नीला अपि। हरन्ति उत्सुकयन्ति।

अत्र पद्ये मत्तशब्दः अनुपयुक्तस्वार्थतया बाधितमदिरापानजन्यक्षीबत्वरूपमुख्यार्थः उद्दण्डान् मेघांल्लक्षयन् विरहिमारणाद्यनर्थकारित्वासमीक्ष्यकारित्वदुर्निवार्यत्वादीन् प्रकाशयति। निरहंकारशब्दोऽपि असंभवत्स्वार्थतया बाधितमुख्यार्थः सतन्द्रं चन्द्रं लक्षयन् तन्द्रतातिशयं अन्धकारपराजयोद्यमानुकूलचतुर्दिक्प्रस्थानाभावमनुमापयति।

यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भावमर्हतीति। "विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते। ते हि रत्यादीनां भावानां कारणकार्यसहकारिभूतास्तानुमापयन्त एव रसादीन् निष्पादयन्ति। त एव हि प्रतीयमाना आस्वादपदपदवीं गताः सन्तो रसा इत्युच्यन्ते इत्यवश्यवश्यम्भावी तत्प्रतीतिक्रमः। केवलमाशुभावितयासौ न लक्ष्यते यतोऽयमव्याप्यभिव्यक्तिक्रम" इत्युक्तम्।

अत्रोदाहरणानि यथा कुमारसम्भवे मधुप्रसङ्गे वसन्तपुष्पाभरणं वहन्त्या देव्या आगमनादिवर्णनं मनोभवशरसन्धानपर्यन्तं शम्भोश्च परिवृत्तधैर्यस्य चेष्टाविशेषवर्णनादीनि।

"अत्रान्तरे कुसुमसमययुगमुपसंहरन्नुदजृम्भत
ग्रीष्माभिधानः फुल्लमल्लिकाधवलाट्टहासो महाकालः"

इत्यत्राप्रकरणिकमहाकालाख्यदेवताविशेषविषया प्रतीतिस्साध्या। तस्याश्चाट्टहाससम्बन्धो युगसंहारव्यापारश्चेत्युभयं साधनं तस्य तत्कार्यत्वात्। कार्यकारणभावावसायश्चानयोरागमप्रमाणमूल इति तत एव समासोक्तिक्रमेणाप्राकारणिकार्थान्तरप्रतीतिसिद्धिः न तूभयार्थवृत्तेर्महाकालशब्दस्य सा शक्तिरित्येतदुक्तं वक्ष्यते च।

"उन्नतः प्रोल्लसद्धारः कालागुरुमलीमसः।
पयोधरभरस्तन्व्याः कं न चक्रेऽभिलाषिणम्॥"

इत्यत्र त्वनन्तरोक्तः प्रकारो न सम्भवतीति कुतोऽर्थान्तरप्रतीतिः।

"दत्तानन्दाः प्रजानां समुचितसमयाक्लिष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु॥"

इत्यत्र तु गोशब्दस्यानेकार्थत्वेऽप्राकरणिकार्थान्तरप्रतिभोत्पत्तौ न

---

मधुसूदनीविवृतिः।

रसध्वनेरुदाहरणानि विवेक्तुमाह—यापीति। इत्युक्यमिति प्रथमविमर्शे

अत्रान्तर इति। महाकालः महाकालाख्यदेवताविशेषः अट्टहासयुक्तत्वे सति युगसंहारकर्तृत्वात्।

उन्नत इति। पयोधरः स्तनः मेघश्च। उन्नतः पीनत्वात् उदूर्ध्वमाकाशं प्राप्य नतः लम्बितः। प्रोल्लसन् शोभायमानो हारो यत्र अथ च प्रकर्षेण उल्लसन्त्यः उद्गच्छन्त्यो धाराः यस्मात्। कालागुरुवत् मलीमसः कृष्णः उभयत्रापि समानम्। अत्र समासोक्तेरभावात् न द्वितीयार्थप्रतीतिः।

दत्तानन्दा इति। व्याख्यातम्। अर्थान्तरस्य सुरभिरूपार्थस्य प्रतिभाया उत्पत्तौ। उभयमपि गोशब्दतद्विशेषजातोभयमपि।

किञ्चिन्निबन्धनमवधारयामः।

तथा हि—गोशब्द एवानेकार्थत्वात् नियन्धनमुपकल्प्येत, तद्विशेषणजातमुभयमपि वा अन्यस्यार्थप्रकारणादेरसम्भवात्। तत्र न तावद् गोशब्द एवेति शक्यते वक्तं सुरभिव्यतिरिक्ते वज्रादावनभिमतेऽप्यर्थान्तरे प्रतीत्युपजननप्रसङ्गात्, तस्यानेकार्थत्वाविशेषे नियमहेतोरभावात्।

अथ विशेषणजातमेव नियमहेतुर्नापरः, तद्धि यदर्थानुगुणमुपलभ्यते तत्रैव प्रतीतिमुपजनयतीति। तर्हि ततोऽपि सा तदनुगुणार्थावगतिर्निर्निबन्धना तद्वदेवाकस्मिकी कथमिवोत्पद्येत। विशेष्यवाचिनोऽनेकार्थस्य तु तन्निबन्धनभावोपगमे अन्योन्याश्रयदोषः।

न चोभयमप्यन्योन्यानुग्राहितदुपजननसामर्थ्यमवनिपवनादिकमिवाङ्कुरमर्थान्तरप्रतिभामुपजनयति, यतो जडपदार्थविषय एवायमुपपन्नः क्रमः। यत्र स्वाभाविक एवायं जन्यजनकभावः न वाच्यवाचकभावविषयः॥ तत्र हि प्रतिपत्तृपरामर्शापेक्षापरतन्त्रोऽर्थाध्यवसायोपजनो न स्वाभाविकः।

तत्र वाच्यार्थविषयस्यास्य वाचक एव तत्संस्कारप्रबोधनिबन्धनं नान्यः। अर्थान्तरविषयस्य तु तस्यावश्यमन्यदेवापेक्षणीयं युक्तं न पुन-

मधुसूदनीविवृतिः।

नियमहेतोरिति। अनेकार्थविषयकाभिधानियमहेतोः अर्थप्रकारणादेरभावादिति भावः। तद्धीति। तत् विशेषणं हि यस्य अर्थस्यानुगुणम् अनुकूलम्। तत्रैव अर्थे। ततोऽपि विशेषणजातादपि। तदनुगुणा प्रकृतार्थानुगुणा अवगतिः प्रतीतिः निर्विबन्धना प्रकरणादिं विनेति शेषः। तद्वदेव प्रकृतार्थकप्रतीतिवत् आकस्मिकी अर्थान्तरविषयिणी।

अन्ययोन्याश्रयदोष इति। विशेषणानाम् नियतार्थप्रतीत्या नियतविशेष्यप्रतीतिः नियतविशेष्यप्रतीत्या च विशेषणानां नियतार्थप्रतीतिशालित्वमिति प्रतीत्योः परस्पराश्रयत्वसद्भावात् अन्योन्याश्रयाख्यो दोषः संजागर्त्ति। इति भावः।

ननु यथा अवनिपवननीरादय अङ्कुरोत्पादने परस्परोद्बलकसामर्थ्यमधिश्रित्यैव अङ्कुरमुत्पादयन्ति तथैव प्रकृतेऽपि गोशब्दतद्विशेषणोभयमपि अन्योन्यानुग्राहि अर्थान्तरप्रत्यायनोपयोगि सामर्थ्यं गृहीत्वा अर्थान्तरं जनयतु इति चेदाह—नचोभयमिति। जडपदार्थेति। अयं परस्परानुग्राहित्वाख्यः क्रमः जडपदार्थविषयक एव उपपन्नः। यत्र जडपदार्थे। तत्र हि वाच्यवाचकभावे हि। प्रतिपत्तुः बोद्धव्यस्य यः परामर्शः तदपेक्षापरतन्त्रः तदपेक्षायत्तः अर्थाध्यवसायोपजनः अर्थज्ञानोपकरणः।

तत्रेति। वाच्यार्थविषयस्य अस्य प्रतिपत्तृकर्त्तृकपरामर्शस्य अध्यवसायस्य च तत्संस्कारप्रबोधनिबन्धनम् अर्थानुकूलसंस्कारोद्बोधनकारणम्। अर्थान्तरविषयस्य तस्य परामर्शस्य। अध्यवसायस्य च। अन्यदेव शब्दाद्भिन्नं कारणान्तरम्। अवश्यमपेक्ष-

रेक एवोभयत्रापि; एकहेतुकत्वेऽर्थयोः क्रमनियमानुपपत्तेः, प्रत्यर्थं शब्दनिवेशोपगमविरोधाच्चेति तयोर्भिन्नहेतुकत्वमवगन्तव्यम् ।

तच्च तदावृत्त्या वास्तु अर्थप्रकरणादिना वा, न तत्रास्माकमभिनिवेशः कश्चित् । केवलमन्यतस्तत्प्रतिभोद्भेदाभ्युपगमेऽनुमानान्तर्भावः स्फुट एव तस्यैव लिङ्गतापत्तेरिति शब्दस्यानेकार्थतावगममात्रमूलोऽयमद्यापि कवीनामर्थान्तरप्रतीतिभ्रम इति व्यर्थः शब्दशक्तिपरिकल्पनप्रयासः ।

एवं चास्य वाच्यातिरेकिणोऽर्थान्तरस्य प्रतीतिरेव न समस्तीति यत्राप्रस्तुताभिधानप्रसङ्गभयात् तयोरुपमानोपमेयभावप्रकल्पनं तदपि निर्मूलमेवेत्यवगन्तव्यम् ।

किञ्च न स्वभावत एव शब्दानामर्थप्रतीतिक्रम इति नियमसम्भवः; किन्तर्हि ? ; सामग्रीवशात् । सा हि यदर्थानुगुणोपलभ्यते तमेव तस्यार्थं कल्पयतीति सर्वः शब्दः सर्वार्थविषयः सर्वश्चार्थः सर्वशब्दविषयो भवितुमर्हति । ततश्च अतदर्थोऽप्यन्यः शब्दः सामग्रीवशात् समासोक्तिन्यायेन तमवगमितुं क्षमेतैव, न पुनस्तदर्थोऽपि सामग्रीविकलो गवादिशब्दः ।

आस्तां वान्यः शब्दो, यः साधुत्वेन प्रसिद्धः । असाधुरपि यावत् तद्वशादनुमितवाचकभावोऽभिमतमर्थमभिदधात्येवेति सामग्रीसद्भावान्वयव्यतिरेकानुविधायिनीयमर्थान्तरप्रतीतिरित्यवसीयते । यदाहुः—

---

मधुसूदनीविवृतिः ।

णीयम् । एक एव हेतुः उभयत्रापि वाच्यार्थे अर्थान्तरे चेत्युभयत्र ।

**एकहेतुकत्व इति** । यदि द्वयोः अर्थयोः प्रतीतिः एकेनैव चेत्तर्हि कः पूर्वं कः पश्चादिति नियमो न स्यात् । तथा प्रत्यर्थं हि शब्दाभिनिवेश इति सिद्धान्तश्च विरुध्येत । अतः अर्थद्वयप्रतीतौ हेतोः भिन्नत्वमवश्यमङ्गीकरणीयं भविष्यति सति च भेदे वाच्यार्थप्रतीतौ वाचक एव हेतुः नान्यः । अर्थान्तरप्रतीतौ च वाच्यार्थः । सा च तयोः नियतसम्बन्धमन्तरा असम्भवा । नियतसम्बन्धश्च व्याप्तिरेवेति अनुमानपक्ष एव समाश्रितो भवतीति सिद्धम् ।

**तच्चेति** । तच्च तयोरर्थयोर्भिन्नहेतुकत्वञ्च । तदावृत्या शब्दावृत्या । अभिनिवेशः आग्रहः । अन्यतः कारणान्तरात् तस्य अर्थान्तरस्य प्रतिभाया प्रतीतेः उद्भेदः उत्पत्तिः भवतीत्यभ्युपगमे स्वीकारे । तस्यैव अन्यस्यैव । शब्दशक्तीति । एतेन शब्दशक्तिमूलकानुरणनोपमव्यङ्ग्यो ध्वनिर्निरस्त इति बोध्यम् ।

**सा हीति** । साहि सामग्री हि यस्य अर्थस्य अनुगुणा उपलभ्यते तमेवार्थं तस्य शब्दस्य कल्पयति करोतीत्यर्थः । अतदर्थोऽपि । भिन्नार्थोऽपि । तं भिन्नमर्थम् । तदर्थोऽपि प्रकृतार्थोऽपि । सामग्रीविकलः उद्बोधकसामग्रीरहितः ।

"असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः ॥" इति ॥

नचैतावता तस्यापशब्दत्वं कल्पयितुं युक्तम् । यतः शब्दस्तावच्छब्द्यते विमृश्यतेऽभिधीयतेऽनेनार्थ इति शब्दनक्रियाकरणभावोपपन्नोऽर्थः कथ्यते। स च त्रिविधः। साधुरसाधुरपशब्दश्चेति। लक्षणानुगतः साधुः प्रकृतिप्रत्यादिविभागपरिकल्पनया लक्षणेनानुगम्यत इति । यतोऽन्योऽसाधुरव्युत्पन्नो डित्थादिवत् । शब्दादपेतोऽपशब्दः योऽर्थं न प्रतिपादयति विगुणसामग्रीक इत्यर्थः ।

एवञ्च साधुशब्दस्यापि सामग्रीवैगुण्येनावाचकत्वादपशब्दत्वमुपपन्नं भवति । ततश्च वाचकत्वावाचकत्वमात्रनिबन्धने शब्दापशब्दत्वव्यवहारे व्यवस्थिते सति ये केचिदितिहासपुराणादावागमशास्त्रादौ च क्वचित् केषाञ्चिच्छब्दानामसाधुत्वादपशब्दत्वमुद्भावयन्ति ते प्रत्युक्ता भवन्ति । अस्मान् प्रति पुनरविषये प्रयुज्यमानः शब्दोऽपशब्द इति । तद्यथा—

"मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव ।
कलतया वचसः परिवादनीस्वरजिता रजिता वशमाययुः ॥"

इत्यत्र हरिणानामुपमानत्वादप्रधान्यमविगणय्यैव यः कविना रञ्जिलुप्तानुनासिकः प्रयुक्तः सोऽपशब्द एव तत्प्रयोगस्योपमेयार्थानुगुण्येनोपपन्नत्वात्, तस्यैव प्राधान्यात्, प्रधाने च कार्यसम्प्रत्ययोपगमात् ।

---

मधुसूदनीविवृतिः ।

एतावता पुण्यपापविषयकनियमस्वीकारेण ।

शब्दनक्रियेति । शब्दनक्रिया प्रतिपादनाख्या तत्र करणभावेन साधकतमत्वेन उपपन्नः युक्तः अर्थः अर्थात् करणरूपः । विगुणेति । सामग्रीविकल इत्यर्थः । अस्मान् प्रति अस्माकं मते इति भावः ।

मधुकरैरिति । मधुकरैः भ्रमरैःअपवादकरैरिव । अपवादो विश्रम्भः विश्वासः। "अपवादस्तु निन्दायामाज्ञाविश्रम्भयोरपि। इति मेदिनी । व्याधाः वाद्यादिभिः विश्वासमुत्पाद्य मृगान् निघ्नन्ति इति विश्वासोपजनकस्यापि रूढ्या विश्वासरूपार्थत्वम् तथा चापवादो विश्वासोत्पादकवाद्यम् । तस्य कराः वादका व्याधास्तैरिव पथिका परिवादिनीस्वरजयिन्या वचसः कलतया मधुरतया रजिताः आकृष्टाः हरिणा इव स्मृतिभुव कामस्य हरिणग्रहणोपयोगिगर्त्तदेशस्य च वशमाययुः । यथा व्याधगानासक्ता मृगाः गर्ते पतन्ति तद्वत् मकुधरगुञ्जनाकृष्टा पथिका मन्मथपारवश्यं गताः । अर्थात् कामिनीनां सस्मरुरिति रहस्यम् ।

अत्र हरिणानाम् उपमानत्वात् अप्राधान्यम् ( अप्रस्तुतं हि उपमानं भवति तच्च

केवलमप्रधानापेक्षया शब्दसंस्कारविपरिणामेन व्याख्यानमत्र श्रेयो न पुनस्तस्य प्रयोगः। युज्येत पुनरेतद् यदि पथिकानां हरिणतया रूपणं स्याद् आरोपो वा यथा 'स्मृतिभुवो वत पान्थमृगव्रजा' इति, यथा वा 'स्मृति-भुवः पथिका हरिणव्रजा' इति । अन्यथा त्वपशब्द एवायमविषये प्रयुक्तत्वाद् अस्वगोण्यादिशब्दवत् । यदुक्तम्—

"अस्वगोण्यादयः शब्दाः साधवो विषयान्तरे ।
निमित्तभेदात् सर्वत्र साधुत्वं च व्यवस्थितम् ॥" इति ।
शब्दप्रयोगः कर्त्तव्यः प्रधानार्थव्यपेक्षया ।
तदन्यापेक्षया त्वर्थादेनं विपरिणामयेत् ॥ १ ॥
विपरीतमतो यत् स्यादपशब्दः स मां प्रति ।
हेतुर्ध्वनेश्चायमेव प्रयोगपरिमाणमयोः ॥ २ ॥
परिणामो बहुविधो वाचोलिङ्गादिभेदतः ।
स च प्रसिद्ध एवेति नास्माभिरिह दर्शितः ॥ ३ ॥
इति संग्रहश्लोकाः ।

---

मधुसूदनीविवृतिः ।

अप्रधानमेवेत्याशयः) अविगणय्यैव अविचार्यैव कविना माघेन यः लुप्तानुनासिको रञ्जि-धातुः प्रयुक्तः । सोऽपशब्द एव तत्प्रयोगस्य रञ्जिप्रयोगस्य उपमेयभूतस्यार्थस्य पथि-कस्य आनुगुण्येन आनुकूल्येन उपपन्नत्वात् युक्त्या सङ्गतत्वात् । तस्यैव उपमेयस्यैव प्रस्तुततया प्राधान्यात् । प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्यय इति न्यायेन प्रधाने एव कार्यसम्प्रत्ययस्य उपगमात् स्वीकारात् ।

ननु यदि प्रधानस्य पथिकस्यानुपातित्वं रञ्जेः स्यात् नाप्रधानस्य मृगस्यानुपा-तित्वं; तर्हि "रञ्जेर्णौ मृगरमणे नलोपो वक्तव्यः" इति वार्तिकाऽप्रवृत्त्या रञ्जिता इति स्यात् परं तस्य च न हरिणपदार्थेऽन्वय इत्याह—केवलमप्रधानापेक्षया शब्द-संस्कारेति । अयं भावः। प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्यय इति न्यायानुरोधेन प्रधान एव कार्यसम्प्रत्ययस्य स्वीकारात् विशेषणानामपि मुख्यतया प्रधान एव अन्वयः इत्यतः पथिकानुयायितया विशेषणानामुपादानं कर्त्तुमुचितम् हरिणरूपाप्रधानान्वयार्थञ्च तेषु शब्दसंस्कारस्य ( नलोपादिकस्य ) विपरिणामः कर्त्तव्यः अर्थात् रञ्जिता इति प्रधानानुरोधेन पठित्वा अप्रधानान्वयार्थे रजिता इति अर्थाद् व्याख्यानं करणीयं न पुनः रजिता इति प्रयोगः करणीय इति भावः ।

अस्वगोण्यादय इति । विषयान्तरे स्वस्माद्भिन्ने पात्रविशेषे च प्रयुक्ताः अस्व-गोण्यादयः शब्दाः साधव एव । निमित्तभेदात् प्रयुक्तानां शब्दानां लब्धसंस्कारतया सर्वत्र साधुत्वं व्यवस्थितम्। इयमिह व्यवस्था बोध्या। नास्ति स्वं धनं यस्य स अस्व इत्येवं धनरहिते अस्व इति साधु । बहुवस्तुधारणवति पात्रे गोणीति इति साधु सा-

यद्यपि च केचिदाचक्षते समानायामर्थगतौ शब्देनापशब्देन च शास्त्रेण धर्मनियमः क्रियते साधुभिरेव भाषितव्यं नासाधुभिरिति, तत्र कूपखानकवद् वृत्तिर्भविष्यतीत्यादिना तैरेव प्रतिविहितम्। सा चेतिहासपुराणागमशास्त्रेष्वव्यस्त्येवेति नागमविरोधः। त्रिविधं हि शास्त्रं शब्दप्रधानमर्थप्रधानमुभयप्रधानञ्चेति। तत्र शब्दप्रधानं वेदादि अध्ययनादेवाभ्युदयश्रवणात् मनागपि पाठविपर्यासे प्रत्यवायश्रवणाच्च। अर्थप्रधानमितिहासपुराणादि तस्यार्थवादमात्ररूपत्वात्। उभयप्रधानं सर्गबन्धादि काव्यं तस्य रसात्मकत्वाद् रसस्य चोभयौचित्येन परिपोषदर्शनात्। काव्यस्यापि शास्त्रत्वमुपपादितमेव। तदेवं यदर्थप्रधानमिष्यते तच्छ्रवणधारणार्थावबोधानुष्ठानोत्थितेन धर्मेणासाधुशब्दोदीरणोदितोऽधर्मः प्रतिहतो भवतीयमसौ कूपखानकवृत्तिः। धर्मस्य तदुत्थितत्वमुपगतमेव—

"यस्तु प्रयुङ्क्ते कुशलो विशेषे शब्दान्यथावद् व्यवहारकाले।
सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः॥" इति।

असाधुश्चापशब्दश्च द्विधा शब्दः प्रकीर्त्तितः।
तत्रासाधुर्न साध्यो यः प्रकृतिप्रत्ययादिभिः॥ ४॥
शब्दादपेतोऽपशब्दः शब्दनाकरणात्मनः।
शब्दना हि परामर्शो वाच्यार्थविषयोऽस्य यः॥ ५॥

---

मधुसूदनीविवृतिः।

स्नादिमति व्यक्तौ असाधु। हेपितादिमति च अस्य इति असाधु। एवमेषां नियतं साधुत्वमसाधुत्वं वा न व्यवस्थितम्। किन्तु निमित्ताश्रयेण साधुत्वमसाधुत्वं वा व्यवस्थितम्। अतः निमित्तं विनैव गवादिष्वमी प्रयुक्ता असाधवः निमित्ताश्रयेण पात्रविशेषादिषु प्रयुक्तास्त एव साधव इति रहस्यम्।

केचित् पाणिनीयमहाभाष्यकर्त्तारः। अपशब्दानां भूयस्त्वात्तेषां ज्ञाने प्रयोगे च महानधर्मः, साधुशब्दा अल्पाः तेषां ज्ञाने प्रयोगे च अल्पीयान् धर्मः तथापि स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादित्युक्तेः ज्यायस्त्वाद् धर्मनियम उक्तः।

कूपं खनतीति। कर्त्तरि ण्वुल् कूपखनकः तस्य वृत्तिराचारः। तद्वत्। यथा कूपखानकाः खननसमये मृदादिभिरालिप्तो भवति खननोत्पन्नेन जलेन तन्मार्जयति इत्येवं कूपखानकानामाचारो दृश्यते तद्वदसाधु शब्दोदीरणोदितोऽधर्मः साधुशब्दश्रवणधारणार्थावबोधानुष्ठानोद्भूतेन धर्मेण नाश्यते इति कूपखानकवद्वृत्तिर्भविष्यतीत्युक्तम्।

यथोक्तं भाष्ये अथवा कूपखानकवदेतद्भविष्यति। तद्यथा कूपखानकः कूपं खनन् यद्यपि मृदा (आर्द्रमृत्तिकया) पांसुभिः (शुष्कमृत्तिकाभिः) अवकीर्णः (आप्लुतो) भवति। सोऽप्सु सञ्जातासु तत एव तं गुणमासादयति। येन च स दोषो निर्हण्यते भूयसा

एवञ्चासाधुशब्दोऽपि नापशब्दत्वमर्हति ।
न सोऽप्यभ्येति साधुत्वं तयोर्विषयभेदतः ॥ ६ ॥

ततश्च—

सामर्थ्यादेव शब्दस्य विषयेऽवगते सति ।
न प्रयोगोऽस्य न ह्येष स्वनिष्पत्त्यै प्रवर्त्तते ॥ ७ ॥
अत एव प्रकृत्यर्थमात्रं तत्र प्रयुञ्जते ।
सङ्ख्यासाधनकालादेरानुगुण्यानपेक्षिणः ॥ ८ ॥
इयता चापशब्दत्वं न तेषामवकल्पते ।
अर्थेषु शब्दनाकर्मकरणत्वानपायतः ॥ ९ ॥
असाधूच्चारणाद्यस्तु तत्राधर्मः प्रवर्त्तते ।
कूपखानकवद्वृत्तेः सोऽर्थज्ञानान्निवर्त्तते ॥ १० ॥
अथ वार्थपरिज्ञानमास्तां तत्पठनादपि ।
धारणादपि वा पुंसां श्रूयतेऽभ्युदयः परः ॥ ११ ॥

इति संग्रहश्लोकाः ।

तस्मादुपपत्तिशून्य एवायं गतानुगतिकतया अनेकार्थशब्दप्रयोगविप्रलब्धव्याख्यातृपरम्परासमयमात्रप्रवर्त्तितः शब्दशक्तिमूलानुस्वानरूपार्थान्तरप्रतीतिपक्षः । व्याख्यातारोऽप्यलीकविद्वन्मानितया प्रायेणापव्याख्यानैर्न केवलमात्मानं यावत् तत्रभवतो महाकवीनपि ह्रेपयन्तो दृश्यन्ते । तद्यथा—

"तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।

मधुसूदनीविवृतिः ।

चाभ्युदयेन योगो भवति । एवमिहापि यद्यपि अपशब्दज्ञाने अधर्मः तथाऽपि यस्त्वसौ शब्दज्ञाने धर्मः तेन स दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति इति ।

सामर्थ्यादेवेति । अर्थावगत्यर्थं हि शब्दः प्रयुज्यते स चेदर्थोऽवगतः किं शब्दप्रयोगेणेति भावः ।

शब्दनाकर्मेति । शब्दनाकर्मणि प्रतिपादनक्रियायां शब्दनिष्ठत्वकारणस्यानपायतः ।

तां जानीया इति । अत्र एषु अनुभूयमानेषु दिवसेषु गाढोत्कण्ठया गुरुषु सत्सु गच्छत्सु व्यतियत्सु सा बाला शिशिरमथिता पद्मिनी इव हिमहतनलिनी इव अन्यरूपा सम्भावितान्याकारा जाता इत्यहं मन्ये इत्येवमुचितः ग्रन्थकर्त्तुराशयः । तत्र दृष्टान्तः "अवैमि" इति । अत्र तस्य अवज्ञानात् तिरस्काराव मनोरथः अभिलाषः यत्नापेक्षः यत्नसाध्यः इत्यवैमि । इत्येवमुभयत्रापि वाक्यार्थस्य कर्मत्वं मन्यतेः अवतेश्च वर्त्तते न तु बालायाः मनोरथस्य च । ततश्च बालादेः कर्मतया व्याख्यानमनुचितम् ।

गाढोत्कण्ठागुरुषु दिवसेष्वेषु गच्छत्सु बाला
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥"

इत्यत्र पाठमिमबुद्ध्वैव कलितकविहेवाकाः पराकृतप्रतीतिचारुतातिशयास्ते

'अवैमि तदवज्ञानाद्यत्नापेक्षो मनोरथः ।'

इत्यादौ दृष्टामपि वाक्यार्थकर्मतां मन्यतेरपश्यन्तो बालायाः कर्मतामस्य मन्यमानाः स्वरसन्धिवशाद्विकृतमिवशब्दमेव भ्रमाद् वाशब्दं परिकल्प्यापव्याख्यामारभन्ते । न चैवमर्थस्य वैचित्री काचित् समुन्मिषति । नापि महाकवेः कालिदासस्यान्वयगतिरियं क्वचनापि प्रबन्धेऽवधारितपूर्वा यदयं रसनिधाने काव्ये व्याधिमिव वाशब्दमिवार्थे प्रयुञ्जीतेति ।

कथं तर्हि 'चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली'ति तस्यैव कवेरथं प्रयोगः । उच्यते । श्लिष्टत्वादविभावितार्थपाठेन केनचित् कल्पितोऽयं पाठः । स हि जलधिर्निशीवेति द्रष्टव्यः । यथा च—

"ग्रामेऽस्मिन् पथिकाय पान्थ ! वसतिर्नैवाधुना दीयते
रात्रावत्र विहारमण्डपतले पान्थः प्रसुप्तो युवा ।

---

मधुसूदनीविवृतिः ।

स्वरसन्धेः पद्मिनी इवेत्यत्र दीर्घरूपस्य अच्सन्धेः वशात् । अपव्याख्याम् बालामिति पद्मिनीं वान्यरूपामिति कृत्वा दुष्टां व्याख्यामारभन्ते व्याख्यातारः ।

इवशब्दार्थकवाशब्दापेक्षया विषयान्तरे तस्यैव कवेश्च्युतिं दर्शयितुराशङ्कामुद्धरति—कथं तर्हीति । चन्द्रमिति । अत्र प्रवृद्धोर्मिपदे उर्मिमालीतिपदे च स्थानद्वये । ऊर्मिपदग्रहणं कवेः निर्माणविधौ स्खलनमवधार्यते इति भावः । उच्यते इति समाधानग्रन्थः । श्लिष्टत्वादिति । अयमाशयः । "द्धोर्मिवोर्मि" इत्युभयत्र "ओर्मि" इत्यक्षरयोः मैत्री वर्त्तते । अतः तयोः यथोत्तरमुच्चारणे श्लिष्टतामनुभवता केनचित्पाठ इत्थमाकलितः । वस्तुतस्तु स पाठो हि "चन्द्रं प्रवृद्धो जलधिर्निशीव" इत्याकारको वर्त्तते इति ।

तं तस्थिवांसं नगरोपकण्ठे तदागमारूढगुरुप्रहर्षः ।
प्रत्युज्जगाम क्रथकैशिकेन्द्रश्चन्द्रं प्रवृद्धोर्मिरिवोर्मिमाली ॥ इति पूर्णं पद्यम् ।

ग्रामेऽस्मिन्निति । प्रियां स्मृत्वा गते तस्मिन् नायिका मृता इति तत्कृतपदार्थः । करङ्कः शवः । तदुद्देश्येन दण्डपतनमाशङ्कते यः स तथोक्तः । एष निर्यासः । कश्चित्पान्थो युवा वसतिमन्वेषमाणः काञ्चन नायिकामुपगतः सा च तत्तरुणिमानमवलोक्य सम्भोगलोभमसंवृण्वाना वसतिं प्रदातुमीहते परं प्रागकस्मादागतपथिकवृत्तस्य स्मरन्ती तं बोधयति । त्वमिव पूर्वमपि इहावसथे कश्चित्पान्थः समायातः । सच

तेनोद्धाय खलेन गर्जति घने स्मृत्वा प्रियां तत्कृतं
येनाद्यापि करङ्कदण्डपतनाशङ्की जनस्तिष्ठति ॥"

इत्यत्र हि काचित् वसतिं प्रार्थयमानं पथिकयुवानमुद्दिश्योत्पन्नमन्मथव्यथावेशा तस्यान्यानुरागितामाशङ्कमाना दारुणतरपरिणामोऽन्यासक्तजनानुराग इति न चेदसि कस्याश्चिदनुरक्तस्तदिदमखिलमेव गृहमयं च जनस्तवायत्त एवान्यथा गम्यतामिति स्वाभिप्रेतमर्थमस्मै निवेदयितुकामा पूर्ववृत्तान्तं वसतिविहितोपकारकामिनीमरणावेदनफलं वक्तुमुपक्रमत इति तदभिप्रायमविद्वांसस्ते पुरुषवधावेदनं तदिति मन्यमानास्तथैवापव्याचक्षते ।

तच्चायुक्तमेव रसभङ्गप्रसङ्गात । उभयोरनुरागातिशययोगेऽपि पुरुषवधवर्णनस्यात्यन्तमनुचितत्वात् खलार्थकरणार्थयोरसङ्गतिप्रसङ्गात् ।

न हि योऽस्ववशः सन् म्रियते तस्य तन्मरणं यद्यपि कस्यचिदुपकारायापकाराय वा स्यात् तदपेक्षमस्य सौजन्यं खलत्वं वा न शक्यं व्यपदेष्टुम् । तावभिसन्धाय मरणे तस्य तद्व्यपदेश्यत्वोपपत्तेः अन्यथातिप्र-

मधुसूदनीविवृतिः ।

अन्यासक्त आसीत् । अतः सामयिकमेघगर्जनोद्भूताह्लानादिसंस्कारः प्रियां स्मृत्वा वसतिप्रदानेन विहितोपकारामपि कामिनीं "त्वं मा गच्छ एकामेव निशां वस" इत्येवं सनिर्बन्धं प्रार्थयन्तीं विहाय गतः । सा च तद्विरहमसहमाना रात्रौ मृता प्रातर्दिवसे च श्रुतकेवलमरणवृत्ता राजकीयपुरुषाः तदीयशवोद्देश्येन तत्रत्याः बहवो जना दण्डिता अतः कोऽपि वसतिं दातुं न प्रभवति । यदि त्वमपि तादृशः तर्हि गच्छ नात्र वसतिः अन्यथा अन्यानुरक्तत्वे तदिदमखिलं गृहमयं च जनः तवायत्तः का कथा निवासस्येति ।

पुरुषवधावेदनमिति । प्रियां स्मृत्वा स पथिको मृत इति मरणं तत्कृतमित्यत्र तत्पदार्थो वर्त्तते इति केषाञ्चिद्व्याख्या अपव्याख्येति भावः ।

उभयोः स्मृतायाः नायिकायाः पथिकस्य चेत्युभयोः । ननु दृश्यन्ते एवंविधाः समाचारा लोके दुःखमसहिष्णूनां मरणादयः । ततः पुरुषश्चेन्मृतः किमाश्चर्यमित्यत आह—खलार्थेति । अयमाशयः । पुरुषश्चेदनुरागातिशयात्तदर्थं मृतस्तर्हि स खलत्वेन कथं व्यवहार्यः । एवं हि नाम भावुकतैव सर्वनाशमियात् । अथ स वस्तुतः खलः तर्हि मरणं कथं कुर्यात् । इत्यतः खलेनेतिपदार्थस्य तत्कृतमिति करणार्थस्य च असङ्गतिरेव स्यादिति ।

ननु स तु स्वप्रेयसीविरहेण मृतः परमन्ये तु विनापराधं राजकीयपुरुषैर्दण्डं लम्भिता इति परेषामपकारकर्तृत्वात्तस्य खलत्वमुचितमेवेत्यत्राह—नहि योऽस्ववश इति । यः पुरुषः अस्ववशः पराधीनः सन् म्रियते तस्य तत् मरणं नास्ति । इत्यन्यदेतत् यत्तस्य तन्मरणं कस्यचिदुपकारकम् अपकारकं वा भवेत् । अतः पराधीनमरणा-

सङ्गादिति तन्मतानुविधायिनोऽन्धपरम्पराक्रमेण व्याख्यातारोऽद्यापि तेनैवोपपत्त्यतिपातिना पथा सञ्चरन्त इति स्थितम् ।

ननु

यावद्भिरर्थैः सम्बन्धः प्राक्छब्दस्यावधारितः ।
तावत्स्वन्यनिराशंसः श्रुतः सन् कुरुते गतिम् ॥ १२ ॥
ततो यदर्थानुगुणा सामग्रयस्योपलभ्यते ।
स एवार्थो व्यवस्थाप्यः सत्स्वप्यन्येष्वबाधितः ॥ १३ ॥
तेनोभयार्थानुगुणो व्यनक्त्यर्थावुभावपि ।।
ययोः सामर्थ्यतः सिध्येदुपमानोपमेयता ॥ १४ ॥

---

मधुसूदनीविवृतिः ।

पेक्षम् तस्य उपकारकतया सौजन्यम् अपकारकतया खलत्वम् व्यपदेष्टुं न शक्यम् । मन्मरणे तव महान् लाभः अतोऽहं म्रिये, मन्मरणे त्वमप्यवश्यं मरिष्यसि तव सर्वनाशो भविष्यति। इत्येवमुपकारापकारौ तौ अभिसन्धाय निश्चित्य मरणे तस्य पुरुषस्य ताभ्यां खलत्वसौजन्याभ्यां व्यपदेश्यत्वस्य व्यवहार्यस्य उपपत्तेः सङ्गतेः अर्थात् बुद्धिपूर्वकं स्वेच्छया उपकारापकारौ मनसि निधाय मृतस्य सौजन्यं खलत्वं वा व्यवहर्त्तव्यम् । अन्यथा अस्ववशतया मृतस्य खलत्वादिव्यवहारे अतिप्रसङ्गः स्यात् । भावुकतैव पराहता स्यादिति तत्वम् । तावभिसन्धीय मरणे इति पाठः । एष एव पाठ उचितः प्रकृतार्थानुकूलश्च । तयोरभिसन्धाय करणे इति पाठे तु—अभिसन्धाय अस्योपकारेण मद्यशो विस्तृणातु अथवा एतत्करणेनास्य नाशो भवतु इति निश्चित्य तयोः उपकारापकारयोः करणे इति व्याख्यानुसन्धेया । दर्शितामुपपत्तिमतिपतति यस्तेन पथा मार्गेण सञ्चरन्ते गच्छन्ति । अन्यदपि पद्यं व्याख्यातृभिर्दूषितमिति प्रदर्शनार्थमेतदुदाहृतमिति बोध्यम् ।

ननु शब्दश्रुतौ यावन्तोऽर्थाः समुपतिष्ठन्ते तावतां मध्यात् अनुगुणसामग्रीलाभात् कदाचिदेकोऽर्थः कदाचिदुभौ वाऽर्थौ व्यवस्थाप्येते । उभयोपस्थितौ च सामर्थ्यात् अर्थान्तरेण उपमानोपमेयताऽपि सेत्स्यत्येव इत्थं शब्दस्य निर्निबन्धनता एव अर्थान्तरप्रत्यायने इत्याशङ्कते—नन्विति ।

यावद्भिरिति । प्राक् सङ्केतग्रहकाले शब्दस्य यावद्भिरर्थैः सह सम्बन्धेऽवधार्यते तावत्सु अर्थेषु विषये श्रुतः स शब्दः अन्यनिराशंसः अन्यविषयकाकाङ्क्षारहितः सन् गतिं ज्ञानं कुरुते ।

तत इति । ततो हेतोः अस्य यदर्थानुगुणा सामग्री लभ्यते अन्येषु अर्थेषु सत्सु अपि अबाधितः बाधारहितः स एव सामग्रीप्राप्त एवार्थः व्यवस्थाप्यः ।

तेनेति । तेन हेतुना उभयार्थानुगुणः शब्दः उभावपि अर्थौ व्यनक्ति । ययोरर्थयोः सामर्थ्यतः उपमानोपमेयता सिध्येत् ।

इत्थमर्थान्तरे बुद्धिं ध्वनिरेवादधात्ययम् ।
तन्निबन्धननिर्बन्धो निर्निबन्धन एव सः ॥ १६ ॥
एवञ्चात्मन्यधिक्षेप्ये किमर्थं तत्त्वदर्शिनः ।
व्याख्यातारोऽप्यधिक्षिप्ता मोहात् को वेत्ति वा हितम् ॥ १६ ॥

उच्यते--

यद्यप्यर्थेषु सर्वेषु प्राक्छब्दः कुरुते मतिम् ।
तथापि तद्व्यवस्थार्थं विशेषणमपेक्षते ॥ १७ ॥
तच्चेत् तद्वदनेकार्थं मुख्योर्थः कोऽवतिष्ठताम् ।
यस्तत्र प्राकरणिकः पौर्वापर्यगतिः कुतः ॥ १८ ॥
सा चेत् प्रकरणाद्यो हि प्रकृतस्तस्य सा पुरः ।
पश्चादन्यस्य सामर्थ्यगम्या तस्योपमानता ॥ १६ ॥
यतो न तावतैवायं व्यापारो विरतो ध्वनेः ।
व्यापारविरतौ हि स्यान्न ततोऽर्थान्तरे मतिः ॥ २० ॥

---

मधुसूदनीविवृतिः

इत्थमिति । इत्थम् अयं ध्वनिरेव शब्द एव अर्थान्तरे बुद्धिम् अवदधाति निश्चाययति । तत् तस्मात् निबन्धनिर्बन्धः अर्थान्तरप्रत्यायनाय कारणगवेषणतारूपबन्धनशून्यः स शब्दः निर्निबन्धन एव । सामग्रीबलात्स्वभावादेव अर्थान्तरं प्रत्याययतीत्यर्थः । एवञ्चेति । अर्थान्तरन्यासः—मोहादज्ञानात् को हितं वेत्ति न कोपीत्यर्थः ।

उच्यते—समाधातुमाह-यद्यपीति । तद्व्यवस्थार्थम् उपस्थितेषु बहुषु एकस्य निर्णयार्थम् । विशेषणमिति विशेषणसहायः शब्द एकमर्थं बोधयतीत्यर्थः । तच्चेदिति । चेद्यदि तद्विशेषणं तद्वत् शब्दवत् अनेकार्थम् तर्हि मुख्योऽर्थः कः अवतिष्ठताम् । इति शङ्का । उत्तरति । यस्तत्रेति । तत्र तेषु अर्थेषु यः मुख्योऽर्थः प्राकरणिकः स अवतिष्ठताम् ज्ञातव्यः । ननु अयमेव प्राकरणिक इति पौर्वापर्यस्य गतिर्ज्ञानम् कुतः ? प्रकरणात् सा भविष्यति इत्यर्थः ।

सा चेदिति । चेद्यदि सा पौर्वापर्यावगतिः प्रकरणात् । तर्हि यः प्रकृतः अर्थः तस्यार्थस्य सा पुरः अग्र एव । एवं हि पश्चात् उत्तरस्मिन् समये च अन्यस्य तस्य सामर्थ्यगम्या उपमानता स्यादेव ।

ननु पश्चात्कस्तां बोधयिष्यति शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति भयेन व्यापारविरते सतीत्याह—यत इति । यतः तावता एव प्राकरणिकार्थबोधेनैव ध्वनेः शब्दस्य व्यापारो न विरतः । यदि व्यापारविरतिं मनुते तर्हि ततः ध्वनेः शब्दस्य अर्थान्तरे मतिः अर्थान्तरविषयिणी बुद्धिर्न स्यात् अर्थान्तरस्य प्रतीतिः न स्यादित्यर्थः ।

ध्वनेरनेकार्थस्यापि यथा प्रकरणादिभिः ।
अनादृत्यैव तच्छक्तिं प्रस्तुतार्थविनिश्चयः ॥ २१ ॥
क्रियते तद्वदेवायं नेष्यतेऽर्थान्तरेऽपि किम् ।
को विशेषोऽस्य यदयं शब्दशक्तिनिबन्धनः ॥ २२ ॥
विशेषणानुगुण्यं चेदर्थान्तरगतेः पदम् ।
यतस्तदप्यनेकार्थमिष्टमेव विशेष्यवत् ॥ २३ ॥
अनेकार्थत्वमप्यस्य कुतस्तदवसीयते ।
एवमेवावसायश्चेद्विशेष्येऽवगतिर्न किम् ॥ २४ ॥
तत एव विशेष्याच्चेद् भवेदन्योन्यसंश्रयः ।
अथोभयपरामर्शादिष्यतेऽर्थान्तरे मतिः ॥ २५ ॥
स्यादेवं प्रकृतार्थश्चेत् सिध्येन्नायं तया विना ।
ततोऽनया विमर्शः स्यादन्यथातिप्रसज्यते ॥ २६ ॥

मधुसूदनीविवृतिः ।

ध्वनेरिति । यथा अनेकार्थस्यापि ध्वनेः प्रकरणादिभिः शक्तिमभिधाम् । तच्छक्तिमित्यत्र तदिति पाठोऽवकीर्णः । अनादृत्यैव संकोच्यैव प्रस्तुतार्थविनिश्चयः क्रियते तद्वत् अयं प्रकरणादिः अर्थान्तरेऽपि किं नेष्यते । कः अस्य अर्थान्तरस्य विशेषः यद् अयम् अर्थः ( द्वितीयः ) शब्दशक्तिनिबन्धनाधीनः ।

ननु शब्दश्चेत् अन्यप्रयुक्तं वैशिष्ट्यमनवलम्ब्यैव वाच्यार्थं द्वितीयार्थञ्च प्रत्याययेत् तर्हि सर्वोऽपि शब्दः सर्वमर्थं बोधयतु । एवं हि शास्त्रसिद्धान्त एव विप्लुतः स्यादिति अकामेनाऽपि त्वया अभ्युपेयं भविष्यति यत्कस्यापि वैशिष्ट्यमवलम्बते शब्दः । तच्च कस्येति गवेषणायां विशेषणस्यैवेत्यभ्युपगम्याह—विशेषणेति । चेत् विशेषणस्य आनुगुण्यमेव आनुकूल्यमेव अर्थान्तरगतेः पदम् चिह्नम् प्रत्यायकं कारणम् । यतः इति प्रश्नधिया व्याख्येयम् । तदपि विशेषणमपि विशेष्यवत् अनेकार्थम् इष्टमेव । तत्र पृच्छ्यते-अस्य विशेषणस्य तदनेकार्थत्वं कुत ? अवसीयते । एवमेव कारणं विना एव अवसायः इति चेत् ; तर्हि विशेष्ये कुतो ? न मन्यते अवगतिं तत्र कुतः ? कारणं मन्यते ।

ननु विशेष्यादेव तत्र अनेकार्थत्वावगतिरित्याह-तत एवेति । ततो विशेष्यादेव विशेषणे अनेकार्थत्वावगतिरिति चेत्तर्हि विशेष्ये कुतः ? वक्तव्यं चेद्विशेषणात् ; तर्हि अन्योन्याश्रयः स्यात् । ननु नैकस्मादुभयत्र अनेकार्थावगतिः । यदर्थमियम् अनेकार्थत्वावगतिः स्वीक्रियते स हि अर्थः ( द्वितीयः ) केवलविशेषणविशेष्योभयपरामर्शादेव प्रतीतो भविष्यतीत्याशयेन पक्षान्तरमाचिनोति—अथोभयेति । एवं स्यात् उभयपरामर्शादपि अर्थान्तरविषयिणी प्रतीतिः स्यात् चेद्यदि तया विना तयोरनेकार्थावगत्या विना अयम् अर्थः ( द्वितीयः ) सिद्धेत् प्रतीयात् प्रतीतो भवेत् ।

यतोऽनया विना न सिध्येत् ततः अनया एव विमर्शः स्यादिति मन्तव्यं स्यात् ।

तस्मादनेकार्थत्वेऽपि विशेषणविशेष्ययोः ।
अर्थान्तरप्रतीत्यर्थं वाच्यमेव निबन्धनम् ॥ २७ ॥

इति सङ्ग्रहश्लोकाः ।

अर्थशक्तिमूलः पुनरुपपद्यत एव धूमादिवाग्नेः सम्बन्धावधारणपुरस्सरीकारेण ततोऽर्थान्तरप्रतीतेरुपपादितत्वाद्, यथा 'एवं वादिनि देवर्षावि'त्यादौ लीलापत्रगणनं गौर्याः शब्दव्यापारं विनैवार्थान्तरं रतिभावव्यभिचारिलक्षणं लज्जादिकमनुमापयतीत्युक्तम् ।

सर्वोऽर्थः कवेः कविनिबद्धस्य वा वक्तुः प्रौढोक्तिमात्रनिष्पन्नशरीरः स्वतस्सम्भवी वास्तु । नैतावता तस्य गमकतायां फलभेदः कश्चित् ।

गम्यस्य पुनरर्थस्य प्राधान्यनिबन्धनो व्यपदेश इति तस्य प्रधानेतरभावेन द्वैविध्योपगमः सफल एव । तथाहि—

मधुसूदनीविवृतिः ।

अन्यथा तयोरनेकार्थत्वाऽस्वीकारे अतिप्रसज्यते अतिव्याप्तिः स्यात् ।

उपसंहरन्नाह—तस्मादिति । स्पष्टम् ।

एवमियता प्रबन्धेन शब्दशक्तिमूलं ध्वनिं विविच्य अर्थशक्तिमूलं तं विवेचयितुमवतरति—अर्थशक्तिमूल इति । नैतावतेति । एतावता वक्तृप्रौढोक्तिनिष्पन्नत्वस्वतःसम्भवित्वरूपभेदद्वयस्वीकारेण तस्य अर्थस्य गमकतायां फलभेदः । अर्थात् वक्तृप्रौढोक्तिनिष्पन्नार्थस्य गमकत्वं भिन्नफलं स्वतः सम्भविनोऽर्थस्य गमकत्वं भिन्नफलमित्येवम् भेदो नास्ति कश्चित् ।

इत्थं गमकहेतुकमर्थस्य भेदं निरस्य गम्याश्रयेण विवेचने अर्थस्य द्वैविध्यं भवत्येवेत्याह—गम्यस्य पुनरिति । प्रधानतामुपगतोऽर्थः गम्य इति अप्रधानः स वाच्य इति व्यपदिश्यते इति प्रधानाप्रधानभावेन तस्य अर्थस्य द्वैविध्योपगमः सफलः । इदं पुना रहस्यम् ।

प्रौढोक्तिमात्रनिष्पन्नशरीरः सम्भवी स्वतः ।
अर्थोऽपि द्विविधो ज्ञेयो वस्तुनोऽन्यस्य दीपकः ॥

इत्येवं ध्वनिमन्त्रा व्यञ्जकद्वैविध्यं स्वीकृत्य कारणभेदात्कार्यभेदः इति नयेन व्यङ्ग्यस्य फलस्य भेदः अर्थात् द्विविधत्वमङ्गीकृतं तदननेनैवम् निरस्य प्रधानेतरभावेन अर्थस्य द्वैविध्यमुपगतम् । अथ च प्रधानेन व्यपदेशा भवन्तीति उरीकृत्य

अलङ्कारान्तरस्याऽपि प्रतीतौ यत्र भासते
तत्परत्वं न वाच्यस्य नासौ मार्गो ध्वनेर्मतः ॥

यत्र वाच्यस्य व्यङ्ग्यप्रतिपादनौन्मुख्येन चारुत्वं न प्रकाशते नासौ ध्वनेर्मार्गः यत्र तु व्यङ्ग्यपरत्वेनैव वाच्यस्य व्यवस्थानं तत्र व्यङ्ग्यमुखेनैव व्यपदेशो युक्त इति तदुक्तमभ्युपगतम् । अत एव अलङ्कारध्वनेरुदाहरणानि विवेच्यन्ते । तथा

"प्राप्तश्रीरेव कस्मात् पुनरपि मयि तन्मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥"

इत्यत्र लक्ष्मीलाभलम्पटतया पयोनिधौ मन्थनव्यथावितरणं विलासालसतया योगनिद्रासुखास्वादो द्वीपान्तराधीशदशकन्धरनिधनधिया सेतुबन्धश्चेति भगवतो वासुदेवस्यामी व्यापाराः प्रसिद्धास्सन्तो यदन्यत्र राजादावारोप्य तस्य समीहितप्राप्त्या निषिध्यन्ते तेन तत्कार्यत्वात् कारणभूतभगवद्रूपतारोपमेव तत्रानुमापयन्तीति रूपकानुमितिरिति व्यपदेशः प्रवर्त्तते।

"ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वा
वादद्यूते सुचिरमभवत् सिद्धयूनोः कयोश्चित्।
एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥"

मधुसूदनीविवृतिः।

रूपकानुमितिरिति व्यपदेशः प्रवर्त्तते रूपकानुमितिर्व्यपदिश्यते रूपकानुमितिव्यपदेशो भवतीति मुहुर्मुहुः व्यपदेशपदमुपादीयते चेति।

प्राप्तश्रीरिति। कस्मिंश्चिदनन्तबलसमुदायवति नरपतौ समुद्रपरिसरवर्तिनि पूर्णचन्द्रोदयतदीयबलावगाहनादिना निमित्तेन पयोधेः कम्पो जातः। स च कस्मादित्यादि सन्देहेन दधत इवेति उत्प्रेक्ष्यते। इति ससन्देहोत्प्रेक्षयोः सङ्करात्सङ्करालङ्कारो वाच्यः। तेन च नृपतेः वासुदेवरूपता ध्वन्यते इत्यभिनवः।

ग्रन्थकारस्तु—पयोनिधिमथनादिव्यापाराणां भगवत्कार्यत्वेऽपि राजनि सम्भावनया आरोप्य निषिद्धत्वात् तस्य भगवद्रूपत्वमनुमापयति तद्यथा—राजा भगवद्रूपः भागवतकार्याश्रयत्वेन उच्यमानत्वात्। यथा भगवान् ॥ इति।

अमी मन्थनस्वापसेतुबन्धास्त्रयः। तस्य राज्ञः समीहितानां लक्ष्मीलाभः अनलसत्वं द्वीपनाथानुयातत्वं चेति इष्टानां प्राप्त्या लब्ध्या व्यापाराणां तत्कार्यत्वात् भगवत्कृत्यत्वात्। तत्र राजनि।

**स त्वमिति**। स उभयोर्निहन्ता त्वम्। अनुयोगः प्रश्नः। तस्य वधपौर्वापर्यप्रश्नस्य। तयोः वधपौर्वापर्यविपर्ययप्रश्नभगवतोरेव। सोऽयं प्रश्नः तद्रूपताम् भगवद्रूपताम्। तयोः राजभगवतोः। ज्योत्स्नेत्युदाहरणमभिनवगुप्ताचार्यानुमतम्। तन्मतेऽत्र भवतेत्यनेन "त्वं वासुदेव" इत्यर्थस्य स्फुटीकृतत्वान्न रूपकध्वनिरिति। वधपौर्वापर्यविपर्ययप्रश्नः भगवत्येवोपपद्यते न राजनि; परं प्रतिपाद्यते सेत्यनुपपद्यमानः प्रश्नो राज्ञो

इत्यत्र केशिकंसासुरयोः कतरो भवता पूर्वं हत इति योऽयं वधपौर्वापर्यविपर्ययानुयोगस्तस्य साक्षाद् भगवानेव विषयभावेन वक्तुमुचितो नापरो राजादिस्तयोरेव धूमाग्न्योरिव कार्यकारणभावप्रसिद्धेः। सोऽयमन्यविषयतयोच्यमानस्तत्र भगवद्रूपतारोपमन्तरेणानुपपद्यमानस्तद्रूपतामुपकल्पयं तयो रूप्यरूपकभावमनुमापयतीति रूपकानुमितिर्व्यपदिश्यते ।

"लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्
स्मेरेऽधुना तव मुखे तरलायताक्षि ! ।
क्षोभं यदेति न मनागपि तेन मन्ये
सुव्यक्तमेव जडराशिरयं पयोधिः ॥"

इत्यत्रापि यदेतत् कस्याश्चिद्यथोदितगुणगणोदितसौन्दर्यसम्पदि वदने सति समुद्रसंक्षोभाविर्भावस्योचितस्यापि कुतश्चित् कारणादभावाभिधानं तत्तस्य पूर्णेन्दुरूपतारोपमन्तरेणानुपपद्यमानं मुखस्य ताद्रूप्यमुपकल्पयत् पूर्ववत् तयो रूप्यरूपकभावमनुमापयतीति रूपकानुमितिव्यपदेशो भवति ।

केवलमिदमत्र विचार्यते—यदेतद्वदनेन्दुबिम्बसद्भावे सत्यपि पयोधेस्सलिलोल्लासलक्षणक्षोभाविर्भावनिबन्धनधिया सलिलसमूहमात्रपरमार्थ "यन्नास्य काचन चेतनचमत्कारककणिका समस्तीत्ये"वमर्थतात्पर्येण जलराशित्वमुपात्तं तत् तस्य सदैव सन्निहितमित्यनारोपितरूपयामिनीरमणोदयसमयेऽपि नास्य संक्षोभाविर्भावो भवेत् तदापि जलराशित्वाविशेषात् ।

मधुसूदनीविवृतिः ।

भगवद्रूपत्वमनुमापयति । अनुमानं तु राजा वासुदेवरूपः; श्लोकोक्तताद्दशप्रश्नस्य आश्रयत्वात् मुख्यवासुदेववत् ।

कुतश्चित्कारणादिति जडत्वाद्धेतोः तत् अभावाभिधानम् तस्य वदनस्य । ताद्रूप्यम् चन्द्ररूपत्वम् । तयोः मुखचन्द्रयोः ।

केवलमिदमत्र विचार्यते इति। अयं भावः। क्षोभं यदेति न मनागपीत्यत्र उपात्तः क्षोभपदार्थः कः । अथोच्यते सलिलोल्लास इति । तत्र वक्तव्यं स्यात्—यदि वदनेन्दुं दृष्ट्वा पयोधेः सलिलं नोल्लसति तद्बुद्ध्यैव केवलसलिलसमूहपरमार्थं जलराशित्वम् "काचनाऽपि चेतनचमत्कारककणिकाऽस्य पयोधेः नास्ती"त्येवमर्थतात्पर्येण उपात्तम्, तर्हि तत् जलराशित्वं सदैवास्य पयोधेः सन्निहितमतः मुख्यचन्द्रोदयेऽपि कुतोऽस्य सलिलोल्लासो भवितुं शक्येत यतः मुख्यचन्द्रोदयकालेऽपि जलराशित्वं समानमेवेति । कामिनीवदने अनारोतितं रूपं यस्य एवंभूतो यो यामिनीरमणस्तस्योदयसमयेऽपि ।

अथ मदनोन्मादलक्षणक्षोभाविर्भावनिबन्धनबुध्या सदसद्विवेकविकलोऽयं जड इति जाड्यप्रतिपादनपरतया तदुपादानमिति। एवमपि वदनस्य सौन्दर्यातिशयशालिनः सौभाग्यातिरेक एवानुमितो भवति, यथात्रैव पाठविपर्यासे सति—

"यत् प्रह्वभावमुपयाति न तेन मन्ये।
सुव्यक्तमेव जलराशिरयं पयोधिः" ॥

इति, न पुनः पूर्णेन्दुरूपत्वम्। तद्धि तत्कार्यस्य समुद्रसंक्षोभस्याविकलकारणतया सम्भाव्यमानोत्पादस्य सतः प्रतिबन्धकप्रत्ययबलादनुत्पादे सत्यनुमीयते नान्यथा। यथा—

"होइ ण गुणाणुराओ जडाण णवरं पसिद्धिसरणाण।
किरं पह्लवइ ससिमणी चन्दे ण पियामुहे दिट्ठे ॥

इत्यत्र प्रियामुखस्य पूर्णेन्दुरूपत्वं तत्कार्यस्य चन्द्रकान्तमणिप्रस्नुतिलक्षणस्य सम्भाव्यमानोत्पादस्य सतो जाड्यजनितप्रसिद्धिशरणत्वरूपप्रतिबन्धकप्रत्ययबलादनुत्पादे सत्यनुमीयते।

---

मधुसूदनीविवृतिः।

अथ मदनोन्माद इति। तर्हि तेन वदनस्य पूर्णेन्दुरूपत्वं कथं निश्चेतुं शक्यते। यतः तल्लक्षणक्षोभाभावधिया केवलं सदसद्विवेकवैकल्यरूपं जाड्यं प्रतिपादयितुं जडराशिरिति पदमुपात्तम्। तेन च वदनस्य सौन्दर्यातिरेकवतः सौभाग्यातिशय एव व्यज्यते न पूर्णेन्दुरूपत्वं कृतेऽपि अन्यादृशे पाठे। वयं तु ब्रूमः वदनस्य पूर्णेन्दुरूपत्वं तदैव अनुमातुं शक्येत। यदा स्वकार्यं समुद्रसंक्षोभं प्रति पूर्णेन्दोरविकलकारणता स्यात् तया च संक्षोभोत्पत्तिः सम्भाव्यते परं प्रतिबन्धकसद्भावान्नोत्पद्यते। अन्यथा अविकलकारणाभावे तु नानुमातुं शक्येतेति।

यथेत्यनेन अविकलकारणत्वेन सम्भाव्यमानोत्पादस्याऽपि प्रतिबन्धवशादनुत्पाद इति उदाहरणमुखेन दर्शयति—"होइण" इति।

भवति न गुणानुरागो जडानां केवलं प्रसिद्धिशरणानाम्।
क्षीरं प्रस्नौति शशिमणिश्चन्द्रे न प्रियामुखे दृष्टे ॥ इति छाया ॥

णवरमिति केवलार्थे देशीशब्दः इति भाषाविदः। सम्भाव्यमानोत्पादस्येति। अयमाशयः। पूर्णेन्दुं वीक्ष्य इन्दुकान्तः क्षीरं प्रस्नौति इति साधारणो नियमः। ततः प्रियामुखरूपमिन्दुं वीक्ष्याऽपि स तत्प्रस्नौति परं प्रसिद्धिमात्रशरणा जडा नेदं मन्वते। इत्येवं क्षीरप्रस्नुतिः सम्भाव्यमानोत्पादा परं जडादीनां तादृशाविश्वासात् प्रतिबध्यते ततश्च मुखस्य पूर्णेन्दुरूपत्वं बलादनुमितं भवतिः। स्थितिस्तु ईदृशी परं जडा न मन्वते इति कथनं कथं स्यात् मुखस्य तद्रूपत्वाभाव इति दिग्।

न चेह चन्द्रबिम्बकार्यस्य किमपि प्रतिबन्धकारणमुपात्तमिति कथं तस्य पूर्णेन्दुरूपतानुमितिसिद्धिः ।

यत्र हि यत्कार्यस्य यत्प्रतिबन्धनिबन्धनभावेनोपकल्प्यते तत्र तस्यैव तदुपादाने सत्यवसायो नान्यस्य अतिप्रसङ्गात् ।

मुखे च सौभाग्यातिरेककार्यस्य मदनोन्मादलक्षणस्य क्षोभस्याचेतनत्वं परमार्थजलराशित्वं प्रतिबन्धनिबन्धनभावेनोपात्तम् ।

अतस्तस्यैव तत्र प्रतीतिरुपपन्ना न चन्द्रत्वादेः । अन्यथा कमलत्वादेरपि सा स्याद् विशेषाभावात् ।

तस्मादुभयार्थसाधारणक्षोभपदप्रयोगमात्रविप्रलम्भकृतोऽयं मुखेन्दुबिम्बयो रूप्यरूपकभावभ्रम इति स्थितम् । तस्मादेवमत्र पाठः कर्त्तव्यः—

"क्षोभं यदेति न मनागपि तेन मन्ये
रूपान्तरं पतिरपां किमपि प्रपन्नः"

इति । अत्र हि न केवलं वदनस्येन्दुत्वं प्रतीयते, यावदपां पत्युः

मधुसूदनीविवृतिः ।

नन्वेहेति । इह क्षोभं यदेति न मनागपीत्यत्र चन्द्रबिम्बकार्यस्य संक्षोभस्य प्रतिबन्धकारणम् अभावहेतुर्नोपात्तम् । इति हेतोः तस्य मुखस्य पूर्णेन्दुरूपतायाः सिद्धिः कथं स्यात् ।

यत्र हीति । यत्र यद्वस्तु यत्सम्बन्धिकार्यस्य प्रतिबन्धकत्वेन उपादीयते तत्र स्थले तस्यैव सम्बन्धिनोऽवसायो निश्चयो; न अन्यस्य निश्चयः अतिप्रसङ्गात् इति तत्वम् ।

मुखे चेति । मुखे सति तत्सौभाग्यातिरेकस्य कार्यस्य मदनोन्मादलक्षणस्य समुद्रगतस्य क्षोभस्य उत्पत्तौ प्रतिबन्धनिबन्धनभावेन प्रतिबन्धकत्वेन पयोधेरचेतनत्वं परमार्थजलराशित्वं च उपात्तम् । अयं भावः । मुखं वीक्ष्य पयोधिर्न क्षुभ्यति तत्र क्षोभाभावे हेतुः तस्य अचेतनत्वं परमार्थजलराशित्वञ्च । अत्र क्षोभः कार्यम् । अतः तदुत्पत्तौ प्रतिबन्धकः इति वाच्यम् । अथवा तदभावे हेतुरिति वा वाच्यम् । अत्र तात्पर्यं सारं तच्चोभयथाऽपि लेखे एकमेवेति ।

अतस्तस्यैवेति । अयं सारः । मुखे सौभाग्यातिरेकसम्बन्धिकार्यस्य मदनोन्मादलक्षणस्य क्षोभस्य प्रतिबन्धकम् पयोधेरचेतनत्वं परमार्थजलराशित्वं च उपात्तम् । अतः अचेतनत्वपरमार्थजलराशित्वोपादाने सति तत्र मुखे तस्यैव सौभाग्यातिरेकस्यैव प्रतीतिरुत्पन्ना भवति न चन्द्रत्वादेः । अन्यस्यापि प्रतीतिश्चेत्तर्हि कुतः चन्द्रत्वस्यैव, कमलत्वादेः सा कथं न, समानन्यायात । यच्चात्र अन्यादृशो कैश्चित्प्रतीतिरास्थीयते ते तु उभयार्थसाधारणपदप्रयोगमात्रवञ्चिता एव । इति ।

अपां पत्युः शृङ्गारित्वमपीति । अनेकेषां जलाभिधेयानां सद्भावेऽपि स्त्री-

शृङ्गारित्वमपि । तेन तव वदनेन्दूदये सत्यनेकसुन्दरीरूपलावण्यसम्पदामन्तरङ्गोऽप्यपांपतिर्यन्न मनागपि क्षोभमुपयाति तन्मन्ये रूपान्तरं किमपि प्रपन्न इत्ययमर्थोऽवतिष्ठते । एष चानन्तरोक्तपाठार्थाद्विशिष्यते न वेति सहृदया एव प्रमाणमिति ।

यथास्थितपाठपक्षे तु नेदं रूपकानुमितेरुदाहरणमुपपद्यते ।

"वीराण रमइ घुसिणारुणम्मि ण तहा पिआथणुच्छङ्गे ।
दिट्ठी रिउगअकुम्भत्थलम्मि जह बहलसिन्दूरे ॥"

इत्यत्र कान्ताकुचतटकरिकुम्भस्थलयोः प्राकरणिकेतरयोः प्रमाणान्तरप्रतिपन्नसंस्थानविशेषयोः कुङ्कुमसिन्दूराहितलौहित्यलक्षणनिबन्धन सादृश्यावसायमूलोऽयमुपमानोपमेयभावावगम इति तस्यैव तत्र हेतुत्वम् अप्रतिपन्नसंस्थानस्यानिरूपितसाधारणधर्मस्वरूपस्य च सादृश्यावगमासम्भवाद् इत्युपमानानुमितिरितीयमुच्यते । एवम्—

"तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं निवेसिअं कुसुमबाणेन ॥"

इत्यत्रापि वेदितव्यम् । केवलमत्र साधारणो धर्मो लौहित्यलक्षणो रत्न उपमानेऽनुमेयो न शब्दोपारूढो, बिम्बरूपतयाधरस्य विवक्षितत्वात् ।

---

मधुसूदनीविवृतिः ।

लिङ्गस्य तत्रापि बहुत्वार्थकस्य अपामिति अप्पदस्य प्रयोगात्, अथच तासां बह्वीनां पत्युरित्युक्त्या पतित्वाभिधानेन एकत्र सर्वासां निर्बाधं सन्धारकत्वशक्त्यवगमाच्च शृङ्गारित्वप्रतीतिरिरिति हृदयम् ।

"वीराण" इति । अस्य छाया प्रागुक्ता । अयं सारः । लोकप्रमाणात् कुचस्य कुङ्कुमरक्तत्वं कुम्भस्य च सिन्दूररक्तत्वं प्रतीयते । तत्र रक्तत्वेन हेतुना कुचकुम्भयोः सादृश्यमवसितं भवति । यतो यत्र नेदृशी स्थितिस्तत्र न कोऽपि असाधारणोऽपि पुमान् तयोः सादृश्यमवबोद्धुं शक्नोति इति रक्तत्वस्यैव सादृश्ये हेतुत्वं तन्मूलश्चानयोरुपमानोपमेयभावः प्रतिपन्नो भवति । इति ।

तं ताण इति । इयमपि प्रागुक्तच्छायायां । अयमाशयः । यत्तेषां हृदयम् रत्ने संलग्नमासीत् तद्बिम्बाधरे संरक्तम् । यदि रत्नाधारयोः ऐकरूप्यं न चेत् तर्हि को वा ह्यनुन्मत्तः कारणं विना एकत्र संलग्नमपरत्र संरंजयेद्धृदयम् । अस्ति च संरक्तिः तत्कारणमपि तयोः सादृश्यमन्तरा किं वाऽवसेयमिति सादृश्यहेतुकस्तयोरुपमानोपमेयभावः इत्यत्रापि वीराणेतिपद्योक्तवत् स्थितिः । भेदः केवलमियान् यत् पूर्वत्र उपमानोपमेययोः लौहि' शब्दोपारूढम् अत्र च उपमाने रत्ने तदनुमेयं शब्दानुपारूढत्वात्, अधरस्य तु तदुपात्तमेव बिम्बतया विवक्षितत्वादिति ।

"स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं शक्तो ज्ञातुं महोदधेः ।"

इत्यत्र हयग्रीवगुणान् साकल्येनाभिधातुं न कश्चित् समर्थं इति साध्यम् । तत्र तदभिधानशक्तत्वस्य कुम्भकरणकाम्भोधिपरिच्छेदज्ञानशक्तत्वस्य चोभयोः प्राकरणिकेतरयोरेककर्तृनिष्ठयोस्समशीर्षिकयोपात्तयोस्तुल्ययोगितादिवद् गर्भीकृतोपमानोपमेयभावयोः परिकल्पितेन व्याप्यव्यापकभावेनोपनिबन्धो हेतुः ।

तयोर्हि व्यापकस्य धर्मस्य वृक्षत्वादेरिवाम्बुधेरम्भसः कुम्भैः परिच्छेदज्ञानशक्तत्वस्य प्रमाणान्तरावसितायामभावप्रतीतौ व्याप्यस्यापि शिंशपात्वादेरिव हयग्रीवगुणग्रामाभिधानसामर्थ्यस्याभावावगतिरिति तस्यामनुमेयत्वमिति ।

अतिशयोक्तिगर्भश्चायमुपमानोपमेयभावावसायो हयग्रीवगुणानां साकल्येनावर्णनीयतात्मकासाधारणविशेषप्रतिपादनपरमाक्षेपमाक्षिपतीत्याक्षेपानुमितिरित्युच्यते ।

"देव्वाअत्तम्मि फले किं कीरइ एत्तिअं उण भणामि ।
कङ्केल्लिपल्लवा पल्लवाण अण्णाण ण सरिच्छा ॥"

---

मधुसूदनीविवृतिः ।

स वक्तुमिति । इदं हृदयम् । केनचिदुक्तम्-अयं शिंशपाया वृक्षः । तत्र अन्येन प्रमाणैः तस्य वृक्षत्वमेव निरासितम् । ततश्च यथा व्यापकधर्मस्य वृक्षत्वस्य अभावनिश्चये व्याप्यो धर्मः शिंपपात्वं सुतरां निरस्तो भवति तद्वत् समुद्राम्बुनः कुम्भद्वारा इयत्तानिश्चायकसामर्थ्यस्य अभावप्रतीतिः प्रमाणैर्निश्चिता चेत् तर्हि हयग्रीवगुणग्रामाभिधानसामर्थ्यस्याभावावगतिरपि अर्थात् प्राप्तैव व्यापाकाभावेन व्याप्याभावस्य सिद्धेः । तथा च हयग्रीवगुणान् न कोपि साकल्येन वर्णयितुं समर्थः इत्याक्षिप्तं भवतीति आक्षेपालङ्कारोऽनुमीयते । इति ।

"देव्वा अत्तम्मि" इति । दैवायत्ते फले किं क्रियतामेतत् पुनर्भणामि ।
रक्ताशोकपल्लवाः पल्लवानामन्येषां न सदृशाः ॥ इत्यनुवादः ।

अशोकस्य फलमाम्रादिवन्नास्ति किं क्रियतां पल्लवास्त्वतीव हृद्या इतीयता अभिधा समाप्तैव। ततोऽत्र फलशब्दस्य शक्तिबलात्समर्थकमस्य वस्तुनः पूर्वमेव प्रतीयते। लोकोत्तरजिगीषातदुपायप्रवृत्तस्यापि हि फलं सम्पल्लक्षणं दैवायत्तं कदाचित्तु भवेदपीत्येवं रूपं सामान्यम् ।

नन्वत्र अर्थान्तरन्यासोपस्थापकस्य हिशब्दस्य आदिपरात् तदर्थस्यान्यस्य वा अप्रयोगात् यदा अर्थान्तरन्यास एव न बुध्यते तदा कुतस्तत्सामर्थ्यादन्यस्यावसायः ।

इत्यत्रार्थान्तरोपन्याससामर्थ्यादेव वस्तुनोः समर्थ्यसमर्थकभावाव- सायो न शब्दशक्तिमूल इति । तदर्थस्य हिशब्दादेरप्रयोगो गतार्थत्वात् ।

"हिअअट्ठाविअमण्णुं अवरुण्णमुहं पि मं पसाअन्त ।
अवरद्धस्स वि ण हु दे वहुजाणअ रोसिउं स्क्कम् ॥"

इत्यत्रानाविष्कृतकोपचिह्नायाः कस्याश्चिदन्तर्गतमन्योर्मानिन्याः केनचित् कृतागसा प्रसाद्यमानाया यत् तत्र रोषविषयेऽपि न तव रोषितुं शक्यमित्युक्तं तदनुपपद्यमानतया समर्थनीयमेवेति यत्तत्र वल्लभसम्बोधनद्वारेण बहुज्ञत्वमर्थान्तरभूतमुपात्तं तदेव तत्समर्थकहेतुतामुपयाति; तत एव हि परहृदयवेदिनि जने कः खलु कोपं कर्तुमर्हतीत्यस्यार्थस्य प्रतीतिसिद्धेः ।

द्विविधो हि हेतुरुक्तः शाब्दश्चार्थश्चेति । तेनेयमार्थस्य हेतोरुपादानादर्थान्तरन्यासानुमितिरित्युच्यते ।

"जाएज्ज वणुद्देसे खुज्जोच्चिअ पाअवो घडिअवत्तो ।
मा माणुसम्मि लोए ताएक्करसो दलिद्दो अ ॥"

---

मधुसूदनीविवृतिः ।

अतः शब्दशक्तेरेव वस्तुनोः सामर्थ्यसमर्थकभाव इत्यर्थान्तरन्यासस्य व्यङ्ग्यत्वमित्याक्षेपे आह—तदर्थस्येति । तदर्थस्य अर्थान्तरन्यासहेतुकस्य हिशब्दादेः अप्रयोगः गतार्थत्वात् । अर्थात् लब्धस्य शब्दतः पुनरुपादाने पुनरुक्तिः स्यादिति हिशब्दो नोपात्तः ।

"हिअअ" इति । हृदयस्थापितमन्युमपरोषमुखामपि मां प्रसादयन् ? ।
अपराद्धस्यापि न खलु ते बहुज्ञ ? रोषितुं शक्यम् ॥ इत्यनुवादः ।

हृदये स्थापितो न तु बहिः प्रकाशितो मन्युर्यया अत एवाप्रदर्शितरोषमुखामपि मां प्रसादयन् हेबहुज्ञ ? अपराद्धस्यापि तव न खलु रोषकरणं शक्यम् । अत्र बहुज्ञेत्यामंत्रणार्थो विशेषे पर्यवसितः । अनन्तरं तदर्थपर्यालोचनान्नायकनिष्ठरोषाभावनरूपं यत्सामर्थ्यं तद्रूपं समर्थकं प्रतीयते तदेव चमत्कारकारि। सा हि खण्डिता सती वैदग्ध्यानुनीता तं प्रत्यसूयां दर्शयन्तीत्थमाह । यः कश्चिद्बहुज्ञो धूर्तः स एवं सापराधोऽपि स्वापराधावकाशमाच्छादयतीति मा त्वमात्मनि मिथ्या बहुमानं ग्रहीरित्यभिनवः ।

महिमा तु । कांचिन्नायिकां रुष्टां कश्चित्कृतागाः प्रसादयति । प्रसाद्यमाना सा स्ववल्लभमेव अनुरुणद्धि यत् "बहुज्ञ ? अपराद्धेनाऽपि त्वया न रोषणीयमिति । परमियं प्रसन्नं प्रति रुष्टाया नायिकाया उक्तिरनुपपन्ना । अतः तदुपपादकः अर्थः त्वं बहुज्ञोऽसि अर्थात्त्वं परहृदयं जानासि तेन कस्त्वयि कोपं कर्त्तुमर्हति नाहं कुपिता इत्यादिरनुमितो भवति । ततश्चात्र अर्थान्तरन्यासोऽलङ्कारोऽनुमेयः इत्युच्यते । इत्याह

"जाएज्ज" इति । जायेय वनोद्देशे कुब्ज इव पादपो घटितपत्रः ।
मा मानुषे लोके त्यागैकरसो दरिद्रश्चेति ॥ इत्यनुवादः ॥

इत्यत्र यथोक्तस्वरूपस्याप्रस्तुतस्यैव वनपादपस्य, पुंसश्च कस्यचिद् दरिद्रस्य प्रस्तुतस्यानुपयोगितया निष्फलयोरुभयोरप्यनभिनन्द्यजन्मताप्रतीतौ तुल्यायां यदेतदेकस्यैव जन्मानभिनन्दनं नेतरस्य तत् तस्य शोच्यतातिरेकलक्षणं व्यतिरेकमनुमापयतीत्यस्य व्यतिरेकानुमितिव्यपदेशसिद्धिः।

"चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः।
मूर्च्छयत्येष पथिकान् मधौ मलयमारुतः॥"

इत्यत्र चन्दनासक्तभुजगनिःश्वासानिलसम्पर्कमात्रेण मूर्च्छाहेतुत्वं मलयमारुतस्य मुख्यमनुपपद्यमानं मूर्च्छाकारित्वलक्षणात् साधर्म्यात् सिंहो माणवक इत्यत्र सिंहत्वमिवोपचरितमाश्रीयत इतीवार्थमनुमापयति।

---

मधुसूदनी विवृति।

वनस्य उद्देशे उत्क्रान्ते देशे अर्थात् एकान्ते गहनप्रदेशे यत्र स्फुटतरबहुवृक्षसम्पत्त्या प्रेक्षतेऽपि न कश्चित्। कुब्ज इवेत्येन कार्यानुपयोगित्वं ध्वन्यते। घटितपत्रः त्रुटितपत्रः इत्यनेन छायाराहित्यं फलपुष्पाभावश्च सूच्यते। जायेथ इत्यनेन तादृशोऽपि कदाचिदङ्गारोपयोगितया जनशैत्यनिवर्त्तनक्षमत्वम् उलूकादिनिवासयोग्यत्वञ्च स्वस्य प्रकाश्यते। मा मानुषे इत्युत्तरार्द्धेन अर्थिनां बाहुल्यात् प्राचीनाऽभ्यासवशात् यत्र आलोक्यते तत्रैव सोऽर्थिभिः प्रार्थ्यते परं धनाभावात् न किञ्चिदुपकर्त्तुं शक्यते इति महद्वैशसमिति द्योत्यते। ततो वनपादपजन्माभिनन्दनेन दरिद्रपुरुषजन्मानभिनन्दनेन च वनपादपदरिद्रपुरुषयोरुपमानोपमेयभावप्रतीतिपूर्वकः वनपादपापेक्षया दरिद्रपुरुषस्य शोच्यतातिरेकलक्षणो व्यतिरेको व्यज्यते इत्यानन्दः अनुमीयते इति ग्रन्थकारः।

एकस्यैव दरिद्रस्यैव। इतरस्य पुंसः। तत् अनभिनन्दनम्। तस्य दरिद्रस्य वनपादपभवनापेक्षया दरिद्रपुरुषभवनं, शोच्यतास्पदम्, कथमपि कस्यापि उपयोगराहित्यात्। मूर्खवत्। यन्नैवं तन्नैवं यथाम्रपादपः। इत्यनुमापयति।

चन्दनासक्तेति। मधौ वसन्ते चन्दनेष्वासक्तानां भुजंगानां निःश्वासानिलेन मूर्छितः सम्पृक्तः एष मलयमारुतः दक्षिणानिलः पथिकान् मूर्च्छयति व्याकुलीकरोति। सुखविशेषानुभवकाले सर्वोऽपि जनः समुत्सुकीभवति सुहृदः प्रतीति साधारणी व्यवस्था। तत्र वसन्ते दक्षिणानिलसम्पर्कजनितसुखानुभवसमये केचित् विरहिणः उत्सुकाः सन्तः प्रियां स्मरन्तः असह्यतया विरहस्य व्याकुला बभूवुरिति वस्तुस्थितिः। तत्र तथाविधं वस्तु एवमुत्प्रेक्ष्यते—नैमे असह्यविरहेण मलयमारुतसम्पर्कोत्पन्नमदनेन व्याकुलाः परं भुजगश्वासमारुतसम्पर्केण तथा जाता इत्युत्प्रेक्षा व्यज्यते। इत्यानन्दः।

केवलं भुजगश्वाससम्बन्धेन मलयमारुते पथिकमूर्च्छाहेतुत्वं न सङ्गच्छते यतो

मुख्यतानुपपंत्तौ च निमित्तं भुजगनिःश्वाससमीरसम्पर्कमात्रेण मलयमारुतस्य न्यग्भावभाजो बहलीभावासम्भवः ।

यद्वा मुख्यमर्थमनादृत्यार्थान्तरे प्रयुज्यमानः शब्दो यथाकञ्चित् सादृश्यमेवावगमयति ।

न चैवंविधे विषये इवादिप्रयोगमन्तरेणासम्बद्धार्थतैवेत्याशङ्कनीयं प्रकरणादितोऽप्यर्थस्य स्वसौन्दर्यादेव वार्थान्तरावगतेः, यथा—

'ईसाकलुसस्स वि तुह मुहस्स णं एस पुण्णिमाचन्दो ।
अज्ज सरिसत्तणं पाविऊण अङ्गे व्विअ ण माइ ॥"

---

मधुसूदनीविवृतिः ।

मूर्च्छाकारित्वं नाम विषस्य धर्मः । ततश्च असङ्गच्छमानः स धर्मः यथा सिंहो माणवक इत्यत्र माणवकस्य क्रूरत्वतेजस्वित्वादिसाधर्म्यात् सिंहत्वमुपचर्यते तथैवात्र मलयमारुतेऽपि असह्यमन्मथव्यथोद्रेकेण मूर्च्छाकारित्वरूपसाधर्म्यात् पथिकमूर्च्छा हेतुत्वमुपचरितमाश्रीयते इति इवार्थं सादृश्यमनुमापयति । मलयमारुतः, विषसदृशः ; मूर्च्छाकारित्वात् हालहलवत् । इति महिमा ।

मुख्येति । मलयमारुतनिष्ठमूर्च्छाहेतुत्वस्य मुख्यताया अनुपपत्तौ निमित्तं कारणं भुजगश्वाससम्पर्केण मलयमारुतस्य वृद्धेरभावः अर्थात् यथा प्रसरत् विषं मोहं जनयति तथा न मलयमारुतः तत्सम्पर्कणेण प्रसरति प्रत्युत तत्सम्पर्केण स न्यग्भूत एव स्यात् ।

ननु वायौ प्रसरणात्मिका शक्तिः स्वाभाविकी एव ततश्च मलयमारुतस्तद्वत् न प्रसरति इति किमुच्यत इत्यरुचेराह—यद्वेति । अयं भावः । अन्यार्थे अन्यार्थकशब्दप्रयोगः सहेतुकः प्रकृते च तादृशः प्रयोगः इति तत्र साधर्म्यात् कस्माचिदपि सादृश्यमेव बोधयतीति ।

नचैवमिति । ननु यत्र यथेवादिशब्दाः प्रयुज्यन्ते तत्रैव सादृश्यप्रतीतिर्भवति न चात्र प्रयुक्ता इति तानन्तरेण असम्बद्धार्थता एवेति चेन्न । प्रकरणादिभिर्वा वस्तुतः स्वाभाविकसौन्दर्यादेव वा इवादेरप्रयोगेऽपि अर्थान्तरस्य सादृश्यस्य अवगतेः प्रतीतेः ।

यथेत्यनेन इवाद्यभावेऽपि सादृश्यप्रतीतिर्भवति इत्युदाहरणेन सङ्गमयति—ईसाकलुसस्सेति । ईर्ष्याकलुषस्यापि तव मुखस्य नन्वेष पूर्णिमाचन्द्रः ॥

अद्य सदृशत्वं प्राप्याङ्ग एव न माति । इति संस्कृतम् ॥

हे तरुणि ! एष पूर्णिमाचन्द्रः ईर्ष्यया कलुषस्यापि ईषदरुणच्छयाकस्याऽपि अर्थात् अप्रसन्नस्याऽपि तव मुखस्य प्रसन्नस्य तु सादृश्यं मनोरथामपि अपथमिति भावः । अद्य इयता कालेन एकं दिवसमात्रम् । सदृशत्वं प्राप्य अङ्ग एव न माति बहिरुच्छलति प्रसरतीत्यर्थः ननु, । यथा घटे भ्रियमाणं जलं पूरणोत्तरं बहिरागच्छत् पार्श्वस्थितानि वस्तून्यपि आर्द्राणि करोति तथैवह राकाचन्द्रेऽपि मन्ये त्वन्मुखसादृश्यलाभो

इत्यत्रेवशब्दस्य । यथा च—

'त्रासाकुलः परिपतन् परितो निकेतान् ।
पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि ।
तस्थौ तथापि न मृगः क्वचिदङ्गनाभिराकर्णपूर्णनयनेषुहतेक्षणश्रीः ॥"

इत्यत्र । शब्दार्थव्यवहारे च प्रतीतिरेव प्रमाणम् । प्रतीतार्थश्च शब्दः प्रयुज्यमानः पौनरुक्त्यमेवावहतीति अत्रेवार्थस्यावगमादुत्प्रेक्षानु-

---

मधुसूदनीविवृतिः ।

द्रिक्तानन्दः अमान् सन् सर्वं भुवनं प्रकाशयति । तच्च भुवनप्रकाशनं पूर्णचन्द्रस्य नैसर्गिकं वृत्तं तदेवोत्प्रेक्षितं । तेन च उत्प्रेक्षायाः सादृश्यमूलत्वात्त्वन्मुखं पूर्णचन्द्र इति मुखचन्द्रयोः सादृश्यमर्थात्प्रतीतमिति ।

इत्यत्र इवशब्दस्येति । अत्र पद्ये इवशब्दस्य अप्रयोगः सादृश्यव्यक्तये इति शेषः । व्विअ इति एवकारार्थोऽव्ययः न तु इवकारार्थः "वच्च मह व्विअ" इत्याद्युदाहरणेषु तथा दर्शनात् ।

नन्वत्र चन्द्रकर्तृकं भुवनप्रकाशनमुत्प्रेक्ष्यते तत्र नैषा राजाज्ञा यदिवशब्द एव तद्व्यञ्जकः तत एव असबद्धतानिराकरणं च ।

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥

इत्युक्तेः वितर्कोत्प्रेक्षाया व्यञ्जकेन ननुशब्देनाऽपि असम्बद्धतानिराकृता भवतीत्यरुचेरुदाहरणान्तरमाचिनोति-यथा चेति । त्रासाकुल इति । त्रासेन भयेन अकुलः अत एव निकेतन् परितः । अभितः परितः समयेति वार्तिकेन द्वितीया । गृहाणाम् सर्वतः इति भावः । परिपतन् कैश्चिदपि पुम्भिः धन्विभिः न अन्वबन्धि तथाप्यसौ क्वचिदपि न तस्थौ । तस्य स्वाभाविकत्रासाकुलत्वचपलत्वयुक्तत्वात् । तत्र मृगस्य स्थित्यभावे उत्प्रेक्ष्यते-अङ्गनाभिरिति । अङ्गनाभिः नायिकाभिः आकर्णपूर्णैः नयनरूपैरिषुभिः हता ईक्षणश्रीः नेत्रशोभा सर्वस्वभूता यस्य अत एव न तस्थौ । इत्यत्र इवशब्दस्य अप्रयोगः ।

नन्वेतदपि पूर्ववदसम्बद्धमेवास्तु प्रमाणाभावादित्याशङ्कायामाह—शब्दार्थेति । अयं भावः । अयं शब्द एतदर्थवाचकः अयमर्थ एतच्छब्दगम्यः इति व्यवहारे सहृदयानां गोष्ठीषु यादृशी प्रसिद्धिः सैव प्रमाणम् । तात्त्विकाः तन्मर्मविदः काव्यभावना परिपक्वान्तः करणाः सहृदया यद् प्रमिणवन्ति तदेवान्यैः तत्पथप्रवृत्तैः बोधव्यम् । सहृदयाश्चात्र एवमनुमन्वते इति न काचिदसम्बद्धतेति ।

अथ अर्थादर्थान्तरावगतिरियं नोत्प्रेक्षयामेव दृश्यते यतोऽन्यत्राऽपि इति दर्शयितु-

र्मितिरित्येषा व्यपदिश्यते । एवम्—

"अत्युच्चपदाध्यासः पतनायेत्यर्थशालिनां शंसत् ।
आपाण्डु पतति पत्रं तरोरिदं बन्धनग्रन्थेः ॥"

इति निदर्शनानुमितावप्यवसेयम् ।

"रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः ।
यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः ॥"

इत्यत्र वाक्यार्थप्रतीतेरनन्तरमुपमाप्रतिभोद्भेदनिबन्धनभूतं न किञ्चिदवधारयामः, यत्सामर्थ्याद् वध्व इव वलभ्य इत्यमुमर्थमवगच्छेम । न चोभयार्थसाधारणस्य वलभीविशेषणकलापस्यैव तत्र निबन्धनभावोऽवगन्तुं युक्तः; तस्य भिन्नविभक्तिकस्य वधूभिरभिसम्बन्धानुपपत्तेरित्युक्तमेव ।

अथ सममित्यस्य तुल्यार्थस्य वधूवलभीसम्बन्धबलात् विभक्तिविपरिणामेन कल्पिततदुचितविभक्त्यन्तानां वधूनां विशेषणकलापाभिसम्बन्धसहत्वाद् वलभीभिरुपमानोपमेयभावावगतिर्भवति, यथा सममिन्दुना सकलकलोऽब्धिरुत्थित इति ।

---

मधुसूदनीविवृतिः ।

माह—एवमिति । अत्युच्चेति । अत्र "यः अत्युच्चपदाध्यासः स पतनाय" इत्येवं यत्तदोरभावात् निदर्शनायाः गम्यत्वम् । अत्युच्चपदाध्यासः पतने कारणं यथा पत्रस्येति दृष्टान्तपर्यवसानान्निदर्शनात्वम् ।

रम्या इतीति । यस्यां द्वारकायां पुरि युवानः रम्या इति हेतोः पताकाः ध्वजपटान् प्राप्तवतीः । अन्यत्र वधूपक्षे रम्या इत्येवंरूपेण पताकाः प्रसिद्धीः सौभाग्यानि प्राप्तवतीः । प्रसिद्धिं गता इत्यर्थः । पताकाः वैजयन्त्यां च सौभाग्येऽङ्कध्वजेऽपि च इति । इति हेतोः प्रकरणे प्रकारादिसमाप्तिषु इति विश्वः । विविक्ताः विजना विमलाश्च इतिहेतो रागं कामं चित्रार्थं मनसिलासिन्दूरादिकं च बर्द्धयन्तीः । शोभने हि स्थाने असकृद् बहुविचित्रं चित्रं क्रियते । नमद्वलीकाः नम्रनीध्राः । वलीकनीध्रे पटलप्रान्ते इत्यमरः । वधूपक्षे नमन्त्यो वल्यः त्रिवल्याख्या मध्यरेखा यासां तानद्वलीकाः । वलीमध्यमरेखोर्मिजीर्णत्वग्गृहदारुषु इति वैजयन्ती । वलभीः कूटागारणि । कूटागारं तु वलभी इत्यमरः । वधूभिः समं यथा स्यात्तथा असेवन्त । वध्वः युवभिः साकं युवानश्च ताभिः साकं वलभीषु क्रीडामकुर्वन् । इति भावः ।

अत्र वाक्यार्थस्य वधूभिः सह वलभीरसेवन्तेत्यस्य प्रतीतेरनन्तरं वध्व इव वलभ्य इत्युपमायाः प्रतिभोद्भेदस्य बुद्धिसमुत्पत्तेः निबन्धनभूतं कारणभूतं किञ्चिदपि न अवधारयमः । यस्य कारणस्य सामर्थ्यात् बलात् वध्व इव वलभ्य इति अमुम् अर्थं सादृश्यरूपम् अवगच्छेम । वधूवलभ्युभयार्थयोः साधारणस्य समानस्य द्वितीयान्तस्य

**एवं तर्हि तुल्यतासम्बन्धावधारणनिबन्धनेयं वधूवलभीनामुपमानोपमेयभावावगतिरिति नासावनुमेयतामभिपततीति श्लेषानुमितिरित्युच्यते।**

मधुसूदनीविवृतिः ।

वलभीविशेषणकलापस्य एव तत्र वध्व इव वलभ्य इत्यर्थावगमे निबन्धनभावः अवगन्तुं न युक्तः । तस्य वलभीविशेषणकलापस्य द्वितीयान्तत्वेन भिन्नविभक्तिकस्य तृतीयान्तैः वधूभिः सह अभिसम्बन्धस्य अनुपपत्तेः । इत्युक्तमेव द्वितीयविमर्शे इति शेषः ।

ननु विभक्तिभेदेऽपि सममिति तुल्यार्थकपदोपादानात् तदभिसम्बन्धाक्षेपकं साधर्म्यमिह निबद्धमस्तीत्यभ्युपगम्याह—अथ सममित्यस्येति । अथेति पक्षान्तरे । तुल्यार्थस्य सममित्यस्य उपादानात् संभाव्यमानः यो वधूवलभीसम्बन्धः तद्बलात् विभक्तिविपरिणामेन कल्पिता याः तदुचिताः विशेषणान्वयोचिताः विभक्तयः तदन्तानां वधूनां वलभीविशेषणकलापेन सह अभिसम्बन्धसहत्वात् वलभीभिः सह उपमानोपमेयभावस्य अवगतिर्भवति—यथा सममिन्दुना सकलकलोऽब्धिरुत्थितः इत्युदाहरणे इन्द्वब्ध्योः विभिन्नविभक्तिकयोरपि तुल्यार्थकसममितिपदोपस्थितसाधर्म्यबलात् विभक्तिविपरिणामेन अन्वयो भवति तथा प्रकृते भविष्यति इति उच्यते चेत् । तर्हि एवमपि तुल्यताया बलात् यत् वधूवलभीसम्बन्धावधारणं तन्निबन्धना इयं वधूवलभीनामुपमानोपमेयभावावगतिरित्यतः असौ तदवगतिः शाब्दत्वात् अनुमेयतां नाभिपतति इति श्लेपानुमितिरेव इयमित्युच्यते ।

अयं भावः । वधूवलभीनां विभक्तिभेदात् परस्परमसम्बन्धात् उपमाप्रतिभोद्भेदे किञ्चित्कारणं नास्ति । अथ सममित्यस्य तुल्यार्थवाचकत्वात् साधर्म्योपस्थितौ उपमाप्रतीतिर्भविष्यति इति । सत्यम् । परं सा नानुमेया । किन्तु सममित्यस्य सहार्थित्वेन गतार्थतया साधर्म्यस्याभात् प्रत्युत श्लेषवशात्तदुपस्थितेः श्लेष एवानुमेय इति श्लेषानुमितिरित्युच्यते इति ।

सममिति निपातः स्पष्टं साधर्म्यार्थवाचको भवेच्चेत् तदा उपमायाः स्पष्टत्वात् श्लेषः उपमाक्षिप्तो भवेत् । परं स निपातः अञ्जसा सहार्थवृत्तिरिति व्यञ्जकबलेनैव क्रियाविशेषणतया शब्दश्लेषतामेति । न च तेन विना अभिधाया अपरिपुष्टतास्ति काचित् । यदि यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र अभिधैव अपरिपुष्टा अपरिसमाप्ता इति सैव स्वार्थनिर्वाहाय अर्थान्तरं शब्दान्तरं वा आकर्षतीति श्रुतार्थापत्तेः प्रसङ्गः तद्वदत्र अभिधाया अपरिपोषो नास्ति किन्तु परिपुष्टायां परिसमाप्तायामेवाभिधायां सहृदयैः स वधूपयोगी द्वितीयोर्थः पृथक् प्रयत्नेनावगम्यते इति सर्वथा ध्वन्यमान एव श्लेष इत्यभिनवगुप्ताचार्याशयः ।

अथ विभक्तिभेदात् द्वितीयान्तविशेषणसमर्पितार्थान्तराणाम् न शब्दसामर्थ्येन वधूभिरन्वयः । न च विभक्तिभेदेऽपि तदन्वयाक्षेपकं साधर्म्यमिहास्ति । ननु सममि-

"अङ्कुरितः कोरकितः पल्लवितः कुसुमितश्च सहकारः ।
अङ्कुरितः कोरकितः पल्लवितः कुसुमितश्च हृदि मदनः ॥"

इत्यत्र मुख्यामुख्याङ्कुरितत्वादिधर्मविशिष्टयोः सहकारमदनयोः प्रमाणान्तरावगतकार्यकारणभावयोरत्यतिशयोक्तिच्छायया यस्तुल्यकालतयोपनिबन्धस्तत्र कार्यकारणधर्माणां यथाश्रुतक्रमं संख्यासाम्यमेव यथासङ्ख्यमनुमापयति, यथाश्रुतक्रमातिक्रमे प्रयोजनाभावात् निबन्धनाभावाच्च को ह्यविप्लुतमतिरसति बाधके श्रुतमर्थमनादृत्याश्रुतं परिकल्पयेदिति यथासङ्ख्यानुमितिरितीयमुच्यते ।

यत्र प्रकरणादिप्रतिपत्त्यानुमितविशेषो वाच्योऽर्थः प्रतीयमानस्यार्थस्य लिङ्गभावमुपयाति सोऽप्यनुमानस्यैव मार्गः ।

---

मधुसूदनीविवृतिः ।

त्यस्य तुल्यार्थत्वात् साधर्म्यलाभे तदन्वयाक्षेपो भविष्यति इति चेत्, तस्य सहार्थत्वे नाप्युपपन्नत्वं गृहाण । अथ च वधूषु श्लिष्टविशेषणार्थान्वयात्प्राग् द्रागप्रतीतं साम्यं लभ्यते । तस्मादर्थसौन्दर्यबलादेव तदन्वयानुसन्धानम् । तदनु तद्बलादेव समशब्दस्य साधर्म्यार्थकल्पनमिति वाच्यस्यैव,उपमालङ्कारस्योपपादकः श्लेषः इति न श्लेषध्वनिः किन्तु गूढः श्लेष इत्यप्पय्यदीक्षिताशयः ।

अत्र वधूनां वलभीनां च प्रकृतानामेव धर्मसाधर्म्येण औपम्यावगमात् केवलप्रकृतगोचरा तुल्ययोगिता न श्लेषः। श्लेषे हि विशेष्यस्य श्लिष्टत्वनियमात् । यथाहुः—

प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः ।
औपम्यं गम्यते यत्र सा मता तुल्ययोगितेति ॥ इति मल्लिनाथः ।

**अङ्कुरित इति ।** अङ्कुरितत्वादीनां धर्माणाम् मुख्यत्वं सहकारे अमुख्यत्वं मदने । **प्रमाणेति ।** प्रफुल्लितं सहकारादि दृष्ट्वा कामोद्रेको भवतीति अध्यात्म प्रमाणेन अवगतः कार्यकारणभावोः ययोस्तयोः सहकारमदनयोः सहैव अङ्कुरितत्वादीनां दर्शनात् कारणकार्यपौर्वापर्यविपर्ययरूपा अतिशयोक्तिर्भासते तस्याः छायया यः तुल्यकालताया उपनिबन्धः तत्र सहकारमदनयोः कार्यकारणधर्माणां यथाश्रुतक्रमं संख्यायाः साम्यमेव यथासंख्यालंकारमनुमापयति । तादृशक्रमोल्लङ्घने प्रयोजनं नास्ति कारणं च नास्ति । बाधके सति तथाऽपि कर्त्तुं शक्येत परं असति बाधके न कोप्यनुन्मत्तः पुमान् श्रुतं परित्यज्य अश्रुतं परिकल्पयेत् । अतः यथासंख्यानुमितिरियमुच्यते ।

अत्र हि यथोद्देशमनुद्देशे यत् चारुत्वमनुम्वानरूपम् मदनविशेषणभूताङ्कुरितादिगतं तत् मदनसहकारयोः तुल्ययोगितासमुच्चयलक्षणाद्वाच्यादतिरिच्यमानमालक्ष्यते इति ध्वनिप्रस्थापनपरमाचार्याः ।

**यत्रेति । अयं भावः ।** ध्वनिमन्तृभिः यत्र वाच्यप्रतिपत्तये व्यङ्ग्यस्य अपेक्षणेऽपि यदि वाच्यस्य व्यङ्ग्यान्तरोन्मुखत्वं प्रतीयात् सोऽपि ध्वनिमार्गः इति

यथा—

"उच्चिणसु पडिअकुसुमं मा धुण सेहालिअं हलिअसोह्न ? ।
अह दे विसमविराओ ससुरेण सुओ वलयसद्दो ॥"

इति । अत्र ह्यविनयपतिना सह रममाणा काचित् बहिश्श्रुतवलयकलकलया सख्या प्रतिबोध्यत इत्येतदपेक्षणीयं वाच्यस्य प्रतिपत्तये प्रतिपन्ने च वाच्येऽर्थे तस्याविनयप्रच्छादनतात्पर्येणाभिधीयमानत्वादनुमेयाङ्गत्वमेवेत्यस्यानुमान एवान्तर्भावः ।

एवमन्यासामपि वाच्यव्यतिरेकिणीनामलङ्कृतीनां यथायोगमनुमानान्तर्भावः स्वयमेवानुसर्त्तव्यः ।

एवं वस्तुमात्रादीनां गम्यत्वं प्रतिपाद्येदानीं वर्णपदवाक्यसङ्घटनादीनां गमकत्वं प्रतिपाद्यते ।

तत्र वर्णसङ्घटनानां तावद् गमकत्वमर्थद्वारकमेव । तथा हि विशिष्टवर्णसङ्घटनोपकृतशब्दप्रतिपादितेनार्थेन रत्यादयः स्थायिनोऽनुमीयमानाः स्पष्टतरमवभासन्त इति शब्दोपाधिभूतयोर्वर्णसङ्घटनयोरपि गमकत्वमुपपन्नमेव पारम्पर्येण, न साक्षात् ।

तथाविधशब्दसन्दर्भाभिहितस्यार्थस्य रत्यादेश्च भावस्य तार्णपर्णयोरिव धूमाग्न्योः कार्यकारणभावेनावस्थानात् ।

तथा हि ये रतिशोकाक्रान्तान्तःकरणाः ये च क्रोधोत्साहादिविवशास्ते मधुरतरवर्णविरचितामसमासप्रायां रेफशकारटकारकर्कशां दीर्घ-

---

मधुसूदनीविवृतिः ।

स्वीकृतं तदेव अनेन ध्वनिस्थाने अनुमानपदं निवेश्य अविकलमुद्धृतमिति ।

"उच्चिणसु" इति । उच्चिनु पतितकुसुमं मा धुनु शेफालिकां हालिकस्नुषे ?
एष ते विषमविरावः श्वशुरेण श्रुतो वलयशब्दः । इति छाया ।

अत्र काचित् परपुरुषेण रममाणा सख्या बोध्यते इति व्यङ्ग्यं विना वाच्यार्थ एव न उपपद्यते । तदुपपन्नश्च वाच्यार्थः अविनयप्रच्छादनयोक्तिरियमिति व्यङ्ग्यानुगुण्यं प्रतीयते अतः ध्वनिरेवास्ति इति आनन्दः । अत्र व्यङ्ग्यपदस्थाने अनुमेय पदयोजनेन पाठ्योजने ग्रन्थाशयो लभ्यते ।

"एवमन्येप्यलंकारा यथायोगे योजनीया" इति द्वितीयोद्योतस्थां ध्वनिकारोक्तिमनुवदति एवमन्यासामिति ।

एवं द्वितीयोद्योतस्थं ध्वन्यालोकीयं वस्तु विविच्य तृतीयोद्योतस्थं विवेचयितुमुपक्रमते—एवं वस्तुमात्रादीनामिति ।

तार्णपर्णयोरिवेति । तृणपर्णयोः भवयोः तार्णपर्णयोः धूमाग्न्योरिव

समासभूयिष्ठां च सङ्घटनामाश्रित्य भूम्ना भाषमाणा दृश्यन्त इति स्वभाव एवायम् ।

सङ्घटनावर्णाहितविशेषवाचकसमर्पितादर्थात् ।

क्रोधादिविशेषगतिर्धूमविशेषादिव कृशानोः ॥२८॥ इति सङ्ग्रहार्या ।

पदवाक्ययोः पुनः साक्षादर्थद्वारकं गमकत्वं न वर्णसङ्घटनयोरिव वाचकोपाधिभावनिबन्धमिति न तुल्यकक्ष्यतया निर्देशस्तयोरुपपन्नः । पदवाक्ययोर्हि द्वयमर्थान्तरप्रतीतौ निबन्धनमिष्यते, उपचारः प्रकरणादिसामग्री चेति ।

यत्र हि तत् समारोपितं तत्र यथाकथञ्चित् तत्साहश्यं तत्सम्बन्धा-

मधुसूदनीविवृतिः ।

न तुल्यकक्ष्यतयेति । अयं भावः ।

यस्त्वलक्ष्यक्रमव्यङ्ग्यो ध्वनिर्वर्णपदादिषु ।

वाक्ये संघटनायां च स प्रबन्धेऽपि दीप्यते ॥ इति ।

तत्र वर्णानामनर्थकत्वाद् द्योतकत्वमसम्भवीत्याशंक्येदमुच्यते—

शषौ सरेफसंयोगो ढकारश्चापि भूयसा

विरोधिनः स्युः श‍ृङ्गारे, तेन वर्णा रसच्युतः ।

त एव तु निवेश्यन्ते बीभत्सादौ रसे यदा

तदा तं दीपयन्त्येव तेन वर्णा रसच्युतः ॥ इति।

श्लोकद्वयेन अन्वयव्यतिरेकाभ्यां वर्णानां रसद्योतकत्वं दर्शितं भवतीति ।

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा ।

रसांस्तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः ॥ इति च ॥

कारिकाभिर्यद् ध्वनिमन्तृभिर्वर्णसंघटनादीनां ध्वनिप्रकाशकत्वमङ्गीकृतं तत्र ग्रन्थकृता विशिष्टवर्णसंघटनोपकृतशब्दात्प्रतीतोऽर्थः रत्याद्यनुमापकः इति पारम्पर्येण वर्णसंघटनयोः गमकत्वम् । पदवाक्याभ्यां पुनः अनुपकृताभ्यामेव प्रतीतोऽर्थः रत्याद्यनुमापकः इति तयोः साक्षादर्थद्वारकं गमकत्वमिति पदवाक्यतुल्यकक्ष्यतया वर्णसंघटनयोः निर्देश अनुपपन्न इति विप्रतिपत्तिरुद्घाटितेति ।

एतस्मादपि तादृशनिर्देशोऽनुपपन्नः यत् पदवाक्ययोः अर्थान्तरस्य प्रतीतौ क्वचिद् उपचारो (लक्षणा) क्वचित् प्रकरणादिसहायकसामग्री चेति द्वयं निबन्धनमिष्यते नैतत् वर्णसंघटनयोरिष्यते नाप्यस्ति च। अत्र ग्रन्थकर्त्तुः ग्रन्थप्रणयनचातुरी पल्लविता वर्त्तते ।

उपचारप्रकरणादिसामग्रीरूपनिबन्धनद्वयस्य माहात्म्यं दर्शयति । अथवा उपचारो हि गौणी लक्षणा तया च लक्ष्यार्थस्यैव प्रतीतिः न तु तृतीयकोटिपतितस्य अनुमेयस्य । एवं प्रकरणादिसामग्र्याऽपि स्वार्थ एव प्रतिपन्नो भवतीत्यत आह—यत्र हीति । यत्र आदर्शे तत् अन्धत्वं समारोपितम् । तत्र आदर्शे यथाकथञ्चित् तत्सम्बन्धात् अप्रका-

द्वगम्यते, न तत्त्वम् तदभावे सादृश्यानुपपत्तेरिति तदेतदत्रानुमेयमित्युक्तम् ।

एकोऽपि हि शब्दः सामग्रीवैचित्र्यात् तद्धर्मविशिष्टं स्वार्थमेवावगमयतीति तदेव तत्र लिङ्गमवगन्तव्यं न शब्दमात्रम् । तद्धि संज्ञिनमेव प्रत्याययितुमलं न संज्ञिविशेषमित्येतदप्युक्तमेव ।

तत्र पदस्योपचारतो यथा महर्षेर्व्यासस्य 'सप्तैताः समिधश्श्रियः' इति, यथा च वाल्मीकेः 'निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते' इति, यथा च कालिदासस्य 'कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम्'इति, यथा च—

"सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥"

इत्यत्र समिदन्धसन्नद्धमधुरपदानि गमकत्वाभिप्रायेणैव प्रयुक्तानीति उक्तमेव । तस्यैव सामग्री वैचित्र्ये यथा 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रियेणोचितम्' इत्यत्र रामेणेत्येतत् पदं प्रकरणादिसामग्रीवशात् साहसैकरसिकत्वादिधर्मविशिष्टस्य रामार्थस्य गमकम्; अन्यथा हि मयेत्येव वक्तव्यं स्यात् ।

यत्रापि चैकस्यैवार्थस्यैकाभिधानमुखेनोत्कर्षापकर्षतत्त्वाभिधित्सयोपकल्पितभेदस्य विध्यनुवादभावेनोपनिबन्धः तत्र प्रकरणादिभ्य एवा-

---

मधुसूदनीविवृतिः

शक्तत्वधर्मसम्बन्धात् तत्सादृश्यं अन्धसादृश्यमवगम्यते न तत्वम् अन्धत्वम् । तदभावे समारोपाभावे सम्बन्धाभावे वा सादृश्यप्रतीतेरनुपपत्तेरिति तदेतत् सादृश्यम् अत्र पदवाक्ययोरनुमयेम् । अर्थात् सादृश्यं नाम लक्षणायाः फलं न तल्लक्ष्यम् तत्तु अनुमेयमेवेति ।

एकोऽपि हीति । एकोऽपि शब्दः यथा रामेण प्रियजीवितेनेत्यादौ रामशब्दः सामग्रीवैचित्र्यात् प्रकरणादिसाहाय्यात् तद्धर्मैः रामनिष्ठसाहसैकरसिकत्वादिधर्म्मैः विशिष्टं युक्तं स्वार्थमेव स्वाभिधेयमेव अवगमयति तदेव धर्मविशिष्टः स्वार्थ एव तत्र अनुमेये विप्रलम्भश्रृङ्गारादौ लिङ्गम् हेतुः अवगन्तव्यम् न शब्दमात्रम् । तद्धि शब्दमात्रं हि संज्ञिनमेव दशरथापत्यत्वरूपमेव प्रत्याययितुमलं समर्थम् न संज्ञिविशेषम् साहसैकरसिकत्वादिमन्तम् । इत्येतदपि उक्तमेव अनुपदमेवेह विमर्शे ।

यत्राऽपीति । यत्राऽपि "कमलानि कमलानि"इत्यत्र "चन्द्रः चन्द्र एव" इत्यत्र काचः काचो मणिर्मणि" रित्यत्र त्रिषु च अभिधानमुखेन तेनैव शब्देन क्रमशः उत्क-

स्योत्कर्षोऽपकर्षः तत्वं वानुमेयम् ; न तु तत एव । न हि विधेयाभिधायिनः शब्दस्यैव सा शक्तिस्तयोर्विरोधात् । तत्रोत्कर्षो यथा—

'रइकिरणाणुग्गहिआइ होन्ति कमलाइ कमलाइ ।"

इत्यत्र द्वितीयः कमलशब्दः । अपकर्षो यथा—

"एमेअ जणो त्तिस्सा देउ कवोलोपमाइ ससिबिम्बम् ।
परमत्थविआरे उण चन्दो चन्दोच्चिअ वराओ ॥"

इति । अत्र द्वितीयश्चन्द्रशब्दः । अत्र हि विधेयाभिधायिनो द्वितीयाच्चन्द्रशब्दाद्यथापकर्षोऽवगम्यते न तथा पूर्वत्र कमलशब्दादित्यर्थप्रकरणादिरेव तत्र हेतुभावेनोपगन्तुं युक्तो न शब्दशक्तिः । तस्या ह्युत्कर्षापकर्षावगमः पूर्वापरपदार्थनियत एव स्यात्, नानियतः । तत्त्वे यथा—

"काचो मणिर्मणिः काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिर्मणिः ॥"

इत्यत्र द्वितीयौ काचमणिशब्दौ ।

शब्दशक्तिमूलाया अर्थान्तरप्रतीतेरनिबन्धनायाः पराकृतत्वान्न त

---

मधुसूदनीविवृतिः ।

र्षस्य अपकर्षस्य तत्वस्य च अभिधित्सया उपकल्पितभेदस्य कृतभेदस्य एकस्यैव अर्थस्य कमलत्वादेः विध्यनुवादभावेन उद्देश्यविधेयतया उपनिबन्धः सन्निवेशः । तत्र पद्येषु प्रकरणादिहेतुक एव उत्कर्षः

अपकर्षः तत्वं वा अनुमेयम् । न तत एव प्रकरणादिसामग्रीरहितात् केवलात् शब्दात् । ननु शब्दमात्रादेव कुतो नेत्याह—नहीति । विधेयाभिधायिनः विधेयोपस्थापकस्य एव शब्दस्य सा उत्कर्षाद्यभिधानात्मिका शक्तिः । तयोः उद्देश्यविधेयार्थयोर्विरोधात् ।

प्रकरणादिभ्य एवेति एवकार फलं दर्शयति । अत्र हीति । अयं भावः । पूर्वत्र उत्तरत्र च उदाहरणयोः एकार्थम् एकरूपम् कमलानि कमलानीति चन्द्रः चन्द्र इति शब्दद्वयमुपात्तम् । तत्र को हेतुः पूर्वत्र उत्कर्षः उत्तरत्र अपकर्षः प्रतीयते । न हि शब्दमात्रस्य सा शक्तिः अनुभवविरोधात् तथानुपलब्धेश्च । अतः कोप्यवश्यं हेतुः स्वीकार्यो भविष्यति स च क इति गवेषणायां प्रकरणादिरेव सामग्रीविशेषः तुलाधिरूढो भवति । अन्यच्च यदि उत्कर्षादिः शब्दमात्रशक्तेरेव अवगतो भवति इति स्वीक्रियते चेत् तर्हि स पूर्वापरपदार्थसम्बन्धेन नियतः अत्र अयमेव नान्य इति निश्चितः स्यात् न तु अनियतः । प्रकरणादिस्वीकारे तु यादृशं प्रकरणं तादृशः अर्थः नतु नियतः । इति ।

ध्वनिमन्त्रा प्रतिपादितं शब्दशक्त्युद्भवप्रभेदस्य पदप्रकाशकत्वं निराकर्त्तुमाह—शब्दशक्तीति । शब्दशक्तिमूला अर्थान्तरप्रतीतिः निर्निबन्धना न भवतीति उक्तत्वात् अर्थात् शब्दशक्तिमूला पदवाक्यप्रकाशा न सम्भवतीति पूर्वमुक्तमेव ।

न्मूला पदवाक्यप्रकाशता सम्भवति । यथा—

"प्रातुं धनैरर्थिजनस्य वाञ्छां देवेन सृष्टो यदि नाम नास्मि ।
पथि प्रसन्नाम्बुधरस्तटाकः कूपोऽथवा किन्न कृतो जडोऽहम् ॥"

इति । अत्र हि जड इत्येतत् पदं निर्विण्णेन केनचिद्वक्त्रा कूपसमानाधिकरणतयैव प्रयुक्तं, नात्मसमानाधिकरणतया कूपोऽथवा किं न कृतो जडोऽहमित्यात्मनो जडत्वाशंसास्पदत्वेनेष्टत्वाद्, इत्थमेव वाच्यस्य चारुत्वोपपत्तेः, यतोऽयमत्रार्थो विवक्षितः "किं ममानेन परदुःखभाजा हतचैतन्येन कृत्यं, जडस्तटाक एवास्मि कस्मान्न कृत इति ।

नचोक्तनयेन निबन्धनान्तरमन्तरेण स्वशक्त्यैवानुरणनरूपतयार्थान्तरसमानाधिकरणतां प्रतिपत्तुमलमित्यनुदाहरणमेतत् ।

---

मधुसूदनीविवृतिः ।

प्रातुमिति । यदि नाम दैवेन अशक्यपर्यनुयोगेनेति भावः । अहम् अर्थिजनस्य धनाभिलाषिपुरुषस्य प्रायेण हि लोको धनार्थी एव न तु गुणैरुपकारार्थी । अतः धनाभिलाषीत्युक्तम् । धनैः रायोभिरिति बहुवचनम् यो यो जनः यादृशेनार्थी तस्य तादृशेनेति सूचनार्थम् । वाञ्छाम् इच्छाम् प्रातुं पूरयितुं न सृष्टोऽस्मि तर्हि पथि मार्गे प्रसन्नं लोकोपयोगि अम्बु जलं धारयतीति प्रसन्नाम्बधरः जडः शीतलः सन्तापरहितः तडाकः किं न कृतः । अथवा जडः शीतलः अथ च गह्वरतया सर्वसाधारणोपकाररहित कूपः किं न कृतः ।

अत्र केनचित् निर्विण्णेन पदे पदे भ्रष्टमनोरथतया हतोत्साहेन दुःखिना वक्त्रा जड इत्येतत्पदं कूपसमानाधिकरणतया अर्थात् जडः कूप इति विशेष्यविशेषणभावेन एकाधिकरणतया प्रयुक्तम्, आत्मसमानाधिकरणतया जडः अहम् इत्येवम् अहमर्थविशेषणतया न प्रयुक्तम् । यतः कूपोऽथवा किंन कृतो जडोऽहमिति रीत्या जडत्वस्य या आशंसा अभिलाषा तदास्पदत्वेन आत्मन इष्टत्वात् अर्थात् जडकूपभवनेच्छया जडत्वेच्छाया आस्पदत्वं सुतरामात्मनः प्राप्तं भवतीति ।

नचोक्तेति । उक्तनयेन दर्शितरीत्या निबन्धान्तरं कारणान्तरम् अन्तरेण विना स्वशक्त्यैव अनुरणनरूपतया घण्टायां वाद्यमानायां यथा प्रथमशब्दोत्तरं मधुरः शब्दः प्रादुर्भवति तथा शब्दे उच्चारिते अभिधेयार्थप्रतीत्युत्तरं या द्वितीयार्थप्रतीतिर्भवति सा अनुरणनेति अनुस्वानेति शब्दवाच्या भवति । तद्रूपतया अर्थान्तरसमानाधिकरणतया प्रतिपत्तुं नालं न योग्यम् । इत्यतः एतत् अनुदाहरणं पदप्रकाश्यध्वनेरुदाहरणं भवितुं न योग्यम् ।

अयं तु महात्मा खण्डनतमःछन्नमतिः न गह्वरं प्रविशति । अत्र विमर्शो उपरि उपरि धावति तथा ध्वनिमन्त्रा यदुक्तं तदेव अनुमेयेति अनुमानेति च पदं निवेश्य उल्लिखितं प्रायः । अस्य महाशयस्य लोकोत्तरं पाण्डित्यं प्रतिभा वा द्वितीय एव

"असमप्पिअं वि गहिअं कुसुमशरेण महुमासलच्छिमुहम् ।"

इत्यत्र ह्यसमर्पितमपि कुसुमशरेण मधुमासलक्ष्म्या गृहीतमित्यसमर्पितमपीत्येतदर्थाभिधायि पदमर्थशक्त्या कुसुमशरबलात्कारमनुमापयति ।

"वाणिअअ ! हत्थिदन्ता कत्तो अह्माण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कए सोण्हा ॥"

इत्यत्र द्विरदरदनव्याघ्राजिननां प्रतिषेधावगतिरुक्तक्रमेण व्यापकविरुद्धकार्योपलब्धिनिबन्धनेत्यनुमान एवान्तर्भावमर्हति ।

केवलमिदमत्र निरूप्यते यदुत कस्येयमुक्तिः, किं श्वशुरयोरुत तटस्थस्यैव कस्यचिदिति । तत्र श्वशुरस्य तावत् दुहितुरिव स्नुषायाः सौभाग्यातिशयवर्णनमिदमनुचितमेव । श्वश्र्वा अपि पुत्रस्नेहविक्लवायाः स्वसद्मसमृद्धिं समीहमानाया वा तत्सौभाग्यातिरेकमसूयमानाया वाणिजकं प्रति नास्ति हस्तदन्तादि विक्रेयमिहेत्येतावति वक्तव्ये तद्वर्णनं निष्फलमनुचितं चेति तटस्थस्यैवेयमुक्तिरुचिता तत्रैव लेशतो रसास्वा-

मधुसूदनीविवृति ।

वर्त्तते । स एव नूतनः पन्थाः अन्यैरनालोचितचरः प्रतिभाप्रधावनोपयोगी लोकेभ्यः सन्दर्शितः । यमालम्ब्यैव अन्ये मम्मटादयः प्रासरन् ।

अयमिह ध्वनिप्रस्थापनपरमाचार्याणामाशयः—

आयाता मधुयामिनी यदि पुनर्नायात एव प्रभुः ।
प्राणा यान्तु विभावसौ यदि पुनर्जन्मग्रहः, प्रार्थये ॥
व्याधः कोकिलबन्धने, विधुपरिध्वंसे च राहुग्रहः ।
कन्दर्पे हरनेत्रदीधितिरहं प्राणेश्वरे मन्मथः ।

इत्यत्र पद्ये—हे विधे ? यदि मां मनुष्यमारचयेस्तर्हि व्याधं सृज, ग्रहं चेद्राहुम्, ज्योतिश्चेद्धरनयनदीधितिम्, अथादृश्यमेव स्रष्टुमिच्छसि तर्हि अनङ्गम् येनाहं तमुत्पीड्य कृतप्रतिकारिणी भवेयं वैरस्य च प्रतिशोधो भवेदिति अभ्यर्थना स्वीकार्या इति भावात्मके यथा कथा तथा अत्रापि वर्त्तते ।

तद्यथा—याचकेषु याचयानेषु दैववशात् धनाभावात् किंकर्त्तव्यविमूढतापादनेन यद्यहं जड एव कृतः तर्हि कूप एव किं न कृतः । एवमात्मसमानाधिकरणतया प्रयुक्तं जड इत्येतत्पदं शब्दशक्त्या कूपसमानाधिकरणतां गच्छति । इति । आयातेत्यस्य व्याख्यानन्दं लब्धुमीहा अथ च श्लोकस्य व्याख्या कथं कर्त्तव्येति व्याख्यारचनपाटवेप्सा चेत्तर्हि मत्कृते श्रृंगारतिलकव्याख्ये युवकमोहिनीरसिकञ्जिन्यौ द्रष्टव्ये ।

असमप्पिअं वि इत्येतत् द्वय पदं कुसुमशरस्य बलात्कारमनुमापयतीति ।

वाणिअअ इति । व्याख्याता प्राक् । तत्रैव तटस्थस्योक्तावेव ।

द्सम्भवात् । अन्यथा—

"विवरीअसुरअसमए ब्रह्मं दठ्ठूण णाहिकमलम्मि ।
हरिणो दाहिणणअणं चुम्बइ हिलिआउला लच्छी ॥"

इति प्रहेलिकादावपि मुख्यवृत्त्या काव्यव्यपदेशः स्यात् । केवलं तत्पक्षे अह्माण इत्यत्र पआण इति पाठः परिणमयितव्यः

"उत्कम्पिनी भयपरिस्खलितांशुकान्ता
ते लोचने प्रतिदिशं विधुरे क्षिपन्ती ।
क्रूरेण दारुणतया सहसैव दग्धा
धूमान्वितेन दहनेन न वीक्षितासि ॥"

इत्यत्र ते इति ययोरयमसमसौन्दर्यनिधानभूतयोः पुरःपरिस्फुरतोरिव लोचनयोः परामर्शः, स हि सामग्रीयोगान्नायकस्य शोकदहनोद्दीपनविभावतामेतयोरनुमापयतीति मुख्यवृत्त्या तद्वाच्यस्यार्थस्यैव लिङ्गता, न पदस्य । यथा च—

"झटिति कनकचित्रे तत्र दृष्टे कुरङ्गे
रभसविकसितास्ते दृष्टिपाताः प्रियायाः ।
पवनविलुलितानामुत्पलानां पलाशैः
प्रकरमिव किरन्तः स्मर्यमाणा दहन्ति ॥" इति ।

पदावयवोपि विशिष्टः पदार्थ एव न शब्दमात्रं तस्य व्यापारान्तर प्रतिषेधात् । विशिष्टत्वं च 'मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभाग' इत्यत्र चकितहरिणीहारिणा नेत्रेण सम्बन्धितया त्रिभागस्य विशेषितत्वात् तथाविधस्य चास्य गमकत्वात् ।

वाक्यस्य चोपचारतोऽर्थान्तरप्रकाशनं यथा—

"या निशा सर्वभूतानां तस्यां जागर्त्ति संयमी ।

---

मधुसूदनीविवृतिः ।

व्यापारान्तरेति । अभिधां विहाय शब्दस्यान्यो व्यापारो नास्तीति साधितत्वात् । मय्यासक्त इति ।

व्रीडायोगान्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पं कुचकलशयोर्मन्युमन्तर्निगृह्य ।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य वाष्पं
मय्यासक्तश्चकितहरिणी हारिनेत्रत्रिभागः ॥ इति पूर्णं पद्यम् ।

सम्बन्धितयेति । त्रिभागः कटाक्षः । नेत्रकटाक्षयोः अवयवावयविभावः सम्बन्धः । तद्वत्तया । तथाविधस्य विशिष्टस्य अस्य त्रिभागस्य ।

एवं पदतदवयवप्रकाशकध्वनिसमुदाहरणानि विविच्य वाक्यस्य तानि विवेच्यन्ते—

या निशेति । अत्र ध्वन्यालोकीयः अविकलः पाठ उद्धृतः केवलं व्यञ्जकत्वमिति

यस्यां जाग्रति भूतानि सा रात्रिः पश्यतो मुनेः ॥

इति । अनेन हि वाक्येन न निशार्थो नापि जागरणार्थः कश्चिद् विवक्षितः ; किं तर्हि ? तत्त्वज्ञानावहितत्वमतत्त्वपराङ्मुखत्वं च मुनेः प्रतिपाद्यत इति तिरस्कृतवाच्यस्यास्य गमकत्वम् । यथा च—

"सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥" इत्युक्तम् ।

तस्यैव प्रकरणादितो यथा—

"विसमइओ च्चिअ काण वि काण वि वोलेइ अमअणिम्माओ ।
काण वि विसामअमओ काण वि अविसामओ कालो ॥"

इत्यत्र वाक्ये प्रकरणादिवशाद्विषामृतशब्दाभ्यां सुखदुःखस्वरूप-

---

मधुसूदनीविवृतिः ।

पदे गमकत्वमिति परिवर्त्तितम् । तिरस्कृतवाच्यस्येति । निशायां जागरितव्यमन्यत्रान्धतयासितव्यमित्युक्तेन न किञ्चिदुपदेश्यं प्रत्युपदेशः सिद्ध्यति तस्माद्बाधितस्वार्थमेतद्वाक्यं संयमिनो लोकोत्तरतालक्षणेन निमित्तेन तत्त्वदृष्टाववधानं मिथ्यादृष्टौ च पराङ्मुखत्वं गमयति । सर्वभूतानां या निशेति उक्तस्य सर्वशब्दार्थस्य गमकतायाम् उपेक्षिततयाऽपि उपपद्यमानतैव वर्त्तते इति न सर्वशब्दार्थान्यथानुपपत्या अयमर्थ आक्षिप्त इति मन्तव्यम् । सर्वेषां ब्रह्मादिस्थावरान्तानां चतुर्दशानामपि भूतानां या निशाख्या मोहजननी तत्त्वदृष्टिस्तस्यां संयमी जागर्त्ति कथं प्राप्येतेति । न तु विषयवर्जनमात्रादेव संयमीति यावत् । यदि वा सर्वभूतनिशायामेव मोहिन्यां जागर्त्ति कथमियं हेयेति । यस्यां तु मिथ्यादृष्टौ सर्वाणि भूतानि जाग्रति अतिशयेन सुप्रबुद्धरूपाणि सा तस्य रात्रिरप्रबोधविषयः तस्यां हि चेष्टायां नासौ प्रबुद्धः । एवं लोकोत्तरव्यवस्थितिः स पश्यति मन्यते च । तस्यैवान्तर्बहिष्करणवृत्तिश्चरितार्था अन्यस्तु न पश्यति न च मन्यत इति तत्त्वदृष्टिपरेण भाव्यमिति तात्पर्यम् । एवं च पश्यत इति वचनं न स्वार्थमात्रविश्रान्तम् अपि तु गम्यपरम् । यत्तच्छब्दयोश्च न स्वतन्त्रतार्थतेति वाक्यस्यैव गमकत्वम् ।

तस्यैव वाक्यस्यैव प्रकरणसामग्रीतोऽर्थान्तरप्रकाशनं यथा—"विसम इअ" इति ।

विषमय इव केषामपि केषामपि प्रयात्यमृतमयः ।
केषामपि विषामृतमयः केषामप्यविषामृतः कालः ॥ इति च्छाया ।

कालः केषाञ्चित् दुष्कृतिनाम् अविवेकिनाम् वा विषमयः विषमयतां प्राप्तः केषांचित् सुकृतिनाम् विवेकिनाम् वा अमृतमयनिर्वाणः प्रयाति । केषाञ्चित् मिश्रकर्मणां विवेकाविवेकतां वा विषामृतमयः । केषामपि मूढप्रायाणां धाराप्रासयोगभूमिकारूढानां वा अविषामृतमयः प्रयाति ।

सङ्क्रमितवाच्याभ्यां व्यवहार इत्यर्थान्तरसंक्रमितवाच्यस्यास्य गमकत्वम् ।

शब्दस्याभिधातिरेकेण शक्त्यन्तरानुपपत्तेस्तन्मूलं पदस्येव वाक्यस्याप्यर्थान्तरप्रकाशनं न सम्भवत्येव यथा हर्षचरिते सिंहनादवाक्ये—

"प्रवृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः"

इति । नह्येतद्वाक्यमनुरणनरूपमर्थान्तरं शब्दशक्त्यैवानिबन्धनं प्रकाशयितुं क्षममित्युक्तमेव ।

"सज्जेइ सुरहिमासो ण आ पणावेइ जुवइजणलक्खसहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणङ्गस्स सरे ॥"

इत्यत्र कविप्रौढोक्तिमात्रनिष्पन्नशरीरे सुरभिमाससम्भवानामाविर्भूताभिनवपल्लवानां तरूणामचिरभावियुवतिजनमदनोन्माददायित्वमनुमेयम् ।

तत्र च सहकारसुरभिमासमदनानां रूपकोपनिबन्धने शरशरकारधानुष्कतुल्यवृत्तान्तत्वे सति यदसम्पन्नसम्पूर्णरूपतया सम्प्रति सहकाराणां शराणामिवानङ्गायासमर्पणं स हेतुः । तदसमर्पणमात्रान्तरायो हि तस्य तद्व्यापारः । कन्दर्पोद्दीपनसमर्थस्वभावसम्पादनमेव च तेषां सुरभिमासेन कन्दर्पायासमर्पणं नान्यदिति ।

"सिहिपिञ्छकण्णऊरा जाया वाहस्स गव्विरी भमइ ।
मोत्ताफलरइअपसाहणाण मज्झे सवत्तीण ॥"

---

मधुसूदनीविवृतिः ।

अत्र विषामृतपदे प्रकरणाद् सुखदुःखरूपार्थयोः संक्रान्ते ।

प्रवृत्तेऽस्मिन्निति । अस्य वाच्यस्य समासोक्त्यादिकारणाभावान्न गमकत्वमिति ग्रन्थकृत् ।

महानासमन्तात् प्रलयो यत्र तादृशि शोककारणभूते प्रकृष्टे वृत्ते धरण्या राज्यधुराया धारणाय आश्वासनाय त्वं शेषः शिष्यमाण इत्यर्थकमिदं वाक्यम् कल्पावसाने भूपीठभारोद्वहनक्षम एको नागराज इव दिग्दन्तिप्रभृतिषु प्रलीनेषु इत्यर्थान्तरमनुरणनरूपं स्वशक्त्यैव स्फुटमेव शब्दः प्रकाशयति इत्यानन्दाभिनवौ ।

"सज्जेइ" इति । सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसहान् ।
अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान् ॥ इति च्छाया ।

सुरभिमासतरवो युवतिजनमदनोन्माददायिनः मदनोद्दीपनसमर्थस्वभावसम्पादकत्वात् चन्द्रवत् । तदसमर्पणं सुरभिमासासमर्पणम् । तस्य कामस्य । तद्व्यापारः उद्दीपनव्यापारः । कन्दर्पोद्दीपने समर्थो यः स्वभावस्तत्सम्पादनम् ।

इत्यत्र नवोढाया व्याधवध्वाः सपत्नीभ्यः सौभाग्यातिरेकोऽनुमेयः। तत्र चास्याः शिखिपिच्छकर्णपूराया अपि सगर्वं भ्रमणं हेतुः, यतोऽयमभिप्रायस्तस्याः—मयि सत्यामयं सम्भोगैकरसिको व्याधो वारितान्यकर्त्तव्यो दिवानिशं मत्परायण एव केवलं मद्विनोदार्थं यदृच्छयान्तिकापतितमयूरमात्रमारणव्यापारो वर्त्तत इति शिखिपिच्छमात्रकर्णपूराहं जाता, भवतीषु सतीषु दूरदेशकालव्यवधानसाध्यमहारम्भमातङ्गमारणादिव्यापारनिरतोऽयमासीदिति मुक्ताफलरचितप्रसाधना भवत्य इति। तेन यदेतत् सगर्वं भ्रमणं तदेव तस्याः सपत्नीभ्यः सौभाग्यातिरेकमनुमापयतीत्यवसेयम्।

वाक्यार्थस्य विभावादिरूपस्य रसादीनां चालक्ष्यक्रमो गम्यगमकभाव इति प्रसाधितमेव। स च वाक्यार्थः शुद्धोऽलङ्कारान्तरसङ्कीर्णश्चेति द्विधा सम्भवति।

तत्र शुद्धो यथा रामाभ्युदये "कृतककुपितै"रित्यादिश्लोकः। एतद्धि वाक्यं परस्परानुरागं परिपोषप्राप्तं प्रकाशयत् सर्वत एव परं रसतत्वं प्रकाशयति।

अलङ्कारान्तरसङ्कीर्णो यथा--

"स्मररसनदीपूरेणोढाः पुनर्गुरुसेतुभि-
र्यदपि विधृता दुःखं तिष्ठन्त्यपूर्णमनोरथाः।
तदपि लिखितप्रख्यैरङ्गैः परस्परमुन्मुखा

---

मधुसूदनीविवृतिः।

**वाक्यार्थस्येति**। अत्र वाक्यरूपश्चालक्ष्यक्रम इत्यादि ध्वन्यालोकीयं पंक्तिवृन्दं व्यञ्जकस्थाने गमकेति पदं निवेश्य उद्धृतमिति।

**कृतककुपितैरिति**।

कृतककुपितैः वाष्पाम्भोभिः सदैन्यविलोकितै
र्वनमपि गता यस्य प्रीत्या धृताऽपि तथाम्बया।
नवजलधरश्यामा पश्यन् दिशो भवतीं विना-
कठिनहृदयो जीवत्येव प्रिये ? स तव प्रियः॥ इति पूर्णम् पद्यम्।

अत्र तैस्तैः प्रकारैर्मात्रा धृताऽपि अनुरागपरवशत्वेन गुरुवचनोल्लंघनमपि त्वया कृतमिति। प्रिये इति परस्परजीवितसर्वस्वाभिमानात्मको रतिः स्थायिभाव उक्तः। नवजलधर इत्यसोढपूर्वं प्रावृषेण्यजलदालोकनं विप्रलम्भोद्दीपनविभावत्वेनोक्तम्। जीवत्येवेति सापेक्षभावता एवकारेण करुणावकाशनिराकरणतयोक्ता। सर्वत एवेति। सर्वत एव सर्वेभ्यः पदेभ्य एव न अन्यतमस्य कस्यचित्पदस्य अधिकं किञ्चिद् रसगमकत्वम्।

**रसतत्वमिति**। विप्रलम्भशृङ्गारात्मतत्वम्।

नयननलिनीनालानीतं पिबन्ति रसं प्रियाः ॥"

इति । अत्र हि रूपकेण यथोक्तलक्षणगमकानुगतेनावगमितोऽयं रसः सुतरां प्रकाशत इति मुख्यवृत्त्यार्थस्यैव गमकत्वं न शब्दस्येति स्थितम् ।

वाक्यर्थस्येव प्रबन्धस्यापि रसादीनां च योऽयमलक्ष्यक्रमो गम्यगमकभावो महाभारतरामायणादौ प्रसिद्धः तस्य विभावानुभावव्यभिचार्यौचित्यचारुणो वृत्तस्योत्प्रेक्षितस्य वा कथाशरीरस्य रसाभिव्यक्त्यानुगुण्येनोपनिबन्ध एव निबन्धनम् तस्य रसादीनां च कार्यकारणभावस्य प्रतिपादितत्वात् । यदाह ध्वनिकारः--

"विभावभावानुभावसञ्चार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ॥
इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम् ।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्वयः ॥
सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया ।
न तु केवलया शास्त्रस्थितिसंपादनेच्छया ॥
उद्दीपनप्रशमने यथावसरमन्तरा ।
अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम् ।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम् ॥" इति ।

सुबादीनामपोद्धारपक्षे अन्वयव्यतिरेकाभ्यामर्थवत्तावसाये सति अर्थस्य च विभावादिरूपत्वाद् विभावादीनां रसादीनां च कार्यकारण-

---

मधुसूदनीविवृतिः

रूपकेणेति स्मर एव रसनदीपूरः प्रावृषेण्यप्रवाहः सरभसमेव प्रवृद्धत्वात् । तेनोढाः परस्परसांमुख्यम् अबुद्धिपूर्वमेव नीताः । अनन्तरं गुरवः श्वश्रूप्रभृतय एव सेतवः इच्छाप्रसररोधकत्वात् । अथ च गुरवो महान्तः अलङ्घ्याः सेतवस्तैः प्रतिहतेच्छाः । अत एवापूर्णमनोरथास्तिष्ठन्ति । तथापि परस्परोन्मुखतालक्षणेन अन्योन्यतादात्म्येन स्वे देहे सकलवृत्तिनिरोधात् लिखितप्रख्यैरंगैः नयनान्येव नलिनीनालानि तैरानीतं रसं परस्पराभिलाषलक्षणमास्वादयन्ति । परस्पराभिलाषात्मकदृष्टिच्छटामिश्रीकारयुक्त्याऽपि कालमतिवाहयन्तीति । यथोक्तलक्षणगमकेनेति । गमकस्य स्वरूपं तु पूर्वं लावण्यकान्तिपरिपूरितेत्यादिषु उक्तम् । रसः विप्रलम्भश्रृङ्गारः ।

इदानीं ध्वन्यालोकीयम् "इदानीमयमलक्ष्यक्रमव्यङ्ग्यो ध्वनिः प्रबन्धात्मा रामायणमहाभारतादौ प्रकाशमानः प्रसिद्ध" इति विवेचयितुमवरति-वाक्यार्थस्येवेति । प्रबन्धो गमकः रसादिर्गम्यः प्रबन्धरसाद्योः गम्यगमकभावः ।

इदानीं ध्वन्यालोकीयसुप्तिङ्वचनसम्बन्धैरित्यादिकारिकार्थं विवेचयितुमाह— सुबादीनामिति । अपोद्धारो विभागः पार्थक्यम् । अन्वयतिरेकेति । सुबादीना-

भावस्योपपादितत्वात् तन्मूलो लक्ष्यक्रमो गम्यकभावोऽभ्युपगन्तव्य एव। तेषामुदाहरणानि यथा—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन मे
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥"

इति। भूम्ना सर्वेषां स्फुटमेव गमकत्वं दृश्यते। तत्र मे यदरय इति सुप्सम्बन्धवचनानामुक्तनयेन गमकत्वम् यथायोगमुत्तरत्र च। तत्राप्यसौ तापस इति तद्धितनिपातयोः सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावण इति तिङ् कारकशक्तीनाम्। धिक् धिक् शक्रजितमित्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणामिति।

सुप्तिङ्सम्बन्धाद्याः क्रोधोत्साहादिकान् यथा भावान्।
गमयन्ति, तद्विधेयाविमर्श एवोक्तमस्माभिः॥१८॥ इत्यन्तरार्या।

निपातोपसर्गादीनामसत्वभूतार्थानामुपाधिरूपत्वादुपाधिमत्समाश्रयणैवार्थावगतिरिति पदवाक्ययोरर्थावगमकत्वोक्त्यैव तेषामपि गमकता प्रतिपादितैव। केचित् पुनर्निपाताः क्रोधाद्भुतशोकादीन् भावान् प्रदीपवद् वक्तृगतानेवावद्योतयन्ति न वाच्यगतान्। यथा—

"आस्तिष्ठ रक्षः! क्व मे प्रियतमामादाय गच्छसी" ति क्रोधः।
"अहो बतासि स्पृहणीयवीर्य" इति विस्मयः।
"हा धिक् कष्टमहो क्व यामि शरणम्" इति शोकः।

अत एव तेषां द्वित्राणां त्रिचतुराणां वा प्रयोगे पुनरुक्तता नाशङ्कनीया समुदितानां प्रदीपादीनामिव स्वकार्ये प्रकर्षदर्शनात्। तदुक्तम्—

"नामवदुपसर्गास्ते किन्त्वन्योपहितमाहुरर्थं स्वम्।
दीपकवत्तु निपाताः शोकादीन् द्योतयन्ति वक्तृगतान्॥
गमयन्ति कार्यभूतान् गद्गदिकादिवदवाचका एव।
सङ्घटनावर्णाद्याः क्रोधोत्साहादिकान् भावान्॥"

इति। तदेवं ध्वनेरनुमानान्तर्भावाभ्युपगमः श्रेयनिति।

---

मधुसूदनीविवृतिः।

सुपादाने तादृशार्थप्रतीतिः अनुपादाने न तादृशार्थप्रतीतिरिति अन्वयव्यतिरेको बोध्यः।

उपाधिरूपत्वादिति। निपातोपसर्गादीनां पदप्रयोगं विना अर्थावबोधाक्षमतया घटत्वादिधर्मवत् उपाधिरूपत्वमुच्यते ततश्च यथा धर्म्मिणं विना धर्मस्य प्रयोगो नास्ति तथैवेषामपीति पदवाक्ययोरर्थावगमकत्वोक्त्या गमकतोक्ता भवतीति भावः।

तदिदं विस्तरस्यास्य तात्पर्यमवधार्यताम् ।
यार्थान्तराभिव्यक्तौ वस्सामग्रीष्टा निबन्धनम् ॥ ३० ॥
सैवानुमितिपक्षे नो गमकत्वेन सम्मता ।
अन्यतोऽन्यस्य हि ज्ञानमनुमैकसमाश्रयम् ॥ ३१ ॥
वाच्यवाचकयोः स्वार्थप्राधान्यप्रतिषेधतः ।
ध्वनेः शक्त्यन्तराभावाद् व्यक्तेश्चानुपपत्तितः ॥ ३२ ॥
प्राणभूता ध्वनेर्व्यक्तिरिति सैव विवेचिता ।
यत्त्वन्यत् तत्र विमतिः प्रायो नास्तीत्युपेक्षितम् ॥ ३३ ॥
प्रायः प्रतीतिवैचित्र्यरसास्वादविदः प्रति ।
सूपकारक्रियेयं मे साफल्यमुपयास्यति ॥ ३४ ॥

इति सङ्ग्रहश्लोकाः ॥

---

मधुसूदनीविवृतिः ।

प्रासूत रामो विदुषां वरेण्यो श्रीपार्वती यं मधुसूदनाख्यम् ।
महात्मनस्तस्य कृतौ व्यरंसीद् वृत्तिस्तृतीये मधुसूदनीयम् ॥ १ ॥

क्व न्यायशास्त्रानुविचारचातुरी साहित्यमात्रप्रवणा मतिः क्व ।
तथापि कालीस्मरणोद्भवाध्वना वृत्तिर्विधत्ता सरला प्रयत्नात् ॥ २ ॥
ग्रन्थे दृढे विपुलधीभिरगम्यकार्थे (अगम्यः केन सुखेन अर्थो यत्र)
व्याख्याविधौ भगवतीकरुणैव नौका ।
कोवाऽप्नुयाज्जलमुदस्य यतोऽञ्जलिभी
रत्नानि वारिधिगतानि जनोऽसहायः ॥ ३ ॥
आनन्दवर्द्धनबुधादिसुलम्मतं यत्
यो ग्रन्थकारमहिमा ध्वनिरूपमेये ।
प्रासङ्गिकं कृतिरहस्यमलेखि यच्च
तत्सम्प्रदायविदितं सुधिया विमृश्यम् ॥ ४ ॥
खलाः पुरोभागिन एव ये तु
ब्रूमः किमेतान् निजदोषगुप्त्यै ।
ये तु स्वभावेन गुणैकपक्षाः
सन्तस्ततस्तानपि किं ब्रवीमि ॥ ५ ॥
समस्ति राजस्थाने पूः चिडावा धनिकैर्वृता
तस्यामभूत् श्रेष्ठिवर्यः सूर्य्यमल्लो महाधनी ॥ ६ ॥
सोऽविद्यातिमिराच्छन्नं प्रान्तमालोक्य सर्वतः ।
चिडावानगरे श्रीमान् पाठशालामकल्पयत् ॥ ७ ॥
तत्राध्यापयितुं विज्ञं जगद्गीतयशोभरम् ।

आधातुं व्युत्पत्तिं
नप्तॄणां क्षेमयोगभाजानाम् ।
सत्सु प्रथितनयानां
भीमस्यामितगुणस्य तनयानाम् ॥ ३५ ॥
श्रीधैर्यस्याङ्गभुवा
महाकवेः श्यामलस्य शिष्येण ।
व्यक्तिविवेको विदधे
राजानकमहिमकेनायम् ॥ ३६ ॥
प्रतिपाद्यबुद्ध्यपेक्षौ
प्रायः संक्षेपविस्तरौ कर्त्तुः ।
तेन न बहुभाषित्वं
विद्वद्भिरसूयितव्यं नः ॥ ३७ ॥
अन्यैरनुल्लिखितपूर्वमिदं ब्रुवाणो
नूनं स्मृतेर्विषयतां विदुषामुपेयाम् ।

---

मधुसूदनीविवृतिः ।

शास्त्रिणं रामजीलालं प्रार्थयद्विनयान्वितः ।। ८ ।।
प्रार्थनां विनयेनाढ्यां तस्याश्रुत्य मुहुः कृताम् ।
धीमान् रामो ययौ तत्र सर्वविद्याविचक्षणः ।। ९ ।।
मीमांसैकरहस्यवश्यहृदयो यो वेदविद्यानिधिः ।
न्याये व्याकरणे कृतश्रममतिः सर्वत्रवेदान्तके ।।
आयुर्वेदमते विशुद्धभरतालंकारछन्दःसु च ।
होराकेरलिसंहिताशकुनसिद्धान्तक्षणे ज्योतिषि ।। १० ।।
यच्छात्रतामुपगताः शतशः प्रवीणाः ।
सिद्धान्तवारिधिगतान् सुमणीनवापुः ॥
तन्मण्डलं तदितराश्च दिशोऽथ गत्वा ।
प्राकाशयन् सुगुरुसिद्धपदे प्रतिष्ठाः ।। ११ ।।
श्रीश्रीनिवासमधुसूदनशास्त्रिणौ द्वौ ।
तस्माज्जनिं ह्यलभतां बहुविज्ञवर्यात् ।।
यः श्रीनिवासभिषगस्ति स कालिपुर्यां ।
काशीमसीमधिवसन् मधुसूदनोऽहम् ।। १२ ।।
विरलाकृतसंस्थानो विरलालब्धजीविकः ।
काश्यां भद्रवनीमध्ये निवसन् व्यदधामिमाम् ।। १३ ।।

हासैककारणगवेषणया नवार्थ-
तत्त्वावमर्शपरितोषसमीहया वा ॥ ३८ ॥

इति श्रीराजानकमहिमभट्टविरचिते
व्यक्तिविवेकाख्ये काव्यालङ्कारे
ध्वनेरनुमाने
अन्तर्भावोपदर्शनो नाम
तृतीयो विमर्शः ।

समाप्तश्चायं ग्रन्थः

शुभं भूयात्

मधुसूदनीविवृतिः ।

रामनन्दनवचन्द्रसम्मिते वत्सरेऽबहुलभाद्रमासके ।
पूर्णतामियमगात्कृतिस्तया सद्गतिर्भगवती प्रसीदतु ।। १४ ।।
यस्यास्तोषार्थमारम्भो विपुलादाग्रहात्परम् ।।
ग्रन्थप्रणयनादेः सा दुर्गा पत्नी प्रसीदतु ।। १९ ।।

इति श्रीमरुमण्डलधराधीशचक्रचर्चितपदपाथोज-सर्वतन्त्रस्वतन्त्रपदवाक्यप्रमाण
त्रिपरिदवगाहननिर्मलप्रज्ञ-महामहोपाध्याय-पण्डितप्रकाण्ड-श्रीरामजी
लालशास्त्रिणां तनूजन्मना साहित्यार्णवकर्णधारेण राजस्थान-
केसरिणा साहित्याचार्येण आहिताग्निना श्रीमधुसूदन
शास्त्रिणा विरचितायां मधुसूदनीविवृतौ तृतीयो
विमर्शः समाप्तिमगात् ।

समाप्ताचेयं विवृतिः ।

शुभं भूयात्

# व्यक्तिविवेकस्य श्लोकानुक्रमणी

# व्यक्तिविवेकव्याख्यानस्य श्लोकानुक्रमणी ।

# व्यक्तिविवेके प्रमापकाः

| | |
|---|---|
| १ शाकुन्तलम्<br>२ रघुवंशम्<br>३ विक्रमोर्वशीयम्<br>४ कुमारसम्भवम् | कालिदासः |
| ५ किरातार्जुनीयम् | भारविः |
| ६ नागानन्दम् | श्रीहर्षः |
| ७ वाक्यपदीयम् | भर्त्तृहरिः |
| ८ शिशुपालवधम् | माघः |
| ९ बालरामायणम् | राजशेखरः |
| १० उत्तररामचरितम्<br>११ मालतीमाधवम् | भवभूतिः |
| १२ वेणीसंहारम् | भट्टनारायणः |
| १३ हरविजयम् | रत्नाकरः |
| १४ ध्वन्यालोकः | आनन्दवर्द्धनः |
| १५ हृदयदर्पणः | भट्टनायकः |
| १६ नाट्यशास्त्रम् | भरतः |
| १७ ध्वन्यालोकलोचनम् | अभिनवगुप्तः |
| १८ महाभाष्यम् | पतञ्जलिः |

# व्यक्तिविवेकव्याख्याने स्मृताः—

## ग्रन्थकर्तारः ।



## ग्रन्थाः ।



---

